आशोकाद्भिमन्योर्ये प्रोक्ताः पञ्च महीभुजः। ते द्वापञ्चाशतो मध्यादेव लब्धाः पुरातनैः।
इयं नृपाणामुल्लासे ह्रासे वा देशकालयोः। भैषज्यभूतसंवादि कथा युक्तोपयुज्यते।
संक्रान्तप्राक्तनानन्तव्यवहारः सुचेतसः। कस्येदृशो न सन्दर्भो यदि वा हृदयङ्गमः।
क्षणभङ्गिनि जन्तूनां स्फुरिते परिचिन्तिते। मूर्द्धाभिषेकः शान्तस्य रसस्यात्र विचार्य्यतां।
तदमन्दरसस्यन्दसुन्दरेयं निपीयतां। श्रोत्रशुक्तिपुटैः स्पष्टमत्र राजतरङ्गिणी।
पुरा सती सरः कल्पारम्भात् प्रभृति भूरभूत्। कुक्षौ हिमाद्रेरर्णोभिः पूर्णा मन्वन्तराणि षट्।
अथ वैवस्वतीयेऽस्मिन् प्राप्ते मन्वन्तरे सुरान्। द्रुहिणोपेन्द्ररुद्रादीनवतार्य्य प्रजासृजा।
कश्यपेन तदन्तःस्थं घातयित्वा जलोद्भवं। निर्म्ममे तत्सरो भूमौ कश्मीरा इति मण्डलं।
॥ युगलकं ॥ उच्चद्वैतस्तनिष्यन्ददण्डकुण्डातपत्रिणा। यत् सर्व्वनागाधीशेन नीलेन परिपाल्यते।
गुहोन्मुखी नागमुखी पीतभूरिपया रुचिं। गौरी यत्र वितस्तात्वं याताप्युज्झति नोचितां।
शङ्खपद्ममुखैर्नागैर्नानारत्नावभासिभिः। नगरं धनदस्येव निधिभिर्यन्निषेव्यते।
यत्तार्क्ष्यभीत्या प्राप्तानां नागानां गुप्तये भुवं। प्रसारितभुजं प्लुष्टे शैलप्राकारलीलया।
भुक्तिमुक्तिफलप्राप्तिः काष्ठरूपमुमापतिं। पापसूदनतीर्थान्तर्यत्र संस्पृशतां भवेत्।
सन्ध्यादेवी जलं यस्मिन् धत्ते निःसलिले गिरौ। दर्शनं पुण्यपापानामन्वयव्यतिरेकयोः।
स्वयम्भूर्यत्र हुतभुक् भुवोगर्भात् समुन्मिषन्। जुह्वतां प्रतिगृह्णाति ज्वालाभुजवनैर्हविः।
देवीभेडगिरेः शृङ्गे गङ्गोद्भेदशुचौ स्वयं। सरोऽन्तर्दृश्यते यत्र हंसरूपा सरस्वती।
नन्दिक्षेत्रे सुरावासप्रासादे द्युचरार्पिताः। अद्यापि यत्र व्यज्यन्ते पूजाचन्दनबिन्दवः।
आलोक्य शारदां देवीं यत्र संप्राप्यते क्षणात्। तरङ्गिणीं मधुमतीं वाणीं च कविसेविता।
चक्रभृद्विजयेशादिकेशवेशानभूषिते। तिलांशोऽपि न यत्रास्ति पृथ्व्यास्तीर्थैर्बहिष्कृतः।
विजीयते पुण्यबलैर्बलैर्यत्तु न शस्त्रिणां। परलोकात्ततो भीतिर्यस्मिन्निवसतां परं।
शोष्णस्नानगृहाः शीते स्वस्तीरास्पदाश्रये। यादोविरहिता यत्र निम्नगा निरुपद्रवाः।
असन्तापहतां जानन् यत्र पित्रा विनिर्म्मिते। गौरवादिव तिग्मांशुर्धत्ते ग्रीष्मेऽप्यतीव्रतां।
विद्यावेश्मानि तुङ्गानि कुङ्कुमं सहिमं पयः। द्राक्षेति यत्र सामान्यमस्ति त्रिदिवदुर्लभं।
त्रिलोक्यां रत्नसूः श्लाघ्या तस्यां धनपतेर्हरित्। तत्र गौरीगुरुः शैलो यत्तस्मिन्नपि मण्डलं।
तत्र कौरवकौन्तेयसमकालभवान् कलौ। आगोनर्दात् स्मरन्ति स्म न द्वापञ्चाशतं नृपान्।
तस्मिन् काले भुवं तेषां कुकर्म्मैः काश्यपीभुजां। कर्त्तारः कीर्त्तिकायस्य नाभूवन् कवयो ध्रुवः।

अध्याय) येषां निषेव्य महाजसां भुजधिरसना मेदिन्यासीदसावकुतोभया। स्मृतिमपि न ते यान्ति क्ष्मापा विना
यत्प्रकृतिमहते कुर्म्मस्तस्मै नमः कविकर्म्मणे।

शतपदा येऽपि श्रियं लेभिरे येषामध्यवसन् पुरा युवतयो गेहेष्वहश्चन्द्रिकाः। तांल्लोकोऽयमवैति लोकति
लोप्यजातानिव भ्रातः सत्कविकृत्य किं स्तुतिशतैरन्धं जगत् त्वां विना।

अष्टषष्ट्यधिकामब्दशतद्वाविंशतिं नृपाः । अपीपलंस्ते काश्मीरान् गोनर्दाद्याः कलौ युगे ।
भारतं द्वापरान्तेऽभूद्वार्त्तयेति विमोहिताः । केचिदेतां मृषा तेषां कालसङ्ख्यां प्रचक्रिरे ।
॥ युगलकं ॥ लब्धाधिपत्यसङ्ख्यानां वर्षान् सङ्ख्याय भूभुजां । भुक्तात् कालात् कले. शेषो नास्त्येवं तद्विवर्ज्जितात् ।
शतेषु षट्सु सार्द्धेषु त्र्यधिकेषु च भूतले । कलेर्गतेषु वर्षाणामभवन् कुरुपाण्डवाः ।
लौकिकेऽब्दे चतुर्विंशे शककालस्य सांप्रतं । सप्तत्यात्यधिकं यातं सहस्रं परिवत्सरा. ।
प्रायस्तृतीयगोनर्दादारभ्य शरदां तदा । द्वे सहस्रे गते त्रिंशदधिकञ्च शतत्रयं ।
वर्षाणां द्वादशशती षष्टि षड्भिश्च संयुता । भूभुजां कालसङ्ख्यायां तद्द्वापञ्चाशतो मता ।
ऋक्षादृक्षं शतेनाब्दैर्यासु चित्रशिखण्डिषु । तच्चारे संहिताकारैरेवं दत्तोऽत्र निर्णयः ।
आसन् मघासु मुनयः शासति पृथ्वीं युधिष्ठिरे नृपतौ । षड्द्विकपञ्चद्वियुतः शककालस्तस्य राज्यस्य ।
काश्मीरेन्द्रः स गोनर्दो वेलङ्गङ्गादुकूलया । दिशा कैलासहासिन्या प्रतापी पर्य्युपास्यत ।
विहाय देशं शेषाहेर्विपाशेपभयादिव । भूर्गौरुत्मतरक्लान्ते भेजे तस्य भुजे स्थितिं ।
साहायकार्थमाहूतो जरासन्धेन बन्धुना । समं रुरोध कंसारेर्मथुरां पृथुभिर्बलैः ।
तेनोपकूलं कालिन्द्याः स्कन्धावारं निवध्नता । यादवीहसितैः सार्द्धं योधानां मीलितं यशः ।
एकदा सर्व्वतो भग्नाः स्वसेनास्त्रातुमुद्यतः । तं संरुरोध योद्धारं सङ्गरे लाङ्गलध्वजः ।
तयोस्तुल्यौजसोर्युद्धे चिराय करवर्त्तिनी । मध्ये विजयसन्देहे वरणस्रगजयश्रियः ।
अथ शस्त्रक्षतैरङ्गैरालिलिङ्ग रणाङ्गने । भुवं काश्मीरको राजा यादवस्तु जयश्रियं ।
गतिं शूरैरसुलभां तस्मिन् सुचरिते गते । श्रीमान्दामोदरो नाम तत्सूनुरभृत क्षितिं ।
भोगयोगोर्ज्जितं राज्यं प्राप्तवानपि भूपतिः । ध्यायन् पितृवधं मानी नोपलेभे स निर्वृतिं ।
अथोपसिन्धु गान्धारैः सम्बन्धे कन्यास्वयम्बरे । निमन्त्र्य शुश्रावानीतान् वृष्णीन्दर्पोष्णदोद्रुमः ।
ततस्तस्यातिसम्भारात्तानदूरस्थितान् प्रति । यात्राभङ्गजिनीवाजिरेणुग्रस्तनभस्तला ।
तदाहवे विवाहोत्का निष्प्रतिस्य पतिम्वरा । आसीत्तद्युपुरस्त्रीणां गान्धारेषु स्वयम्वरः ।
तदाक्रान्तासुहृच्चक्र. स चक्रायुधसङ्गरे । चक्रधाराध्वना धीरश्चक्रवर्त्ती दिवं ययौ ।
अन्तर्व्वत्नीं तस्य पत्नीं तदा यदुकुलोद्वहः । राज्ये यशोवती नाम द्विजैः कृष्णोऽभ्यषेचयत् ।
तस्मिन् काले स्वसचिवान् सासूयान् विन्यवीवरत् । इमं पौराणिकं श्लोकमुदीर्य्य मधुसूदनः ।
काश्मीराः पार्व्वती तत्र राजा ज्ञेयो हरांशजः । नावज्ञेयः स दुष्टोऽपि विदुषा भूतिमिच्छता ।
पुंसां निर्गौरवा भोज्ये इव याः स्त्रीजनेदृशः । प्रजानां मातरं तास्तामपश्यन्देवतामिव ।
अथ वैजनने मासि सा देवी दिव्यलक्षणं । निर्दग्धस्यान्वयतरोरङ्कुरं सुषुवे सुतं ।
तस्य राज्याभिषेकादिविधिभिः सह सम्भृताः । द्विजेन्द्रैर्निरवर्त्यन्त जातकर्म्मादिकाः क्रियाः ।
स नगेन्द्रश्रिया सार्द्धं लब्धवान् बालभूपतिः । नाम गोनर्द इत्येवं नप्ता पैतामहं क्रमात् ।
आस्तां बालस्य सन्नद्धे द्वे धात्र्यौ तस्य वृद्धये । एका पयःप्रस्रविणी सर्व्वसम्पत्प्रसू. परा ।

तस्यावन्ध्यप्रसादस्य रचनाः पितृमन्त्रिणः। पार्थिवेभ्यो ददुर्वित्तमनिमित्तक्षितेष्वपि ।
अबुद्धा ननु तिष्ठन्तस्तस्याद्यकं शिशोर्वचः। कृतागसमिवात्मानममन्यन्ताधिकारिणः।
पितुः सिंहासनं तेन क्रामता बालभूभुजा। नोत्कण्ठा पादपीठस्य लम्बमानांघ्रिणा कृता ।
तच्चामरमरुल्लोलकाकपक्षं नृपासने। विधाय मन्त्रिणो ऽपुष्यन् प्रजानां धर्म्यसंश्रयं।
इति काश्मीरको राजा वर्त्तमानः सशैशवे। साहायकाय समरे न निन्ये कुरुपाण्डवैः।
आम्नायभङ्गान्निर्नष्टनामकृत्यास्ततः परं। पञ्चत्रिंशन्महीपाला मग्ना विस्मृतिसागरे।
अथाभवल्लवोनाम भूपालो भूमिभूषणं। वेलयेवोदकूलाया: प्रीतिपात्रं जयश्रियः।
यस्य सेनानिनादेन जगदौत्सिक्यदायिना। निन्यिरे वैरिणश्चित्रं दीर्घनिद्राविधेयतां
तेन षोडशभिर्लक्षैर्विहीनामश्मवेश्मनां। कोटिं निष्पाद्य नगरं लोलोरं निरमीयत।
दत्वाग्रहारं लेदर्यां लेवारं द्विजपर्षदे। स धामनिन्द्यशौर्यश्रीरारुरोह महाभुजः।
कुशेशयाख्यस्तत्पुत्रः प्रतापकुशलः कुशः। कुरुहाराग्रहारस्य दाताभूत्तदनन्तरं।
ततस्तस्य सुतः प्राप रिपुनागकुलान्तकः। धुर्य्यः शौर्य्याश्रयः श्रीमान् खगेन्द्रः पार्थिवेन्द्रतां।
खखागिखुनमुषयोः कर्त्ता मुख्याग्रहारयोः। हरदासषितैः कृत्यैः क्रीताँल्लोकान् क्रमाद्ययौ।
अनर्घमहिमा दीर्घमघवत्तावहिष्कृतः। अथ साश्चर्यचर्य्योऽभूत् सुरेन्द्रस्तत्सुतो नृपः।
शतमन्युः शान्तमन्योर्गोत्रभिद्गोचरचिणः। लेभे यस्य सुरेन्द्रस्य सुरेन्द्रो नोपमानतां।
दरद्देशान्तिके कृत्वा सौरकाख्यं स पत्तनं। श्रीमान् विहारं विदधे नरेन्द्रभवनाभिधं।
तेन स्वमण्डले ऽखण्डयशसा पुण्यकर्मणा। विहारः सुकृतोदारो निर्मितः सौरसाभिधः।
तस्मिन्निःसन्ततौ राज्ञि प्रशान्तेऽन्यकुलोद्भवः। बभार गोधरो नाम सभूधरवरान्धरां।
गोधरो हस्तिशालाख्यमग्रहारमुदारधीः। स प्रदाय द्विजन्मभ्यः पुण्यकर्मा दिवं ययौ।
तस्य सूनुः सुवर्णाख्यस्ततोऽभूत् स्वर्णदोऽर्थिनां। सुवर्णमणिकुल्यायाः कराले यः प्रवर्त्तकः।
तत्सूनुर्जनको नाम प्रजानां जनकोपमः। विहारमग्रहारञ्च जालोराख्यञ्च निर्ममे।
शचीनरस्तस्य सूनुः चितिं चितिशचीपतिः। ततः श्रीमान् चमाशीलो ररचाचतशासनः।
राजाग्रहारयोः कर्त्ता शमांगासाशनारयोः। सोऽभूदपुत्रः स्वनामविष्टराङ्कसमाश्रयी।
प्रपौत्रः शकुनेस्तस्य भूपतेः प्रपितृव्यजः। अथावहदशोकाख्यः सत्यसन्धो वसुन्धरां।
यः शान्तवृजिनो राजा प्रपन्नो जिनशासनं। शुष्कलेऽत्र वितस्तात्रौ तस्तार स्तूपमण्डलैः।
धर्मारण्यविहारान्तर्वितस्तात्रपुरेऽभवत्। यत्कृतं चैत्यमुत्सेधावधि प्राप्यच्चमेचणं।
स षण्णवत्या गेहानां लक्षैर्लक्ष्मीसमुज्ज्वलैः। गरीयसीं पुरीं श्रीमांश्चक्रे श्रीनगरीं नृपः।
जीर्णं श्रीविजयेशस्य विनिवार्य्य सुधामयं। निष्कल्मषेणाश्ममयः प्राकारो येन कारितः।
सभायां विजयेशस्य समीपे च विनिर्ममे। शान्तावसादः प्रासादावशोकेश्वरसंज्ञितो।
म्लेच्छैः सञ्छादिते देशे स तदुच्छित्तये नृपः। तपः सन्तोषिताल्लेभे भूतेशात् सुकृती सुतं।

॥ सोऽथोऽभूज्जलौकाऽभूद्भूलोकसुरनायकः। यो यशःश्रद्धया शुद्धं व्यधाद्ब्रह्माण्डमण्डलं।
यस्य दिव्यप्रभावस्य कथाः श्रुतिपथं गताः। आश्चर्य्याश्चर्य्यतां यान्ति नियतं द्युसदामपि।
कोटिवेधिनि सिद्धे हि सरसे हाटकार्पणैः। आसीत् सुषिरतां कर्तुं हेमाण्डस्य ध्रुवं क्षमः।
संक्रान्तयाम्भःप्रविष्टेन तेन नागसरोऽन्तरं। तारुण्यं फणिकन्यानां निन्ये संभोगभव्यतां।
तत्कालप्रबलप्रेच्चबौद्धवादिसमूहजित्। अवधूतोऽभवत् सिद्धस्तस्य ज्ञानोपदेशकृत्।
विजयेश्वरनन्दीशक्षेत्रज्येष्ठेशपूजने। तस्य सत्यगिरो राज्ञः प्रतिज्ञा सर्व्वदाऽभवत्।
ग्रामे ग्रामे स्थितैरश्वैर्धावनं प्रतिपिद्धवान्। स्वेनावहर्त्तुं सततं नागः कोऽपि सुहृत्तया।
स रुद्धवसुधान् म्लेच्छान्निर्व्वास्याखर्व्वविक्रमः। जिगाय जैत्रयात्राभिर्महीमर्णवमेखलां।
स तत्रोज्जूटितस्तेन म्लेच्छाच्छादितमण्डलः। स्थानमुज्जूटडिम्बन्तज्जनैरद्यापि गद्यते।
जित्वोर्व्वीं कन्यकुब्जाद्यां तत्रत्यं स न्यवेशयत्। चातुर्व्वर्ण्यं निजे देशे धर्म्यांश्च व्यवहारिणः।
यथावद्वृद्धिमप्राप्तं व्यवहारधनादिभिः। सामान्यदेशवद्राज्यं तावदस्मिन् हि मण्डले।
धर्म्माध्यक्षो धनाध्यक्षः कोषाध्यक्षश्चमूपतिः। दूतः पुरोधा दैवज्ञः सप्त प्रकृतयोऽभवन्।
॥ युगलकं ॥ कर्म्मस्थानानि धर्म्याणि तेनाष्टादश कुर्व्वता। ततः प्रभृति भूपेन कृता यौधिष्ठिरी स्थितिः।
स विक्रमप्रभावाभ्यां समुपार्ज्जितया श्रिया। विदधे वारवालादीनग्रहारानुदग्रधीः।
द्वारादिषु प्रदेशेषु प्रभावोग्राणुदग्रया। ईशानदेव्या तत्पत्न्या मातृचक्राणि चक्रिरे।
श्रुतनन्दिपुराणः स व्यासान्तेवासिनो नृपः। सेवनं सोदरादीनां नन्दीशस्पर्द्धया व्यधात्।
प्रतिष्ठां ज्येष्ठरुद्रस्य श्रीनगर्य्यां वितन्वता। तेन नन्दीशसंस्पर्द्धा न मेने सोदरं विना।
विस्मारितो नित्यकृत्यं कार्य्यव्यग्रतयैकदा। विदूरसोदरजलाप्लावनालाभदुर्मनाः।
अपश्यन्निर्ज्जलात् स्थानादकस्मादुत्थितं पयः। स सोदराविसम्वादि वर्णस्वादादिभिर्गुणैः।
॥ युग्मं ॥ प्रादुर्भूते ततस्तस्मिंस्तीर्थे कृतनिमज्जनः। स नन्दिरुद्रस्पर्द्धायां मानी पर्य्याप्तमासदत्।
तेन जातु परीक्षार्थं निक्षिप्तः सोदरान्तरे। सपिधानानमः स्वर्णभृङ्गारः सुषिरोदरः।
दिनद्वयेन सार्द्धेन श्रीनगर्य्युद्भवाम्भसः। उन्मग्नः स महीभर्त्तुस्तस्य चिच्छेद संशयं।
नूनं नन्दीश एवासौ भोक्तुं भोगानवातरत्। दृष्टादृष्टक्रियासिद्धिर्न भवेत्तादृगन्यथा।
राज्ञस्तस्य कदाचित्तु व्रजतो विजयेश्वरं। ययाचे काचिदबला भोजनं मार्गमध्यगा।
यथेष्टमशनं दातुं ततोऽनेन प्रतिश्रुते। व्यष्टणोद्विकृता भूत्वा सा नृमांसाश्रयां स्पृहां।
स सत्वहिंसाविरतस्तस्यै दातुं स्वविग्रहात्। अनुज्ञां प्रददौ भोक्तुं यदा सैवं तदाब्रवीत्।
बोधिसत्वोऽसि भूपाल कोऽपि सत्वोर्ज्जितव्रतः। कारुण्यं प्राणिषु दृढं यस्येदृक् महात्मनः।
बौद्धभाषामजानानो माहेश्वरतया नृपः। को बोधिसत्वो यं भद्रे मां वेत्सीति जगाद तां।
पुनर्ब्बभाषे सा भूपं श्रोतव्यं मत्प्रयोजनं। अहन्तूत्थापिता बौद्धैः क्रोधाद्विप्रकृतैस्त्वया।
लोकालोकाद्रिपार्श्वस्थास्तामस्याः कृत्तिका वयं। बोधिसत्वैकशरणाः काङ्क्षन्त्यस्तमसः क्षयं।

लोके भगवतो लोकनाथादारभ्य केचन। ये जन्तवो गतक्लेशान् बोधिसत्वानवेहि तान्।
सागसेऽपि न कुप्यन्ति क्षमया चोपकुर्वते। बोधिं स्वस्यैव नेच्छन्ति ते विश्वधरणोद्यताः।
विहारतूर्य्यनिर्घोषैरुन्निद्रः प्रेरितः खलैः। पुरा भवान् व्यधात् क्रोधाद्विहारोद्दलनं यदा।
महाशक्यः स नृपतिर्न शक्यो बाधितुं त्वया। तस्मिन्दृष्टे तु कल्याणि भविता ते तमःक्षयः।
अस्मद्गिरा प्रेरणीयो विहारकरणाय सः। दत्वा स्वहेमसम्भारं त्वया मलिनितः खलैः।
तस्मिन् कृते न जायेत विहारच्छेदवैशसं। तस्य तत्प्रेरकाणाञ्च प्रायश्चित्तं कृतं भवेत्।
क्रुद्धैर्बौद्धैरनुध्याता त्वद्वधाय प्रधाविता। अनुदिष्टा समाहूय बोधिसत्वैस्तदेत्यहं।
॥ कुलकं॥ तस्मात् सत्वातिरेकस्ते.मिषादेवं परीक्षितः। क्षीणपापाद्य सम्वृत्ता स्वस्ति ते साधयाम्यहं।
कृतप्रतिश्रवे राज्ञि विहारकृतये पुनः। प्रहर्षोत्फुल्लनयना कृत्यादेवी तिरोदधे।
अथ कृत्याश्रमे कृत्वा विहारं वसुधाधिपः। तत्रैव क्षीणतमसं कृत्यादेवीमनन्दयत्।
विधाय सोऽश्मप्रासादं नन्दिक्षेत्रे क्षमापतिः। भूतेशाय समं कोषैः पूजां रत्नमयीं ददौ
चीरमोचनतीर्थान्तर्गत्वरात्रं तपस्यता। ब्रह्मासननिविष्टेन ध्याननिष्पन्दमूर्त्तिना।
राज्ञा कनकवाहिन्याः सुचिरात् पुण्यकर्मणा। नन्दीशस्पर्शनोत्कण्ठा तेनानीयत कुण्डतां।
ह्लादोदयान्नृत्यगीतक्षणे नर्त्तितुमुत्थितं। प्रददौ ज्येष्ठरुद्राय स्वावरोधवधूशतं।
भुक्त्वैश्वर्य्यं स पर्यन्ते प्रतिष्ठंश्चीरमोचनं। पत्न्या समं ययौ राजा सायुज्यं गिरिजापतेः।
अथाशोककुलोत्पन्नो यद्वान्याभिजनोद्भवः। भूमिं दामोदरो नाम जुगोप जगतीपतिः।
श्रद्धा जाज्वलितस्यार्धेन्दुमौलिश्वरशिखामणेः। अद्यापि श्रूयते यस्य प्रभावो भुवनाद्भुतः।
हरप्रसादमात्रेण सच्चरित्रानुरागिणा। बबन्ध सुखिना सख्यं येन वैश्रवणः स्वयं।
कुवेरइव योराज्ञामग्र्यः स्वाज्ञाविधायिनः। आदिश्य गुह्यकान् दीर्घं गुरुसेतुमबन्धयत्।
सूदे दामोदरीये यत्तस्यासीत् स्वकृतं पुरं। सेतुना तेन तत्रैच्छत् कर्त्तुं सोऽम्भःप्रतारणं।
हितं लोकोत्तरं किञ्चिच्चिकीर्षोरुन्नतात्मनः। रोहन्ति.हा धिक् प्रत्यूहा मितपुण्यतया नृणां।
स हि कारयितुं यत्नैर्यततेस्म स्वमण्डले। दीर्घानश्ममयान् सेतूंस्तोयविप्लवशान्तये।
तपोविभूतयश्चिन्त्या द्विजानामुग्रतेजसां। तादृशामपि ये कुर्य्युः प्रभावस्य विपर्य्ययं।
दायादादिव्यलोभष्टा दृष्टा भूयः समुत्थिता। श्रीविभावशया राज्ञामपुनःसम्भवा पुनः।
आहार्यमुत्थितः स्नातुं द्विजैः कैश्चिद्बुभुक्षितैः। प्राक् स्नानाद्भोजनं राजा स कदाचिदयाच्यत।
पिपासुना वितस्तान्तर्यदा तेनावधीरितं। तदा प्रभावात्ते तस्य तां धुनीमग्रतो व्यधुः।
सेयं वितस्ता दृष्ट्वेनां भोजयाद्यान् स तैरिति। उक्तोऽपि मायाविहितामश्रासीत् सरिदाकृति।
भोज्यं ददानि नास्नातो विप्राः सर्पत साम्प्रतं। तेनेत्युक्तास्तमशपंस्ततः सर्पो भवेति ते।
अयमेकेनैवाह्ना श्रुत्वा रामायणं तव। शापस्य शान्तिर्भवितेत्यूचिरे ते प्रसादिताः।
स दामोदरसूदान्तर्धावन् दूरमुदन्यया। शापोष्णश्वासधूमेन जनैरद्यापि लक्ष्यते।

अथाभवन् स्वनामाङ्कपुरत्रयविधायिनः। हुष्कजुष्ककनिष्काख्यास्त्रयस्तत्रैव पार्थिवाः।
स विहारस्य निर्माता जुष्को जुष्कपुरस्य यः। जयस्वामिपुरस्यापि शुद्धधीः स विधायकः।
ते तुरुष्कान्वयोद्भूता अपि पुण्याश्रया नृपाः। शुष्कलेत्रादिदेशेषु मठचैत्यादि चक्रिरे।
प्राज्ये राज्यक्षणे तेषां प्रायः काश्मीरमण्डलं। भोज्यमास्ते च बौद्धानां प्रव्रज्योर्जिततेजसां।
ततो भगवतः शाक्यसिंहस्य परिनिर्वृतेः। अस्मिन् महीलोकधातौ सार्द्धं वर्षशतं ह्यगात्।
बोधिसत्त्वश्च देशेऽस्मिन्नेकभूमीश्वरोऽभवत्। स तु नागार्ज्जुनः श्रीमान् षडर्हद्वनसंश्रयी।
अथ निष्कण्टको राजा कण्टकोत्सायहारदः। अभोर्वभूवाभिमन्युः शतमन्युरिवापरः।
स्वनामाङ्कशशाङ्काङ्कशेखरं विरचय्य सः। परार्ध्यविभवं श्रीमानभिमन्युपुरं व्यधात्।
चन्द्राचार्यादिभिर्लब्ध्वादेशं तस्मात्तदागमं। प्रवर्त्तितं महाभाष्यं स्वञ्च व्याकरणं कृतं।
तस्मिन्नवसरे बौद्धा देशे प्रबलतां ययुः। नागार्ज्जुनेन सुधिया बोधिसत्त्वेन पालिताः।
ते वादिनः पराजित्य वादेन निखिलान् बुधान्। क्रियां नीलपुराणोक्तामच्छिन्दन्नागमद्विषः।
मण्डले विप्लुताचारे विच्छिन्नबलिकर्म्मभिः। नागैर्जनक्षयश्चक्रे प्रभूतहिमवर्षिभिः।
हिमान्यां बौद्धबाधाय पतन्त्यां प्रतिवत्सरं। शीते दार्व्वाभिसारादौ षण्मासान् पार्थिवोऽवसत्।
तदा प्रभावः कोऽप्यासीद्वलिहोमविधायिनः। नानश्यन् यद्वशाद्विप्रा बौद्धाश्च निधनङ्गताः।
नीलमुद्दिश्य देशस्य रक्षितारं महेश्वरं। काश्यपश्चन्द्रदेवाख्यस्तपस्तेपे ततो द्विजः।
तस्य प्रत्यक्षतां यातो नीलस्तद्धिमविप्लवं। न्यवारयत् जगादापि स्वपुराणविधिं पुनः।
आद्येन चन्द्रदेवेन शमितो यक्षविप्लवः। द्वितीयेन तु देशेऽस्मिन् दुःसहो भिक्षुविप्लवः।
राजा तृतीयगोनर्दः प्राप्तराज्यस्तदन्तरे। यात्रायागादि नागानां प्रावर्त्तयत पूर्व्ववत्।
राज्ञा प्रवर्त्तिते तेन पुनर्नीलोदिते विधौ। भिक्षवो हिमदोषाश्च सर्व्वतः प्रशमं ययुः।
काले काले प्रजापुण्यैः सम्भवन्ति महीभुजः। यैर्मण्डलस्य क्रियते दूरोत्सन्नस्य योजनं।
ये प्रजापीडनपरास्ते विनश्यन्ति सान्वयाः। नश्यन्तु ये योजयेयुस्तेषां वंशानुगाः श्रियः।
इत्येतत् प्रतिष्टत्तान्तं देशेऽस्मिन्वीक्ष्य लक्षणं। भाविनां भूमिपालानां प्राज्ञैर्ज्ञेयं शुभाशुभं।
नवोक्तवंशो देशं तस्य वंशैरियं मही। सिद्धैः प्रवरसेनाद्यैश्चिरं भुक्ता सुकर्म्मभिः।
गोनर्दान्वयिनामाद्यः स रघूणां रघुर्यथा। नृपतिः काश्यपीं वर्षान् पञ्चविंशतिमन्वशात्।
वर्षषष्टिं सषण्मासैः षड्भिर्मासैर्व्विवर्ज्जितां। विभीषणाभिधोऽरक्षत् क्षितिं गोनर्दनन्दनः।
इन्द्रजिद्रावणावास्तां पितापुत्रौ नृपौ क्रमात्। पञ्चत्रिंशत्सहार्द्धाश्च वर्षास्त्रिंशद्ययोर्ययुः।
बिन्दुरेखाच्छवियस्य दृष्ट्वा भाग्यर्थशंसिनी। स रावणस्य पूजार्थं लिङ्गं भाति वटेश्वरः।
चतुःशालमठस्यान्तः कृतायादायि भूभुजा। वटेश्वराय निखिलं तेन काश्मीरमण्डलं।
पञ्चत्रिंशतमब्दानां क्ष्मां बुभोज महाभुजः। रावणोर्णिभसूनुः सार्द्धमन्यो विभीषणः।
किन्नरापरनामाथ किन्नरैर्गीतविक्रमः। विभीषणस्य पुत्रोऽभून्नरनामा नराधिपः।

सदाचारोऽपि स नृपः प्रजाभाग्यविपर्ययैः । व्यधाद्विषयदोषेण महानर्थपरम्परां ।
विहारे निवसन्नेककिन्नरग्रामवर्त्तिनि । तस्य योगबलात् कोऽपि श्रमणोऽपाहरत् प्रियां ।
विहाराणां सहस्राणि तत्कोपान्निर्ददाह सः । अजिग्रहच्च तद्ग्रामान् द्विजैर्मध्यमठाश्रयैः । २००
रुद्धातपं राजपथैर्नीयानोज्ज्वलनिम्नगं । स्फीतपुष्पफलोद्यानं स्वर्गस्येवाभिधान्तरं ।
दिग्जयोपार्जितैर्वित्तैर्जितवित्तेशपत्तनं । वितस्तापुलिने तेन नगरं निरमीयत ।
॥ युगलकं ॥ तत्रैकस्मिन् किलोद्याने स्वच्छस्वादुजलाश्रितः । आसीत् सुश्रवसो नाम्नो नागस्य वसतिः सरः ।
कदाचित्तस्य दूराध्वक्लान्तो मध्यदिने युवा । छायार्थी तत् सरःकच्छं विशाखाख्योऽविशद्द्विजः ।
सच्छायपादपतले समीरैः शमितक्लमः । शनैर्जलमुपस्पृश्य भोक्तुं सक्तून् प्रचक्रमे । २०५
तान् पाणौ स्थक्तैवाथ तेन तीरविहारिभिः । पूर्व्वमाकर्षितो हंसैः शुश्रुवे नूपुरध्वनिः ।
निर्गते मञ्जरीकुञ्जादपश्यत् पुरतस्ततः । कन्ये नीलनिचोलिन्यौ स केचिच्चारुलोचने ।
कर्णिकापद्मरागाञ्जनाललीलायितस्पृशा । मनोज्ञधवलापाङ्गे तनीयोऽञ्जनरेखया ।
हारिनेत्राञ्चलैर्मन्दमारुतान्दोलनाकुलैः । सनाथांसयुगे रूपपताकापल्लवैरिव ।
॥ तिलकं ॥ ते शशाङ्काननं दृष्ट्वा शनैरभ्यर्णमागते । विरराम।शनारम्भात् मुहुर्व्रीडजडीकृतः । २१०
भुञ्जाने कच्छगुच्छानां शिम्बीरम्बुजलोचने । ते पुनर्दृष्टवानग्रे किञ्चिद्व्यापारितेक्षणः ।
आकृतेर्वा धिगीदृश्या भोज्यमेतदिति द्विजः । ध्यायन् कृपार्द्रः सम्मान्य स ते सक्तूनभोजयत् ।
उपनिन्ये च सङ्गृह्य पुटकैश्चाटुपेलवैः । तयोः पानाय पानीयं सरसः स्वच्छशीतलं ।
आचान्ते शुचितां प्राप्ते कृतासनपरिग्रहे । ततश्च वीजयन् पर्णतालवृन्तैरभाषत ।
भवत्यो पूर्व्वसुकृतैः कैश्चित् सम्प्राप्तदर्शनः । चापलादिप्रसूत्सुभात् प्रष्टुमिच्छत्ययं जनः । २१५
कल्याणिनीभ्यां कतमा पुण्या जातिः परिष्कृता । कुत्र वा क्लान्तमेतादृग्विरसं येन भुज्यते ।
एका तमूचे विद्धावामस्य सुश्रवसः सुते । स्वादुभोक्तव्यमप्राप्य किमीदृङ्नोपभुज्यते ।
पित्रा विद्याधरेन्द्राय प्रदातुं परिकल्पिता । इरावत्यहमेषा मे चन्द्रलेखा यवीयसी ।
पुनर्द्विजोऽभ्यधादेवं नेष्किञ्चन्यं किमस्ति वः । ताभ्यामवादि तातोऽत्र हेतुर्वेत्ति स पृच्छ्यतां ।
ज्येष्ठेऽत्र कृष्णद्वादश्यां याचाये तच्च कस्य तं । आगतं चूडया तोयस्यन्दिन्या ज्ञास्यसि ध्रुवं । २२०
द्रष्टव्यावामपि तदा तदभ्यर्णकृतस्थिती । इत्युक्त्वा फणिकन्ये ते क्षणादास्तां तिरोहिते ।
प्रमात् प्रवृत्ते सोऽथ नटचारणसङ्कुलः । भैचिनोकसमाकीर्णस्तत्र यात्रामहोत्सवः ।
द्विजोऽपि कौतुकाकृष्टः पर्य्यटन् रङ्गमञ्जसा । कन्याकचिक्रशातस्य नागस्यान्तिकमाययौ ।
पार्श्वस्थिताभ्यां कन्याभ्यां पूर्व्वमावेदितोऽथ सः । द्विजन्मने व्याजहार स्वागतं नागनायकः ।
ततः कथान्तरे क्वापि इष्टः कारणमापदां । जगाद तं द्विजन्मानं निःश्वस्य श्वसनाशनः । २२५
अभिमानवतां मन्युकार्याकार्यविवेकिनां । युज्यते वश्यभाग्यानां दुःखानामप्रकाशनं ।
परदुःखसमाकर्ण्ये स्वभावसुजनो जनः । उपकारासमर्थत्वात् प्राप्नोति यदव्यथां ।

वृत्तिं स्वां बहु मन्यते हृदि गुरुं धत्तेऽनुकम्पोक्तिभिर्येकं निन्दति धीरतां मितमतिः कुर्वन् स्तुतीरात्मनः।
गर्व्वोपायनिषेवणं कथयति स्वास्थ्यं वदन् व्यापदं श्रुत्वा दुःखमरुन्तुदां वितनुते पीडां जनः प्राकृतः।
अतएव विवक्षूणां यावदायुस्त्वमानघ। दीर्घाणि सुखदुःखानि दहत्यन्ते चितानलः। २१०
कः स्वभावगभीराणां लक्षयेद्धृदिरापदं। वाताप्तत्वेन भक्त्येन यदि सा न प्रकाश्यते।
तदस्मिन्नेतयोर्म्मोल्याद्वस्तुनि व्यक्तिमागते। तवाग्रे गोपनं साधो न ममाप्युपपद्यते।
त्वयाप्यस्मद्धितार्थाय निसर्गसरलात्मना। ईषत्प्रयासः कल्याणिन् क्रियतां यदि शक्यते।
योऽयं तरुतले मुण्डचूडालो दृश्यते व्रती। अमुना शस्यपालेन कान्दिशीकाः कृता वयं।
अभुक्ते मान्त्रिकैरन्ने नवे नागेन भुज्यते। अयं नास्ति च तत्तेन समयेन हता वयं। २१५
क्षेत्राणि रक्षत्येतस्मिन् दृष्ट्वापि फलसम्पदं। भोक्तुं नैव समर्थाः स्मः प्रेताद्यत्र सरित्स्थले।
तथा कुरु यथा भ्रश्येत् समयादेष नैष्ठिकः। योग्यां प्रतिक्रियां विप्रोऽत्रयमप्युपकर्त्तृषु।
स तथेति ततो नागमुक्तो यत्नपरो द्विजः। अचिन्तयद्विचारान्तौ शस्यपालस्य वञ्चनां।
गूढं तस्य वहिःक्षेत्रकुटीगर्भकृतस्थितेः। पच्यमानान्नभाण्डान्तर्नवान्नं न्यक्षिपत्ततः।
भुञ्जान एव तत्तस्मिन् क्षणादेव जहार सः। अहीन्द्रः खरकासारवर्षी स्फीतां फलश्रियं। २२०
तच्च व्युत्क्रान्तदारिद्र्यः सरसोऽभ्यर्णमागतं। कृतोपकारमन्येद्युर्निजौर्व्वीमनयद्द्विजं।
स तत्र पितुरादेशात् कन्याभ्यां विहितार्हणः। अमर्थ्यसुलभैर्भोगैरतोष्यत दिने दिने।
कालेन सर्व्वानामन्त्र्य स्वां भुवं गन्तुमुद्यतः। प्रतिश्रुतं वरं नागं चन्द्रलेखामयाचत।
सम्बन्धायोग्यमपि तं कृतज्ञत्ववशम्वदः। संविभेजे स भुजगः कन्यया च धनेन च।
एवं नागवरावाप्तश्रियस्तस्य द्विजन्मनः। मद्यान्तरपुरे कालस्तैस्तैर्निर्व्वोत्सवैर्ययौ। २२५
भुजगेन्द्रतनूजापि तं पतिं पतिदेवता। अतोषयत् परार्ध्यश्रीशीलाचारादिभिर्गुणैः।
तस्यां कदाचित् सौधाग्रस्थितायां प्राङ्गणाद्वहिः। आतपायोजिभृत् तं धान्यं बुभुजे विहरन् हयः।
तं वारयितुमाहूता भृत्या नासन् गृहे यदा। शिञ्जानमञ्जुमञ्जीरा सा तदावातरत् स्वयं।
एकहस्तधृतावेगस्रस्तनीवींशुकान्तया। तया पाणिसरोजेन धावित्वा सोऽथ ताडितः।
भोज्यमुत्सृज्य यातस्य फणिस्त्रीस्पर्शतस्ततः। सौवर्णी पाणिमुद्राङ्के तुरगस्योदपद्यत। २३०
तस्मिन् काले नरो राजा चारैस्तां चारुलोचनां। श्रुत्वा द्विजवधूं तस्या प्रागेवाङ्कुरितस्मरः।
तस्य धावन्तमुन्मत्तमन्तःकरणवारणं। बलान्नियमितुं नासीदपवादभयाङ्कुशः।
तस्मिन्नुद्बुद्धरागाग्निविश्वे भूपतेः पुनः। उवाह हयवृत्तान्तो दृप्तवातानुकारितां।
चक्रे पर्य्यस्तमर्य्यादः सरलांगुलिशोभिना। सकाञ्चनकराङ्केन शशाङ्केनेव वारिधिः।
ब्रीडानिगडनिर्म्मुक्तो दूतैराकूतशंसिभिः। तामुपच्छन्दयन् सोऽथ सुन्दरीमुदवेजयत्। २३५
सर्व्वोपायैरसाध्यास्य विप्रस्तत्पतिरर्थ्यतौ। तेनायाच्यत लुब्धेन रागान्धानां कुतस्त्रपा।
अथ निर्भर्त्सितो तस्मादपि प्राप्तरुतामकृत्। हठेन हर्त्तुं तां राज्ञा समादिश्यन्त सैनिकाः।

तैरीहाये कृताक्रन्दो झगित्यन्येन वर्त्मना । त्राणार्थी नागभवनं सभार्यः प्राविशद्द्विजः ।
ताभ्यामभ्येत्य वृत्तान्ते ततस्तस्मिन् निवेदिते । क्रोधान्धः सरसस्तस्मादुज्जगाम फणीश्वरः ।
उद्गर्ज्जज्जिह्मजीमूतजनितध्वान्तसन्ततिः । सघोराश्मनिर्वर्षेण ददाह सपुरं नृपं । २६०
दग्धप्राण्यङ्गविगलद्वसास्रक्स्नेहवाहिनी । मयूरचन्द्रकाढ्येव वितस्ता समपद्यत ।
शरणाय प्रविष्टानां भयाच्चक्रधरान्तिकं । मुहूर्त्तान्निरदह्यन्त सहस्राणि शरीरिणां ।
मधुकैटभयोर्मेदः प्रागूर्व्वीरिव चक्रिणं । दग्धानां प्राणिनां तत्तत्तदा सर्व्वाङ्गमस्पृशत् ।
स्वसा सुश्रवसो नागी रमण्याख्याद्रिगह्वरात् । साहायकायाश्मराशीन् समादाय तदा ययौ ।
सयोजनाधिके शेषे मार्गस्यारात् सहोदरं । कृतकार्य्यं निशम्याश्मवर्षं ग्रामेषु तज्जहौ । २६५
योजनानि ततः पञ्च जाता ग्रामधरा शिला । सा रमण्याटवीत्यद्याप्यस्ति स्थूलशिलाविला ।
घोरं जनक्षयं कृत्वा प्रातः सानुशयोऽप्यहिः । लोकापवादनिर्व्विण्णः स्थानमुत्सृज्य तद्ययौ ॥
दुग्धाब्धिधवलं तेन सरो दूरगिरौ कृतं । अमरेश्वरयात्रायां जनैरद्यापि दृश्यते ।
श्वशुरानुग्रहान्नागीभूतस्यापि द्विजन्मनः । जामातृसर इत्यन्यत्तत्र च प्रथितं सरः ।
प्रजानां पालनव्याजान्निःशङ्कक्षयकारिणः । अकस्मादन्तकाः केचित् सम्भवन्ति तथाविधाः । २७०
अद्यापि तत्पुरं दग्धं श्वभ्रीभूतञ्च तत्सरः । उपचक्रधरं दृष्ट्वा कथेयं स्मर्य्यते जनैः ।
राज्ञां रागः क्रियान्नाम दोषः स्वल्पदृशां मते । तत्तस्य तेन संवृत्तं यन्नाभूत्क्वापि कस्यचित् ।
सतीदैवतविप्राणामप्येकस्य प्रकोपतः । श्रुतो हि प्रतिवृत्तान्तं त्रैलोक्यस्यापि विप्लवः ।
चत्वारिंशतमब्दान् स मासैस्त्रीणां त्रिभिः समाः । भुवं भुक्त्वा क्षितिनृपा दुर्णयेन क्षयं ययौ ।
अप्यल्पकालसन्दृष्टप्राकाराट्टालमण्डलं । तत् किन्नरपुरं लेभे गन्धर्व्वनगरोपमां । २७५
एकस्तु तनयस्तस्य वैचित्रात् कर्म्मणां गतेः । स्वधात्र्या विजयक्षेत्रं नीतः प्राणैर्न तत्यजे ।
राजा सिद्धाभिधः सोऽथ तथा निःशेषितं जनं । नवीचकार जलदो दावदग्धमिवाचलं ।
इति वृत्तं महाश्चर्य्यं तस्य पित्रं महामतेः । संसारासारताज्ञेन प्राप पुण्योपदेशतां ।
भोगयोगेन मालिन्यं नेतुं मध्यगतोऽपि सः । न शक्यतेस्म पङ्केन प्रतिमेन्दुरिवामल ।
दर्पज्वरोग्रभूपालमध्ये निर्ध्यायतोऽनिशं । सुधाहृतिकलामौलिं तस्यैवोल्लाघता ययौ । २८०
गणितं गुणिना तेन सर्व्वं तृणमिवोज्झता । खण्डेन्दुमण्डनार्च्चायां मण्डनत्वमखण्डितं ।
राज्ञस्तस्यैव राजश्री परलोकानुगाभवत् । यस्तामयोजयद्दूतो धर्म्मेणाव्यभिचारिणा ।
षष्टिमब्दान् प्रशास्योर्व्वीमासन्नानुचरान्वितः । आरुरोह सदेहोऽसौ लोकाञ्छशिशिखामणेः ।
भृत्यान्तरं समाश्रित्य प्रययुः शोचनीयतां । तत्सुतं तु समालम्ब्य प्रभुं भुवनवन्द्यतां ।
यात्याश्रितः किल समाश्रयणीयलभ्यां निन्द्यां गतिं जगति सर्व्वजनार्च्चितां वा । २८५
गच्छत्यधस्तृणगुणः श्रितकूपयन्त्रः पुष्पाश्रयी सुरशिरोभुवि वृद्धिमेति ।
सिद्धः सिद्धः सदेहोऽयमिति शब्दं सुरा दिवि । प्रोद्घोषयन्तोऽनयन् पटहं सप्तवासरान् ।

उत्पलाक्ष इति ख्यातिं पैशुन्याचतया गतः। त्रिंशतं सार्द्धान् वर्षाणामन्वशान्महीं।
तस्य सूनुर्हिरण्याक्षः स्वनामाङ्कं पुरं व्यधात्। क्ष्मां सप्तत्रिंशतं वर्षान् सप्त मासांश्च भुक्तवान्।
हिरण्यकुल इत्यस्य हिरण्याक्षस्य चात्मजः। षष्टिं षष्टिं च मुकुलस्तत्सूनुरभवत् समाः। २९०
अथ म्लेच्छगणाकीर्णे मण्डले चण्डचेष्टितः। तस्यात्मजोऽभून्मिहिरकुलः कालोपमो नृपः।
दक्षिणां सान्तकामाशां स्पर्द्धया जेतुमुद्यता। यन्मिषादुत्तरहरिदभारान्यमिवान्तकं।
सान्निध्यं यस्य सैन्यान्तर्हन्यमानाश्मनोत्सुकान्। अजानन् गृध्रकाकादीन् दृष्टाग्रे धावतो जनाः।
दिवारात्रं हतप्राणिसहस्रपरिवारितः। योऽभद्भूपालवेतालो विलासभवनेष्वपि।
बालेषु करुणा स्त्रीषु घृणा वृद्धेषु गौरवं। न बभूव नृशंसस्य यस्य घोराकृतेर्ग्रतः। २९५
स जातु देवीं सम्वीतसिंहलांशुककञ्चुकां। हेमपादाङ्कितकुचां दृष्ट्वा जज्वाल मन्युना।
सिंहलेषु नरेन्द्राङ्घ्रिमुद्राङ्कः क्रियते पटः। इति कञ्चुकिना पृष्टेनोक्तो यात्रामधात्तत।
तत्सेनाकुम्भिदानाम्भोनिम्नगाकृतसङ्गमः। यमुनालिङ्गनप्रीतिं प्रपेदे दक्षिणार्णवः।
स सिंहलेन्द्रेण समं संरम्भादुदपाटयत्। चिरेण चरणस्पृष्टप्रियालोकनजां रुषं।
दूरात्तत्सैन्यमालोक्य लङ्कासौधैर्निशाचराः। भूयोऽपि राघवोद्योगमाशङ्क्य प्रचकम्पिरे। ३००
स तत्रान्यं नृपं दत्वा तीव्रशक्तिमपाहरत्। पटं यमुपदेवाख्यं मार्त्तण्डप्रतिमाङ्कितं।
व्यावृत्य चोलकर्णाटलाटादीश्च नरेश्वरान्। सिन्धुरानिव गन्धेभो गन्धेनैव व्यधारयत्।
तस्मिन् प्रयाते प्राप्तेभ्यः शंसुस्तत्पराभवं। नगर्यो नरनाथेभ्यस्तुट्यदट्टालमेखलाः।
काश्मीरं द्वारमासाद्य श्वभ्रभ्रष्टस्य दन्तिनः। श्रुत्वा स त्रासजं रावं तोषरोमाञ्चितोऽभवत्।
तदाकर्णनसंरम्भे सहर्षोऽथ विरुद्धधीः। शतमन्यद्गजेन्द्राणां हठेन निरलोठयत्। ३०५
स्पर्शोऽङ्गानि यथा वाचं कीर्त्तनं पापिनां तथा। सन्दूषयेदतो नोक्ता तस्यान्यापि नृशंसता।
कोवेत्त्यद्भुतचेष्टानां कृत्यं प्राकृतचेतसां। धर्मं सुकृतसम्प्राप्तिहेतोः सोऽपि यदाददे।
श्रीनगर्यां हि दुर्बुद्धिर्विदधे मिहिरेश्वरं। होलाडायां समिहिरपुराख्यं पृथुपत्तनं।
अग्रहारान् जगृहिरे गान्धारब्राह्मणास्ततः। समानशीलास्तस्यैव ध्रुवं तेऽपि द्विजाधमाः।
भगिनीवर्गसम्भोगनिर्लज्जाम्लेच्छवंशजाः। स्नुषासक्तिसक्ताश्च दारदाः सन्ति पापिनः। ३१०
वस्तुभावेस्तया भाट्टा भार्याविक्रयकारिणः। परोपभोगितास्तेषां निर्लज्जास्तर्हि योषितः।
मेघागमः फणिभुजं प्रथितान्धकारः प्रीणाति हंसममलोजलदात्ययश्च।
प्रीतेः समानरुचितैव भवेन्निदानं दातुः सतिग्रहकृतश्च परस्परस्य।
स वर्षसप्ततिं भुक्त्वा भुवं भूलोकभैरवः। भूरिरोगार्दितवपुः प्राविशज्जातवेदसं।
सोऽयं त्रिकोटिहा मुक्तो यः स्वात्मन्यपि निर्घृणः। देहत्यागेऽस्य गगणादुच्चचारेति भारती। ३१५
इत्यूचुर्यं मते तेषां स एव परिहारदः। खण्डयन्नीतघृणतामग्रहारादिकर्मभिः।
आक्रान्ते दारदैर्भाट्टैर्म्लेच्छैरशुचिकर्मभिः। विनष्टधर्मे देशेऽस्मिन् पुण्याचारप्रवर्त्तनं।

म्लेच्छान् स सेस्याप्य यतनोद्वारुणं तपः। संकल्प्य स्वर्पुदाईं प्रायश्चित्तक्रियां व्यधात्।
अतएवाग्रहाराणां सहस्रं प्रत्यपादयत्। गान्धारदेशजातेभ्यो द्विजेभ्यो विजयेश्वरे।
क्षुरखङ्गासिधेन्वादिपूर्णे यः फलके तदा। वह्निप्रदीप्ते सहसा पर्य्यन्ते स्वां तनुं जहौ।
इत्येतस्मिञ्जनाम्नाये केचिदव्यभिचारिणि। प्राज्ञः पुरुषसिंहस्य मौर्य्यन्तस्याविगर्हितं।
॥ कुलकं ॥ ये नागेन रुषा प्लुष्टे नगरे प्राभवन् खशाः। तेषां नाशाय वृत्तान्तं पूर्व्वोक्तं जगदुः परे।
अवतारयतस्तस्य चन्द्रकुल्याभिधां नदीं। अश्मकोन्मूलनामध्ये शिलाभूद्विघ्नकारिणी।
ततः कृततपाः स्वप्ने देवैरुक्तः स भूपतिः। यक्षः शिलायां बलवान् ब्रह्मचार्य्यत्र तिष्ठति।
साध्वी स्पृशति चेदेनां निरोद्धुं नच शक्नुयात्। ततोऽपरेद्युः स्वप्नोक्तं शिलायान्तेन कारितं।
तासु तासु कुलस्त्रीषु व्यर्थयत्नास्वयाचलत्। चन्द्रवत्याख्यया स्पृष्टा कुलाख्या सा महाशिला।
कोटित्रयं नरपतिः क्रुद्धस्तेनागसा ततः। सपतिभ्रातृपुत्राणामवधीत् कुलयोषितां।
इयं चान्यमते ख्यातिः श्रूयते तथ्यतः पुन.। अभव्या सनिमित्तापि प्राणिहिंसा गरीयसी।
एवं क्षुद्रोऽपि यद्राजा सम्भूय न हतोजनै.। तत्कर्म्म कारयद्भिस्तद्दैवैरेव रक्षितः।
प्रजापुण्योदयैस्तीव्रैश्चिरात्तस्मिन् क्षयं गते। एकस्तत्प्रभवः पौरैः सदाचारोऽभ्यषिच्यत।
तत्रापि पूर्व्वसंस्कारानुकृता सन्दधे जनै.। श्मशानविहिते लीलावेश्मनीव नृपास्पदे।
अतिसन्तापदाज्जातः सजनाह्लादकोऽभवत्। जलौघो जलदश्यामात्तापात्ययदिनादिव।
लोकान्तरादिवायातं मेने धर्म्मं तदा जनः। अभयञ्च परावृत्तं प्रवासाद्गहनादिव।
स वक्रेशं वकः श्वभ्रे वकवत्यापगां तथा। कृत्वा पुरं परार्ध्यश्रीर्लवणोत्साभिधं व्यधात्।
तत्र त्रिषष्टिर्व्वर्षाणां स त्रयोदशवासरान्। अभ्यशाह्यत भूपेन तेन पृथ्वी प्रशासता।
अथ योगेश्वरी काचिद्भट्टाख्या रजनीमुखे। कृत्वा कान्ताकृतिं काम्यामुपतस्थे विशाम्पतिं।
तया मनोहरैस्तैस्तैर्वचनैर्ल्लपितस्मृति.। स यागोत्सवमाहात्म्यं द्रष्टुं हृष्टो न्यमच्यत।
पुत्रपौत्त्रशतोपेतः प्रातस्तत्र ततो गतः। चक्रवर्त्ती तया निन्ये देवीचक्रोपहारतां।
कर्म्मणा तेन सिद्धाया व्योमाक्रमणसूचकं। जानुमुद्राद्वयं तस्या दृषत्यद्यापि दृश्यते।
देव.शतकपालेशो मातृचक्रं शिला च सा। खेरि मठेषु तद्वार्त्तां स्मृतिमद्यापि गच्छति।
देव्या कुलतरोः कन्दः क्षितिनन्दोऽवशेषितः। ततस्तस्य सुतस्त्रिंशद्वत्सरानन्वशान्महीं।
द्वापञ्चाशतमब्दान् क्ष्मां द्वौ च मासौ तदात्मजः। अपासीद्वसुनन्दाख्यः प्रख्यातस्मरशास्त्रकृत्।
नरः षष्टिं तस्य सूनुस्तावतोऽच्छ तत्सुतः। वर्षानभूद्विभुश्शामं योऽच्छवालमकारयत्।
जुगोप गोपादित्योऽथ क्ष्मां सद्वीपां तदात्मजः। वर्णाश्रमप्रत्यवेचाद र्शितादियुगोदयः।
स खोलखागिकाहाडिं ग्रामे स्कन्दपुराभिधान्। शमाङ्गादिमुखांश्चाग्रहारान् यः प्रत्यपादयत्।
ज्येष्ठेश्वरं प्रतिष्ठाप्य गोपाद्रावार्य्यदेशजाः। गोपाग्रहारान् कृतिना येन स्वीकारिता द्विजाः।
भूधीरवाटिकायां यो निर्व्वास्य लशुनाशिनः। खासटायां व्यधात् विप्रान्भ्रष्टाचारविवर्ज्जितान्।

# ॥ प्रथमस्तरङ्गः ॥

अन्यांस्थानीय देशेभ्यः पुण्येभ्योवषिकादिषु । पावनानग्रहारेषु ब्राह्मणान् स न्यरोपयत् ।
उत्तमो लोकपालोऽयमिति वक्ष प्रशस्तिषु । यः माप्तवान् विना यज्ञं चचेमे न पशुत्तयं ।
सपड्दिना वर्षषष्टिं पालयित्वा स मेदिनी । भोक्तुं पुण्यपरीपाकं लोकान् सुकृतिनामगात् ।
गोकर्णस्तत्सुतः चौर्णी गोकर्णेश्वरकृद्ददे । अष्टपञ्चाशतं वर्षांस्त्रिंशत्यङ्का विवर्ज्जितान् ।
सूनुर्नरेन्द्रादित्योऽस्य खिङ्खिल्यान्याभिधोऽभवत् । भूतेश्वरप्रतिष्ठानामचयिण्यास्य कारकः ।
दिव्यानुग्रहभागुग्राभिधो यस्य गुरुर्व्यधात् । उग्रेशं मातृचक्रञ्च प्रभावोदयविग्रहः ।
भूत्वा षट्त्रिंशतं वर्षान् शतं चाङ्का विभुर्भुवः । सदीर्घैरनघान् लोकानासदत् सुकृतैः कृती ।
युधिष्ठिराभिधानोऽभूदथ राजा तदात्मजः । यः सूक्ष्माक्षतया लोकैः कथितोऽन्धयुधिष्ठिरः ।
तेन क्रमागतं राज्यं सावधानेन शासता । अनुजज्ञे मितं कालं पूर्व्वभूपालपद्धतिः ।
काले कियत्यपि ततो याल्यभाग्यवशादसौ । सिषेवे श्रीमदक्षीणो यत्किञ्चन विधायितां ।
नान्वग्रहीदनुग्राह्यान्न सञ्जग्राह धीमतः । न प्रवृत्तोपचाराणां प्रागिवासीत् प्रियङ्करः ।
दुर्व्विदग्धपर्षदा सार्कं निर्विशेषं सभाजितैः । परिजह्रे स दुर्ज्ञातो जाततेजोवधैर्बुधैः ।
सर्व्वत्र समदृष्टित्वं गुणोऽयं खलु योगिनः । अकीर्त्तिहेतुः स महान्दोषस्तु पृथिवीपतेः ।
नयद्भिर्गुणतां दोषान् दोषताञ्च गुणान् विटैः । स लुप्तप्रतिभश्चक्रे शनकैस्तोजितोपमः ।
वाङ्मर्मच्छेदिनो दीर्घनर्मश्मश्वत्कथा विटैः । अनीश्वरोचिता तस्य क्रीडापि भयदाभवत् ।
पुरो मिथ्यागुणग्राही परोक्षं दोषदर्शकः । असुखिरादरोऽभूत् सोऽभ्युद्वेष्योऽनुजीविनां ।
मनागनवधानेन स्खलतस्तस्य भूपतेः । इत्थं राज्यस्थितिरगादचिरेण विस्रवतां ।
उपेक्षितास्यनिर्द्रोहैरयतन्नाजितात्मनः । अथ लब्धवलास्तस्य नाशाय द्रोहिमन्त्रिणः ।
प्रभोः सङ्कोचिताशैस्तैस्तैरङ्गैर्निरवग्रहं । राज्यं जिहीर्षवो भूपाश्चक्रिरे भूम्यनन्तराः ।
तदनु प्राणिताः सर्व्वे ते ते नानादिगाश्रयाः । आसन् राज्यामिषं प्राप्तुं श्येना इव ससम्भ्रमाः ।
अथोत्पन्नभयो राजा न शशाक निजस्थितिं । व्यवस्थापयितुं यन्त्रच्युतां कारुः शिलामिव ।
चिरच्युते क्षमाभर्त्तुस्तस्मिन् राज्ये विशृङ्खले । उपायोऽथ स्थितेर्हेतुर्नैकः कस्य न पप्रथे ।
दृष्टदोषान् स्थितिं प्राप्तो हन्यादस्मानसंशयं । विचिन्त्येति न सामास्य जगृहुर्निजमन्त्रिणः ।
अथ निरुरुधुस्ते सन्नद्धाबलैर्नृपमन्दिरं । व्यवहितजनाक्रन्दं भेरीरवैरतिभैरवैः ।
मदकरिघटाकेतुच्छायानिरुद्धरविप्रभा भवनवलभी सन्तन्वन्तो दिवापि तमोवृताः ।
तैर्गन्तुं स्वभुवो निवारितरणैर्दत्तेऽवकाशे ततस्त्यक्तश्रीर्नगरान्तरात्सनृपतिस्तात्पर्य्यतो निर्ययौ ।
आजानेयरजोङ्गरागललनाप्रस्थानसन्दर्शनक्षुभ्यत्पौरजनाश्रुवाजकणिकाकीर्णेन राजाध्वना ।
राज्याच्च्युतस्य बहुशः परिवाररामाः कोशादि तस्य रिपवो भजतो विजह्रुः ।
उर्व्वीरुहो विगलितस्य नगेन्द्रशृङ्गादक्षीफलादिरभसादिव गण्डशैलाः ।

रम्यैः शैलपथैर्व्रजन् श्रमवशाच्छायां श्रितः शाखिनामासीनः प्रचलायितेन सुमहद्दुःखं विसस्मार सः।
दूरात्पामरफुत्कृतैः श्रुतिपथप्राप्तैः प्रबुद्धस्सभ्रद्दृष्टैर्निर्झरवारिभिः सहमनाः श्वभ्रे निमज्जन्निव।
नानावीरुत्तृणपरिमलैरुग्रगन्धा वनोर्व्योरम्भःक्षोभप्रतिहतशिलाः पिच्छिलाश्चाद्रिकुल्याः।
क्रान्त्वा श्रान्तैर्विषकिसलयच्छायमुग्धाङ्गलेखैरत्युत्सङ्गं निहिततनुभिर्मूर्च्छितं तस्य दारैः।
पर्य्यस्ताद्रितटाद्विलोक्य सुचिरं दूरीभवन्मण्डलं द्रागामन्त्रयितुं जहत्सु नृपतेर्दारेषु पुष्पाञ्जलीन्।
चौर्णोत्पृष्टविकीर्णपक्षतिनमत्तुण्डं स्वनीडस्थितैः सावेगं गिरिकन्दरासु पततां वृन्दैरपि क्रन्दितं।
स्तनयुगवलनद्धस्रस्तमूर्द्धाग्र्यकानां चिकुरचलनविलोलं वीक्ष्य दूरात् स्वदेशं।
अवहत रुदतीनां भालविन्यस्तहस्तं पथि नृपवनितानामश्रुभिर्निर्झराम्भः।
प्रीतिस्थैर्य्यैरुचितवचनाचिन्त्यशोककान्त्या निर्व्याजाज्ञाग्रहणगुरुभिस्तस्य तैश्चोपचारैः।
तस्य स्नेहादुपगतवतो राज्यविभ्रंशदुःखं मन्दीचक्रुः स्वभुवि सुजना भूपतेर्भूमिपालाः। १९०
इति श्रीकाश्मीरकमहामात्यचम्पकप्रभुसूनोः कह्लणस्य कृतौ राजतरङ्गिण्यां प्रथमस्तरङ्गः।
चतुर्दशाधिकं वर्षसहस्रं नववासराः। मासाश्च विगतास्त्वस्मिन्नष्टाविंशति राजसु॥

---

## ॥ अथ द्वितीयस्तरङ्गः ॥



विहितमज्जगोः शृङ्गाग्राभ्यां धनुर्घटितं तया नरकरटिनोर्दंष्ट्राग्राभ्यां गणं प्रतिमूर्त्तकृतः।
द्विविधघटनावाञ्छ्यानां निधेरुचितो विभोर्जयति ललनापुम्भागाभ्यां शरीरविनिर्म्मितिः॥
भूयोराज्यार्ज्जनोद्योगस्तेनात्यज्यत भूभुजा। जरसा शमिवाप्त्या च कर्णमूलमवाप्तया।
अनयद्दिनयोदात्तः समं स्वविषयेण तान्। विषयान् वशिनामग्र्य स तान् पश्चापि विस्मृतिं।
धावन्नाज्येच्छया दुर्गागलिकायां स्वमन्त्रिभिः। कालेन स्थापितो वद्धेत्यभ्यधायि तु कैरपि।
अथ प्रतापादित्याख्यस्तैरानीय दिगन्तरात्। विक्रमादित्यभूभर्त्तुर्ज्ञातिरन्यार्थ्यपिच्यत।
शकारिर्व्विक्रमादित्य इति सम्भ्रममाश्रिते.। अन्यैरन्नान्यथालेखि विसंवादि कदर्थितं।
इदं स्वभेदविधुरं हर्षादीनां धराभुजां। कञ्चित्कालमभूद्राज्यं ततःप्रभृति मण्डलं।
असपूर्व्वापि तेनोर्व्वी सपूर्व्वेव महीभुजा। लालिता हृदयज्ञेन पत्या नववधूरिव।
भुक्त्वा द्वात्रिंशतं वर्षान् भुवं तस्मिन्दिवं गते। जलौकास्तत्सुतो भूमेर्भूषणं समपद्यत।
पितुरेव समं कालं दृद्धिहेतोः स दिद्युते। विषुवत्पूर्णशीतांशुरिव शीतेतरार्च्चिषः।
अथ वाकपुष्टया सार्द्धं देव्या दिव्यप्रभावया। भुवन्तत्प्रभवोऽभुञ्जत्तुञ्जीनो रञ्जयन् प्रजाः।
दम्पतीभ्यामियं ताभ्यामभूष्यत वसुन्धरा। गङ्गामृगाङ्कखण्डाभ्यां जटाभूरिव धूर्जटेः।
मण्डलं साध्वधत्तान्तौ नानार्थवमनोरमं। शतद्रुदापयोवाहौ माहेन्द्रमिव कार्म्मुकं।
चक्राते च महाभागौ विभ्रमाभरणं भुवः। तुङ्गेश्वरं हरावासं कतिकाख्यञ्च पत्तनं।
कचिन्मारवराज्यान्तः स्थाने चण्डातपोज्ज्वले। तत्प्रभावेण फलितं वृक्षैस्तत्पथरोपितै.।
नाट्यं सर्व्वजनप्रेक्ष्यं यश्चक्रे स महाकवेः। द्वैपायनमुनेरंशस्तत्काले चन्द्रकोऽभवत्।
तयोः प्रभावमाहात्म्यजिज्ञासार्थमिवोद्यता। प्रजासु दुःसहा जातु व्यापद्दैवी व्यजृम्भत।
पाकोन्मुखशरच्छालिच्छन्ने केदारमण्डले। मासि भाद्रपदेऽकस्मात् पपात तुहिनं महत्।
तस्मिन् विश्वचयोद्युक्तकालाट्टहसितोपमे। न्यमज्जन् शालयः सार्कं प्रजानां जीविताशया।

अथासीत् क्षुत्परिक्षामजनप्रेतकुलाकुल.। प्राकारो निरयस्येव घोरो दुर्भिक्षविभ्रमः।
पत्नीप्रीतिं सुतस्नेहं पितृदाक्षिण्यमातुरः। कुक्षिम्भरिः क्षुदुत्तप्तो विसस्माराखिलो जनः।
क्षुत्तापाद्विस्मरन् लज्जामभिमानं कुलोन्नतिं। अशनार्थंक्रियाप्राप्तो लोकोलक्ष्मीकटाक्षित.।
क्षामं कण्ठगतप्राणं याचमानं सुतं पिता। सुतोवा पितरं त्यक्त्वा चकार स्वस्य पोषणं।
स्नाय्वस्थिशेषे वीभत्से स्वदेहेऽहंक्रियावतां। अभूद्भोज्यार्थिनां युद्धं प्रेतानामिव देहिनां।
रुचाभिभाषी क्षुत्क्षामो घोरो दिक्ष्वक्षिणी क्षिपन्। एक एको जगज्जीवैरियेष स्वात्मपोषणं।
तस्मिन् महाभये घोरे प्राणिनामतिदुःसहे। ददृशे लोकनाथस्य तस्यैव करुणार्द्रता।
निवारितप्रतीहारः सरलौषधिशोभिनः। दर्शनेनैव दीनानामलक्ष्मीक्लममच्छिनत्।
सपत्नीको निजैः कोषैः सर्वस्वैर्मन्त्रिणामपि। क्रीतान्नः स दिवारात्रं प्राणिनः समजीवयत्।
अटवीषु श्मशानेषु रथ्यास्ववसथेषु च। क्षुत्क्षामः क्ष्माभुजा तेन नहि कश्चिदुपेक्ष्यत।
अतो निःशेषितधनः क्षीणान्नां वीक्ष्य मेदिनीं। क्षपायामेकदा देवीमेवमूचे सुदुःखित.।
देव्यस्मदपचारेण भुवं केनापि दुस्तरा। जाता निरपराधानां जनानां व्यापदीदृशी।
धिङ्मामधन्यं यस्यार्थे लोकोऽयं शोकपीडितः। पश्यन्नशरणामुर्व्वीमनुयाति विपद्यते।
प्रजा निःशरणा एता अन्योन्यं बान्धवोज्झिताः। अरक्षिता मयेऽमुष्मिन् किं कार्य्यं जीवितेन मे।
यथा कथञ्चिल्लोकोऽयं दिनान्येतानि यत्नतः। मयानिवारिताः सर्व्वे नच कोऽपि व्यपद्यत।
अतिक्रान्तप्रभावेयं कालदौरात्म्यपीडिता। निष्किञ्चनाद्य सञ्जाता पृथिवी गतगौरवा।
तदिमा. सर्व्वतो मग्ना दारुणे व्यसनार्णवे। उपायः कतमस्तावत् समुद्धर्त्तुं क्षमः प्रजाः।
निरालोको हि लोकोऽयं दुर्दिनयस्तभास्करः। कालरात्रिकुलैर्व्विश्वक्परीत इव वर्त्तते।
हिमसङ्घातदुर्लङ्घ्यचितिभृद्रुद्धनिर्गमाः। बद्धद्वारकुलायस्थखगवद्विवशा जनाः।
शूराश्च मतिमन्तश्च विद्यावन्तश्च जन्तवः। कालदौरात्म्यतः पश्य जाता निहतयोग्यताः।
श्यामाः काञ्चनपुष्पकुड्मलकुलच्छन्ना न काः क्ष्मातले सौजन्यामृतवर्षिभिस्तिलकितं सद्भिर्न किं मण्डलं।
पन्थान. सुचिरोपचाररुचिरैर्व्याप्ता न कैः संस्तुतैस्तेषामत्र न सन्ति निष्कृतगुणाः कालेन ये मोहिताः।
तदेव गलितोपायो जुहोमि ज्वलने तनुं। नतु द्रष्टुं समर्थोऽस्मि प्रजानां नाशमीदृशं।
धन्यास्ते पृथिवीपालाः सुखं ये निशि शेरते। पौरान् पुत्त्रानिव पुर' सर्व्वतो वीक्ष्य निर्वृतान्।
इत्युक्त्वा करुणाविष्टो मुखमाच्छाद्य वाससा। निपत्य तल्पे निःशङ्कं रुरोद पृथिवीपतिः।
निर्वातस्तिमितैर्दीपैस्तद्वीक्ष्य. कौतुकादिव। वीक्षमाणस्य तं देवी जगाद जगतीभुजं।
राजन् प्रजानां सुकृतैः कोऽयं मतिविपर्य्यय.। येनेतरद्व स्वैरमधीरोचितमीहसे।
यदसाध्यानि दुःखानि छेत्तुं न प्रभविष्णुता। तन्महीपाल महतां महत्त्वस्य किमङ्गनं।
क प्रजाः कतम. स्रष्टा वराकः कतमो यमः। सत्यमतानां भूपानां कर्त्तुं शासनलङ्घनं।
पत्यौ भक्तिव्रतं स्त्रीणामद्रोहो मन्त्रिणां व्रतं। प्रजानुपालनेऽनन्यकर्म्मता भूभृतां व्रतं।

उत्तिष्ठ व्रतिनामस्य क विपर्य्येति मद्वचः । प्रजापाल प्रजानान्ते नास्त्येव तुल्यतं भयं ।
इति संरम्भतः प्रोक्ते तयानुध्याय देवताः । प्रतिगेहं गतप्राणः कपोतनिवहोऽपतत् ।
प्रातस्तन्नृपतिर्व्वीच्य व्यरंसीन्मरणोद्यमात् । प्रजाश्च प्रत्यहं प्राप्तैः कपोतैर्जीवितं दधुः ।
वस्त्वन्तरं किमपि तत् साध्वी नूनं ससर्ज्ज सा । जनताजीवितावाप्त्यै न कपोतास्तु तेऽभवन् ।
तादृशं नहि निर्व्याजप्राणिकारुण्यशालिनां । हिंसया धर्म्मचर्य्यायाः शक्यं चापि कलङ्कनं ।
अभवन्निर्म्मलं व्योम देवीकृत्यैः सह क्रमात् । सार्कं भूपालशोकेन दुर्भिक्षं च शमं ययौ ।
सा भूतिविभवोदग्रमग्रहारं द्विजन्मनां । सती कनीमुषञ्चक्रे रामुषं चापकल्मषा ।
वर्षैः षट्त्रिंशता शान्ते पत्यौ विरहजो ज्वरः । तत्यजे ज्वलनज्वालाजालिनप्रच्छदे तया ।
सा यत्र शुचिचारित्रा विपन्नं पतिमन्वगात् । स्थानं जनैस्तदाक्रष्टाटवीत्यद्यापि गद्यते ।
चारुचारित्रया तत्र तया सत्रेऽवतारिते । नानापथागतानाथसार्थैरद्यापि भुज्यते ।
आभ्यामभ्यधिकं कर्त्तुं शक्तिः कस्येति निश्चितं । विचिन्त्यारोचकी धाता नापत्यं निर्म्ममे तयोः ।
वेधाः परां धुरमुपैति परीचकाणामितोः फलप्रजननेन कृतश्रमो यः ।
विस्तारिताङ्कुरमुदारमयोग्यता तु तस्मादुदेत्य किमिवाभ्यधिकं विदध्यात् ।
दीर्घदुर्दिननष्टार्कराश्मोत्मापचारतः । ज्ञात्वा राज्यमिषाद्देहं सा चकारेति केचन ।
ततोऽन्यकुलजो राजा विजयोऽष्टावष्टत् समाः । पत्तनेन परीतं यश्चकार विजयेश्वरं ।
सुतो महीमहेन्द्रस्य जयेन्द्रस्तस्य भूपतेः । आमाजानुभुजो राजा बुभोजाथ प्रयुप्रयः ।
अलोलकीर्त्तिकल्लोलदुकूलवलनोज्ज्वलां । बभार यद्भुजस्तम्भो जयश्रीशालभञ्जिकां ।
तस्याभूदद्भुतोदन्तभवभक्तिविभूषितः । राज्ञः सन्धिमतिर्नाम मन्त्री मतिमतां वरः ।
नास्त्युपायः स संसारे कोऽपि योऽपिहितुं चमः । भूपालमत्तकरिणामेषां चपलकर्णतां ।
प्राङ्गुणमस्ति कस्य योऽयमस्त्रेति यद्दिशः । तस्मिन्नीश्वरचिते देवस्थेनारोहत भूभुजा ।
निवारितप्रवेशोऽथ सकोपस्तमहेतुकं । निनाय हृतसर्व्वस्वं यावदायुर्दरिद्रतां ।
तस्य भूपतिविद्वेषदोषाभपरिशोषिणः । आप्यायं राजपुरुषा वार्त्तयापि न चक्रिरे ।
गिरं गभीरो गृह्णाति क्षमाध्याववत्तदपगाः । उक्तानुवादिनस्तावदङ्गकं प्रतिरवादव ।
स तु राजविरुद्धत्वदारिद्र्याभ्यां न विव्यथे । गतमत्यूहया प्रीतः प्राप्तया हरसेवया ।
अथ भाव्यर्थमाहात्म्यात् पप्रथे प्रतिमन्दिरं । राज्यं सन्धिमतेर्भावीत्यश्रुतापि सरस्वती ।
नाचोदितावाक्चरतीत्याप्तेभ्यः श्रुतवान्नृपः । ततः सम्भूतसन्त्रासः कारावेश्मनि तं व्यधात् ।
तत्र तस्योपनिगडैः पीडिताङ्गैर्व्विनिश्श्यतः । पूर्णोऽभूद्दशमो वर्षो भूपतेश्चायुषोऽवधिः ।
निष्पुत्त्रः स महीपालो मुमूर्षुर्दाहमाददे । रोगात्यया पीडया च चिन्तया च तदीयया ।
ऊष्मायमाणो विद्वेषवह्निना ज्वलतानिशं । न विना तद्वधं मेने भवितव्यप्रतिक्रियां ।
भाव्यर्थस्य बुधाः कुर्य्युरुपायं स्थगनाय यं । स एवापाहृतं द्वारं श्रेयं दैवेन कल्पितं ।

दग्धाङ्गारकदम्बके विलुठतः स्तोकोन्मिषत्तेजसो वेधा वह्निकणस्य शक्तिमतुलामाधातुकामो हठात्।
तन्निर्व्वापणमिच्छतः प्रतनुते पुंसः समीपस्थिते सन्तापद्रुतभूरिसर्पिषि घटे पानीयकुम्भभ्रमं।
अथ राजाज्ञया क्रूरैर्वधकर्म्माधिकारिभिः। निशि सन्धिमतिः शूले समारोप्य विपादितः।
प्रोतशूले श्रुते तस्मिन् शोकशङ्कुर्म्महीपतेः। निरगाद्रोगभग्नस्य पूर्व्वं पश्चात्तु जीवितं।
सप्तत्रिंशतिवर्षेषु यातेष्वस्मिन्निरन्वये। अशान्तभूमिपालाभूत् कतिचिद्दिवसानि भूः।
अथ सन्धिमतिं बुद्धा तथा व्यापादितं गुरोः। ईशानाख्यस्य हृदयं विवशं वशिनोऽप्यभूत्।
शिरीष इव संसारे सुखोच्छेदे मनीषिणां। हन्ता नृशंसस्तद्वृन्तमिवैकमवशिष्यते।
स श्मशानभुवं प्रायादनाथस्येव शुष्यतः। कर्त्तुं विनयिनस्तस्य स्वोचितामन्त्यसत्क्रियां।
तत्रास्थिशेषमद्राक्षीत्लक्ष्यमाणं वलादृकैः। शूलमूलावबद्धास्थिखण्डावष्टम्भनिश्चलं।
समीरणसमाकीर्णं सुषिरन्ध्राग्रनिर्गतैः। ध्वनितैरनुशोचन्तमिवावस्थां तथाविधां।
हा वत्स द्रष्टुमीदृक्त्वे जीवाम्यद्येति वादिना। तस्याकृष्यत शूलान्तः प्रोतं तेनाथ कीकसं।
वेष्टिताङ्घ्रिः शिरःशीर्षैस्तत्कचैर्धूलिधूसरैः। अनैषीत्तं स्वकं कालं वारयन् भाषतो वृकान्।
उचितां सत्क्रियां कर्त्तुं ततस्तस्य समुद्यतः। भाले विधात्रलिखितं श्लोकमेतमवाचयत्।
यावज्जीवं दरिद्रत्वं दशवर्षाणि बन्धनं। शूलस्य पृष्ठे मरणं पुनाराज्यं भविष्यति।
पादत्रयस्य दृष्टार्थे श्लोकस्यासीत् स योगवित्। द्रष्टव्ये तुर्य्यपादार्थे प्रत्यये कौतुकान्वितः।
अचिन्तयच्च संभ्रान्तः कथमेतद्भविष्यति। उवाच च विधेः शक्तिमचिन्त्यां कलयंश्चिरं।
तत्तत्कर्म्मव्यतिकरकृतः पारतन्त्र्यानुरोधात् सत्त्वाः सर्व्वे व्यवसितहठोन्मूलनाय प्रयत्नात्।
चित्रं तत्राप्युदयति विधेः शक्तिरत्यद्भुतेयं यन्माहात्म्यादिविधघटनासिद्धयो निर्न्निरोधाः।
मणिपूरपुरे पार्थं निहतं समजीवयत्। फणिकन्याप्रभावेण सर्व्वाश्चर्य्यनिधिर्व्विधिः।
द्रोणपुत्रास्त्रनिर्दग्धं मातुर्गर्भे परीक्षितं। जीवयन् कृष्णमाहात्म्याद्धाता धुर्य्योऽधिकारिणं।
कथं भस्मीकृतं दैत्यैर्नागांस्तार्क्ष्येण भक्षितान्। पुनर्जीवयितुं को वा दैवादन्यः प्रगल्भते।
इत्युक्त्वा भाविनोऽर्थस्य द्रष्टुं सिद्धिं समुद्यतः। तत्रैव बद्धवसतिः कङ्कालं स ररक्ष तं।
अथार्द्धरात्रे निर्न्निद्रस्तथैवाद्भुतचिन्तया। धूपाधिवाससम्भिन्नो घ्रातवान् दिव्यमेकदा।
उद्दण्डवादनोद्दण्डघण्टोघघटाकृते। सट्टैडमरुनिर्घोषैर्घर्घरं श्रुतवान् ध्वनिं।
उद्घाटितमतिः स ततः पितृवनावनौ। दर्शयन् योगिनीस्तेजःपरिवेषान्तरस्थितः।
तासां संभ्रममाकर्ण्य कङ्कालं स्वापवाहितं। ईशानस्तां श्मशानोर्व्वीं ध्रुतामिश्चकितो ययौ।
अथापश्यत्तरुच्छन्नः शायितं मण्डलान्तरे। सन्धीयमानसर्व्वाङ्गं कङ्कालं योगिनीगणैः।
उन्मदरसंयोगवाञ्छासमस्तदेवताः। वीराभाभात् समन्विष्य कङ्कालं तमपाहरन्।
एष मेकं स्वमङ्गस्य विनिधाय क्षणादथ। कुतोऽप्यानीय पुंलिङ्गपूर्णाङ्गं तं प्रचक्रिरे।
अथ पुर्य्यष्टकभ्राम्यन्मात्रामात्रान्यविग्रहं। योगेनाकृष्य योगिन्यस्तत्र सन्धिमतेर्न्धुः।

ततः सुप्तोत्थित इव प्रभुर्दिव्यविलेपनः। समभुज्यत ताभिः स यथेच्छं चक्रनायकः।
ईशानस्तस्य देवीनां वितीर्णाङ्गद्युतिं पुनः। चपायां चोद्यमानायां चकितः पर्यशङ्कत।
नदंस्तद्वचया धीरः स च तत् स्थानमाययौ। तत्र योगेश्वरीचक्रं विभ्रमन्तरधीयत।
अथाश्रूयत वार्त्तासौ माभूदीशान भीस्तव। नास्त्यङ्गहानिरस्माकं इते चास्मिन्न वञ्चना।
अस्मदराद्दिव्यवपुः सन्धितः सन्धिमानसौ। आर्यराजाख्यः ख्यातो भुवि भविष्यति।
ततो दिव्याम्बरः स्रग्वी दिव्यभूषणभूषितः। ववन्दे सन्धिमान् भक्त्या प्राक्पूर्वस्मृतिर्गुरुं।
ईशानोऽपि तमालिङ्ग्य स्वप्नेष्वपि सुदुर्लभं। भूमिकामाललम्भे कामिति को वक्तुमर्हति।
असारञ्च विचित्रञ्च संसारं ध्यायतोर्मिथः। विवेकविशदा तत्र प्रावर्त्तत तयोः कथा।
अथ वार्त्तां विदित्वेमां कुतोऽपि नगरौकसः। सबालवृद्धाः सामात्यास्तमेवोद्देशमाययुः।
पूर्वाकृतिविसंवादाद्भ्रमोनाथं स इत्यय। तेनाह्वियन्त संवासिनिखिलान् पृच्छता वचः।
अर्थानां शासितुं राष्ट्रं पौराणामपराजकं। सोऽन्वमन्यत कृच्छ्रेण निस्पृहः शासनाद्गुरोः।
प्रापय्योपवनोपान्तं तं दिव्याकृतिशोभिनं। सहर्षं स्नापयामासुरभिषेकाम्बुभिर्द्विजाः।
नवराजोचिताचारे न स शिक्षामपेक्षत। दृष्टकर्मा समस्तास्तु निस्तुषाः प्रक्रिया व्यधात्।
स राजोचितनेपथ्यः पौराशीर्घोषशोभिनीं। धौताग्निपलाशवर्षां सैन्यां प्राविशत् पुरीं।
तस्मिन् विरजसि प्राज्यमाक्रामति नृपासनं। आचकाम प्रजा व्यापन्न दैवी न च मानुषी।
प्राहरन् हृदयं तस्य शृङ्गाररहितविभ्रमाः। नितम्बिन्यो वनभुवः शमिनो ननु योषितः
वनप्रसूनसम्पर्कपुण्यगन्धिस्तपस्विनां। कर्पूरधूपसुरभिः करैः स्पृष्टः स पिप्रिये।
भूतेशवर्द्धमानेशविजयेशानपश्यतः। नियमो राजकार्य्येषु तस्याभूत् प्रतिवासरं।
हरायतनसोपानचालनाभ्र कणाञ्चितैः। संस्पृष्टः पवनैः सोऽभूदानन्दास्यन्दविग्रहः।
पूर्वपूजापनयने निराडम्बरसुन्दरः। तेनैव द्रष्टुमज्ञायि स्नपितो विजयेश्वरः।
लिङ्गपीठलुठत्स्नानकुम्भाम्भःक्षोभभूर्ध्वनिः। प्रयानस्याप्यभूत्तस्य वल्लभो वल्लकीदिपः।
तापसैर्भस्मरुद्राक्षजटाजूटाङ्कितैर्वभौ। तस्य माहेश्वरी पर्षदिव भूमिपतेः सभा।
शिवलिङ्गसहस्रस्य प्रतिष्ठाकर्मणि प्रभोः। प्रतिज्ञा प्रत्यहं तस्य नाभूद्विघटिता क्वचित्।
प्रमादात्तदनिष्पत्तौ शिलामुत्कीर्य्य कल्पिता। सहस्रलिङ्गी तद्भृत्यै सर्व्वतोऽद्यापि दृश्यते।
तासु तासु स वापीषु लिङ्गव्याजादरोपयत्। स पुण्यपुण्डरीकाणां जन्मनेऽचपरम्पराम्।
स्थाने स्थाने जलान्तश्च बहुसंख्यैर्निवेशितैः। अनयन्नर्मदाभङ्गिं शिवलिङ्गैस्तरङ्गिणीं।
प्रतिलिङ्गं महाग्रामाः प्रत्यपाद्यन्त तेन ये। पर्यदामय तद्भोगः कालेनान्तर्द्धिमागतः।
अकरोत् स महादर्मैर्यर्मशलिङ्गैर्महाव्ययैः। महात्रिशूलैर्महतीं महामाहेश्वरीं महीं।
कृत्वा सन्धीश्वरं देवमन्धानपिटकानने। ईशानस्य गुरोर्नाम्ना व्यधादीशेश्वरं हरं।
खेदाश्च भीमां देवीश्च देशान्यान्यान् पदे पदे। समठप्रतिमालिङ्गैर्हर्म्यैर्निन्ये महार्घतां।

स्वयं भूभिश्च तीर्थैश्च पूतं भक्तिविभूषितः । स एव भोक्तुमभ्यासीत् प्राज्यः काश्मीरमण्डलं ।
स्नातस्य निर्झराम्भोभिः पुष्पलिङ्गार्चनोत्सवैः । राज्ञस्तस्य वनोर्वीषु मासः पुष्पाकरो ययौ ।
स चातिरम्यः काश्मीरो ग्रीष्मस्त्रिदिवदुर्लभः । हिमलिङ्गार्चनैः प्रायाद्वनान्तेषु कृतार्थतां ।
फुल्लाब्जखण्डरुद्धाशाः प्राप्य पुष्करिणीतटीः । लक्ष्मीसखः स खण्डेन्दुचूडाध्यानपरोऽभवत् ।
नीलोत्पलवतीर्वापीरगस्त्योदयनिर्विषाः । अवगाह्य हरार्चाभिः शरदं निर्विवेश सः ।
सार्द्धं तपोधनैस्तैस्तैर्भजतो जागरोत्सवान् । तस्याभूवन् भुवोभर्त्तुरमोघा माघरात्रयः ।
अत्यद्भुतं राज्यलाभमित्थं सफलयन् कृती । पञ्चाशतं त्रिवर्षीनामत्यक्रामत् स वत्सरान् ।
समव्यसनिनस्तस्य राज्यकार्य्याण्यपश्यतः । तस्मिन् काले प्रकृतयो विरागं प्रतिपेदिरे ।
अन्वैष्यत नृपस्ताभिः कश्चिद्राज्याय प्रभुश्रुवे । राजपुत्त्रोजिगीषुश्च श्रीमान् यौधिष्ठिरे कुले ।
जुगोप गोपादित्याख्यः काश्मीरेन्द्रजिगीषया । युधिष्ठिरप्रपौत्त्रं हि गान्धाराधिपतिस्तदा ।
वसन्नपास्तसाम्राज्य स तत्र तनयं क्रमात् । अवाप लक्षणैर्दिव्यैरमोघं मेघवाहनं ।
स तत्र पितुरादेशाद्वैष्णवान्वयजन्मनः । राज्ञः प्राग्ज्योतिषेन्द्रस्य ययौ कन्यास्वयम्वरे ।
तत्र तं वारुणं छत्रं छायया राजसन्निधौ । भेजे वरस्रजा राजकन्यका चामृतप्रभा ।
तेन तस्य निमित्तेन वृद्धिमागामिनीं जनाः । अजानन्नम्बुवाहस्य पाश्चात्येनेव वायुना ।
राज्ञा हि नरकेणैतद्वरुणादुष्णवारणं । आनीतमकरोच्छायां न विना चक्रवर्त्तिनं ।
तमन्तिकं पितुः प्राप्तं पत्न्या लक्ष्म्या च संश्रितं । भुवा निमन्त्रयामासुर्मन्त्रिणो वंश्ययोग्यवान् ।
अथार्य्यराजो विज्ञाय स्वराज्यं भेदजर्ज्जरं । प्रतिचक्रे न शक्तोऽपि तस्थौ तत्त्यक्तुमुत्सुकः ।
अचिन्तयच्च सत्यं मे सम्प्रीतोऽद्भुतभावनः । सिद्धिविघ्नानमून् दीर्घानपाकर्त्तुं समुद्यतः ।
हत्ये सङ्गनि निष्पाद्ये श्रमात् कौसीद्यमाश्रयन् । प्राहरीवाध्वगो दिष्ट्या मोहितोऽस्मि न निद्रया ।
स्वकुले त्यजता लक्ष्मीं विरक्तां बन्धकीमिव । हठनिर्वासनक्रीडा दिष्ट्या नासादिता मया ।
शैलूषस्येव मे राज्यं रङ्गेऽस्मिन् वलातस्थिरं । निर्व्यूढावपि वैराज्यं दिष्ट्या न प्रेचकागता ।
दिष्ट्या मदैव वैमुख्यमुच्चैरुद्भावयन् श्रियः । त्यागक्षणेन भीतोऽस्मि विकत्थनइवाहवे ।
इति सञ्चिन्तयन्नन्तः सर्व्वत्यागोन्मुखो नृपः । मनोराज्यानि कुर्व्वाणो दरिद्रइव पिप्रिये ।
अन्येद्युः प्रकृतीः सर्व्वाः सन्निपत्य सभान्तरे । ताभ्यः प्रत्यर्पयन्न्यासमिव राज्यं सुरक्षितं ।
उज्झितं स्वेच्छया तस्य प्रयत्नेनापि नाशकत् । तं स्वीकारयितुं कश्चित् फणीन्द्रमिव कञ्चुकं ।
अथाग्निमुपादाय सोऽथ प्रायादुदङ्मुखः । धौतवासा निरुष्णीषः पद्भ्यामेव प्रजेश्वरः ।
तस्य पादार्पितदृशो व्रजतोऽमानिनः प्रभोः । पन्थानं जगृहुः पौरा निःशब्दस्वदस्रव. ।
सविर्षाहितगव्यूतिरुपविश्य तरोरधः । जनमेकैकमुद्बाष्पं न्यवर्त्तयत सान्त्वयन् ।
पथि शिखरिणां मूर्ध्ने मूर्ध्ने विलम्ब्य जहज्जनाम् निजपरिकरोगच्छन्मूर्द्धं क्रमात् समदृश्यत ।
गहनवसुधाः सम्पूर्ण्याधिव्रजन् स निजापदादद इव विनिर्यातः शोकैः कृतानुगमोऽजहे ।

नि शेषं निकटात् सलोकमटवीमध्ये निरुध्यत्पदं शोकावेशवशात्प्यगद्गदपदं संमान्य चोत्सार्य्य च।
भुजलकुपरिरोधमर्म्मरमरुन्निद्राणसिद्धाध्वगश्रेणीमौलिमणिप्रभोज्ज्वलगुहागेहं जगाहे वनं। १००
अथ वनसरसीतटद्रुमाध.पुटकघटोदरसंभृताम्बुपूरां। वसतिमकृत वासरावसाने शुचितरुपल्लवकल्पितोचतल्पां।
स्वङ्गासक्तार्पितातपाः श्रवलितच्छायाभुवः शाद्वलैरुत्फुल्लामलमल्लिकातनमिलत्पुन्नागजल्लीजनाः।
सध्वानावनशालरेणुरणितोन्मिश्रैः प्रपाताम्बुभिः श्रान्तं दृक्पथमागतास्तमनयन्निद्रामदूराद्रयः।
ःरिरसितैः पदे पदे स प्रतिभटतां पटहध्वनेर्दधानैः। श्रमनुत रटितैच कर्कराटोः परिगलितां गमनोन्मुखस्त्रियामाम्।
चुर्व्विधिवदुपास्य पूर्व्वसन्ध्यामासन्ने नलिनसरस्यपास्तनिद्रः। क्ष्मापालः परिचितसोदराम्बुतीर्थं नन्दीशाध्युषितमवाप भूतभर्त्तुः।
नन्दिक्षेत्रे त्रिभुवनगुरोः सोऽयतस्तत्र यावत्तस्थौ तावत् स्वयमभिमतावाप्तये जायते स्म। १०१
भस्मस्मेरः सुघटितजटाजूटबन्धोऽचसूत्री रुद्राचाङ्कोऽजरठमुनिभिः सस्पृहं वीक्ष्यमाणः।
भ्राम्यच्छ्रीकण्ठदत्तप्रनजनितमहाशक्तिर्यो भैचहेतोर्भिचाधानोद्यनास्तु प्रतिमुनिनिलयं संभ्रमात्तापसीषु।
हृचैर्भिचाकपाले शुचिफलकुसुमश्रेणिभिः पूर्य्यमाणे मान्यो वैराग्ययोगेऽप्यनुपतनपरप्रार्थनालाघवोऽभूत्॥ १०८
राजानः॥ ६॥ आदितः राजानः॥ ४४॥ ग्रन्था आदितः॥ ५४२॥
इति श्रीकाश्मीरिकमहामात्यचम्पकप्रभुसूनोः कह्लणस्य कृतौ राजतरङ्गिण्यां द्वितीयस्तरङ्गः॥
शतदये वत्सराणामष्टभिः परिवर्जिते। अस्मिन् द्वितीये व्याख्याताः षट् प्रख्यातगुणा नृपाः॥



# तृतीयतरङ्गः ॥



मुग्धेभाजिनमस्य कुम्भकुहरे मुक्ताः कुचाग्रोचिताः किं भालज्वलनेन कज्जलमतः स्त्रीकार्य्यमक्ष्णोः कृते ।
संधाने वपुरर्द्धयोः प्रतिवदन्नेवं निषेधेऽप्यहेः कर्त्तव्ये प्रिययोत्तरानुसरणोद्युक्तो हरः पातु वः ।
अथोद्धतपृथुश्लाघमानिन्युर्मेघवाहनं । गान्धारविषयं गत्वा सचिवाधिष्ठिताः प्रजाः ।
रक्तप्रजस्य भूभर्त्तुः पश्चाल्लोकानुरञ्जनं । तस्याज्ञायि जनैर्धौतचामचालनसन्निभं ।
स पुनर्बोधिसत्त्वानामपि सत्त्वानुकम्पिनां । चर्य्यामुदात्तचरितैरत्यशेत महाशयः ।
तस्याभिषेक एवाज्ञां धारयन्तोऽधिकारिणः । सर्व्वतो मारमर्य्यादापटहानुदघोषयन् ।
कल्याणिना प्राणिवधे तेन राज्ञा निवारिते । निष्पापां प्रापितां वृत्तिं स्वकोषात् मौनिकादयः ।
तस्य राज्ये जिनस्येव मारविद्वेषिणः प्रभोः । क्रतौ घृतपशुः पिष्टपशुर्भूतबलावभूत् ।
स मेघवननामानमग्रहारं विनिर्ममे । स युष्टग्राममकृत पुण्यज्येष्ठो मेघमठं तथा ।
भोगाय देश्यभिक्षूणां वल्लभास्याष्टतप्रभा । विहारमुच्चैरमृतभवनाख्यमकारयत् ।
देश्येकदेशात्मीनाम्न. प्राप्तस्तस्याः पितुर्गुरुः । स्तुत्या तच्छायया प्रोक्तो लोस्तोन्यास्तूपकार्थ्यकृत् ।
चक्रे नडवने राज्ञोयूकदेव्यभिधा वधूः । विहारमद्भुताकारं सपत्नीस्पर्द्धयोद्यता ।
अर्द्धे यस्मिन्निधत्तः शिक्षाचारास्तत्रार्पितास्तया । अर्द्धे गार्हस्थ्यगर्ह्याश्च सस्त्रीपुत्रपशुस्त्रियः ।
अथेन्द्रदेवीभवनमिन्द्रदेव्यभिधा व्यधात् । विहारं सचतुःशालं स्तूपं भूपप्रियापरा ।
अन्याभिः खादनामश्राममुख्याभिर्निजाख्यया । देवीभिस्तस्य सहिता विहारा बहवः कृताः ।
अर्व्वाक्कालोद्भवस्यापि राज्यकालोऽस्य भूपतेः । न्यक्कृतादिनृपोदन्तैर्दृष्टैरत्यद्भुतोऽभवत् ।
स वहिर्व्विहरं जातु भूभृद्दोलैरुदीरितं । चौरश्चौरोऽयमित्याराद्‌शृणोत् क्रन्दितध्वनिं ।
यः कोऽत्र बध्यतां चौरं इत्युक्ते तेन सक्रुधा । ससाक्रन्दितध्वानो नच चौरोव्यभाव्यत ।
पुनर्द्वित्रैर्द्दिनैस्तस्य निर्गतस्याथलमतः । अभवन्नभयार्थिन्यो दिवा दिव्यप्रभा स्त्रियः ।
ताः संश्रुतेप्सितास्तेन कृपाश्लेन कृपानुना । अभ्यभाषन्त सीमन्तपुञ्जिताञ्जलयो वच. ।

देव दिव्यप्रभावेण भुवने भवता धृते । अपरस्माद्भयं जातु कस्य स्यात् करुणानिधे ।
तदानीं तोयदा भूत्वाच्छादयन्तो नभस्तलं । अकाण्डकरकापातमर्द्दिभिः कर्षकैर्मृधा ।
पक्वशालिवनस्फीतिरक्षाक्षुभितमानसैः । नागास्तत्कोपसंरम्भभूमिं ते गमिता प्रभो ।
तेऽस्माकं पततश्चौरश्चौर इत्यार्त्तभाषितं । श्रुत्वा देवेन बध्यन्तामित्यवादि यदा क्रुधा ।
तदा त्वदाज्ञामात्रेण न्यपतन् पाशवेष्टिताः । प्रसादः क्रियतां तेषामस्मत्करुणयाधुना ।
॥ चतुर्भिःकुलकं ॥ तदाकर्ण्याब्रवीद्राजा प्रसादविशदाननः । सर्व्वे ते बन्धनान्नागास्त्यज्यन्तामिति सस्मितः ।
तया तस्याज्ञया राज्ञो नागा विधुतबन्धनाः । प्रणम्य चरणौ तूर्णं प्रययुः सपरिग्रहाः ।
अथ ग्राहयितुं भूपानाज्ञां हिंसानिवृत्तये । स दिग्जयाय निर्व्याजधर्म्माचर्य्यो विनिर्य्ययौ ।
अभूतभीतजनताविक्षणश्लाघ्यविक्रमः । स्पृहणीयो जनस्यापि त्वदीयविजयोद्यमः ।
प्रभावविजितान् कृत्वा सोऽहिंसादीक्षितान्नृपान् । अर्णसां पत्युरभ्यर्णमवापावर्णवर्जितः ।
तत्र तालीवनच्छायासुखविश्रान्तसैनिकः । युक्तिं द्वीपान्तराक्रान्त्यै क्षणमन्तर्व्यचिन्तयत् ।
अथ वेलावनोपान्तात्तेनार्त्ताक्रन्दितध्वनिः । मेघवाहनराज्येऽपि हतोऽयमिति शुश्रुवे ।
तप्तायःशङ्कुनेवान्तर्व्रणितस्य द्रुतं ततः । सञ्चारिणातपत्रेण स चातो वसुधामगात् ।
अपश्यदथ केनापि चण्डिकायतनाग्रतः । नरं शवरसेनान्या हन्यमानमधोमुखं ।
अनात्मज्ञ धिगेतत्ते कुकर्म्मेति महीभुजा । तर्ज्जितः स भयादेव शवरस्तं व्यजिज्ञपत् ।
शिशुर्मुमूर्षुर्मे राजन्नयं रोगार्द्दितः सुतः । कर्म्मैतद्दैवतेभ्यस्य श्रेयोलवावहं ।
उपहारनिरोधेन सद्य एव विपद्यते । बन्धुवर्गमशेषञ्च विद्धि तज्जीवजीवितं ।
अरण्यगहनाद्रक्षसि नाथं देव रक्षसि । बहुलोकाश्रयं बालं कथमेतमुपेक्षसे ।
अथाभ्यधान्महात्मा स वचोभिः शवरस्य तैः । बध्यस्य दृष्टिपातैश्च विक्लवैर्व्विवशीकृतः ।
किरात कातरो मा भूः स्वयं संरक्ष्यते मया । बहुबन्धुस्तव सुतो बाध्योऽप्ययमबान्धवः ।
उपहारीकरोम्येष चण्डिकायै स्वविग्रहं । मयि प्रहर निःशङ्कं जीवत्वेतज्जनद्वयं ।
तदद्भुतमहासत्त्वचित्तोदात्तत्वविस्मितः । उन्मिषद्रोमहर्षस्तं ततः स शवरोऽभ्यधात् ।
अतिकारुण्यमिपतस्तवायं पृथिवीपते । कश्चिन्मतिविपर्य्यासप्रकारो हृदि रोहति ।
त्रैलोक्यजीवितेनापि यो रक्ष्यो हेलयैव तं । पृथिवीभोगसुभगं कथंकारमुपेक्षसे ।
न मानं न यशो नार्थान्न दारांश्च न बान्धवान् । न धर्मं न सुतान् भूपा रक्षन्ति प्राणतृष्णया ।
तत् प्रसीद प्रजानाथ मा वधीऽस्मिन् कृपां कृथाः । शिशुर्य्यैष प्रजार्थैता जीवन्तु त्वयि जीवति ।
उपाजिहीर्षुरात्मानं दन्तद्योताधंडम्बरैः । अर्चयन्निव चामुण्डामथोवाच स पार्थिवः ।
सदाचारसुधास्वादे के भवन्तो वनौकसः । जाङ्गलीमज्जनप्रीतिं न जानन्ति मरुस्थिताः ।
ध्रुवापायेन कायेन शाश्वतः कीर्त्तिमय्ययं । सनाभोष्टं प्रसाष्टुं ते मूढ रूढोऽयमाग्रहः ।
मा बोधः किञ्चिदपरं सहस्व चेत् घृणा तव । न किं निजकृपाणोऽसि शक्तः प्रक्रान्तसिद्धये ।

इत्युक्त्वा स स्वयं देहमुपहर्त्तुं समुद्यतः। खण्डनाय स्वमुण्डस्य विकोषं शस्त्रमाददे ।
ततः प्रहर्त्तुकामस्य तस्य द्युकुसुमैः शिरः। करश्च दिव्यवपुषा रुद्धः केनाप्यजायत।
अथापश्यत्तथाभूतः कञ्चित् दिव्याकृतिं पुरः। न चण्डिकां न तं वध्यं न किरातं न दारकं।
स तं दिव्यस्तदावादीन्मां त्वं सत्ववशीकृतं। विद्धि मध्यमलोकेन्द्र वरुणं करुणानिधे।
यदेतत् त्वामुपास्तेऽद्य कृत्तं तत्सत्पुरात्पुरा। महाबलोऽहरद्रामः पुराणः स्वसुरस्तव।
रसातलैकतिलकं माहात्म्यवदिदं विना। उपद्रवाः प्राणहराः पौराणां नः पदे पदे।
तदिदं प्राप्तुकामेन त्वदौदार्य्यं परीचितं। करुणामय मायेयं निरमायि मयेदृशी।
त्वदादिर्यो व्यधाज्जन्तून् व्यस्तन् वसुकुलात्मजः। प्रायश्चित्तममारेण चरसीव तदेनसः।
भयस्पृहाजनकयोर्धरणीधरणोचिते। शेषदेहे विषोद्गारफणारत्नौघयोरिव।
तमःप्रकाशावहयोस्तेजः क्रान्तदिगन्तरे। उषर्बुधे धूमजालज्वालापल्लवयोरिव।
क्षमाप्यायक्रियाभाजो रुद्धतेजस्विमण्डले। प्रावृट्पयोदकृत्येऽह्नि सन्तापासारयोरिव।
द्वयोरालोकितं चित्रं जन्मैकस्मिन् महाकुले। तस्य त्रिकोटिहन्तुश्च तवाहिंसस्य च प्रभो।
॥ चतुर्भिः कुलकं॥ तस्यः समाडथैवं स वदतो यादसां प्रभोः। चकार पूजां स्तोत्रेण कृत्तेन च कृताञ्जलिः।
तच्च सम्प्रति गृह्णन्तं प्रणयादुष्णवारणं। जगाद गुणिनामग्र्यो वरुणं धरणीधरः।
कल्पद्रुमाद्य सन्तश्च नार्हन्ति श्रमशोषिकां। अर्थिनां प्रार्थिताः पूर्व्वं फलन्त्यन्ये स्वयं यतः।
अवालम्बियतश्छत्रं कथं न पुण्यपुण्यतां। तत्प्रार्थयिष्यत न चेदार्त्तोपकृतये भवान्।
वदान्यः सम्बिभागिभ्यः पूर्व्वं कुर्य्यादनुग्रहं। छाययाप्याययन् दद्यात् फलान्यपि महीरुहः।
तदेवं विहितोदात्तसम्बिभागाभिचोदितः। जनोऽयं भगवन् किञ्चिदरं प्रार्थयते परं।
वशीकृतेयं पृथिवी कृत्स्ना भवदनुग्रहात्। जेतुं द्वीपान् कथ्यतान्तु युक्तिः पाथोधिलङ्घने।
इत्यर्थ्यमानोऽकथयत् भूमिपालं जलेश्वरः। तितीर्षौ भवति स्तम्भं नीयतेऽम्भो मयाम्बुधेः।
ततो महान् प्रसादोऽयमित्युक्ते पृथिवीभुजा। तिरोबभूव भगवान् वरुणः सोष्णवारणः।
अन्येद्युर्व्विस्मयस्मेरैर्व्वलैः सीमन्तयन् जलं। प्रभावस्तम्भितजलं प्रोत्ततार स वारिधिं।
गुणरत्नाकरः शैलं सरत्नाकरशेखरं। नानारत्नाकरं सैन्यैरारुरोहाथ रोहणं।
तत्र तालीतरुवनच्छायाध्यासितसैनिकं। प्रीत्या लङ्काधिराजस्तमुपतस्थे विभीषणः।
समागमः स शुशुभे नरराक्षसराजयोः। बन्दिनादाश्रुतान्योन्यप्रथमालापसम्भ्रमः।
अथ रक्षःपतिर्लङ्कां लीलावहरणं चितेः। अमर्त्यसुलभाभिस्तं विभूतिभिरुपाचरत्।
यदाशीत्यपिशिताशा इत्यन्वर्थं नाम रक्षसां। तदा तदाज्ञाग्रहणे प्रापि तद्रूढिमन्दतां।
रक्षः शिरःप्रतिच्छन्दैः स्थिरप्रणतिसूचकैः। सनार्यशिखरान् प्रादात् तस्मै रक्षःपतिर्ध्वजान्।
पारावारिनिधेः प्राप्ताः काश्मीरेष्वधुनापि ये। राज्ञां यात्रासु निर्य्यान्ति ख्याताः पारध्वजाः पुरः।
इत्यमाराक्षसकुलं प्राणिहिंसां निषिध्य सः। समण्डलं प्रति कृती न्यवर्त्तत नराधिपः।

ततः प्रभृति तस्याज्ञा सार्व्वभौमस्य भूपतेः। हिंसाविरतिरूपा सा न कैश्चिदुदलङ्घयत।
क्षुद्रैरभादिभिर्नाप्सु सिंहाद्यैर्गहने न च। न श्येनप्रमुखैर्व्योम्नि तद्राज्ये जन्तवो हताः।
अतिक्रामति कालेऽथ कोऽपि शोकाकुलो द्विजः। पुत्त्रं गतासुमादाय द्वारि चक्रन्द भूपतेः
दुर्गया प्रार्थितं राजन्नुपहारं विनेष मे। अनन्यसन्ततेः सूनुर्ज्वरेणाद्य विपद्यते।
यद्यहिंसाग्रहेणेमं क्षितिपाल न रक्षसि। एतद्विपत्तौ तत्कोऽन्यो निमित्तं प्रतिभाति मे
निर्णयो वर्णगुरुणा त्वयैवैष प्रदीयतां। ब्राह्मणस्य पशोर्वा स्यात् प्राणानां कियदन्तरं।
तपस्थानपि ये जघ्नुर्ब्राह्मणप्राणलब्धये। हा मातस्तेऽधुना भूमेः प्रजापालास्तिरोहिताः।
इति ब्रुवति साक्षेपं शोकरूक्षाक्षरं द्विजे। आपन्नार्त्तिहरो राजा चिरमेवं व्यचिन्तयत्।
न बध्याः प्राणिनइति शास्योऽस्मि समकल्पयं। विप्रार्थमपि किं कुर्य्यां स प्रतिज्ञातविघ्नं
निमित्तीकृत्य मामद्य विपद्येत द्विजो यदि। तत्राप्यत्यन्तपापीयानर्थः संकल्पविप्लवः।
नैति मे संशयभ्रान्तमेकपक्षावलम्बनं। समेदावर्त्तपतितं प्रसूनमिव मानसं।
तत् स्वदेहोपहारेण दुर्गां तोषयता मया। प्रतिज्ञया समं न्याय्यं रक्षितुं जीविते द्वयोः।
इति सञ्चिन्त्य सुचिरं देहदानोद्यतोनृपः। श्वः प्रियं तव कर्त्तास्मीत्युक्ता विप्रं व्यसर्जयत्
क्षपायां क्ष्मापतिमथ समुपाहर्त्तुमुद्यतं। निषिध्य दुर्गा व्यधित प्रकृतिस्थं द्विजन्मजं।
इत्याद्यद्यतनस्यापि चरितं तस्य भूपतेः। पृथग्जनेषु सम्भाव्यं वर्णयन्तस्त्रपामहे।
अथवा रचनानिर्व्विशेषमार्गेण वर्त्मना। प्रस्थितान्ननुरुन्धन्ति श्रोतृचित्तानुवर्त्तनं।
तस्मिन्नस्तं गते भुक्ता क्ष्मां चतुस्त्रिंशतं समाः। अनादित्यमिवाशेषं निरालोकमभूज्जगत्
अथ क्ष्मामद्रक्षत् क्ष्मां श्रेष्ठसेनस्तदात्मजः। प्राज्ञः प्रवरसेनं यं तुञ्जीनं चाजगुः जनाः।
दोस्तम्भसंभृताशक्तौ कृपाणमणिदर्पणे। सङ्क्रान्तेवोन्मुखी यस्य भुवनश्रीर्व्यभाव्यत।
समाढ्चक्रं निर्म्माय यः पूर्व्वं प्रवरेश्वरं। पुण्याः पुराणाधिष्ठाने प्रतिष्ठा विविधा व्यधात्।
स्वहाङ्गनमिव सौर्णीं गनयन्मग्नवर्त्तिनीं। त्रिगर्त्ताद्यीं ग्रामपञ्चीं प्रवरेशाय यो ददौ।
ईशौ नृपाणां निःशेषक्ष्माकेदारकुटुम्बिनां। स समास्त्रिंशतं भूभृदनिस्त्रिंशाशयोऽभवत्।
हिरण्यतोरमाणाख्यौ व्यधत्तामथ तत्सुतौ। साम्राज्ययुवराजत्वभाजने रञ्जनं क्षितेः।
बालाहतानां प्राचुर्य्यं विनिवार्य्य समञ्जसम्। तोरमाणेन दीनाराः स्वाहताः सम्प्रवर्त्तिताः
शासनवाधाय राज्ञेव क्रमादेतेन वल्गितं। इति तं पूर्व्वजो राजा क्रोधनो बन्धने व्यधात्।
चिरं स्थितिव्यतिक्रमेऽञ्चस्तत्र तस्याञ्जनाभिधा। ऐक्ष्वाकस्यात्मजा राज्ञो वज्रेन्द्रस्यास गुर्व्विणी।
आसन्नप्रसवा भर्त्रा सत्वरं तेन बोधिता। सुतं प्रविष्टा प्रासोष्ट कुलालनिलये क्वचित्।
स कुम्भकारगेहिन्या काकेव पिकशावकः। पुत्त्रीकृतो राजपुत्त्रः पर्य्याप्तं पर्य्यवर्द्धत।
जनयित्वा कुलाल्यास्य रक्षित्वा विदितोऽभवत्। रक्षसौतेर्भुजङ्गस्य प्रच्छन्नइव सेवधिः।
पौत्त्रः प्रवरसेनस्य गिरामातुर्नृपात्मजः। पैतामहेन नाम्नैव कुलाल्या ख्यापितोऽभवत्।

वर्द्धमानस्तुसम्पर्कं न सेहे सहवासिनां। तेजस्विमैत्री रसिकः शिशुः पद्म इवाम्भसा।
तं कुलीनैश्च शूरैश्च विद्याविद्भिश्च दारकैः। अन्वीतमेव ददृशुः क्रीडन्तं विस्मयाज्जनाः।
स्वच्छन्दस्थात्युदारोजा राजा चक्रे स दारकैः। मृगेन्द्रशावः क्रीडद्भिर्वने बालमृगैरिव।
संविभेजे भुजप्राह्यं वशीचक्रे च सोऽर्भकान्। अराजोचितमाचारं नैव किञ्चिदसेवत।
भाण्डादि कर्त्तुं मृत्पिण्डं कुम्भकारैः समर्पितं। स्वीकृत्य चक्रिरे तेन शिवलिङ्गपरम्पराः।
तथा साश्चर्यचर्य्यं स क्रीडन् जातु व्यलोकयत। मातुलेन जयेन्द्रेण सादरं चाभ्यनन्द्यत।
आवेद्यमानं शिशुभिस्तं जयेन्द्रोऽयमित्यसौ। भूपालवत्सावहेलं पश्यन्नभ्यग्रहीदिव।
सम्भाव्य सत्त्वावष्टम्भात्तमसौ मान्यवंशजं। सादृश्याद्भगिनीभर्त्तुर्भागिनेयमशङ्कत।
सतरस्तर्कजिज्ञासारसेनानुससार तं। प्राप्तस्तद्गृहमौत्सुक्यात् स्वसारञ्च व्यलोकयत्।
सा स चान्योन्यमुन्मन्यू पश्यन्तौ भ्रातरौ चिरात्। निःश्वासात् द्विगुणोष्माणि मुहुरश्रूण्यमुञ्चतां।
कुलाल्यादारको मातः काविताविति पृष्टवान्। अकथ्यतेत्थं वत्सैषा माताऽयं मातुलश्च ते।
पितुर्वन्येन सक्रोधं तं कालापेक्षया चमं। शिक्षयित्वा जयेन्द्रोऽथ कार्य्यशेषाय निर्ययौ।
उत्पित्सोत्पादनासक्ते तस्मिन् भ्रात्रा यदृच्छया। बन्धान्मुक्तोऽनृतरणिस्तारमाणोऽस्तमाययौ।
निवार्य्य मरणोद्योगं मातुर्निर्वेदखेदितं। ययौ प्रवरसेनोऽथ तीर्थौत्सुक्याद्दिगन्तरं।
रचित्वा दशमासोना. क्ष्मामेकत्रिंशतं समाः। तस्मिन् क्षणे हिरण्योऽपि शान्तिं निःसन्ततिर्ययौ।
तत्रानेहस्युज्जयिन्यां श्रीमान् हर्षापराभिधः। एकच्छत्रश्चक्रवर्त्ती विक्रमादित्य इत्यभूत्।
भूपमद्भुतसौभाग्य श्रीर्वद्धुरभसाऽभजत्। विहाय हरिबाहुंश्च चतुरस्सागरांश्च यं।
लक्ष्मीं कृत्वोपकरणं गुणा येन प्रवर्द्धिते। श्रीमत्सु गुणिनोऽद्यापि तिष्ठन्त्युद्धतकन्धराः।
म्लेच्छोच्छेदाय वसुधां हरेरवतरिष्यतः। शकान्विनाश्य येनादौ कार्य्यभारो लघुः कृतः।
नानादिगन्तराख्यातं गुणवत्सुलभं नृपं। तं कविर्मातृगुप्ताख्यः सभास्थानस्थमासदत्।
स गम्भीरस्य भूभर्तुरनुभावं गुणाद्भुतं। विविधास्थानसंदृष्टस्तस्याभूद्य व्यचिन्तयत्।
सोऽयमासादितः पुण्यैः क्षोणिपालो गुणिप्रियः। परभागोपरम्भाय पूर्व्वोऽमुष्य महीभुजः।
अस्मिन् राजनि तत्त्वज्ञे सूरिभिः सम्भृतश्रु ते। नाञ्जलिर्दीयते जातु मानाय च गुणाय च।
भङ्ग्यामुखिन्विदधती स्वाभिप्रायप्रकाशनं। वैदग्ध्यं वन्ध्यतां नैति बुद्धिः कुलवधूरिव।
खिलीकृतखलालापे युक्तायुक्तविवेकरि। नायाति सेव्यमानेऽस्मिन् स्वगुणोऽनर्थकारितां।
अनाप्नुवन्ति सावद्यदुर्विद्यसमपौषिकां। जीवन्मरणमस्याये गुणिभिर्नानुभूयते।
सम्भावनानुसारेण प्रवृत्तोऽस्मादिवेकिनः। शोच्यते नाश्रितोच्छ्रायं मोतिदायो महाशये।
दृष्ट्वन् यथा गुणं शान्तमुचितप्रतिपत्तिभिः। अन्तरज्ञः समस्तानामयमुत्साहमर्द्धनः।
सेवया दृढकष्टस्य दाक्षिण्योत्पादनश्रम। अस्य यो न स भृत्यानां हिमाद्रौ हिमविक्रयः।
मिथ्याख्यातगुणो नाशो नामात्य कलहप्रियः। असत्यसन्धः स्वैरो वा नास्थानेऽस्य महीपतेः।

अश्लीलालापिनोऽन्योन्यं नर्म्मोक्ता मर्म्मभेदिनः। अन्यप्रवेशासहनाः संहतानास्य सेवकाः।
छन्दानुवर्त्तिनामेष निजविज्ञानवन्दिनाम्। सर्व्वज्ञंमन्यतान्धानां मुखप्रेक्षी न पार्थिवः।
अनेन सह सञ्जातः संलापो विपुलोदयः। लभ्यते नान्तरा च्छेत्तुं दुर्जातैर्जातु दुर्जनैः।
सर्व्वदोषोज्झितं सेव्यं नृपमेतमिमं मम। समासादयतः पुण्यैरदूरे स्वार्थसिद्धयः।
गम्भीरस्य गुणज्ञस्य स्थिरबुद्धेस्य पार्थिवः। एष क्षेपभयं त्यक्त्वा निषेव्यः प्रतिभाति मे।
न चास्मद्वचनमादाय रञ्जितादन्यराजवत्। भ्राम्यतो भूतलेऽमुष्मिन् सेव्योऽन्यः प्रतिभाति मे।
इति सञ्चिन्त्य सुदृढं स नवामिव तां सभां। नानुरज्यन्नचास्ते स्म गुणिगोष्ठीषु मध्यगः।
मृदुपूर्व्वं गुणानेव दर्शयन्तं विशाम्पतिः। विशिष्टयोग्यताज्ञस्ये विवेदाराधनोन्मुखं।
अचिन्तयच्च नायं स्याद्गुणिमात्रं महाशयः। उदात्तं सत्क्रियार्हत्वं वदत्यस्य गभीरता।
इति सञ्चिन्त्य राज्ञापि ज्ञातुं तस्यान्तरं मतेः। नाक्रियन्त परीक्षार्थं यथावल्लाभसत्क्रियाः।
स तेनानुपचारेण तमुदात्ताशयं नृपं। श्लोककर्त्तारं विदन्धीमान् सिषेवे प्रीतिमाश्रितः।
क्रमोपचीयमानेन सेवाभ्यासेन धीमतः। तस्य नोद्वेगमगमत् स्वकायद्व पार्थिवः।
नातीव स्वल्पया स्थित्या नातीवाप्यथ दीर्घया। शरन्निशाचशेनेव राजा निन्ये प्रसन्नतां।
नर्म्मभिर्गर्म्मचेटानां दाःस्थानां विक्रियाक्रमैः। मिथ्यास्तवैर्व्विटानाञ्च न स क्षोभमनीयत।
प्रसन्नालापसम्प्रीत्या च्छायाग्रहइवाचलः। प्रतिस्पर्द्धीव च क्रुध्यन्नावज्ञायामभून् प्रभोः।
वीक्षणं राजदासीनां राजदिष्टेष्वहासनम्। राजाग्रे च कथां नीचैः कालविच्चाचचार सः।
स्वभावाद्राजपुरुषैः सज्जनैराजनिन्दकैः। नाप्तप्रभोरुपालम्भो लेभे पैशुन्यजीविभिः।
वदद्भिरादरात् स्थैर्य्यमैकश्लाघ्यत्वमहं प्रभोः। निन्ये सोत्साहमैश्चिरं सेवोत्साहासहिष्णुभिः।
अन्योत्कर्षानपि वदन् प्रसङ्गेन निराग्रहः। स्वविद्याद्योतकश्चाभूत् सभ्यानां हृदयंगमः।
एवं स सेवमानस्तमुद्योगेन वलीयसा। अनिर्व्विण्णो माहगुप्तः षड्वत्सरान्यवाहयत्।
अथ तं कार्पटिकाङ्गं धूसरं जीर्णकर्पटं। वहिर्यातुं विनिर्यातो राजा वीक्ष्य व्यचिन्तयत्।
वैदेशिको निःशरणो गुणवान् वान्धवोज्झितः। दार्ढ्यजिज्ञासुना कष्टं सोऽयमायासितो मया।
कोऽस्याश्रयः किमशनं कानि प्रावरणानि वा। इत्येवमर्थविमूढेन मया हन्त न चिन्तितम्।
वसन्तेनेव न मया शोभयाद्यापि योजितः। शीतवातातपैः शुष्यन् सोऽयं पुरुषपादपः।
अस्य म्लानस्य भेषज्यं निर्व्विण्णस्य विनोदनं। श्रान्तस्य वा श्रमच्छेदं कोविदध्यादसंपदः।
नास्मै चिन्तामणिर्दत्तो नामृतं वा निषेवितः। मया यदयमेतावद्व्यामूढेन परीक्ष्यते।
तदमुष्य गुणित्वस्य तीव्रं सेवाश्रमस्य च। प्रतिपत्त्या कतमया तावदानृण्यमाप्नुयात्।
इति चिन्तयतस्तस्य राज्ञस्तं सेवकं प्रति। स्वप्रसादोचिता काचित् प्रत्यभान्नैव सत्क्रिया।
ततः प्रावर्त्तत स्फारनीहारस्रववाहिभिः। दर्शनिवाङ्गं प्रालेयपवमानैर्हिमागमः।

सन्ततध्वान्तमिषतस्तीव्रशीतवशीकृताः । आशाश्चकाशिरे नीलनिचोलाच्छादिता इव ।
शीतार्त्या द्युमणौ वह्निदहनोद्वाभिलाषतः । द्रुतं यातीव जलधिं दिनानि लघुतां ययुः । १००
अथ दीपोज्ज्वले धाम्नि सपद्दीप्तहसन्तिके । कदाचिन्नृपतिर्दैवादर्द्धरात्रे व्यबुध्यत ।
स हेमन्तानिलैर्भूरिभांकारपरुषैः पुरः । दीपान्प्रकम्पितानीषत्प्रविष्टैर्धाम्नि दृष्टवान् ।
तानुज्ज्वलयितुं भृत्यानन्विष्यन्नभ्यधात्ततः । यामिकेषु वहिस्सुप्तः कोऽवर्त्ततइति स्फुटम् ।
सुखसुप्तेषु सर्व्वेषु वाह्यकवान्तरात्ततः । राजन्नयमहं मातृगुप्तइत्यश्रृणोद्वच ।
प्रविशेति स्वयं राज्ञा दत्तानुज्ञस्ततो गृहं । तद्गीषानिध्यरम्यन्तदपृष्टोऽन्यैर्व्विवेश सः । १०५
दीपानुज्ज्वलयेत्युक्तो निष्पाद्य चतुरैः पदैः । वहिर्यियौ स ऊचेऽथ क्षणं तिष्ठेति भूभुजा ।
समयद्विगुणीभूतशीतकम्पः प्रभोः पुरः । किंस्विद्वक्षीति विमृषन्नातिदूरेऽभ्युपाविशत् ।
अथ पप्रच्छ भूपालः कियत्यस्ति निशेति तम् । सोऽभ्यधाद्देव यामिन्या यामः सार्धोऽवशिष्यं
ततोभूभृदुवाचैनं कथं सम्यङ्निशाक्षणः । त्वयावधारितो निद्रा कथं नाभूच्च ते निशि ।
अथ क्षत्वा क्षणाच्छ्लोकमेतं तं संव्यजिज्ञपत् । अवस्थावेदनादाशां दैन्यं वा त्यक्तुमुद्यतः । ११०
शीतेनोद्धृषितस्य माषमशिवश्चिन्तार्णवे मज्जतः शान्ताग्निं स्फुटिताधरस्य धमतः क्षुत्क्षामकण्ठस्य मे ।
निद्रा क्वाप्यवमानितेव दयिता सन्त्यज्य दूरं गता सत्पात्रप्रतिपादितेव वसुधा न क्षीयते शर्वरी ।
तदाकर्ण्य महीपालः साधुवादैः परिश्रमं । अभिनन्द्य कवीन्द्रं तं पूर्वस्थाने व्यसर्जयत् ।
अचिन्तयच्च धिङ्मां यः स्वगुणात् खिन्नचेतसः । दुःखोत्तप्तं वचः शृण्वन्नेवमेवाधुना स्थितः ।
निरर्थकान् साधुवादानन्यस्येव विदन्मम । अयमज्ञातहृदयो दुःखमास्ते ध्रुवं वहिः । ११५
चिरं चिन्तयतो यत्नात् सदृशीमस्य सत्क्रियां । देयं महार्हमद्यापि न किञ्चित् प्रतिभाति मे ।
अथवास्येव सूक्तेन स्मारितोऽस्म्यधुना यथा । वर्त्तते राजरहितं काम्यं काश्मीरमण्डलं ।
पात्रायास्मैमही तस्मात् सा मया प्रतिपाद्यते । अवधीर्य्य महीपालान्महतोऽप्यर्थनापरान् ।
इति निश्चित्य चतुरं क्षपायामेव पार्थिवः । गूढं व्यसर्जयद्दूतान् काश्मीरीः प्रकृतीः प्रति ।
आदिदेश च तान् यो वा दर्शयेच्छासनं मम । मातृगुप्ताभिधो राज्ये निःशङ्कं सोऽभिषिच्यतां । १२०
अथ दूतेषु यातेषु लेखयित्वा स्वशासनम् । क्ष्मापतिस्तं क्षपाशेषं कृतकृत्योऽत्यवाहयत् ।
मातृगुप्तस्तु नृपतेः संतापमपि निष्फलम् । ध्यायन् गृहीतनैराश्यस्त्यक्तभारइवाभवत् ।
अस्मदर्थो न कर्त्तव्यं कृतं शान्तोऽद्य संशयः । आशापिशाचिकात्यक्तचरिष्याम्यधुना सुखं ।
गतानुगतिकत्वेन कोऽयमासीन्मम भ्रमः । जनप्रवादात् सेव्यत्वं येनास्य ज्ञातवानहम् ।
भुजङ्गाः पवनं शरीरपगणाः प्रख्यापिता भोगिनो नागभूङ्गनिवारकापि गदिता विस्तीर्णकर्णा गजाः । १२५
यद्याभ्यन्तरसंभृतोष्मविहृतिः प्रोक्ताः शमीमद्रुमा लोकेनेति निरर्गलं प्रलपता सर्व्वं विपर्य्यासितं ।
अथ सा विपत्तेऽमुष्य न क्वाप्यनभिगम्यता । लक्ष्मीप्रणयिनो येन कृताः प्रणयिनां गृहाः ।

त्यागिनो निष्कलङ्कस्य कोऽदोषोऽस्य महीपतेः । ममापुण्यन्तु तन्निन्द्यं यच्छ्रेयःप्रतिबन्धकम् ।
रत्नोज्ज्वलाः प्रविकिरेल्लहरीसमीरैरब्धिः क्रियेत यदि रङ्कतटाभिमुख्यः ।
दोषोऽर्थिनः स खलु भाग्यविपर्ययाणां दातुर्मनागपि न तस्य तु दातृतायाः ।
उत्तानफललुब्धानां वरं राजोपजीविनः । न तु तत्स्वामिनस्तीव्रपरिक्लेशैः फलन्ति ये ।
तिष्ठन्ति ये पशुपतेः किल पादमूले सम्प्राप्यते झटिति तैर्नहि भस्मनोऽन्यत् ।
ये तदृषस्य तु समुज्ज्वलजातरूपप्राप्त्या न कानि सुदिनानि सदैव तेषां ।
चिन्तयन्नपि पश्यामि न किञ्चिद्दोषमात्मनः । यातो विरक्तिं यं ज्ञात्वा सेव्यमानोऽप्ययं नृपः ।
अथवा नादृतोऽन्येन सम्प्राप्तोऽन्तिकमाप्नुयात् । कः फलेनाभिसम्बन्धं गतानुगतिकात् प्रभोः ।
अन्तर्ये सततं लुठन्ति गणितास्तानेव पाथोधरैराप्तानापतितांस्तरङ्गवलयैरालिङ्ग्य ग्टह्णन्सौ ।
व्यक्तं मौक्तिकरत्नतां जलकणान् सम्प्रापयत्यम्बुधिः प्रायोऽन्येन कृतादरो लघुरपि प्राप्तोऽर्च्यते स्वामिभिः ।
दूरं संचिन्तयन् सोऽभूत्क्षैव्ये तस्मिन्निरादरः । खिन्नस्य हि विपर्य्येति तत्त्वज्ञस्यापि शेमुषी ।
प्रभातायां विभावर्य्यामथास्थानस्थितो नृपः । आकार्य्यतां मातृगुप्त इति वत्तारमादिशत् ।
ततः प्रधावितानेकप्रतीहारप्रवेशितः । प्रविवेश महीभर्त्तुस्त्यक्ताश इव सोऽन्तिकं ।
तस्मै कृतप्रणामाय मूर्द्धन्तादेव पार्थिवः । भ्रूसंज्ञितेन व्यतरल्लेखं लेखाधिकारिणा ।
स्वयञ्च तमुवाचाङ्ग कश्मीरान् वेत्ति किं भवान् । गत्वा तत्राधिकारिभ्यस्तच्छासनमर्प्यतां ।
स ग्राहितोऽस्मद्देहेन यो लेखं वाचये त्वयि । मन्निदेशो प्रयत्नेन विस्मर्त्तव्या न जातुचित् ।
अविज्ञाताशयो राज्ञस्तामाज्ञां क्लेशशंकितः । सोऽबुद्ध दहनज्वालां नतु रत्नाङ्कुरद्युतिम् ।
यथादेशस्तथेत्युक्त्वा मातृगुप्ते विनिर्गते । निर्गर्व्वः पूर्व्ववद्राजा तस्थावाप्तैः सहालपन् ।
अथ क्लेशोचितं क्षाममपाथेयमवान्धवं । दृष्ट्वा यान्तं मातृगुप्तं निनिन्देति नृपं जनः ।
अहो नरेश्वरस्येयं यत्किञ्चन विधायिता । पृथग्जनोचिते कर्मण्यर्हन्तो निदधाति यः ।
दुराशया धृतक्लेशं सेवमानमहर्निशं । भृशं क्लेशार्हमेवैनं ज्ञातवानबुधो नृपः ।
उपायं तं पुरस्कृत्य सेवते सेवकः प्रभुं । अनन्तरज्ञस्तत्रैव योग्यं तं किल मन्यते ।
सुखार्थी नागारिप्रतिभयशमात् प्रत्युत सुखं जहौ शेषस्तल्पीकृततनुर्निषेव्यासुररिपुं ।
यतस्तेनामुष्मिन्नधिगतवता क्षेममहतां अमादायिन्यस्तं निरवधि धराभारवहनम् ।
अथमेतद्गृहीतेषु गुणवत्सु गुणाधिकं । आत्मानं गुणवान्यस्मिन्नास्थयैनमशिश्रियत् ।
अनन्तरश्च कोऽन्योऽस्माद्गुणान्दर्शयतेऽधिकान् । अस्मै गुणवते पूजां यश्चकार किलेदृशीं ।
यो नानाद्युतिमत्पदार्थरसिकोऽप्यारेऽपि शक्रायुधे सप्रेमा स विलोक्य वर्हमिह मे किं किं न कुर्य्यात्
इत्याविष्कृतवर्हराजि नटते योवर्द्धिणेऽभावान् नान्यन्मुञ्चति तं विहाय जलदं कोऽन्योऽस्ति शून्याशः
गच्छतो मातृगुप्तस्य निर्दैन्यस्यैव वर्त्मसु । नाभूज्ज्ञाव्यर्थमाहात्म्यादिकल्पः कोऽपि चेतसि ।
अहंपूर्व्विकयोद्यद्भिर्निमित्तैः शुभशंसिभिः । भवितोक्तरालभद्रव न श्रममाददे ।

अपश्यत् स फणाकोटौ खञ्जरीटमहे. पथि । स्वप्ने प्रासादमारुह्य स्वञ्चोल्लङ्घितसागरम् ।
अचिन्तयच्च शास्त्रज्ञो निमित्तैः शुभशंसिभि.। एतैर्भूभर्तुरादेशो ध्रुवं मे स्याच्छुभावहः ।
फलं मम तनीयोऽपि काश्मीरेषु भवेद्यदि। अनर्घदेशमाहात्म्यात् किं किं नातिशयेत तत् ।
अश्रान्तच्छलङ्घगाः पन्थानो बलभातिथयो गृहाः । उपानमन् गच्छतोऽस्य सत्क्रियाश्च पदे पदे ।
इत्थं विलङ्घिताकाशं लोलानोकहशाद्वलं । मङ्गल्यदधिपात्राभं ददर्शाग्रे हिमाचलम् ।
सरलस्पन्दसुभगा गङ्गाशीकरवाहिनः । प्रत्युद्ययुस्तं मरुतः पान्थायाः संस्तुता भुवः ।
क्रमवर्त्ताभिधाने स प्रदेशे प्राप्तवांस्ततः । ढक्कं काम्बुवनामानं योऽद्य शूरपुरे स्थितः ।
नानाजनपदाकीर्णे स्थाने तत्राथ शुश्रुवान् । काश्मीरकान् महामात्यान् स्थितान् केनापि हेतुना ।
ततोऽपनीतप्रास्वेदः प्रवृत्तो धवलांशुकैः । स जगामान्तिकं तेषां दातुं नृपतिशासनं ।
तत्प्रयान्तं समुद्यद्भिः शकुनैः सूचितोदयं । पान्थाः केऽप्यन्वयुर्द्रष्टुं निमित्तानां फलोद्गमे ।
श्रुत्वाथ विक्रमादित्यदूत. प्राप्त इति द्रुतम् । द्वास्थाः काश्मीरमन्त्रिभ्यस्तमासन्नं न्यवेदयन् ।
आगच्छत प्रविशतेत्युच्यमानोऽथ सर्वतः । स तान् समस्तसामन्तानासभादानिवारितः ।
यथाप्रधानं सचिवैर्विहितोचितसत्क्रियः । ततः परार्द्धमध्यास्त तन्निदर्शितमासनं ।
क्षणार्द्धेणैरथामात्यैराज्ञां पृष्टो महीभुजः । शनैस्तच्छासनन्तेभ्यो लज्जमान इवार्पिपत् ।
तेऽभिवन्द्य प्रभोर्लेखमुपांशु मिलितास्ततः । उन्मुच्य वाचयित्वैतमवोचन् विनयान्विताः ।
मातृगुप्त इति श्लाघ्यं भवतामेव नाम किं । एवमेवैतदित्यूचे सोऽपि तान् विहितस्मितः ।
कः कोऽत्र सन्निधात्वणामित्यश्रूयत वाक् ततः । राज्याभिषेकसम्भारो दृश्यते स च संभृतः ।
ततः कलकलोत्तालभूरिलोकसमाकुलः । प्रदेशः क्षणमात्रेण सोऽभूत् क्षुभ्यन्निवार्णवः ।
अथ प्राङ्मुखसौवर्णभद्रपीठप्रतिष्ठितः । सन्निपत्य प्रकृतिभिर्मातृगुप्तोऽभ्यषिच्यत ।
तस्य विन्ध्यतटव्यूढवक्षसः परिनिर्लुठन् । सशब्दमभिषेकाम्बुरेवास्रवइवाबभौ ।
अथ स्नातानुलिप्ताङ्गमर्घ्याङ्गामुक्तभूषणं । व्यजिज्ञपंस्तं राजानं क्रान्तराजासनं प्रजाः ।
प्रार्थितेन स्वयं धातुं विक्रमादित्यभूभुजा । निर्दिष्टः स्वसमानस्त्वं शाधि नः पृथिवीमिमां ।
मण्डलानि विलभ्यन्ते येनं तेन प्रतिक्षणं । मामंस्था मण्डलं राजन् विलक्षन्तादिदम्परैः ।
कर्म्मभिः स्वैरवाप्तस्य जन्मनः पितरौ यथा । राज्ञां तथान्ये राज्यस्य प्रवृत्तावेव कारणं ।
इत्थं स्थिते परं कश्चिन्मदीयोऽस्मीति शंसता । न नेया भवता राजन् वयमात्मा च लाघवं ।
इति मेऽत्यमुक्तोऽपि संस्मरन् स्वामिसत्क्रियां । मातृगुप्तमहीपाल' क्षणमासीत् क्षतस्मितः ।
दानेन सुदिनं दुर्गं वराज्योऽर्जितेन स. । तथैव मङ्गलोदयं तदहो निरवर्त्तयत् ।
पुरप्रवेशादारभ्य सुखं तं मन्त्रिभि. । प्रहृतप्राभृतं दूतं राज्यदातुर्व्यसर्जयत् ।
देवोऽयमनुभावेन यः स्तुत्य इव स तां विदन् । स्वामिनो मनसि प्रीतस्त्वागमं स्वमन्यत ।
सर्वात्म्यापरान् भृत्यान् देशारूपिं प्रभोः । अन्यार्थोऽपि यानि प्राहिणोत् प्राभृतानि सः ।

असामान्यान् गुणांस्तस्य स्मरन् पर्य्यश्रुलोचनः। स्वयं लिखित्वा श्लोकञ्च स्वकमेकं व्यसर्जयत्।
नाकारमुद्वहसि नैव विकत्थसे त्वं दित्सां न सूचयसि मुञ्चसि सत्फलानि।
निःशब्दवर्षणमिवाम्बुधरस्य राजन् संलक्ष्यते फलत एव तव प्रसादः।
ततः प्रविश्य नगरं सैन्यैः पिहितदिक्तटैः। क्रमागतामिव महीं यथावत् पर्य्यपालयत्।
त्यागे वा पौरुषे वापि तस्यौचित्योन्नतात्मनः। क्ष्माभुजस्तुङ्गकस्येव नाभूत् परिमितेच्छता।
यष्टुं यज्ञान् कृतोद्योगस्त्यागी विततदक्षिणान्। पशुबन्धमनुध्याय करुणाकुञ्चितोऽभवत्।
अमारमादिदेशाथ यावद्राज्यं स्वमण्डले। चूर्णीकृत्य सुवर्णादि प्रददौ च करम्भकम्॥
करम्भके कीर्य्यमाणे मातृगुप्तेन भूभुजा। वैतृष्ण्यमुन्मिषत्तोषो न कोनाम न्यषेवत।
गुणी च दृष्टकष्टश्च वदान्यश्च स पार्थिवः। विक्रमादित्यतोऽप्यासीदभिगम्यः शुभार्थिनाम्।
विवेचकतया तस्य श्लाघ्यया सुरभीकृताः। वाग्मीविलासाः क्ष्माभर्तुरशोभन्त मनीषिषु।
हयग्रीववधं मेण्ठस्तदग्रे दर्शयन्नवम्। आसमाप्ति ततो नापत् साध्वसाध्विति वा वचः।
अथ ग्रन्थयितुं तस्मिन् पुस्तकं प्रस्तुते न्यधात्। लावण्यनिर्य्याणभिया राजाधः स्वर्णभाजनम्।
अन्तरज्ञतया तस्य तादृश्याकृतसत्कृतिः। भर्तृमेण्ठः कविर्मेने पुनरुक्तं श्रियोऽर्पणं।
स मातृगुप्तस्वाम्याख्यं निर्ममे मधुसूदनं। कालेनादत्त यद्ग्रामान् मम्मः श्वशुरसद्मने।
इत्यासादितराज्यस्य शासतः क्ष्मां क्षमापतेः। त्रिमासोनाययुस्तस्य सैकाहाः पञ्च वत्सराः।
कृतार्थतां तीर्थतोयैराज्ञनेयोऽनयत् पितॄन्। जातन्तादृशमश्रौषीत् स्वस्मिन्देशे पराक्रमं।
पितृशोकार्द्रता तस्य क्रोधेनान्तरधीयत। तरोरिवार्कतापेन नैशाम्बुनवसिक्तता।
श्रीपर्वते पाशुपतप्रतिवेशस्तमागतम्। आचख्यावश्वपादाख्य सिद्धः कन्दाशनन्ददत्।
जन्मान्तरे त्वद्दसिद्धिस्त्वामप्युपरि साधकम्। वाञ्छामपृच्छं राज्यार्थमभिलाषस्ततोऽभवत्।
सयत्नस्तव कर्तुन्तन्मनोरथमनन्यया। अथ मामित्यमादिक्षत् क्षपारमणशेखरः।
गणोऽयं मामकः सिद्धो यस्त्वैवोपरि साधकः। जन्मान्तरेऽस्य राज्येच्छां कुर्य्यामहमनन्यया।
भावि भवस्तद्भवतो भगवान्दत्तदर्शनः। साफल्यं नेष्यतीत्येवमभिधाय तिरोदधे।
साम्राज्येच्छोश्च मामेको तत्र तस्य तपस्यतः। स्तम्भकृतिस्निग्धगिरा प्रददौ दर्शनं शिवः।
प्रतिश्रुतमादिश्य वाञ्छितार्थसमर्पणम्। स जगन्निर्जयोन्निद्रनरेन्द्रत्वमयाचत।
उपेत्य मोक्षं किं त्वाभृङ्गोगानिच्छसि भङ्गुरान्। इति शिक्षामुना भावं शम्भुना सोऽभ्यधीय
स तं प्रभावे प्रभुं त्वां बुद्धा व्याजतपोधनं। अभ्यधामिदन्द्वा त्वं न स देवो जगद्गुरुः। —
महान्तो ह्यर्थिताः स्वल्पं फलमप्येतरन् स्वयं। उदन्यया वदान्योऽदादुग्धाब्धिं स पयोर्थिने
अस्य वैकल्पकोपस्त्रासाभनियतचेतम। नोवेत्स्यभिमतं साभिभूतिं मन्तव्ययाग्रहं। —
जगत्परिवृढः प्रौढप्रीतिस्तं स फलार्थिनम्। कृत्वा प्रादुष्कृतवपुस्ततो भूयोऽप्यभाषत।
स जनो राज्यधारेषु धायुश्चावाप्तिदूतिकां। मदाश्रयाश्वपादस्ते संज्ञां काले करिष्यति।

इत्युक्त्वान्तर्हिते देवे स कृतव्रतपारणः । अगच्छदश्वपादन्तमापृच्छ्याभिमताम्भुवम् ।
ततो विदितवृत्तान्तो मातृगुप्ताभिषेचनात् । निषिद्ध सर्वविधायातानमात्यानब्रवीद्वचः ।
विक्रमादित्यमुत्सिक्तमुच्छेत्तुं यतते मन । मातृगुप्तम्प्रति न नो रोषेण दूषितं मनः ।
अप्रियैरपि निष्पिष्टैः किं स्यात् क्षमासहिष्णुभिः । ये तदुन्मूलने शक्ता जिगीषा तेषु शोभते ।
यात्यज्ञान्युदयं द्विषन्ति शशिनः कोऽन्यस्ततोऽसम्मतस्तन्निर्माथिकरीन्द्रदन्तदलनं यन्नाम कोऽयं नयः ।
सामर्थ्यप्रथनाय चित्रमसमैः स्पर्द्धामविधूयोन्नता ये तेषु प्रभवन्ति तत्र जहति व्यक्तं प्ररूढा रुषः ।
त्रिगर्त्तानाम्भुवं जित्वा स व्रजन्नथ भूपतिः । विक्रमादित्यमशृणोत् कालधर्ममुपागतं ।
तस्मिन्नहनि भूभर्त्ता शोकाग्निःश्वसतानिशम् । नाखादि नाशि नाखापि स्थितेनावनताननम् ।
अन्येद्युर्भुवमुत्सृज्य कश्मीरेभ्यो विनिर्गतम् । शुश्राव मातृगुप्तं स नातिदूरे कृतस्थितिं ।
कैश्चिन्निर्वासितो मास्मिन्मदीयैरिति शङ्कितः । ययौ प्रवरसेनोऽस्य पार्श्वं मितपरिच्छदः ।
कृतार्हणं सुखासीनं ततः पप्रच्छ तं शनैः । विनयावनतो राजा राज्यत्यागस्य कारणं ।
बभाषे तं क्षणं स्थित्वा स निःश्वस्य विहस्य च । गतः स सुकृती राजन् येन भूमिभुजो वयम् ।
यावन्मूर्ध्नि रवेः पादास्तावत् द्योतयते दिशः । द्योतयेन्नान्यथा किं न ग्रावैव तपनोपलः ।
अथ राजाभ्यधात् केन राजन्नपकृतन्तव । यत्प्रत्ययचिकीर्षायै तमीशमनुशोचसि ।
मातृगुप्तस्ततोऽवादीत् कोपस्मितसिताधरः । अस्मानुत्सहते कश्चिन्नापकर्तुं बलाधिकः ।
नयतागण्यतामस्माननन्तरज्ञेन तेन हि । न भस्मनि हुतं सर्पिर्नोप्तम्वा शस्यमूषरे ।
उपकारं स्मरन्त्यस्तु कृतज्ञत्वसम्पदा । पदवीमुपकर्तॄणां यान्ति निश्चेतना अपि ।
निर्व्वाणमनुनिर्व्वाति तपनन्तपनोपलः । इन्दुमिन्दुमणिः किञ्च शुष्यन्तमनुशुष्यति ।
पुण्यां वाराणसीङ्गत्वा तस्मात्क्षमसुखोन्मुखः । इच्छामि सर्व्वसंन्यासं कर्तुं द्विजजनोचितम् ।
मणिदीपशिखेशन्तमन्तरेणान्धकारितां । बिभेमि द्रष्टुमप्युर्वीं भोगयोगे कथैव का ।
इत्यौचित्यनिधेस्तस्य वाणीमाकर्ण्य विस्मितः । धीरः प्रवरसेनोऽपि व्याजहारोचितं वचः ।
सत्यं विश्वम्भरा देवी भूपतेरत्नसुन्दरं । उत्पत्त्या द्योतते धन्यः कृतशोभा भवादृशः ।
अन्तरज्ञतया श्लाघ्यः कोऽन्यस्तस्मान्महीभुजः । इत्यज्ञडे जगत्येकस्त्वां यथावद्विवेद यः ।
चिरं खलु खिलीभूताः कृतज्ञत्वस्य वीथयः । धीर त्वयैव नत्वासु सञ्चारो यदि दर्श्यते ।
पाकयेन्न गृभस्य भेऽथ तदसौ प्रागेव नादात्किमु स्वार्थयेन्न मयास्य किं न भजते दीनान् स्वयन्दूनयम् ।
मत्तो रत्नद्रुमोऽस्य भोर्यदि न तत्तुष्यः किमेष त्यजेदित्यन्तः पुरुषाधमः कलयति प्रायः कृतोपक्रियः ।
अत्युदात्तगुणेष्वेषा कृतपुण्यैः सगोपिता । सतश्लाघ्यो भवत्येव यावन्मात्रापि सत्क्रिया ।
तत्त्वं गुणवतामप्यन्त्यकोट्यापि शब्दितः । परीक्षितो मणिरिव व्यक्तं बहुमतः सतां ।
तस्मादनुग्रहाणास्मान् मास्म त्याक्षीर्नरेन्द्रताम् । ममापि ख्यातिमायातु गुणवत्पक्षपातिता ।
पूर्वङ्कीमाय परमं मयापि प्रतिपादिताम् । भवान् पाणिप्रणयिनीं विदधातु पुनर्भुवम् ।

अथाजौदार्य्यचर्य्यस्य श्रुत्वेति नृपतेर्वचः । कृतस्मितो मातृगुप्तः शनैर्व्वचनमब्रवीत् ।
यान्यक्षराण्यन्तरेण वाच्यं वक्तुं न पार्य्यते । का गतिस्तदुपादाने मर्य्यादोल्लङ्घनं विना ।
अतः परुषमप्यद्य किञ्चिदेव मयोच्यते । अथाजार्जवमप्येतदार्य्यत्वमवधीर्य्यते ।
सर्व्वः स्मरति सर्व्वस्य प्रागवस्थासु लाघवम् । आत्मैव वेत्ति माहात्म्यं वर्त्तमाने क्षणे पुनः ।
पूर्व्वावस्था मदीया ते त्वदीया या च मे हृदि । ताभ्यां विमोहितावावां न विद्वोऽन्योन्यमाशयम् ।
राजा भूत्वा कथं मादृक् प्रतिगृह्णातु सम्पदः । कथमेकपदे सर्व्वमौचित्यम्परिमार्जतु ।
असाधारणमौदार्य्यमाहात्म्यं तस्य भूपतेः । भोगमात्रकृते मादृक् किं साधारणतां नयेत् ।
अपि च स्वहृदयालुः स्वां भोगेभ्यो यदि भूपते । म्रियमाणेऽभिमाने मे केन ते विनिवारिताः ।
यन्ममोपकृतन्तेन तद्विना प्रत्युपक्रियां । जीर्णमेवाधुनाङ्गेषु प्रभवत्वेव निश्चय. ।
या गतिर्भूभुजोऽमुष्य मया तामनुगच्छता । पात्रापात्रविवेकत्वख्यातिर्नेया प्रकाश्यतां ।
एतावत्येव कर्त्तव्ये यातेऽस्मिन् कीर्त्तिशेषताम् । भोगमात्रपरित्यागादिदर्थ्या सत्यसन्धतां ।
इत्युक्त्वा विरते तस्मिन् जगाद जगतीपति. । त्वदीया न मया स्पृश्या त्वयि जीवति सम्पदः ।
अथ वाराणसीं गत्वा कृतकाषायसंग्रहः । सर्व्वं सन्न्यस्य सुकृती मातृगुप्तोऽभवद्यतिः ।
राजा प्रवरसेनोऽपि कश्मीरोत्पत्तिमञ्जसा । निखिलां मातृगुप्ताय प्राहिणोत् दृढनिश्चयः ।
स हठापतितां लक्ष्मीं भिक्षाभुक् प्रतिपादयन् । सर्व्वार्थिभ्यः कृती वर्षान्दश प्राणानधारयत् ।
अन्योन्यं साभिमानानामन्योन्यौचित्यशालिनां । त्रयाणामपि वृत्तान्त एष त्रिपथगापयः ।
राजा प्रवरसेनोऽथ नमयन्नवनीधरान् । अक्लिष्टलङ्घ्याः ककुभो दृढस्य यशसो न्यधात् ।
पीताब्धिर्लङ्घितोर्व्वीभृत् कुम्भयोनिरिवानयत् । तस्य प्रतापः प्रभवन् भुवनानि प्रसन्नतां ।
शुष्यत्तमालपत्राणि शीर्णताडीदलानि च । तत्तन्नार्णवतीराणि चक्रे ऽरिस्त्रीमुखानि च ।
स गङ्गालिङ्गिताङ्गस्य पूर्व्ववारिनिधेर्व्यधात् । सैन्येभमदनिष्यन्दैः कालिन्दीसङ्गमश्रियं ।
रोधस्यपरपाथोधेः कटकैः स्पृष्टदिक्तटैः । चकारोत्पाट्य सौराष्ट्रानसौ राष्ट्रविपाटनम् ।
यशोर्थिन. पार्थिवेषु द्वेषरागवहिष्कृतः । ववृधे धर्म्मविजयस्तस्य क्षितिशतक्रतोः ।
वैरिनिर्व्वासितं पित्र्ये विक्रमादित्यजं न्यधात् । राज्ये प्रतापशीलं स शीलादित्यापराभिधं ।
सिंहासनं स्ववंश्यानां तेनाहितहृतन्ततः । विक्रमादित्यवसतेरानीतं स्वपुरं पुन. ।
हेठनुदीर्य्य विविधानमन्वानं पराजयम् । सप्त वारान् स तत्याज जित्वा मुम्मुनिभूभुजं ।
धार्ष्ट्यादष्टम वारे हेतुमाख्यातुमुद्यतम् । धिक्पशुर्वध्यतां सोऽयमित्यूचे नृपतिः क्रुधा ।
अवध्योऽहं पशुत्वेन वीरेत्युक्त्वा भयोत्सुक. । मध्यसभं ननर्त्तास्य सोऽनुकुर्व्वन् कलापिनं ।
नृत्यं केकाश्च शिखिनो दृष्ट्वास्मै द्रविणं नृपः । अभयेन समं प्रादात्तालाङ्केचरणोचितं ।
वसतोऽस्य दिशो जित्वा नप्तुः पैतामहे पुरे । कर्त्तुं पुरं स्वनामाङ्कं पप्रथे स मनोरथः ।
रात्रौ येनाद्य सम्प्राप्य दिव्यं शातमयैकदा । स वीरो वीरचर्य्यायां निर्ययौ पार्थिवार्य्यमा ।

गच्छतः क्ष्मापतेस्तस्य मौलिरत्नाङ्कबिम्बितः। बभार तारानिकरो रक्षाशर्षपविभ्रमम्। ३४०
अथानन्तचितालोकस्पष्टभीमतटद्रुमाम्। श्मशानप्रान्ततटिनीं पर्य्यटन्नाससाद सः।
ततस्तस्य सरित्पारे मुक्तसंरावमग्रतः। ऊर्द्ध्वबाहुर्महद्भूतं प्रादुरासीन्महौजसः।
नृपतिस्तस्य दृक्पातैर्ज्वलद्भिः कपिशीकृतः। उल्काज्योतिःकृताश्लेषः कुलाद्रिरिव दिद्युते
तमथ प्रतिशब्देन घोरेणापूरयन्दिशः। अत्रासं विहसन्नुच्चैरुवाच क्षणदाचरः।
संत्यज्य विक्रमादित्यं सत्त्वोद्रिक्तश्च शूद्रकं। त्वाञ्च भूपाल पर्य्याप्तं धैर्य्यमन्यत्र दुर्लभं। ३४५
वसुधाधिपते वाञ्छासिद्धिस्तव विधीयते। सेतुमेतं समुत्तीर्य्य पार्श्वमागम्यतां मम।
इत्युदीर्य्य निजज्ञानुं रक्षःपारान् प्रसारयन्। तन्महासरितो वारि सेतुसीमन्तितं व्यधात्।
अङ्गेन रक्षःकायस्य ज्ञात्वा सेतुम्प्रकल्पितं। वीरः प्रवरसेनोऽथ विकोषां छुरिकान्दधे।
स तयोत्कृत्य तन्मांसं कृतसोपानपद्धतिः। अतरद्यत्र तत् स्थानं छुरिकाबाल उच्यते।
पार्श्वस्थन्तं समुत्का प्रातर्मन्त्रसूत्रपातनम्। दृष्ट्वा पुरं विधेहीति वदद्भूतन्तिरोदधे। ३५०
देव्या शारिकयाष्टेन यक्षेणाधिष्ठितञ्च सः। ग्रामे शारीटकेऽपश्यत् सूत्रं वेतालपातितं।
भक्त्या प्रतिष्ठां प्राक् तस्मिन्निनीषौ प्रवरेश्वरम्। जयस्वामी स्वयं पीठे भित्वा यन्त्रमुपाविशत्।
वेतालवेदितं लग्नं जानतो जगतीभुजा। स्थपतेः स जयाख्यस्य नाम्ना प्रख्यापितोऽभवत्।
नगरप्रातिलोम्याय भक्त्या तस्य विनायकः। प्रत्यङ्मुखः प्राङ्मुखतां भीमस्वामी स्वयं ययौ।
सद्भावश्र्यादिका देव्यस्तेन श्रीशब्दलाञ्छिताः। पञ्च पञ्चजनेन्द्रेण पुरे तस्मिन्निवेशिताः। ३५५
वितस्तायां स भूपालो बृहत्सेतुमकारयत्। ख्याता ततःप्रभृत्येव तादृग्भिः सेतुकल्पना।
श्रीजयेन्द्रविहारस्य बृहद्बुद्धस्य च व्यधात्। मातुलस्य नरेन्द्रस्य जयेन्द्रो विनिवेशनम्।
बुभोज सिंहलादीन् यो द्वीपान् स सचिवोऽकरोत्। मोराकनामा मोराकभवनं भुवनाद्भुतम्।
षट्त्रिंशद्गृहलक्षाणि पुरन्तत्प्रथमे पुरा। यस्यास्ताम्बर्द्धनस्वामी विश्वकर्मा च सोमयौ।
दक्षिणस्मिन्नेव पारे वितस्तायाः पुरा किल। निर्म्मितन्तेन नगरं विभक्तैर्धुक्रमापणैः। ३६०
ते तत्राभ्रंलिहाः सौधा यानध्यारुह्य दृश्यते। वृष्टिस्निग्धं निदाघान्ते चैत्रे चोत्कुसुमं जगत्।
तद्विना नगरं कुत्र पवित्राः सुलभा भुवि। सुभगाः सिन्धुसम्भेदाः क्रीडावसथवीथिषु।
दृष्टः क्रीडानगोऽन्यत्र न मध्येनगरं क्वचित्। यतः सर्व्वाकसां लक्ष्मीः संलक्ष्या चुपथादिव।
वैतस्तं वारिवास्तव्यैर्ह्दक्षुदिमशर्करम्। श्रीष्मेऽप्यक्षि स्वैरस्नानात् क्रतुतोऽन्यत्र लभ्यते।
प्रतिदेवगृहं कोशास्तु तस्मिन्नर्पिता नृपैः। सहस्रशः प्रकल्पते ये कर्त्तुं भूः सागराम्बरा। ३६५
पुरे निवसतस्तस्मिंस्तस्य राजप्रजाहृजः। शनैः षाष्ठ्यन्नाभस्य षष्टिः सम्वत्सरा ययुः।
ललाटे शूलमुद्राङ्के जराशुक्लाः शिरोरुहाः। तस्य श्मश्रुभ्रमाभङ्गिगङ्गाश्रोविभ्रमन्दधुः।
अथाश्वपादैर्नेशान निर्द्दिष्टस्त्वरयागतः। काश्मीरिको जयन्ताख्यो द्विजन्मायोजि पार्श्वगः।
याम्योऽस्याम्बन्य कान्यस्माद्दृष्टोऽभिमतमर्पयेत्। राज्ञे प्रवरसेनाय लेख एष प्रदर्श्यतां।

इत्युक्त्वार्पितलेखोऽथावसमर्थे पथः प्रयुन्। गन्तुं मेस्थानखिन्नोऽस्मि सद्यस्तेनेत्यगद्यत।
स्नाप्यस्व तावत्त्वं स्पृष्टो द्विज: कापालिना मया। उक्तेति तेन चिप्तोऽथावासन्ने दीर्घिकाजले।
उन्मीलितेचणोऽद्राचीत् स्वं स्वदेशादथोत्थितम्। तस्युपश्चार्चने राज्ञो भृत्यान् व्यग्रान् जलाहृतौ।
स्वमावेदयितुं नद्या नीयमाने नृपान्तिकम्। अथाविष्टोऽचिपल्लेखं स स्नानकलशे ततः।
प्रवरेशं स्नापयता स्वस्तस्मात् कलशात् पुनः। राज्ञा लेखं वाचयित्वा जयन्तः प्रापितोऽन्तिकं।
कृतं कृत्यं महद्दत्तं भोगा भुक्ता वयोगतं। किमन्यत् करणीयं ते रहि गच्छ शिवालयम्।
ततस्तं वृत्तसङ्केतः सन्तोष्याभिमतार्पणात्। भित्त्वा तमग्रप्रासादं जगाहे विमलं नभः।
जनैः स ददृशे गच्छन् कैलासतिलकां दिशम्। विपदे घटयन् व्योम्नि द्वितीयतपनोदयं।
जयन्तेनाद्भुतोदन्तहेतुनावाप्य सम्पदः। स्वनामाङ्कायहारादिकर्मभिर्निर्मलाः कृताः।
एवं स भुवनैश्वर्यं भुक्त्वा भूमिभृतांवरः। अनेनैव शरीरेण भेजे भूतपतेः सभाम्।
प्रासादे प्रवरेशस्य सिद्धचक्रे चमापतेः। स्वर्गद्वारप्रतिभटं द्वारमद्यापि लक्ष्यते।
तस्य रत्नप्रभादेव्याञ्जातो राजा युधिष्ठिरः। अपासीन्नैवमासोनाः क्ष्मां च द्वाविंशतिं समाः।
सर्व्वरत्नजयस्कन्धगुप्तशब्दाङ्किताभिधाः। आसन्विहारचैत्यादिकृतैस्तत् सचिवा वराः।
भवच्छेदाभिधं ग्रामं स्तुत्यचैत्यादिसिद्धिभिः। योऽप्यधात् सोऽस्य वज्रेन्द्रोऽप्यासीन्मन्त्री जयेन्द्रजः।
दिक्कामिनीमुखोत्कीर्णकीर्त्तिचन्दनचन्द्रकाः। आसन् कुमारसेनाद्यास्तस्यान्येऽप्यग्र्यमन्त्रिणः।
पद्मावत्यां सुतस्तस्य नरेन्द्रादित्य इत्यभूत्। लखणपरनामा यो नरेन्द्रस्वामिनं व्यधात्।
वज्रेन्द्रतनयौ वज्रकनकौ यस्य मन्त्रिणौ। अभूतां सुकृतोदन्तौ राज्ञी च विमलप्रभा।
स विधायाधिकरणं लिखितस्थितये निजम्। द्यां त्रयोदशभिर्वर्षैरारुरोह महाभुजः।
तस्यानुजोधरणिभृद्रणादित्यस्ततोऽभवत्। तुञ्जीनापरनामानं यञ्जनाः प्राकरञ्जसा।
जगदिलचणं यस्य शङ्खमुद्राङ्कितं शिरः। अपूर्व्वशर्व्वरीशान्तर्लीनभानुश्रियं दधे।
रिपुकण्टाटवीष्वासीद्यस्य धाराधरः पतन्। तद्वधूनेत्रकुण्डेषु जलाधिक्यमधार्य्यत।
अपूर्व्वा यत्प्रतापाग्निः प्रविश्योर्व्वीं द्विषां व्यधात्। नारीनेत्रेषु नीरोर्म्मीन्मन्दिरेषु तृणाङ्कुरान्।
यस्य पाणिप्रणयितां कृपाणे समुपागते। कबन्धेभ्यः परोनृत्यं न व्यधत्त द्विपद्दले।
तस्याप्यपोह्यमाहात्म्या देवी दिव्याकृतेः प्रिया। विष्णुशक्तिः चितिम्प्राप्ता रणारम्भाभिधाभवत्।
स हि जन्मान्तरे पूर्व्वं द्यूतकारोऽभवत् किल। कदापि प्राप निर्व्वेदं सर्व्वस्वं कितवैर्जितं।
देहत्यागोद्यतोऽप्यासीत् प्राप्यं किञ्च विचिन्तयन्। न पर्य्यन्तेऽप्युपेचन्ते कितवाः स्वार्थसाधनं।
अथान्ध्यदर्शनाद्विन्ध्ये देवीं भ्रमरवासिनीम्। द्रष्टुमैच्छदराकाङ्क्षी निर्व्यपेचः स्वजीविते।
भ्रमरैः शङ्कुपुच्छाद्यैः खण्ड्यमानस्य देहिनः। तदास्पदं हि विशतो दुर्लङ्घ्या पञ्चयोजनी।
स वज्रशङ्कुपुच्छानां धीमांस्तेषाम्प्रतिक्रियां। देहेऽवश्यपरित्याज्ये मन्वानोऽभूद्दुष्करां।
प्रागधोवर्म्मणा देहं ततोमहिषचर्म्मणा। तेन च्छादयता दत्तो लेपोऽथ सगोमयः।

अथ भानुकरोच्छुष्कश्लेष्मापिच्छिताननकः। स खोटद्रव सञ्चारी प्रतस्थे क्रूरनिश्चयः।
सरलां सरणिं त्यक्त्वा जीवितस्पृहया समम्। गुहा तेन ततः सान्द्रं तमोभीमा व्यगाह्यत।
अथोदतिष्ठन् गर्त्तेभ्यो घोरा भ्रमरमण्डलाः। पक्षशब्दैः श्रुतिं घ्नन्तो मृत्युतूर्य्यरवैरिव।
ते तमुच्छुष्कश्लेष्मरेणुग्रथितलोचनाः। सहसा नाक्रमन्ते स्म सहरन्तोऽपि बाधितुं।
रेणुभिर्बाधितदृशः ते न्यवर्तन्त षट्पदाः। तेऽखण्डयंस्तु श्लेष्मं न्यपतंश्चैव वा नवा।
तैः खण्ड्यमानमुखाण्डैर्मजतो योजनत्रयीम्। क्रमान्मृत्कवचत्वस्य पथि संक्षयमाययौ।
ततो मुञ्जः प्रहरता तेषां महिषचर्म्मणि। घोरश्चटचटाघोषः प्रादुरासीद्भयङ्करः।
चतुर्थयोजनस्यार्द्धमतिक्रम्य विवेद सः। रणत्कारैर्द्विरेफांस्तानयोवर्म्मणि पातिनः।
धावंस्ततोऽतिवेगेन खण्ड्यमानेन षट्पदैः। स शस्त्रवर्म्मणामोचि चित्तं धैर्य्येण नो पुरः।
गव्यूतिमात्रमासन्ने देवीधामनि धैर्य्यवान्। धुन्वन् कराभ्यां मधुपान्धावति स्म स धीरधीः।
अथ स्नाय्वस्थिशेषाङ्गो लूनमांसः षडङ्घ्रिभिः। कराभ्यामक्षिणी रक्षन्देव्यायतनमासदत्।
प्रशान्ते भृङ्गसम्पाते प्रकाशमवलोकयन्। स देव्याः पादयोरग्रे पपातोद्भ्रान्तजीवितः।
स्तोकावशेषप्राणन्तन्देव्याश्वासयितुन्ततः। अभिरामं वपुः कृत्वा पस्पर्शाङ्गेषु पाणिना।
दिव्येन पाणिस्पर्शेन तेन पीयूषवर्षिणा। स क्षिप्रासादितस्वास्थ्यो दिक्षु चिक्षेप चक्षुषी।
प्रविष्टमात्रः प्रैक्षिष्ट सिंहविष्टरशोभिनीं यां। घोराकारां स तान्देवीन्तदाऽद्राक्षीन्न तां पुनः।
ददर्श पुनरुद्यानलतावासो विलासिनीम्। स्थितां पुष्करिणीतीरे श्यामाम्पुष्करलोचनाम्।
गृहीतहारमुक्ताढ्यां बद्धापीनस्तनाञ्जलिं। महार्हैः कान्तिकुसुमैर्यौवनेनार्चिताङ्गकाम्।
यावकाहारिणौ पादौ दधतीं कुङ्कुमचारिणौ। स्तनं छन्नमुखं द्रष्टुं तपस्यन्तामिवान्वहम्।
भास्वद्बिम्बाधरां कृष्णकेशीं सितकराननां। हरिमध्यां शिवाकारां सर्व्वदेवमयीमिव।
तां विभाव्यानवद्याङ्गीं निर्जने यौवनोर्जितां। निन्ये वारितवामेन स कामेन विधेयतां।
दधती रूपमाधुर्य्यपूरं छन्नामधृष्यतां। अप्सराः प्रत्यभात्तस्य साहि चित्तेन देवता।
कृपार्द्रदुरवादीत्तं व्यथितोऽसि चिरं पथि। मुञ्जः सौम्य समाश्वस्य प्रार्थ्यतामुचितो वरः।
स तामभाषे शान्तो मे भवत्या दर्शनश्रमः। अदेवी किन्तु भवती वरं दातुं कथं क्षमा।
देवी जगाद तं भद्र कोऽयन्ते मनसि भ्रमः। देवी वा स्यामदेवी वा वरीतुं त्वान्तु शक्नुयां।
इति सोऽभीष्टसम्प्राप्तौ कारयित्वा प्रतिश्रवम्। दूरमुत्क्रान्तमर्य्यादः सङ्गमं तामयाचत।
तमभ्यधात् सा दुर्बुद्धे कोऽयन्तेऽनुचितो विधिः। प्रार्थयस्वेतरद्यस्मात् साहं भ्रमरवासिनी।
देवी ताञ्जानतोऽप्यस्य नाभूदवहितं मनः। निरुद्धा वासनाः केन जन्मान्तरनिबन्धनाः।
स तामुवाच सत्यश्चेद्देवि स्वाङ्गिरमिच्छसि। प्रमाणीकुरु मद्वाणीमहमन्यन्न कामये।
पूर्व्वमेव हि जन्तूनां योऽधिवासो निलीयते। तिलानामिव तेषां स पर्य्यन्तेऽपि न शीर्य्यते।
देवी वा नवकान्ता वा भीमा वा शोभनापि वा। यादृशी पूर्व्वमद्राक्षं तादृश्येवावभासि मे।

तमित्थं कथयन्तं सा ज्ञात्वा निश्चलनिश्चयम्। एवं जन्मान्तरे भावीत्यभ्यधादनुरोधतः।
असहन्ते हि संस्रष्टुं न दिव्या मर्त्यधर्म्मिणः। तद्गच्छ कूरसङ्कल्पेत्युक्ता सान्तर्दधे ततः।
अभून्यजन्मा भूयासन्तया देव्येति चिन्तयन्। प्रयागवटशाखायाद्दहासीत् स्ववपुस्ततः।
सोऽजायत रणादित्यो रणारम्भा च सा भुवि। मर्त्यभावेऽपि यन्नैव जहौ जन्मान्तरस्मृतिं।
रतिसेनाभिधश्चोलराजः सव्येऽब्धिपूजने। तान्तरङ्गान्तरालेभे रत्नराजिमिवोज्ज्वलाम्।
आबाल्याद्शक्रदिव्योर्म्मिं तामलङ्कृतयौवनां। दिव्याङ्गां पृथिवीशेभ्यो नार्थिभ्योऽपि ददौ नृपः।
रणादित्यनृपामात्ये दूत्यायाते तथैव तं। प्रत्याख्यानेच्छुमाचख्यौ सैव तद्वरणं वरम्।
तदर्थमेव कथितस्वोत्पत्तिस्तान्ततः पिता। द्रुतं कुलूतभूभर्त्तुः सुहृदः प्राहिणोद्गृहं।
प्रहृष्टो विप्रकृष्टन्तं देशं गत्वा व्यधत्त तां। परिणीय रणादित्यः शुद्धान्तस्याधिदेवतां।
मर्त्यसंस्पर्शभीरुः सा महादेवी भवन्त्यपि। तं मायया मोहयन्ती न पस्पर्श कदाचन।
व्यधान्मायामयीं राज्ञस्तल्पे स्वसदृशीं स्त्रियम्। स्वयम्भ्रमररूपा सा निर्जगाम वहिर्निशि।
स्वनाम्ना स्वस्य देव्याश्च कृत्वा परमटद्दयं। माहेश्वरः शैललिङ्गे कारयामास कारुभिः।
श्वः प्रतिष्ठाप्रसङ्गेऽथ सव्ये तल्लिङ्गयोर्द्दयं। देशान्तरागतः कश्चित् दूषयामास दैववित्।
स दृष्टप्रत्ययः शश्वत्तयोर्घटितलिङ्गयोः। अश्मखण्डे समण्डूकैर्व्वभाषे गर्भमाहृतम्।
किङ्कर्त्तव्यतया मूढं प्रतिष्ठाविघ्नविक्लवं। दिव्यदृष्टिः स्वयन्देवी ततो राजानमब्रवीत्।
राजन् गिरिसुतोद्वाहे पौरोहित्यम्पुरा भजन्। स्वमर्चादेवमादत्त पूजाभाण्डात् प्रजापतिः।
तां विष्णोः प्रतिमां वीक्ष्य पूजितान्तेन धूर्जटिः। शून्यानिव तदा मेने शक्तिरूपां विना शिवं।
निमन्त्रितैर्ढौकितानि रत्नान्यथ सुरासुरैः। पिण्डीकृत्य स्वयञ्चक्रे लिङ्गम्भुवनवन्दितं।
तां विष्णुप्रतिमान्तच्च लिङ्गमीशानपूजितं। स्वयं प्रजासृजः पूज्यं कालेनादत्त रावणः।
तेनाप्यभ्यर्च्यमानं तं लङ्कायामभवच्चिरम्। देवद्वयं रावणान्ते नीतमासीच्च वानरैः।
निर्व्यूढया ते कथयो सुग्रह्हि मानसौकसः। शान्तोत्सुक्याः शनैर्देव्यो न्यधुरुत्तरमानसे।
प्रागेव सरसस्तस्मात् कुशलैः शिल्पिभिर्नया। तावुद्धतौ प्रातरत्र प्राप्तौ द्रक्ष्यस्यसंशयं।
तयोः प्रतिष्ठा क्रियतामित्युक्ता पृथिवीभुजं। देवी प्रयाता शुद्धान्तं सिद्धान् सस्मार खेचरान्।
ते ध्यातमात्राः सम्प्राप्ता देव्यादेशेन पाथसः। उद्धृत्य नृपतेर्धाम्नि देवौ हरिहरौ न्यधुः।
दिव्यैः प्रसूनैः संवीतौ हरनारायणौ जनः। प्रातर्नृपगृहे दृष्ट्वा परं विस्मयमाययौ।
सव्ये प्रतिष्ठालिङ्गेऽथ माहेश्वरतया नृपः। रणेश्वरप्रतिष्ठायां पूर्व्वं यावत् समुद्यतः।
रणारम्भानुभावेन तावद्देवाद्भुतावह। स्वयं पीठे रणस्वामी भित्त्वा यन्त्रमुपाविशत्।
॥ युग्मकं ॥ कर्त्तुं प्रभावजिज्ञासां राज्ञा दत्तधनस्ततः। स स्वयम्भूः स्वयम्भक्तांस्तांस्तान् ग्रामानदापयत्।
कुम्भदासतया च्छन्नः सिद्धो ब्रह्माभिधो वसन्। परिज्ञाय तयोर्देव्या प्रतिष्ठाकर्म्म कारितः।
स दृत्तप्रत्यभिज्ञः सन् प्रतिष्ठाप्य रणेश्वरम्। व्योम्ना प्रजज्वणस्वामी प्रतिष्ठां गूढमादधे।

जनास्तल्लङ्घयन् यत् स स्वयं पीठमवातरत्। इति केषामपि हृदि प्रवादोऽद्यापि वर्त्तते।
सा ब्रह्मप्रतिमं सिद्धं देवी ब्रह्मविदां वरम्। अकारयत्तमुद्दिश्य पराद्ध्यं ब्रह्मसत्तमम्।
रणारम्भस्वामिदेवौ दम्पतीभ्यां व्यधीयत। मठः पाशुपतानाञ्च ताभ्यां प्रद्युम्नमूर्द्धनि।
आरोग्यशाला निरघाणुश्लाघलाय रोगिणां। तेन सेनामुखी देवी भयग्रामे च कारिता।
ख्यातिं रणपुरस्वामिसंज्ञया सर्व्वतोगतम्। स सिंहरोत्सिकाग्रामे मार्त्तण्डं प्रत्यपादयत्।
अमृतप्रभया तस्य राज्ञः पत्न्यान्यया कृतः। दक्षिणस्मिन् रणेशस्य पार्श्वे देवोऽमृतेश्वरः।
मेघवाहनभूभर्त्तृपत्न्या भिन्नाख्यया कृते। विहारेऽपि तया बुद्धबिम्बं साधु निवेशितं।
राज्ञे देव्यनुरक्ताय सानुक्रोशाय सैकदा। पातालसिद्धिदं मन्त्रं प्रददौ हाटकेश्वरम्।
माभून्मोघास्य मत्प्राप्तिरिति मत्वा तयार्पितम्। असाधयत् स तम्प्राप्य वसन्तं वत्सरान् बहून्।
छलहिकापथे कष्टं ततो नन्दिशिलाद्धृतः। भूरिभिर्वत्सरैर्मन्त्रसिद्धैः प्रणयिता ययौ।
स्वप्नेष्व सिद्धलिङ्गेषु जातो भङ्गुरनिश्चयः। चन्द्रभागाजलं भित्त्वा नमुचेः प्राविशद्बिलं।
बिलेऽपावृततां याते दिवसानेकविंशतिं। प्रविश्य पौरान् प्राङ्गिन्ये दैत्यस्त्रीभोगभोगितां।
एव स भूपतिर्भूत्वा भुवं वर्षशतत्रयम्। निर्व्वाणश्लाघ्यनिर्व्यूढपातालेश्वरमासदत्।
सानुगे नृपतौ याते दैतेयदयितान्तिकम्। देवी सा वैष्णवीशक्तिः श्वेतद्वीपमगाहत।
राजवंशेष्वनेकेषु राज्ञोर्वंशदये परम्। दयोरेवात्र निर्व्यूढिम्प्रजावात्सल्यमागतं।
रणादित्यगोनन्दवंशे रामस्य राघवे। लोकान्तरसुखस्यापि ययोरंशभुजः प्रजाः।
विक्रमाक्रान्तविश्वस्य विक्रमेश्वरकृत्सुतः। तस्यासीद्विक्रमादित्यस्त्रिविक्रमपराक्रमः।
राजा ब्रह्मगलूनाभ्यां सचिवाभ्यां समं महीं। सोऽपासीदासवसमो द्वाचत्वारिंशतिं समाः।
चक्रे ब्रह्ममठं ब्रह्मा गलूनोलूनदुष्कृतः। रत्नावल्याख्यया सख्या विहारं निरमापयत्।
राज्ञोऽनन्तरजस्तस्य राजाभूत्तदनन्तरम्। तापितारातिभूपालो बालादित्यो यशोर्जितः।
लवणार्णवपानेन तर्षोत्कर्षमिवोद्वहन्। यत्प्रतापो रिपुस्त्रीणां सर्वेषाम्भोऽभजन्मुखं।
आसमं चऽरिसेनागाधबाधदंष्ट्रा इवाहृताः। यस्याद्यापि जयस्तम्भाः सन्ति ते पूर्व्ववारिधौ।
प्रभावाद्येन वङ्गानां जित्वा येन व्यधीयत। काश्मीरिकनिवासाय कालम्ब्याख्यो जनाश्रयः।
काश्मीरेषु धनोदयमयहारं द्विजन्मनाम्। राजा मडवराज्ये यो भेडराख्यमकारयत्।
बिम्बं विपाटिमारिष्टमरिष्टोत्सादने व्यधात्। वल्लभा यस्य बिम्बोष्ठी बिम्बा बिम्बेश्वरं हरम्।
भातेः कल्पिणलस्य वधो मठमुरीकृतः। बैलाय कारका आसन् खङ्गुमयुप्रमासत्राः।
बभूव तस्य भूभर्त्तुर्भुवमाहुस विभ्रमा। समयानङ्गलेखाख्या शृङ्गारोदधिकौमुदी।
तां वीक्ष्य सखेपितां मृगाक्षीम्पितुरन्तिके। समोपमत्ययोग्यं व्याजहारेति दैववित्।
भविता नव जामाता जगतीभोगभाजनम्। मदन्वये सापाऽसौ गोनन्दान्वयजन्मनां।
पुनाश्वमरमथाराज्यमनिच्छयेव पार्थिवः। दैवपुरुषकारेण जेतुमासीत् स्थोद्यमः।

अराजान्वयिने दत्ता नेयं साम्राज्यहारिणी । मत्वेति प्रददौ कन्यां न कस्मैचन भूभुजे । ४९०
हेतुं स्वल्पतामात्रं कृत्वा जामातरं नृपः । अयाश्वघामकायस्थसूके दुर्लभवर्द्धनम् ।
मातुः कर्कोटनागेन सुस्नातायाः समीयुषा । राज्यायैव हि सञ्जाता राज्ञा नाज्ञायि तेन सा ।
निश्चिनोति हि धमन्या यमेवायोग्यमाग्रहात् । जिगीषयेव तत्रैव निदधाति विधिः शुभम् ।
मात्सर्येण जहद्दहान् विसदृशे धूमध्वजे योग्यतां ज्ञात्वा स्वान्निदधत्यियं दिनपतिर्हास्यप्रयाम्युन्मुखः ।
दैवं वेत्ति न च शिखी स परतोनामास्तु तत्सम्भवाः स्फुर्दीपा अपि यद्वशेन जगतस्तिग्मांशुविस्मारकाः ।
धिया भाग्यानुगामिन्या चेष्टमानो न याचितम् । अभूत् सर्वस्य चक्षुष्यः सतु दुर्लभवर्द्धनः । ४९५
प्रज्ञया द्योतमानं तं प्रज्ञादित्य इति प्रथाम् । कौवीरभाग्यसाम्यस्य शनकैः श्वशुरोऽनयत् ।
पित्रोः प्रेयस्तयोद्वृत्ता तारुण्यादिमदेन च । राजपुत्री यथावत्तु गणयामास नैव तम् ।
स्वैरिणीसङ्गमो भोगा युवानोऽग्रे पितुर्गृहम् । पत्युर्मृदुलमित्यस्याः किन्नाभूच्छीलविप्लवत् ।
सा नित्यदर्शनाभ्यासाच्छनकैर्विगता मन । अनङ्गलेखा खङ्गेन सम्प्रायुज्यत मन्त्रिणा ।
छन्नप्रेमसुखाभ्यासनष्टप्रीभीतिसम्भ्रमा । धार्ष्ट्यन्दिनाद्दिनं यान्ती ततस्तन्मयतां ययौ । ५००
स मन्त्री दानमानाभ्यां वशीकृतपरिच्छदः । अन्तःपुरे यथाकामं विजहार तया सह ।
उपलेभे च शनकैस्तयास्तं शीलविप्लवं । विरागलिङ्गैस्तच्चिह्नैर्धीमान् दुर्लभवर्द्धनः ।
सखीमध्ये रहः स्मेरा विवर्णा भर्तृदर्शने । अकाण्ड एव शोकाय पश्यन्ती सस्मितं पथः ।
पत्युः कोपे कृतावज्ञा भूनेत्रचिबुकाञ्चलैः । तदप्रियं भाषमाणे सस्मितं न्यस्तलोचना ।
तत्तुल्यगुणनिर्विण्णा तद्विपक्षस्तुतौ रता । रिरंसां तस्य संलक्ष्य सखीभिर्विद्रुसङ्कया । ५०५
तच्चुम्बने भुग्नकण्ठी तदाश्लेषसहाङ्का । तत्सम्भोगे त्यक्तहर्षा तत्तल्पे व्याजनिद्रिता ।
भवेद्धि प्रायशो योषित्प्रेमविक्रीतचेतना । निवेदयन्ती दौःशील्यमप्रियाचाविशवैकृतं ।
॥ कुलकं ॥ निगूढदारदौरात्म्यचिन्ताक्षयवपुस्तत । शुद्धान्तमविशत् ज्ञातुं निशि दुर्लभवर्द्धनः ।
सोऽपश्यत् सुरतक्लान्तिसुखभस्वापनि सद्मां । दुर्जातभर्तुरङ्केषु प्रसुप्तामिव वल्लभां ।
स्वासैरगलितावेगैः कम्पयद्भिः कुचाङ्कुरौ । निवेदयन्तीं तत्कालमेव निर्वहणं रते. । ५१०
अन्यस्यापि क्रुधो हेतुं पुनरप्यचमाधवां । तां तथावस्थितां वीक्ष्य स प्रजज्वाल मन्युना ।
प्रजिहीर्षुः स्म रोषेण विमर्शेन निवारित । प्रशान्त्येव प्रशान्त्येव निवृत्तं स्वममन्यत ।
ततस्तथाविधः क्षुभ्यत्प्रकोपावेशसागरः । विचारवेलया तस्य बलाच्छममनीयत ।
नमस्तस्मै ततः कोऽन्यो गण्यते वशिनां धुरि । जीर्यन्ते येन पर्याप्ता ईर्ष्याविषविसूचिकाः ।
सोऽचिन्तयदहो कष्टा देहारागानुगाः क्रमाः । विचारवन्ध्या. क्षिपन्ते क्षिप्रं याभिरधोनराः । ५१५
स्त्रीति नामेन्द्रियार्थोऽयमिन्द्रियार्था यथा परे । तथैव सर्वसामान्या वशिनामत्र का क्रुधः ।
निसर्गतरला नारी. को नियन्तुं क्षमः । नियन्त्रणेन किं वास्याः स्वमता स्मरणोचितम् ।
यः शुनोरिव सत्यं एकार्थाभिनिविष्टयोः । रागिणोर्यदि मानः स कोऽत्रमानस्तत परः ।

ममकारो मृगाचीषु क द्वायं सचेतसां । स्वदेहेऽनुपपन्नोऽपि यः सोऽन्यत्र कथं मतः ।
उद्वेगोत्पादनादेषा यथा चेत्प्रतिभाति मे । रागस्तद्विस्मृतः कस्मान्मूलमुद्वेगशाखिनः । ५२०
सप्तपातालनिचिप्तमूलो रागमहीरुहः । भूमिभूतमनुत्पाद्य द्वेषमुन्मूल्यते कथम् ।
द्वेषो नामैष दुर्धर्षो जितो येन विवेकिना । चणार्द्धेनैव रागस्य तेन नामापि नाशितम् ।
वीक्ष्यैनद्दिव्यया दृष्ट्या रागिणां भस्ममेवधम् । ईर्ष्या जेया ततो रागः स्वयमाशु पलायते ।
इति ध्यात्वालिखद्वर्णान् खड्गः स्वांशुकपल्लवे । वध्योऽपि न हतो यत्त्वं स्मर्त्तव्यं तत्त्ववेत्यसौ ।
जैनरक्ष्यमाणेऽथ याते दुर्लभवर्धने । त्यक्तनिद्रस्य मन्त्री तद्दृष्ट्वा वर्णानवाचयत् । ५२५
दाक्षिण्यात् प्राणदस्यास्य खड्गस्य मनसा तदा । विसस्माराननङ्गलेखान्दध्यौ तु प्रत्युपक्रियां ।
तस्योपकर्तुमुचितं प्रतिकारमिच्छोश्चिन्ताविशन्तु मनः स्मरवाणपंक्तिः ।
दुर्गाचरे परिचयप्रणयं प्रपेदे निर्निद्रता ननु कदाचन राजपुत्री ।
भूत्वा सप्तत्रिंशतिमब्दान् सचतुर्भिर्मासैर्वन्द्यो मूर्द्धनि रत्नं नृपतीनां ।
तस्मिन् काले लोकमवापोज्ज्वलहत्यो बालादित्यो बालशशाङ्काङ्कितमौले ।
पूर्वं विपन्नतनयेऽभिजनस्य शेषे गोनन्दसन्ततिरजायत तत्र शान्ते ।
प्राग्दन्तिभुग्ननलिनाऽथ हठप्रविष्टतोयौघपाटितबिसा नलिनीव दीना ।
अथ शिथिलितमुख्यामात्यवर्गैर्द्विजैः कनकघटविमुक्तैः पावनं तीर्थतोयैः ।
कथमपि स कृतज्ञो राजजामातुरव्यर्थधित विधिवदिष्टं मूर्द्ध्नि राज्याभिषेकम् । ५३०
कर्कोटप्रभवः प्रभुः स मुकुटप्रत्युप्तमुक्तामणिद्योतश्रेणिफणाङ्कुराङ्कितदृढ्हदाङ्गमंहोमुद्वहन् ।
ज्ञातिप्रीतिघनोऽशेषफणभृत्सम्फुल्लहृत्पल्लवन्यासावर्त्तकहाटकाब्जपटलस्याधामसौभोऽभवत् ।
अथ विगलिता गोनन्दोर्वीभुजोऽभिजनाः शुचेरति शुचिनि भूः कर्कोटाहे कुले व्यधित स्थितिम् ।
चिरपरिचितात् स्वर्गाभोगाच्छ्वलः पतनं श्रिता त्रिभुवनगुरोः शम्भोर्मौलाविवामरनिम्नगा ॥ ५३२
...नः १० आदित ५३ वर्षा । ५२५ इति श्रीकाश्मीरिकमहामात्यचम्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां
तृतीयस्तरङ्गः समाप्तः ।

---

# अथ चतुर्थस्तरङ्गः ॥

तद्गीतव्यतिरेकमद्रितनयादेहेन सिद्धाभवान्नप्रत्यूहमिह व्यपोहतु वपुः स्थाणोरनङ्गद्रुहः ।
वेण्या भोगिवधूशरीरकुटिलश्यामत्विषा वेष्टिता जूटाहेरपि यत्र भाति दयिता मूर्त्येव पृक्ता तनुः ॥
स महीं राजकन्याश्च प्राप्तवानेकतः कुलात् । रत्नानाश्च सुतानाश्च राजाभूद्भाजनं शनैः ।
पतिर्गोपितदौःशील्यात्तुल्यसौभाग्यगौरवा । अनङ्गभवनं चक्रे विहारं नृपतिप्रिया ।
शिशुरेवायुषोऽल्पत्वं दैवज्ञोक्तं विचिन्तयन् । राज्ञः सुतो मल्हणाख्यो मल्हणस्वामिनं व्यधात् ।
पारे विशोककोटाद्रौ प्रदत्तप्रतिपत्तिना । आदीयत द्विजेन्द्रेभ्यश्चन्द्रग्रामः क्षमाभुजा ।
श्रीनगर्यां प्रतिष्ठाप्य दुर्लभस्वामिनं हरिं । षट्त्रिंशता वत्सराणां क्ष्माहृष्टास्तमुपाययौ ।
अनङ्गदेव्यां सम्भूतस्तस्य दुर्लभकः सुतः । शशास वासवसमस्ततो वसुमतीं कृती ।
मातामहस्य यो मात्रा दौहित्रस्तनयीकृतः । प्रतापादित्य इत्याख्यां तत्कुलानुगुणां दधे ।
श्रीडैनेडविडात् प्राप्तश्रिया यन्मन्त्रिणा कृता । अग्रहारा हनुमता पुण्या नमनसम्पदा ।
प्रतापतापितारातिः प्रतापपुरपत्तनं । मघवन्नगरस्पर्द्धि दीर्घबाहुर्व्यधत्त सः ।
नानादिगन्तरायाततत्तत्क्रयिकसंकुले । नोणाभिधोऽवसत्तस्य देशे रौहीतको वणिक् ।
रौहीतदेशे जातानां निवेशाय द्विजन्मनां । महागुणो नोणमठं पुण्यश्रेष्ठं चकार सः ।
स जातु राजभवने राज्ञा प्रीत्या निमन्त्रितः । अर्चितोऽभवदेकाहमुपचारैर्नृपोचितैः ।
प्रातः सुखासिकां प्रेम्णा पृष्टोऽथ पृथिवीभुजा । शीर्षव्यथामकथयत् प्रजानां दीपकज्जलैः ।
ततः क्रमेण नृपतिस्तेन जातु कृतार्थनः । वसंस्तदास्पदेऽद्राक्षीत् क्षपायां मणिदीपकान् ।
विलासितेन लक्ष्म्या च तादृश्या तस्य विस्मितः । अथ दिनान्यहान्यासीत्तत्रैव स कृतादरः ।
एकदा तेन तत्कान्ता विलोक्य ललिताकृतिः । श्रीनरेन्द्रप्रभा नाम हर्म्ये हिमकरानना ।
उरोजपूर्णकुम्भाढ्यसद्दुग्धाश्रितविभ्रमः । मूर्त्तिमन्मङ्गलं तस्ये वरस्य च स्पृहस्य च ।
हर्म्यस्य निर्गमतया स निःशङ्कविहारिणीं । तां विलोक्यानवद्याङ्गीमभिलाषेण पस्पृशे

शापि दर्शितमालीभिः किञ्चित् साचीकृताननां। अपश्यत् काश्यपीकान्तो श्रोत्रविश्रान्तया दृशा।
प्राग्जन्मप्रेमबन्धाद्वा निदेशाद्वा मनोभुवः। सपक्षपातं सा तस्मै दृष्ट्यैव विदधे मनः।
क्षणादलब्धस्पर्शोऽपि तां सौभाग्यसुधामयीं। मज्जानामपि संस्पृश्य स्थितामिव विवेद सः।
धर्म्यस्तम्भच्छन्नगात्री क्षणं भूत्वा जगाम सा। वावर्त्य वक्त्रं पश्यन्ती पार्थिवं तं मुहुर्मुहुः।
गृहीतहृदयस्तन्व्या सावतैव महीपतिः। स चिन्ताजिह्मनयनो राजधानीं शनैर्ययौ।
तत्र तस्य तदाकारध्यानावहितचक्षुषः। समम्लत पुरीत्या प्रपेदे तानवं तनुः।
अचिन्तयत् स धिक् कष्टं रूढोऽयमशुभावहः। अस्मिन् मे मानसोद्याने रागनामा विषद्रुमः।
अहो नु सुभगा रागवृत्तिश्चित्तं विजित्य या। विवेकादीन् यथाद्दूरे सुहृदः परिपन्थकान्।
भार्या कौलीनभीतेन येन भूमिभृता सता। तस्य मे दुःसहः कोऽयं सदाचारविपर्ययः।
यत्र दारापहरणं राजैव कुरुते विभो। परः को नाम तत्रास्तु शमिना नीत्यतिक्रमे।
विमृश्यन्निति भूपालो विसर्तुमभवत् क्षमः। न पद्धतिं साधुसेव्यां न च तां दीर्घलोचनां।
तमथ प्रथिताखर्वं नेदीयोमरणं वणिक्। स जनाज्ज्ञातवृत्तान्तः सुजनो विजनेऽब्रवीत्।
इमामवस्थां प्राप्तोऽसि किं धर्मेण निरुध्यसे। न प्राणसंशये जन्तोरकृत्यं नाम किञ्चन।
यन्मतानि प्रतीक्ष्यन्ते विबुधैर्धर्मसंशये। तेषामपीदृशे कृत्ये श्रूयते संयमव्ययः।
यशोऽनुरोधादुचितं नापि देहमुपेक्षितुं। स्वकीर्त्तिर्न परासूनां कीर्त्तकर्णरसायना।
माभून्मदनुरोधस्ते तत्प्रियार्थं हि पार्थिव। प्राणा अपि न मे गण्या इन्द्रियार्थेषु का कथा।
एवमुक्तोऽपि नाधत्ते ताञ्चेत्तत् सा सुरास्पदात्। गृह्यतां नर्त्तकी भूत्वा नृत्यच्छलान्मयार्पिता
तेनेति प्रार्थ्यमानः स बलिना च मनोभुवा। आलब्जामथ जग्राह कथञ्चित्तां सुलोचनां।
कृत्यैरुदात्तैः शापास्ततादृक्चारित्र्यलाघवा। नरेन्द्रमहिषी चक्रे श्रीनरेन्द्रेश्वरं हरं।
क्रमेण च प्रजापुण्यैश्चन्द्रापीडाभिधं सुतं। प्रासोष्ट पार्थिववधूर्निधानमिव मेदिनी।
तस्याभिजनमालिन्यं स्वच्छैरच्छेदि तद्गुणैः। शाणाश्मकषणैः कार्ष्ण्यमाकरोत्थं मणेरिव।
धूमाद्गाढमलीमसात्शुचिपयः सूते घनस्तोद्गमो लोहस्यातिसितस्य जातिरचलात् कुष्णाश्ममालामयात्।
किन्त्वात्यन्तजडाज्जलाद्युतिमतो ज्वालाध्वजस्योद्भवो जन्मावध्यनुकारिणो न महतां सत्यं स्वभावाः क्वचित्।
तारापीडोऽपि तनयः क्रमात्तस्यामजायत। अविमुक्तापीडनामा मुक्तापीडोऽपि भूपतेः।
वज्रादित्योदयादित्यललितादित्यसंज्ञकाः। प्रतापादित्यजाः ख्यातास्चन्द्रापीडादयोऽपि ते।
वर्षान् पञ्चाशतं भुक्त्वा भुवं दुर्लभभूपतिः। पुण्यनिःश्रेणिभिः पुण्यामारुरोह दिवं शनैः।
राजचूडामणिः श्रीमांश्चन्द्रापीडस्ततोऽभवत्। पीडितेन्दुलिपा कीर्त्या कलेः पीडाञ्चकार यः।
एकपादाहतिर्धर्मः समस्थेवोज्झितो नृपैः। श्रुङ्खलाकतता येन पादैः संयोजितस्त्रिभिः।
यं क्षमाविक्रममुखाः परस्परविरोधिनः। सिषेविरे गुणास्तुल्यं दिव्योद्यानमिवर्त्तवः।
स्थाने स्थाने यदीया श्रीलुब्धमाप्यायनक्षभूत्। अमानुषामकुल्येव निखिलाननुजीविनः।

दोषाल्पत्वादन्यभूपेषु यं दृष्ट्वा श्रीरशिश्रियत्। मार्गाद्रिस्रोतकालुष्यं त्यक्त्वा सिन्धुरिवार्णवं।
कार्य्यज्ञो यो नतश्चक्रे यत्फलीभूदितिभ्रधीः। परं समाचरन् स्तुत्यं स्तूयमानस्त्रपां दधे।
व्यनीयत नयोऽमात्यैर्व्विनयं तान् स्वशिक्षयत्। वज्रं न भिद्यते कैश्चिच्छिनत्त्यन्यान् मणीं स्तु तत्।
यस्य धर्म्मभयादासीत् संत्याज्यो धर्म्मसंशये। निजोऽपि पक्षः कुलिशत्रासादिव गरुत्मता।
न्यायं दर्शयता वर्त्म तेन राज्ञा प्रवर्त्तिताः। स्थितयो वीतसन्देहा भास्वतेव दिनक्रियाः।
नियन्त्रिता यद्गणितिस्तद्गुणोदीरणादियं। अतिप्रसङ्गभङ्गात्तन्नैयत्त्यावाप्तितः पुनः।
तस्य त्रिभुवनस्वामिप्रासादारम्भकर्म्मणि। चर्म्मकृत् कोऽपि न प्रादात् कुटीं चैत्योपयोगिनीं।
शश्वत्प्रतिश्रुतार्थानां नव कर्म्माधिकारिणां। नैसर्गिकग्रहग्रस्तः सूत्रपातं न चक्षमे।
विज्ञापितोऽथ तैरेत्य तमर्थं पृथिवीपतिः। तानेव सागसो मेने चर्म्मकारं न तं पुनः।
सोऽभ्यधात्तान् धिगेतेषामप्रेक्षापूर्व्वकारितां। प्रागेव यैरपृष्ट्वा तं प्रविष्टं नवकर्म्मणि।
नियम्यतां विनिर्म्माणं यद्वान्यत्र विधीयतां। परभूम्यपहारेण सुकृतं कः कलङ्कयेत्।
ये द्रष्टारः सदसतां ते धर्म्मविगुणाः क्रियाः। वयमेव विदध्मश्चेद्यातु न्यायेन कोऽधुना।
इत्युक्तवति भूपाले प्रेषितो मन्त्रिपर्षदा। पार्श्वात् पादूकृतस्तस्य दूतः प्राप्तो व्यजिज्ञपत्।
इच्छति स्वामिनं द्रष्टुं स च ब्रूते न चेन्मम। युक्तः प्रवेश आस्थाने बाह्यात्यावसरेऽस्तु तत्।
अन्येद्युरथ भूपेन स बहिर्दत्तदर्शनः। पुण्यकर्म्मणि नो विघ्नः किं त्वमेवेत्यपृच्छत।
प्रतिभाति गृहं तच्चेद्रम्यं तत्र ततोऽधिकं। तदर्थतो धनं वापि भूयोऽत्र चाभ्यधीयत।
तूष्णीं स्थितं ततो भूपं चर्म्मकारो व्यजिज्ञपत्। दन्तांशुसूत्रैस्तत्स्थलमानं ज्ञातुमिवोद्यतः।
राजन् विज्ञाप्यते किञ्चिदस्माभिर्यथामयं। न स्थेयमवलिप्तेन तत्र द्रष्टा सता त्वया।
नाहमूनः शुनो नास्ति काकुत्स्थात् पार्थिवः पृथुः। शुभ्यन्तीवाद्य तत्तस्याः संलापेऽस्मिन् किमावयोः।
जातस्य जन्तोः संसारे भङ्गुरः कायकञ्चुकः। अहन्ताममताख्याभ्यां शङ्कुभ्यामेव बध्यते।
कङ्कणाङ्गदहारादिशोभिनां भवतां यथा। निष्किञ्चनानामस्माकं स्वदेहेऽहंक्रिया तथा।
देवस्य राजधान्येषा यादृशी सौम्यहासिनी। कुटीघटमुखानद्धतमोरिस्तादृशी मम।
आजन्मना साक्षिणीयं मातेव सुखदुःखयोः। मठिका शोध्यमानाद्य नेक्षितुं क्षम्यते मया।
नृणां यद्वेश्महरणे दुःखमाख्यातुमीश्वरः। तद्विमानच्युतोऽमर्त्यो राज्यभ्रष्टोऽथ पार्थिवः।
एवमप्येत्य मद्वेश्म मार्गयेद्देव न याच्यते। सदाचारानुरोधेन दातुं तदुचित मम।
इति तेनोत्तरे दत्ते भूभृद्गत्वा तदास्पदं। कुटीं जग्राह वित्तेन नाभिमानः शुभार्थिनां।
अवोचच्चर्म्मकारस्तं तत्र सव्यञ्जिताञ्जलिः। राजन् धर्म्मानुरोधेन परवत्ता तवोचिता।
अविग्रहेण धर्म्मेण पाण्डुसूनोः पुरा यथा। धार्म्मिकत्वं तथा तेऽद्य मया स्पृश्येन वीक्षितं।
स्वस्ति तुभ्यं चिरं स्थेया धर्म्या वृत्तान्तपद्धतीः। दर्शयन्नीदृशीः शुद्धाः श्रद्धेया धर्म्मचारिणां॥
एवं निष्कल्मषाचारः स चक्रे पावनीं भुवं। राजा त्रिभुवनस्वामिकेशवस्य प्रतिष्ठया।

कृत्यैः प्रकाशदेव्याख्या प्रकाशाकाशकान्तिभिः। प्रकाशिका विहारस्य तत्पत्नी कारयित्र्यभूत्।
गुर्व्विर्म्मिहिरदत्ताख्यस्तस्योदात्तगुणोऽभवत्। विश्वम्भरस्य गम्भीरस्वामिनाम्नो विधायकः।
सर्व्वाधिकरणस्थैर्य्याच्छेत्ता च्छलितकाभिधः। नगराधिकृतस्तस्य छलितस्वामिनं व्यधात्।
कदाचन सभासीनं स्पृष्टा धर्म्माधिकारिभि.। प्रायोपविष्टा राजानं ब्राह्मणी काचिदब्रवीत्।
त्वयि प्रशासति महीमहो गर्हा निवर्हणे। सुखसुप्तस्य मे पत्युर्हृतं केनापि जीवितं।
एषैव महती लज्जा सदाचारस्य भूपतेः। यदकालभवो मृत्युस्तस्य संस्पृशति प्रजाः
कलिकालबलात्तच्चेत्स्यादृशैरपि दृश्यते। पापात् पापतरे ऽमुष्मिन्दोषे कथमुदास्यते।
चिन्तयन्त्यपि नावैमि भर्त्तु,कश्चिद्विरोधिनं। निर्दोषस्य हि तस्यासन् सर्व्वतः शीतला दिश.।
अनसूयो निरुत्सेक प्रियवाग्गुणवत्सल.। पूर्व्वाभिभाषी निर्लोभो न विद्वेषी हि कस्यचित्।
तस्य तुल्यवया वाल्यात् प्रभृत्यध्ययने ऽधमः। माचिकस्वामिवास्तव्यो विप्रः शङ्क्योऽभिचारवित्।
गुणदारिद्र्यनिर्निद्रैः चुद्रै. कौशलशालिनां। प्रसिद्धिस्पर्द्धया बन्ध्यैर्धार्ध्यन्तेऽसूययाखलः।
नापुंश्चलीयो दुःशीलो नाद्रोहो नित्यशङ्कितः। नावाचालो मृषाभाषी नाकायस्थः कृतघ्नधीः।
नादाम्भिकस्पृहजो लुब्धो नानीर्ष्यो नित्यदुःखितः। नास्त्रीजित. सर्व्वहास्यो नाप्रबुद्धः स्निग्धभाषित.
नानन्त्यज. पिशुनदोषो नारागी निरपत्रप.। नाचुद्रविद्यः पापीयानिति भूतार्थसंग्रहः।
तिलकं। इत्युक्तवत्या ब्राह्मण्या तच्छङ्काविषयं द्विजं। आनीय परिशुध्यस्वेत्यभ्यधाद्वसुधाधिपः
भूयो ब्राह्मण्यवादीत्तं ख्यातः ख्यातोदविद्यया। नि.सम्भ्रमः स्तम्भयितुं देव दिव्यक्रियामयं।
न्यायदक्षस्तदावादीत्ततस्तं मेदिनीपतिः। अदृष्टदोषे किं कुर्म्मो वयमत्राधिकारिणः।
नान्यस्मिन्नपि दण्डस्य प्रसङ्गो निश्चितागसि। किं पुनर्ब्राह्मणे दण्ड्यो यो दोषेऽपि वधं विना।
उक्त्वेति विरते तस्मिन् द्विजजायाब्रवीत् पुनः। चतस्रः क्षणदा. क्षीणा राजन्नपि न शास्यते।
नाम्यंगा परिणेतारं हन्तुः प्रतिचिकीर्षया। तत्राविहितदण्डेऽस्मिंस्त्यजाम्यनशनैरसून्।
तया स्थितायां ब्राह्मण्यां कृतप्रायोपवेशन.। स्वयं त्रिभुवनस्वामिपादानुद्दिश्य सोऽभवत्।
त्रिरात्रोपोषितं तत्र राजानं रजनीक्षये। स्वप्ने स्वप्नोत्तमोऽवोचत् सत्योक्तिं सत्यवाहनः।
ईदृक्ष युज्यते राजन् सत्यस्यान्वेषणं कलौ। निशीथे कस्य सामर्थ्यं कर्त्तुं दिवि विकर्त्तनं।
भवच्छ्रद्धानुरोधेन यद्देतत् प्रवर्त्तते। मत्प्रासादाङ्गनेऽमुष्मिन् शालिचूर्णं विकीर्य्यतां।
प्रदक्षिणं कुर्व्वतोऽस्य चिरत्र यदि दृश्यते। ब्रह्महत्यापादमुद्रा पादमुद्रानुयायिनी।
तदेष वधको भूत्वा सदृशं दण्डमर्हति। रात्रावेष विधिः कार्य्यो दिने पापहृद्य्यंमा।
अथ सत्कारयित्वा स दृष्टदोषे द्विजन्मनि। दण्डं दण्डधरश्चक्रे द्विजत्वाद्वधवर्ज्जितं।
गदीमपोमा भर्त्तृप्रे तस्मिन् विहितशासने। ततो द्विजन्मजाया सा श्लाघीरभ्यधादिदं।
इयत्यविनिगलर्गे गूढपापानुशासनं। मार्त्तण्डोऽन्यस्य मा दृष्ट तव वा पृथिवीपते।
दण्डधारे त्वयि क्षमाप शिंशिनेतां प्रशासति। को धैर्य्यहृदयो. पारमतामाधावमीदति।

इत्थं कृतयुगश्लाघ्यैर्धर्म्यवृत्तान्तवस्तुभिः। स्वल्पोऽपि राज्यकालोऽस्य पर्याप्तैः पर्यपूर्यत। ११०
दृग्दुर्विप्रपायोजसंसर्गेण निरर्गलः। निविडं जडिमा जाने व्यधत्त धियि सन्निधिं।
विभक्तवर्णशोभस्य तस्यासावन्यया कथं। माहेन्द्रस्येव धनुषो विदधे दृष्टनष्टतां।
कारयित्वाभिचारं तं निग्रहोपहतं द्विजं। तं यमःशेषतामीशं तारापीडोऽनुजोऽनयत्।
दुष्कर्मदुर्भगान् भोक्तुं भोगान् पापगुणोन्नतं। स्पृशन्ति कण्टकान् प्राप्तं करभा इव केतकं।
ततः प्रभृति भूपानां राज्येच्छूनां गुरून् प्रति। दुष्टाः प्रवृत्ता राज्येऽस्मिन्नभिचारादिकाः क्रियाः। ११५
श्रीचन्द्रापीडदेवस्य तत्क्षमित्वमपश्चिमं। संस्मर्यमाणं कुरुते न कस्योत्पुलकं वपुः।
मुमूर्षुर्यत् स लब्ध्वापि तं कृत्याध्यायिनं द्विजं। वराकेऽन्यप्रयुक्तेऽस्मिन् को दोष इति नावधीत्।
विस्मृतः स कृतघ्नात्मपंक्तिमध्येऽद्य वेधसा। दत्वा कार्य्यपदं न्यूनं न्यस्तः कन्निनृपावलौ।
अष्टौ वर्षान् साष्टमासाननुगृह्येति मेदिनीं। प्रविवेश वशी स्वर्गमनिशङ्क सतां मनः।
भ्रातृद्रोहासमुद्‌भूतः प्रतापेन भयावहः। उवाह तारापीडः स चण्डः क्ष्मामण्डलं ततः। १२०
पूर्णपात्रप्रतिभटं दिव्यं लुण्ठयता यशः। शिरांसि प्रतापस्योत्पत्तौ कबन्धा येन नर्त्तिताः।
तस्यातिदुष्टदिष्टस्य लक्ष्मीर्दीप्तापि सर्वतः। अभूदुद्वेगजननी श्मशानाग्नेरिव द्युतिः।
मन्ये प्रभावसान्निध्यं देवानां क्रियते द्विजैः। मत्वेति देवद्वेषी स द्विजानां दण्डमत्यजन्।
साधं पञ्चभिर्दिनैरूनं चतस्रश्च समा भुवि। स प्राभवद्गुरुद्रोहमरोहत्सुकृतात्ययः।
अथारूढाभिचारेण विहितायुःक्षयो द्विजैः। स भ्रातृसदृशीं शान्तिं प्रपेदे न पुनर्गतिं।
योऽयं परापकरणाय सृजत्युपायं तेनैव तस्य नियमेन भवेद्विनाशः। १२५
धूमं प्रसूते नयनान्धकरस्य योऽग्निर्भूत्वाम्बुदः स शमयेत् सलिलैस्तमेव।
राजा श्रीललितादित्यः सार्व्वभौमस्ततोऽभवत्। प्रादेशिकेश्वरस्रष्टुर्विधेर्बुद्धेरगोचरः।
प्रतापांशूच्छटाकूटैः पटवासमधर्म्मभिः। जम्बुद्वीपद्विजेन्द्रस्य येनातन्यत मण्डनं।
नयाश्वलिपु यद्धेषु राजभिर्विजयोद्यमे। पार्थिवः स्युर्विश्रान्तिर्युधि क्रोधं मुमोच यः।
विनिःसरज्जननया भयान्नर्म्मनिवाममुचन्। दिव्यं वमतयो यस्य निशम्यास्कन्ददुन्दुभिं। १३०
विलोलतिलकान्तैर्यां सनेत्राम्भोभिराननैः। निवापाञ्जलिदानानि दिव्यं नारीरकारयत्।
क्षितिं प्रदक्षिणयतो रवेरिव महीपतेः। जिगीषोः प्रायशस्तस्य यात्रास्वेव वयो ययौ।
करं पूर्व्वदिशोऽगृह्णन् प्रतापानलसन्निधौ। अन्तर्व्वेदीं महाराजः स्वकीर्त्युष्णोपभृद्भौ।
कन्यानां यत्र कुजलं व्यधाङ्गाधिपुरे मरुत्। तत्रैव शंसनीयः स पुमांश्चक्रे भयस्पृशां।
यशोवर्म्माद्रिवाहिन्याः क्षणात् कुर्व्वन् विशोषणं। नृपतिर्ललितादित्य प्रतापादित्यतां ययौ। १३५
मतिमान् कान्यकुब्जेन्द्रः प्रत्यभात् कृत्यवेदिभिः। दीप्तं यल्ललितादित्यं पृष्ठं दत्वा न्यषेवत।
तत्सहायास्ततोऽप्यासन्निकाममभिमानिनः। कुसुमाकरतोऽप्युष्णैः सुरभियन्दनानिलः।
श्रीयशोवर्म्मणः सन्धौ सान्धिविग्रहिकोऽनयत्। न यं नियमनालेख्ये मित्रमर्शास्य चक्षमे।
सोऽभूत् सन्धिर्यशोवर्म्मललितादित्ययोरिति। लिखितेनादिनिर्देशादनर्थत्वं विदन् प्रभोः।

॥ युगलकं ॥ सुदीर्घविग्रहश्रान्तैः सेनानीभिरसूयितं । औचित्यापेक्षितं तस्य चितिश्चङ्क्रम १४०
प्रीतः पञ्चमहाशब्दभाजनं तं व्यधत्त सः । यशोवर्म्मनृपं तञ्च समूलमुदपाटयत् ।
अष्टादशानामुपरि प्राक्सिद्धानां तदुद्भवैः । कर्म्मस्थानैः स्थितिः प्राप्ता ततः प्रभृति पञ्चभिः ।
महाप्रतीहारपीडा स महासन्धिविग्रहः । महाश्वशालापि महाभाण्डागारश्च पञ्चमः ।
महासाधनभागश्चेत्येता यैरभिधाः श्रिताः । शाहिमुख्या येष्वभवन्नध्यक्षाः पृथिवीभुजः ।
कविर्व्वाक्पतिराजश्रीभवभूत्यादिसेवितः । जितो ययौ यशोवर्म्मा तद्गुणस्तुतिवन्दितां । १४५
किमन्यत् कान्यकुब्जोर्व्वी यमुनापारतोऽस्य सा । अभूदाकालिकातीरं गृहप्राङ्गनवद्वशे ।
यशोवर्म्माणमुल्लङ्घ्य हिमाद्रिमिव जाह्नवी । सुखेन प्राविशत्तस्य वाहिनी पूर्व्वसागरं ।
पश्यद्भिर्जन्मवसुधां सेर्ष्याधोरणभर्त्सितैः । तन्मातङ्गैः कलिङ्गेभ्यः कथञ्चित् प्रस्थितं पथि ।
आकृष्टलक्ष्मीपर्य्यङ्कादन्तिसंख्यादिवागताः । अशिश्रियंस्तं निःशेषादन्तिनो गौडमण्डलात् ।
कटकेभघटाहस्तक्षतवीचिकचग्रहः । अदृश्यतायशैस्तस्य गृहीतः पूर्व्ववारिधिः । १५०
वनराजिश्यामलेन दिशं वैवस्वताङ्कितां । स प्रतस्थेऽब्धितीरेण तत्कृपाणेन तु द्विषः ।
तस्योर्द्धजूटाः कर्णाटाः कृतप्रणतयोऽनयन् । सुवर्णकेतकीस्त्यक्ता प्रतापमवतंसतां ।
तस्मिन् प्रसङ्गे रट्टाख्या कर्णाटी चटुलेक्षणा । अपासीन्नृपतिर्भूत्वा पृथुश्रीर्दक्षिणापथं ।
विन्ध्याद्रिमार्गाः पर्य्याप्ता निष्पर्य्यन्तप्रभावया । दुर्गयेव तया देव्या कृता निहतकण्टकाः ।
ललितादित्यपादाब्जनखदर्पणमण्डले । स्वमूर्त्तिं वीक्ष्य संक्रान्तां प्रणता सापि पिप्रिये । १५५
तालीतरुतलाचान्तनारिकेलरसोर्म्मय । कावेरीतीरपवनैस्तद्योधाः क्लममत्यजन् ।
चन्दनाद्रेस्तदास्कन्दत्रासभ्रश्यद्दिविक्कलात् । श्रीखण्डद्रुमदोःषण्डा मण्डलाया इवापतन् ।
उत्तराश्मस्विव पदं क्षिप्ता द्वीपेष्वविघ्नतः । स कुल्याया इवाम्भोधेः क्षिप्रं चक्रे गतागतं ।
ततोऽब्धिवीचिनिर्घोषैरुद्गीतजयमङ्गलः । प्रतस्थे पश्चिमामाशां जिगीषूणामपश्चिमः ।
आक्रम्य क्रमुकान् सप्त कोङ्कणान् सप्त तापयन् । तुरगानिव तिग्मांशुः प्रतापस्तस्य पप्रथे । १६०
पश्चिमाब्धेर्मरुद्वासवीचेराविर्भवन्त्यभूत् । द्वारका तस्य सैन्यानां प्रवेशौत्सुक्यदायिनी ।
विन्ध्याद्रिस्तद्दलक्षुण्णधातुरेणुवृताम्बरः । प्रत्यभात्त्यक्तमर्य्यादः कोपताम्र इवोन्नमन् ।
विशतां दशनश्रेयसस्यावन्तिषु दन्तिनां । महाकालकिरीटेन्दुज्योत्स्नया खण्डिताः परं ।
सर्व्वतो दिशमालोक्य जितप्रायांस्ततो नृपान् । स प्राविशत् सुविस्तीर्णमपथेनोत्तरापथं ।
राजभिस्तस्य तत्रोच्चैः संग्रामोऽभूत् पदे पदे । कुलाद्रिभिरिवेन्द्रस्य पक्षच्छेदोद्यमस्पृशः । १६५
काम्बोजानां वाजिशाला जायन्ते स्म हयोज्झिताः । ध्वान्तच्छलात्तद्विरुद्धैर्निरुद्धा महिषैरिव ।
भूःखाराः शिखरश्रेणीर्धान्तः सन्दृश्य वाजिनः । कुण्ठभावन्तदुत्कण्ठां निन्युर्दृष्ट्वा हयाननां ।
दीर्घवारान् समरे जित्वा जितं मेने स दुस्त्यजं । सहजं यमरेर्ष्वीरा मन्यन्ते हि घुणाचरं ।
चिन्ता स दृष्टा भोट्टानां वक्त्रे प्रष्टतिपाण्डुरे । सनोकसामिव क्रोधाः स्वभावकपिले मुखे ।

तस्य प्रतापोदरदां न सेहेऽनारतं मधु। दरीणामोषधिज्योतिः प्रत्यूषेऽर्क इवोदितः। १७०
कस्तूरीमृगसंस्पर्शी धूतकुङ्कुमकेसरः। सैन्यश्रीमन्तिनोस्तस्य सञ्चस्कारोत्तरानिलः।
शून्ये प्राग्ज्योतिषपुरे निर्निर्हानं ददर्श सः। धूपधूमं वनस्पृष्टात् कालागुरुवनात् परं।
मरीचिकावितीर्णार्णोविभ्रमे वालुकाम्बुधौ। तद्गजेन्द्रा महाग्राहसमूहसमतां ययुः।
तद्योधान् विगलद्धैर्यान् स्त्रीराज्ये स्त्रीजनोऽकरोत्। तुङ्गौ स्तनौ पुरस्कृत्य नतु कुम्भौ कवाटिनां।
स्त्रीराज्यदेव्यास्तस्याग्रे वीक्ष्य कम्पादिविक्रियां। संवासमभिलाषं वा निश्चिकाय न कश्चन। १७५
उत्तराकुरवोऽविशंस्तद्भयाज्जन्मपादपान्। उरगान्तकसंत्रासाद्बिलानीव महोरगाः।
जयार्जितधनः सोऽथ प्रविवेश स्वमण्डलं। भिन्नेभमौक्तिकापूर्णपाणिः सिंह इवाचलं।
जालन्धरं लोहरञ्च मण्डलानीतराणि च। प्रसादीकृत्य विदधे राजत्वं सोऽनुजीविनां।
पराजयव्यञ्जनार्थं नानालिङ्गानि पार्थिवाः। उग्रेण ग्राहितास्तेन वहन्त्यद्यापि निर्मदाः।
बन्धमुद्राभिधानाय पश्चाद्बाहू तदाज्ञया। तुरुष्का दधते व्यक्तं मूर्द्धानं चार्द्धमुण्डितं। १८०
क्षितिश्वदाक्षिणात्यानां तिर्य्यक्त्वज्ञापनाय सः। पुच्छं महीतलस्पर्शि चक्रे कौपीनवाससि।
न तत्पुरं न स ग्रामो न सा सिन्धुर्न सोऽर्णवः। न स द्वीपोऽस्ति यत्रासौ प्रतिष्ठां न विनिर्ममे।
क्वचिच्चेष्टासमुचितं क्वचित् स समयानुगं। बाहुल्येन प्रतिष्ठानां स मानो नाम सन्दधे।
सुनिश्चितपुरं चक्रे दिग्जये कृतनिश्चयः। सगर्वो दर्पितपुरं कृतवान् कृतकेशवं।
फलं गृह्णन् फलपुरं पर्णोत्सम्पूर्णमाददत्। क्रीडारामविहारञ्च क्रीडन् राजा विनिर्ममे। १८५
एकमूर्द्धं नयद्रक्षमधः कर्पं तथापरं। बुद्धा व्यधान्निरालम्बं स्त्रीराज्ये नृहरिञ्च सः।
दिगन्तरस्थे भूपाले तस्मिंस्तत्कर्म्मकृत् किल। पुरं विधाय तन्नाम्ना तत्कोपफलमन्वभूत्।
ललिताख्ये पुरे तस्मिन्नादित्याय स भूपतिः। सग्रामां कान्यकुब्जोर्वीमभिमानोर्ज्जितो ददौ।
तेन हुष्कपुरे श्रीमान् मुक्तस्वामी व्यधीयत। बृहद्विहारो भूपेन सस्तूपश्च महात्मना।
एकां कोटिं गृहीत्वा स दिग्जयाय विनिर्गतः। भूतेशाय ददौ शुद्ध्यै कोटीरेकादशागतः। १९०
स तत्र ज्येष्ठरुद्रस्य शिलाप्रासादयोजनं। भूमिग्रामप्रदानञ्च विदधे वसुधाधिपः।
चक्रे चक्रधरे तेन वितस्ताम्भःप्रतारणं। विनिर्म्मायारघट्टालीस्तांस्तान् ग्रामान् प्रयच्छता।
सोऽखण्डिताश्मप्राकारं प्रासादान्तर्व्यधत्त च। मार्त्तण्डस्याद्भुतं दाता द्राक्षास्फीतञ्च पत्तनं।
लोकपुण्ये पुरं कृत्वा नानोपकरणावलीं। प्रतिपादितवान् जिष्णुर्ग्रामैः साकं स विष्णवे।
ततः परं परीहासमौलो भूलोकवासवः। विहसद्वासववासं परिहासपुरं व्यधात्। १९५
विरेजे राजतो देवः श्रीपरीहासकेशवः। शिशिरत्नाकरस्यापि मुक्ताज्योतिर्भरैरिव।
मायीनलिनकिञ्जल्कपुञ्जेनेवानुरञ्जितः। श्रपकात् काञ्चनमयः श्रीमुक्ताकेशवो हरिः।
महावराहः शुशुभे काञ्चनं कवचं दधत्। पाताले तिमिरं हन्तुं वहन्निव रविप्रभाः।
गोवर्द्धनधरो देवो राजतस्तेन कारितः। यो गोकुलपयःपूरैरिव पाण्डरतां दधे।

चतुष्पस्यायतं हस्तान्रोपयित्वा महाशिलां । ध्वजाये दितिजारातेस्तार्क्ष्यस्तेन निवेशितः । २००
चक्रे बृहच्चतुःशाला बृहच्चैत्यबृहज्जिनैः । राज्ञा राजविहारं स विरजाः स्ततोर्जितं ।
तोलकानां सहस्राणि चतुर्भिरधिकानि सः । अशीतिं निदधे देवो मुक्ताकेशवविग्रहे
तावन्त्येव सहस्राणि पलानां रजतस्य च । सन्धाय शुद्धधीश्चक्रे श्रीपरीहासकेशवं ।
रीतिप्रस्थसहस्रैस्तु तेन तावद्भिरेव सः । व्योमव्यापिवपुः श्रीमान् बृहद्बुद्धो व्यधीयत ।
चतुःशालां च चैत्यञ्च तावता तावता व्यधात् । धनैनैवेति तस्यासन् पञ्च निर्मितयः समाः ।
राजतान् क्वापि सौवर्णान् क्वापि देवान् विनिर्ममे । पार्श्वेषु मुख्यदेवानां पार्थिवो धनदोपमः २०५
कियन्ति तत्र रत्नानि ग्रामान् परिकरं तथा । स प्रादादिति कः शक्तः परिच्छेत्तुमियत्तया ।
अवरोधैरमात्यैश्च सेवकैश्च नरेश्वरैः । तत्र प्रतिष्ठाः शतशो विहिता भुवनाद्भुताः ।
राज्ञी कमलवत्यस्य कमलाहङ्कारिणी । राजतं विपुलाकारं कमलाकेशवं व्यधात् ।
अमात्योमित्रशर्मापि चक्रे मित्रेश्वरं हरं । श्रीकय्यस्वामिनं चक्रे लाटः कय्याभिधो नृपः ।
श्रीमान् कय्यविहारोऽपि तेनैव विदधेऽद्भुतः । भिक्षुः सर्व्वज्ञमित्रोऽभूत् क्रमाद्यत्र जिनोपम २१०
तुःखारश्चङ्कुणश्चक्रे स चङ्कुणविहारकृत् । भूपचित्तोन्नतं स्तूपं जिनान् हेममयांस्तथा ।
ईशानदेव्या तत्पत्न्या खाताम्बु प्रतिपादितं । सुधारसमिव स्वच्छमारोग्यमाधायि रोगिणां
ललितादित्यभूभर्त्तुर्व्वल्लभाचक्रमर्दिका । सहस्राण्येकषष्टिं सप्त तत्र चक्रपुरं व्यधात् ।
आचार्य्यो भप्पटो नाम विदधे भप्पटेश्वरं । अन्येऽपि कर्कटेशाद्या बहवो बहुभिः कृताः ।
अधिष्ठानान्तरेऽप्यत्र चङ्कुणेनाग्र्यमन्त्रिणा । स चैत्यः सुकृतोदारो विहारो निरमीयत । २१५
भिषगीशानचन्द्राख्यः श्यालश्चङ्कुणमन्त्रिणः । विहारमकरोल्लब्धा तक्षकानुग्रहाच्छ्रियं ।
एवं हेममयीमुर्व्वीं स कुर्व्वन्नुर्व्वरापतिः । गुणैरौदार्य्यशौर्य्याद्यैर्धर्मधवानमलङ्घयत् ।
हेलयापि विनिर्यान्ती वक्त्रादवसुमतीपतेः । न कदाचन तस्याज्ञा देवैरप्युदलङ्घ्यत ।
तथाहि पूर्व्वपाथोधेस्तटे सकटको वसन् । आनीयन्तां कपित्थानीत्यादिदेश स जातुचित् ।
किङ्कर्त्तव्यतयान्धेषु पुरोगेषु स्थितेष्वथ । उपानयत् कपित्थानि दिव्यः कोऽपि पुमान् पुरः । २२०
अथ दुपायनं गृह्णन् कृतसंज्ञो भुवा प्रभोः । कृत्य त्वमिति पप्रच्छ प्रतीहारः प्रहृत्य तं ।
सोऽभ्यधात्तं कपित्थानि दत्वा राज्ञः प्रियाग्रहं । प्रहितोऽद्य महेन्द्रेण नन्दनोद्यानपालकः ।
रहोमहेन्द्रसंदिष्टं वक्तव्यं किञ्चिदस्ति मे । इति श्रुत्वा प्रतीहारः सभां चक्रे स निर्ज्जनां ।
ततो दिव्यः पुमानूचे शक्रस्त्वां वक्ति भूपते । वक्तव्यं पथ्यमप्येतत् सौजन्याविधुरं वचः ।
तुर्य्ये युगेऽपि भूपाल दिक्पाला अपि ते वयं । बिभ्मो यत् प्रणम्याज्ञां श्रूयतां तत्र कारणं । २२५
पुरा ग्रामे गृहस्थस्य कस्यचित् पृथुसम्पदः । जन्मान्तरे कर्म्मकरो हालिकोऽभूद्भवान् किल ।
एकदा तस्य ते ग्रीष्मे वाहयित्वा महाटवान् । श्रान्तस्य निर्ज्जलेऽरण्ये क्षीणप्रायमभूद्दहः ।
ततः स्वामिगृहात् क्षुत्तृट्खिन्नस्य भवतोऽन्तिकं । वारिकुम्भमपूपञ्च गृहीत्वा कश्चिदाययौ ।

निर्धौतपाणिपादस्त्वं भोक्तुं संप्रस्तुतस्ततः । विप्रं कण्ठंगतप्राणमपश्यः पुरतोऽतिथिं ।
स त्वामवोचन्मा भुङ्क्ष्व दुर्भिक्षोपहतस्य मे । कण्ठे यियासवः प्राणा वर्त्तन्ते भोजनं विना । २१०
वारितः पार्श्वगेनापि तस्मै त्वं प्रीतिपूर्व्वकं । पूपार्द्धं वारिकुम्भीञ्च प्रादाः प्रियमुदीरयन् ।
पात्रे प्रसन्नचित्तस्य काले दानेन तेन ते । अखण्डितानामाज्ञानां शतमासीत्त्रिविष्टपे ।
तेन वारिप्रदानेन वाञ्छामात्रेऽपि दर्शिते । प्रादुर्भवन्ति सुस्वादा नद्यो मरुपथेष्वपि ।
सत्स्वेवप्रतिपादितः प्रियवचोवद्धालवालावलिर्निर्दोषेण मनःप्रसादपयसा निष्पन्नसेकक्रियः ।
दातुस्तत्तदभीप्सितं किल फलन् कालेऽतिबालोऽप्यसौ राजन् दानमहीरुहो विजयते कल्पद्रुमादीनपि ।
अन्यात्रशेषास्त्वाज्ञाः सन्त्याज्ञास्तव भूपते । वचोलङ्घनं चपयतो यत्र तत्राविचारतः । २१५
अपि चेतसि भूपाल सुलभं महतः सतः । कस्मादिचारशून्यत्वं तवापि हृदि रोहति ।
दिनानि कतिचिद्यानि कश्मीरेषु घनागमे । जायन्ते तानि पूर्व्वाम्भो फलानि शिशिरे कुतः ।
विगाहसे दिशं यां यां तत्र तत्रैव तत्पतेः । त्वदाज्ञाग्रहणे यत्नः पूर्व्वदानप्रभावतः ।
आशां श्रितस्य माहेन्द्रीमाज्ञा स्वल्पापि तेऽधुना । ग्रहीता कथमप्येषा शक्रेणाभग्नशक्तिना ।
विना प्रयोजनं मुख्यं तस्मादाज्ञा त्वया क्वचित् । नैवमेव पुनर्देया विरलाः सन्ति ता यतः । २२०
इत्युक्त्वान्तर्हिते तस्मिन् भूपालो विपुलाशयः । चिन्तयन् दानमाहात्म्यं परं विस्मयमाययौ ।
ततः प्रभृति तादृक्षयोग्यार्थप्राप्तिलालसः । परिहासपुरे चक्रे स्थिरां गुर्व्वीं सपर्व्विणीं ।
सहस्रभक्तमित्येवंप्रख्यातायां सदक्षिणं । लक्षमेकोत्तरं भक्तपात्राणां यत्र दीयते ।
अभिप्रायेण तेनैव पत्तनान्यपरेषु सः । चक्रे यत्रेषु तृष्णार्त्तः कश्चिन्मातु पिवेदपः ।
सञ्जपाह स देशेभ्यस्तांस्तानन्तरविज्ञानान् । विकचान् सुमनस्तोमान् पादपेभ्य इवानिलः । २२५
तेन कङ्कणवर्षस्य रससिद्धस्य सोदरः । चङ्कुणो नाम भुःखारदेशानीतो गुणोत्तरः ।
सरसेन समातन्वन् कोशे वक्रसुवर्णतां । पद्माकर इवाजस्य भूभृतोऽभूच्छ्रभावहः ।
रुद्धः पञ्चनदे जातु दुस्तरैः सिन्धुसङ्गमैः । तटे स्तम्भितसैन्योऽभूद्राजा चिन्तापरः क्षणं ।
ततोऽम्बुतरणोपायं तस्मिन् पृच्छति मन्त्रिणः । अगाधेऽम्भसि रोधस्थश्चङ्कुणोमणिमक्षिपत् ।
तत्प्रभावाद्द्विधाभूतं सरिन्नीरं ससैनिकः । उत्तीर्णो नृपतिस्तूर्णं परं पारं समासदत् । २३०
मणिमन्येन मणिना चङ्कुणोऽथाचकर्ष तं । सलिलं प्रागवस्थञ्च क्षणेन सरितामभूत् ।
परिभाष्याहुतं तत्र प्रशंसामुखराननः । प्रणयाच्चङ्कुणं राजा मणियुग्ममयाचत ।
स तमाह स्म विहसन् कर्म्मभी कुरुतो मणी । योग्यौ मत्पार्श्वगावेव किं स्यात् स्वीकरणेन वः ।
सामान्येनैव लभते सोत्कर्षं यस्तु सम्पदां । महत्सु तस्य का शोभा विविधोत्कृष्टवस्तुषु ।
प्रस्यन्दनं शशिमणेर्गणयन्ति तावद्यावत् स्थितो जलनिधिः पुलिनैकदेशे ।
स स्वीक्रियेत यदि तेन ततस्तदास्य स्यन्दैः स्फुरन्नपि न तत्पुलिने विभाव्यः । २३५
इत्युक्त्वा विरते तस्मिन् राजा सस्मितमब्रवीत् । संभावयसि किं रत्नमाभ्यामभ्यधिकं मम ।

ततोऽधिकतरं यदा कोषोत्थं मम पश्यसि। तदादाय प्रयच्छेदं निष्क्रयेण मणिद्वयं।
ततो महान् प्रसादोऽयमित्युक्त्वा चङ्कुणोऽब्रवीत्। स्वायत्ते स्वामिनो रत्ने मह्यमिष्टं प्रदीयतां।
गजस्कन्धेऽधिरोप्यैतन्मागधेभ्यो यदाहृतं। दत्त्वा सुगतबिम्बं तन्मनोऽयमनुगृह्यतां।
सलिलोत्तरणोपायो मणी देवेन गृह्यतां। संसारोत्तरणोपायः सुगतो मह्यमर्प्यतां। २६०
इति तेनार्थितो युक्त्या जिनबिम्बं ददौ नृपः। वाग्मिनां कस्य सामर्थ्यं परिपन्थयितुं वचः।
स्वविहारेऽथ भगवान् स तेन विनिवेशितः। कपिशाभिः सकाषाय इव यो भाति कान्तिभिः।
दृश्यतेऽद्यापि कटकैरायासैः परिवेष्टितः। गजस्कन्धनिबद्धस्य सूचको यस्य विष्टरः।
अभिप्रायानुसारेण प्रकटीकुरुते श्रियं। अहो महाप्रभावाणां भूपतीनां वसुन्धरा।
अशिक्षितं कदाचित्स स्वयं दमयितुं हयं। निनायारण्यमेकाकी हयविद्याविशारदः। २६५
दूरान्निर्मानुषे तत्र ललनां ललिताकृतिं। एकां ददर्श गायन्तीं नृत्यन्तीमपरामपि।
क्षणाच्च ते समाप्य गीतनृत्ये मृगीदृशौ। प्रणम्य किञ्चिद्गच्छन्त्यावपश्यद्भ्रमयन् हयं।
तुरगं तं समारुह्य तत्रागच्छद्दिने दिने। दृष्ट्वा तथैव ते कान्ते गत्वापृच्छत् सविस्मयः।
तमूचतुस्ते नर्त्तक्यावावां देवगृहाश्रिते। यः शूरवर्त्तमानोऽयं ग्रामस्तत्रावयोर्गृहं।
दृहत्यजीवनभुजां माहृणामुपदेशतः। अस्मत्कुलेन नियतं नृत्यमत्र विधीयते। २७०
रूढिः परम्परायाता सेयमस्मद्गृहे स्थिता। आवामन्योऽपि वा नाथ निमित्तं ज्ञातुमीश्वरः।
एवं वचस्तयोः श्रुत्वा नृपोऽन्येद्युः सविस्मयः। तदुक्तां मेदिनीं कृत्स्नां कारुभिर्निरदारयत्।
दूरं निर्दृतमृद्भिस्तैरथाद्राक्षीन्निवेदितं। नृपतिः पिहितद्वारं जीर्णदेवगृहद्वयं।
उद्घाटितारवैर्वर्णैः पीठोत्कीर्णौ निवेदितौ। अपश्यत् केशवौ तत्र रामलक्ष्मणनिर्मितौ।
परिहासहरेः पार्श्वे पृथक् कृत्वा शिलागृहं। स रामस्वामिनः श्रीमान् प्रतिष्ठाकर्म निर्ममे। २७५
देवोऽपि लक्ष्मणस्वामी तथैवाभ्यर्थ्य पार्थिवं। चक्रमर्दिकया चक्रेश्वरपार्श्वे निवेशितः।
दिग्जये पुरुषः कश्चिद्दृत्तप्रत्ययनिग्रहः। अग्रे न्यक्षिपदात्मानं गजारूढस्य भूभुजः।
तं कृत्तपाणिघ्राणादिभ्रंशैः शोणितवर्षिणं। त्राणार्थिनं कारुणिकः खेदन्तं पृष्टवान्नृपः।
स तस्मै सिकतासिन्धुसविधस्थस्य भूपतेः। प्रख्यातमूचे सचिवमाख्यातं हितकारिणं।
प्रणतिर्लङ्घितादिष्टनृपतेः क्रियतामिति। हितं कथयतः स्वस्य निग्रहश्च ततो नृपात्। २८०
॥ युग्मं ॥ प्रतिजज्ञे च भूपेन ततस्तत्स्वामिनिग्रहः। रूढव्रणोऽगदङ्कारैः स चाकार्यत सत्कृतेः।
ततो विहितयात्रं तं स मन्त्री कृतसत्क्रियः। कदाचिदेवमवदद्द्विजेन जगतीभुजं।
एवंविधस्य कायस्य राजन् यत् परिरक्षणं। तत्र वैरविशुद्ध्याशा विडम्बयति मामियं।
वाष्पैर्जलाञ्जलिं दत्त्वा दुःखाय च सुखाय च। कृततत्त्वो भुवं जह्यादवमानहतानसून्।
अपहृत्याधिकं श्वोरपकारं जयोद्यते। गम्भीरं प्रतिनद्येव निनादं महतो गिरेः। २८५
इतो मासैस्त्रिभिर्गम्या भूः प्राप्या सरितं कथं। यदा वा ज्ञायते वैरी तदा तत्रैव किं वसेत्।

मामार्द्धनद्वरं पन्थानं तम्मादुपदिशामि ते। गृहीत्वा स जलं गम्यभूमिं किन्तु निर्जलः।
तद्भूमिजा बन्धवो मे न वक्ष्यन्ति त्वदागमं। सामात्यान्तःपुरो राजा छद्मना तेन गृह्यते।
इत्युक्त्वा सोऽकरोत्तस्य प्रवेशं वालुकार्णवे। पथे चीर्णे तु कटको निखोयः समपद्यत।
तत्राप्यहानि दिवाणि वहन्नेवाभवन्नृपः। तृष्णार्त्तं वीक्ष्य सैन्यञ्च मन्त्रिणं तमभाषत। २९०
एककालाधिका यावद्दामरा गमिताः पथि। मुमूर्षु तृष्णया सैन्यं तद्ब्वा म्रियते कियान्।
ततो विहस्य सोऽवादीज्जिगीषोः शेषमध्वनः। किं पृच्छस्यरिराष्ट्रस्य यमराष्ट्रस्य वा भवान्।
त्वं हि स्वामिहितायैव समुपेत्य स्वजीवितं। मृत्युवक्त्रं सकटको मया युक्त्या प्रवेशितः।
नेदं मरुमहीमात्रं भीमोऽयं वालुकार्णवः। नाम्भोऽत्र लभते क्वापि कल्पाता तेऽद्य भूपते।
श्रुत्वेति पृतना छत्मा समभूद्दीतमोहवा। करकाम्भंशितफला स्वर्भ्रष्टेव शालिभूः। २९५
सन्त्यक्तजीविताशानां भीरूणां क्रन्दितध्वनिं। भुजमुत्थम्य शमयंस्ततो नृपतिरब्रवीत्।
अमात्य तव छत्येन प्रीतः स्वामिहितैषिणः। सरावयव शीतार्त्ता इव रोमाञ्चिता वयं।
अभेद्यसारे मयि तु व्यक्तमेवंविधेऽपि ते। प्रयोगः कुण्ठतां यातो लोहं वज्रमणाविव।
मणिभ्रमादहिफणं गृह्णन् दग्धा इवाङ्गुलीः। त्वं मिथ्यावयवाञ्छूनाद्य शोचिष्यसि ध्रुवं।
निर्देशेनैव मे पत्य पयः स्रुतेऽद्य मेदिनी। रश्मितेनाम्बुवाहस्य रत्नं वैदूर्यभूरिव। ३००
इत्युक्त्वा सोऽम्बु निष्क्रष्टुं कुन्तेनोर्वीं व्यदारयत्। उज्जिहीर्षुर्धितलाम्भः शूलेनेव त्रिलोचनः।
अधोऽज्जगाम पातालगङ्गोर्मीलाञ्छितच्छविः। सरातलात् परित्राणं सैन्यानां जीविताशया।
तस्य सेनाचराणां सा क्रमं चिच्छेद वाहिनी। कथाव्ययीकृताङ्गस्य मन्त्रिणस्तस्य चेष्टितं।
न्नाह्मो महत्वाशंसी स मन्त्री विफलश्रमः। स्वस्य भर्त्तुर्निदेशाद्दो नगरीनन्तकम्गतः।
राज्ञोऽपि कुटिलाचारो निगृह्य स महीपतिः। निजस्य मन्त्रिणस्तस्य तुल्यावस्थो व्यधीयत्। ३०५
यथोपयोगं तेनैव स्थाने स्थाने प्रवर्त्तिताः। अद्यापि कुन्तवाहिन्यः प्रवहन्त्युत्तरापथे।
सहस्रशः सम्भवन्तोऽप्यपरे भुवनाद्भुताः। अतिप्रसङ्गभङ्गेन तद्वृत्तान्ता न दर्शिताः।
यस्मिन् शब्दजला घनागमपदे देशेऽतिघोररवा यद्वाच्छाः समये पयोदमलिने कालुष्यमन्दूषिताः।
दृश्यन्ते कुलनिम्नगा अपि परं दिग्देशकालातिगा तत्कर्तृं महतामपि स्वपद्धशाचारप्रवृत्तिप्रदा।
कर्तेर्वाय प्रभावः स्यान्नरनायकजस्य वा। यत् सोऽपि भीमकनुपाः प्रवृत्ती समदर्शयत्।
॥ युग्मं ॥ अवरोधसखो राजा परिहासपुरे स्थितः। स जातु मदिराचीवः सचिवानेवमन्वशात्। ३१०
ज्ञनं प्रवरसेनेन यदेतत् प्रवरं पुरं। तन्निर्दहत मन्यध्वे मत्पुरस्यैव चेच्छ्रियं।
घोरामज्ञितात्मस्य श्रुत्वेत्याज्ञां महीपतेः। गत्वाऽऽ घासकूटानि तेऽदहन् वातुलानके।
हर्म्यायादीक्ष्यमाणस्तद्वजिह्वानोज्ज्वलानलः। उल्कामुख इवाभूत्स दर्पाट्टहसितोत्कटः।
देशादिवैकृतवतः प्रतिभासतेऽन्यो मिथ्यैव चित्रमधिको विपदात्मनोऽपि।
चन्द्रादि पश्यति पुरो द्विगुणं प्रकृत्या तेजोमयं तिमिरदोषहतं हि चक्षुः।

नैवच्छेदेकमपि तत् पुरं प्रवरभूपतेः। अमक्षपुरनिर्माता स विशेषाधिकं कुतः।
॥ युग्मं ॥ चीणधैर्योऽथ निर्ध्याय नगरश्रीयकिल्बिषं। उष्णनिःश्वासमुद्वदा पस्पर्शेऽनुशयाग्निना।
तत् कुर्व्वतेऽन्तः सुषिरा गूढं येनातनुच्छयं। दह्यन्ते जीर्णतरवः कोटरस्थानला इव।
प्रातस्तमथ शोचन्तं सदुःखं वीक्ष्य मन्त्रिणः। चिन्तानिवर्त्तनायोचुः पुरश्रीषं मृषैव तत्।
श्रुते प्रनष्टे नगरे निःशोकोऽभून्महीपतिः। स्वप्नान्तर्हारिते पुत्त्रे प्रबुद्धोऽग्रइव स्थिते।
कार्य्यं न जातु मद्वाक्यं यत्क्षीबेण मयोच्यते। तान्युक्तकारिणोऽमात्यान् प्रशंसन्निति सोऽब्रवीत्।
प्रियमनुचितं क्ष्मापश्चक्षीवणप्रभुरीश्वरो रमयति यतो धिक्तान् भृत्यान् स्ववृत्तिसुखार्थिनः।
नृपमपथगं पान्ति प्राणानुपेक्ष्य निजानपि प्रसभमिह ये तैः पूतेयं महात्मभिरुर्व्वरी।
अतीन्द्रमपि माहात्म्यं राज्ञस्तस्याधितिष्ठतः। अथमन्योऽपि दोषोऽभूदितरक्षितिपोचितः।
दत्त्वापि यत् स मध्यस्थं श्रीपरीहासकेशवं। जघान तीक्ष्णपुरुषैस्त्रिग्राम्यां गौडपार्थिवं।
गौडोपजीविनामासीन् सत्त्वमत्यद्भुतं तदा। जह्रुर्ये जीवितं धीराः परोक्षस्य प्रभोः कृते।
शारदादर्शनमिषात् कश्मीरान् सम्प्रविश्य ते। मध्यस्थदेवावसथं संहताः समवेष्टयन्।
दिगन्तरस्थे भूपाले प्रविविक्षूनवेक्ष्य तान्। परिहासहरिं चक्रुः पूजकाः पिहितार्गलं।
ते रामस्वामिनं प्राप्य राजतं विक्रमोर्ज्जिताः। परिहासहरिं भ्रान्त्या चक्रुरुत्पाट्य रेणुशः।
तिलं तिलं तं कृत्वा च चिक्षिपुर्दिक्षु सर्व्वतः। नगरान्निर्गतैः सैन्यैर्हन्यमानाः पदे पदे।
श्यामलारक्तसंसिक्तास्तेऽपतन्निहता भुवि। अञ्जनाद्रिदृषत्खण्डा धातुस्यन्दोज्ज्वला इव।
तदीयरुधिरासारैः समभूदुज्ज्वलीकृता। स्वामिभक्तिरसामान्या धन्या चेयं वसुन्धरा।
वज्रादक्षतं भयं विरमति श्रीःपद्मरागाद्भवेन्नानाकारमपि प्रशाम्यति विषं गारुत्मतादश्मनः।
एकैकं क्रियते प्रभावनियमात् कर्म्मातिरत्नैः परं पुंरत्नैः परमप्रमेयमहिमोन्नद्धैर्न किं साध्यते।
क्व दीर्घकाललङ्घ्योऽध्वा शान्ते भक्तिः क्व च प्रभौ। विधातुरप्यसाध्यन्तद्गौडैर्विहितं तदा।
लोकोत्तरस्वामिभक्तिप्रभावाणि पदे पदे। तादृशानि तदाभूवन् भृत्यरत्नानि भूभृतां।
राज्ञः प्रियोरचितोऽभूद्गौडराक्षसविप्लवे। रामस्वाम्युपहारेण श्रीपरीहासकेशवः।
अद्यापि दृश्यते शून्यं रामस्वामिपुरास्पदं। ब्रह्माण्डं गौडवीराणां सनाथं यशसा पुनः।
एवं नानाविधादन्तैर्वासराः क्ष्मापतेर्ययुः। विरलाः स्वपुरे तस्य भूयांसस्तु दिगन्तरे
अनन्याक्रान्तपृथिवीसमालोकनकौतुकी। अपारं प्रविविक्षाय पुनरेवोत्तरापथं।
कर्त्तुं प्रभावजिज्ञासां प्रहितैर्धनदादिभिः। नैच्छंस्तस्मिह वृत्तान्तास्तस्य ते ते तदाभ
नाद्यापि या भुवो दृष्टा जाने भानुकरैरपि। राज्ञस्तस्य बभूवाऽऽ [illegible]
चिरमज्ञातवृत्तान्तैर्मन्त्रिभिः प्रहितस्ततः। प्रत्यावृत्तस्तस्य पा
इत्यादिशति वः स्वामी कोऽयं मोहो भवादृशां। क्ष्मामिमां मे
नवं नवं प्रतिदिनं सनयज्य विजयार्ज्जनं। सुराष्ट्रं सम्प्रविष्टस्य वि

विनिर्गतानां स्वभुवः सरितां सलिलाकरः । न निर्व्याजं जिगीषूणां दृश्यते ह्यवधिः क्वचित् ।
तस्मादाचारसारं वो वक्ष्ये स्वविषयोचितं । राज्यं तदनुसारेण निर्विघ्नं कुरुतानघाः ।
अत्रस्थैः सर्व्वदा रक्ष्यः सुभेदः प्रभविष्णुभिः । चार्व्वाकाणामिवैषां हि भयं न परलोकतः ।
अपराधं विनाप्यत्र दण्ड्या गह्वरवासिनः । ते हि संभृतवित्ताः स्युर्दुर्भेद्या दुर्गसंश्रयाः ।
सर्व्वोपभोग्यान्यन्नानि क्षेत्रभूसम्मिता नृपाः । ग्राम्याणां नातिरिच्यन्ते यथाकार्य्यं तथाचरत् ।
अधिकीभूतवित्ता हि वत्सरेणैव ते भृशं । भवेयुर्डामराः क्रूरा नृपाज्ञातिक्रमक्षमाः ।
वस्त्रं स्त्रियः कथाभोज्यमलङ्कारा हया गृहाः । आसाद्यन्ते यदा जातु ग्रामीणैर्नगरोचिताः ।
मदाद्दुर्गाण्युपेक्ष्यन्ते संरक्ष्याणि यदा नृपैः । यदा चानन्तरज्ञत्वं तेषां भृत्येषु दृश्यते ।
प्रदेशादेकतो रूढा यदा वृत्तिश्च शस्त्रिणां । अन्योन्योद्वाहसम्बन्धैः कायस्थाः संहता यदि ।
कर्म्मस्थानानि वीक्षन्ते क्ष्मापाः कायस्थवद्यदा । तदा निःसंशयं ज्ञेयः प्रजाभाग्यविपर्य्ययः ।
॥ चतुर्भिः कुलकं ॥ चेष्टानुसारिणोन्नीय रूढमादाय संविदं । मयोक्तं हृदये कार्य्यमन्तरं राजजीविनां ।
प्रत्यासत्तिं मदकरटिनो दानगन्धेन वायुर्ग्गर्ज्जोद्भूतिं प्रकटितरुचिश्चञ्चलेवाम्बुदस्य ।
चेष्टा स्पष्टं वदति मतिमन्नैपुणोन्नेयतत्त्वां जन्तोर्ज्जन्मान्तरपरिचितां निश्चितां चित्तवृत्तिं ।
पुत्त्रौ कुवलयादित्यो वज्रादित्यश्च मे समौ । भिन्नशीलौ तयोर्भ्रात्रोर्धीर्द्वैमातुरयोः पुनः ।
ज्यायान् राज्येऽभिषेक्तव्यः स च स्याद्बलवान् यदा । तस्याज्ञातिक्रमः कार्य्यो भवद्भिर्नियमात्तदा ।
उत्सृजञ्जीवितं वापि राज्यं वापि स पार्थिवः । शोचनीयो न केनापि स्मरतेदं वचो मम ।
कार्य्यः कनीयान्न नृपः प्रमादात् क्रियते यदि । नोल्लङ्घनीया तस्याज्ञा रक्ष्यश्च विषमोऽपि सः ।
पौत्त्रेषु मे कनीयान् यो जयापीडोऽस्ति दारकः । पितामहसमो भूया इति वाच्यः स सर्व्वदा ।
भर्त्तुर्गृहीतनैराश्याः साभिप्रायाः प्रणम्य तान् । आनंचुः पश्चिमामाज्ञां ते वाष्पार्धकण्ठ्यजः ।
उवाच चङ्कुणो जातु सन्निपत्याखिलाः प्रजाः । वाष्पैः पतिवियोगाग्नितप्तां सिञ्चन् वसुन्धरां ।
राज्ये कुवलयापीडो राजपुत्रोऽभिषिच्यतां । सुगृहीताभिधो राजा गतः स सुकृती दिवं ।
सहजे यस्य कृतिनो दैवते कोपदूषिते । रससिद्धिरकस्मात्त्वे यस्मात् साम्यमुपागता ।
दूरस्थोऽपि हि भूभृत्स भाग्यशक्त्या कयाचन । कार्य्याणि घटयन्नासीद्दुर्घटान्यपि हेलया ।
अम्भोजानि घनाघनव्यवहितोऽप्युल्लासयत्यंशुमान् दूरस्थोऽपि पयोधरोऽतिशिशिरस्पर्शं करोत्यातपं ।
शक्तिः काप्यपरोक्षिनास्ति महतां स्वैरं दविष्ठान्यहो यन्माहात्म्यवशेन यान्ति घटनां कार्य्याणि निर्धन्त्वपं ।
षैकादशदिनान् सप्त मासान् षट्त्रिंशतं समाः । स्वसाम्राज्य स मही प्रजाचक्रोऽस्तमाययौ ।
तुषारवर्षैर्वहलैस्सकाण्डनिपातिभिः । आर्य्याणकाभिधे देशे विपन्नं केचिदूचिरे ।
राजसत्त्वः सतिशं स रचितुं चिरमक्षितां । सङ्कटे क्वापि दहनं प्राविक्षदिति केचन ।
केषांचित्तु मते भूभृद्वीयस्युत्तरापथे । सोऽमर्त्यं उन्नभां भूमिं प्रविष्टः कटकान्वितः ।
अत्यद्भुतानि कृत्यानि श्रुतान्यस्य यथा किल । विपत्तिरपि भूभर्त्तुस्तथैवात्यद्भुता श्रुता ।

यातोऽस्तं द्युमणिः पयोधिसलिलं कैश्चित् प्रविष्टोऽपरैः सम्प्राप्तो दहनं गतः किल परैर्लोकान्तरं कीर्त्यते।
जायन्ते महतामहो निरुपमप्रस्थानहेवाकिनां निःसामान्यमहत्वयोगपिशुना वार्त्ता विपत्तावपि।
ततः कुवलयापीडो भेजे कुवलयेशतां। जातः कमलदेव्यां यः श्रीमाञ्छक्रदवादितेः।
त्यागेन चक्रे विशदां योऽनुरक्तां नृपश्रियं। महोरगस्त्वचमिव स्वभावमलिनामपि।
भ्रात्रा तुल्यप्रभावेण कञ्चित्कालं हृतप्रभः। स ऊतार्यांशुणाक्रान्तः प्रदीप इव नारुचत्।
भृङ्गैरिवानुगैर्दानलोभात् पर्य्यायवृत्तिभिः। श्रीर्दुःस्थाभूत्तयोरन्तर्मत्तेभकटयोरिव।
अथोभयधनादायि भृत्यचक्रिकया समं। राजा कुवलयापीडो बभञ्जानुजमञ्जसा।
राज्यं निष्कण्टकं कृत्वा ततः प्राप्तबलो नृपः। दिग्जयायोर्जितक्रान्तिः सोऽभूत् सम्भृतसाधनः।
एकस्तस्मिन् क्षणे मन्त्री तस्याज्ञामुदलङ्घयत्। स्मरन् वा तत्पितुर्व्वाचं भजन वा दर्पविक्रियां।
प्राप्तायामपि यामिन्यां तल्पे कोपाकुलो नृपः। तमाज्ञातिक्रमं ध्यायन्न निद्रां क्षणमप्यगात्।
एवं कृतागसं हन्तुं सस्पृहस्य तदाश्रयात्। बहवः प्रत्यभासन्त सध्यास्तस्योद्यतक्रुधः।
विरागशैलमथितात्तस्य चित्तमहोदधेः। प्रकोपकालकूटस्य पश्चात् शमसुधोद्गात्।
दध्यौ सोऽथ गतक्रोधः प्रवृद्धः प्राणिसङ्क्षयः। एतावान् कस्य नु कृते कर्त्तव्यः प्रत्यभान्मम।
अकार्य्याण्यपि पर्य्याप्य कृत्वापि वृजिनार्जनं। विधीयते हितं यस्य स देहः कस्य सुस्थिरः।
कृतघ्नस्यास्य कायस्य हेतोरगणितस्मृतेः। हन्तव्याः कस्य पन्थानः प्रतिभान्त्यनपायिनः।
सदन्ति जन्तवो हन्त पश्यमानस्य नात्मनः। अवस्थां कालसूदेन कृतां तां तां क्षणे क्षणे।
ह्यः पश्यद्भिरकारणस्मितमितं पाथोजकोशाकृतिस्यूदोधकठोरमद्य रभसादुत्तप्तनासप्रभं।
प्रातर्जीर्णयन्त्रचक्रेणविशीर्णितं हृद्धाजमोपोपमं वक्त्रं नः परिहस्यते भुवमिदं भूतैश्चिरस्थायिभिः।
इत्याद्यनित्यताचिन्तादत्ताशान्तिसुखादरः। राज्यं सन्त्यज्य स वनं शक्तप्रस्रवणं ययौ।
गच्छ भद्र यथाप्येव तपस्याधीयतां मनः। मायायाः सरभङ्गिन्य एवंमाया विभूतयः।
तेन सप्तदशा राज्ये लिखितेन निजासने। वैराग्यशमनोमिकः श्लोकेनानेन सूचितः।
अभाग्यममम्भोगलब्धसिद्धिर्नराधिपः। श्रीपर्व्वतादावद्यापि भव्यानामेति दृक्पथं।
मया पत्ते प्रभोः पुत्रे सिषदंसां रूपान्वितः। विनष्टामिन्धुमभेदे सभार्यो जीवितं जहौ।
राज्यं समाः समाष्टां हत्वा स वसुधाधिपः। निःश्रेयसातिनिःश्रेणीं सुधीः सिद्धिं समासदत्।
वज्रादित्यो बप्पियको ललितादित्य इत्यपि। ख्यातोऽथ भूभृद्भवदम्माता धरमर्दिका।
स क्रूरचरितो भ्रातुः प्रसादाद्विधायिनः। सुधांशोरिव दर्भासा नूनं विसदृशोऽभवत्।
परिहासपुरात् विष्णोर्नाम परिच्छदावली। स जहार दुराचारो भूभुजाभवमन्दः।
यागिको ह्यमिपालस्य भुवश्चोऽन्तःपुरस्त्रियः। मोहादथैव सकलासाला: पमसवन् प्रियाः।
विक्रयेण प्रयच्छन् स म्लेच्छेभ्यः पुरुषान् बहून्। धेजाचितां व्यवस्थानिं प्रासादयत मण्डले।
सप्ताब्दान् सप्तमासांश्च भुक्ता सोऽनिषधोजसकलां। जगाम मह्न र्ष कामभृत् क्षयरोगेण विभिन्नी।

तस्मान्मञ्जरिकादेव्या जातो राजा प्रजान्तकः । ततः पृथिव्यापीडोऽभूत् समासाश्चतुरः समाः ।
जातो मल्लाभिधानायां वर्धयित्वा सप्त वासरान् । सङ्ग्रामापीडनामाथ तमुत्थाप्याभवन्नृपः ।
भ्रातरौ तौ समासाद्य राज्यं नैव व्यराजत । हेमन्तशिशिरावाप्य चण्डांशोरिव मण्डलं ।
शान्तेऽथ संग्रामापीडे कनीयान्वप्पियात्मजः । राजा श्रीमाञ्जयापीडः प्राप राज्यं ततः क्रमात् ।
पितामहसमो भूयादित्यमात्यवचः स्मरन् । जिगीषुः सम्भृतबलो दिग्जयाय स निर्ययौ ।
स्वदेशादेव नयविद्वर्षं नीतैः समं नृपैः । स्कन्धावारमपृच्छत् निर्गच्छन् कश्मीरद्वारगोचरान् ।
पितामहस्य नः सैन्यं कियन्निर्गच्छतोऽभवत् । इति भूताद्य यात्रासु यूयं सञ्जातसैनिकाः ।
स्मितस्मितास्तमूचुस्ते किं प्रश्नेनामुना प्रभो । वस्तु कश्चिदतिक्रान्तं नानुकर्तुं क्षमोऽधुना ।
वर्णरथानां तस्यासीत् सपादं लक्षमीशितुः । अशीतिस्तु सहस्राणि देवस्याद्य जयोद्यमे ।
तदाकर्ण्य जयापीडो बहु मेने न निर्जयं । क्षिप्रं चितेः सङ्कुचन्त्याः कालस्य बलवत्तया ।
जिगीषोः क्ष्माभुजस्तस्य भावमालोक्य तादृशं । दध्युर्नावज्ञतां दृष्ट्वा ललितादित्यभूपतेः ।
तस्य दूरप्रयातस्य श्यालो जज्जाभिधो बलात् । द्रोहेणाक्रम्य कश्मीरान् स्वयं भेजे नृपासनं ।
दिने दिने राजसैन्यात् स्वदेशस्मारिणस्ततः । सैनिकाः स्वान्यवर्त्तन्त स्वामिभक्तिपराङ्मुखाः ।
प्रख्यापयिष्यन् स्वामेव शक्तिं परिकरं विना । निश्चिकाय जयापीडो युक्तां काञ्चित्तु संविदं ।
अभङ्गुरास्तेऽभिमानास्तस्यैवासन्मनस्विनः । अभ्यवर्त्तत धैर्येण वेधसोऽपि वामता ।
स विसृज्य भुवं स्वां स्वां भूपतीननुयात्रिकान् । प्रयागमगमत् सैन्यैः परिमेयैर्निजैः समं ।
तत्रावशिष्टाश्चिचित्य वाजिनः स मनोजवान् । द्विजेभ्यो लक्षमेकोनं प्रददौ भूरिदक्षिणं ।
सम्पूर्णमन्यो लक्षं यः प्रदद्यादत्र वाजिनां । तन्मुद्रयेयं मन्मुद्रा विनिवार्य्येत्युदीर्य्य च ।
श्रीजयापीडदेवस्येत्यक्षरैरुपलक्षितां । दिग्देशगामिनो मुद्रां गाङ्गस्य पयसो ददौ ।
तन्मुद्राङ्कं पयः पीत्वा गाङ्गमद्यापि निर्मलं । चित्ते प्रवर्द्धते तापो भूपानामभिमानिनां ।
स्वदेशागमनानुज्ञां सैन्यस्याप्तमुखेन सः । दत्वा निशायामेकाकी निर्ययौ कटकान्तरात् ।
मण्डलेषु नरेन्द्राणां पर्यटन्नानिवार्य्यमा । गौडराजाश्रयं गुप्तं जयन्ताख्येन भूभुजा ।
प्रविवेश क्रमेणाथ नगरं पौण्ड्रवर्द्धनं । तस्मिन् सौराज्यरम्याभिः प्रीतः पौरविभूतिभिः ।
लास्यं स द्रष्टुमविशत् कार्त्तिकेयनिकेतनं । भरतानुगमालक्ष्य नृत्यगीतादिशास्त्रवित् ।
ततो देवगृहद्वारशिलामध्यास्त स क्षणं । तेजोविशेषचकितैर्जनैः परिहृतान्तिकं ।
नर्त्तकी कमला नाम कान्तिमन्तं ददर्श तं । असामान्याकृतेः पुंसः सा ददर्श सविस्मया ।
असंस्पृष्टेऽथ धावन्तं करं तस्मात्करान्तरा । अचिन्तयत्ततो गूढं चरन्नेष भवेद्ध्रुवं ।
राजा वा राजपुत्रो वा लोकोत्तरकुलोद्भवः । स्वं पर्यैतुमभ्यासः स्पृष्टस्याः पर्णवीटिकाः ।
अंसस्पृष्टेन येनायं लसत्पाणिः प्रतिक्षणं ।
लोलश्रोत्रपुटो मदोत्कमधुपापातात्ययेऽपि द्विपः सिंहः सत्यपि पृष्ठतः करिकुले व्यावृत्य निःशेषिता ।

मेघाम्बुखशमेऽप्यशान्तवदनोद्गीर्णस्वरो वर्हिणश्चेष्टानां विरमेऽत्र हेतुविगमेऽप्यभ्यासदीर्घास्थितिः ।
इत्यन्तश्चिन्तयन्तो सा ज्ञात्वा संक्रान्तमिङ्गितं । सखीमभिन्नहृदयां विससर्ज्ज तदन्तिकं ।
प्राग्वत्पृष्ठं गते पाणौ पूगखण्डांस्तयार्पितान् । वक्त्रेऽचिपज्जयापीड. परिवृत्त्य ददर्श तां ।
भूसंज्ञयासि कस्य त्वं पृष्टाया इति सुभ्रुवः । ददन्त्या वीटिकास्तस्या वृत्तान्तमुपलब्धवान् ।
तया जनितदाक्षिण्यस्तैस्तैर्म्मधुरभाषितैः । सख्याः समाप्तकृत्याया निन्ये स वसतिं शनैः ।
अग्राम्यपेशलालापा तया तं सा विलासिनी । उपाचरत् परार्ध्यश्रीः सोऽप्यभूद्विस्मितो यथा ।
ततः शशाङ्कधवले सञ्जाते रजनीमुखे । पाणिनालम्ब्य भूपालं शय्यावेश्म विवेश सा ।
ततः काञ्चनपर्य्यङ्कशायी मैरेयमत्तया । तयार्थितोऽपि शिथिलं विदधे नाधरांशुकं ।
प्रवेशयन्निव हृदयस्थां स्तनपातान्ततः । दीर्घबाहुः समाश्लिष्य स शनैरिदमब्रवीत् ।
न त्वं पद्मपलाशाक्षि न मे हृदयहारिणी । किन्तु कालानुरोधोऽयं सापराधं करोति मां ।
दासस्तवायं कल्याणि गुणैः क्रीतोऽस्म्यकृत्रिमैः । अचिराज्ज्ञातवृत्तान्ता ध्रुवं दाक्षिण्यमेष्यसि ।
कार्य्यशेषमनिष्पाद्य सर्व्वं मानिनि काञ्चन । अभोगे कृतसङ्कल्पं सुखानां त्वमवेहि मां ।
तामेवमुक्त्वा पर्य्यङ्कं साङ्गुलीयेन पाणिना । वादयन्निव निःश्वस्य श्लोकमेतं पपाठ सः ।
असमाप्तजिगीषस्य स्त्रीचिन्ता का मनस्विनः । अनाक्रम्य जगत् सर्व्वं नो सन्ध्यां भजते रविः ।
श्लोकेनात्मगतं तेन पठितेन महीभुजा । सा कलाकुशलाज्ञासीन्महान्तं कञ्चिदेव तं ।
गन्तुकामश्च तं प्रातर्नृपं प्रणयिनी बलात् । अर्थयित्वा चिरं कालमवस्थानमयाचत ।
एकदा वन्दितुं सन्ध्यां प्रयातः सरितस्तटं । चिरायातो गृहं तस्या ददर्श भृशविक्लवं ।
किमेतदिति पृष्टाय तमूचे सा शुचिस्मिता । सिंहोऽत्र सुमहान् रात्रौ निपत्याहन्ति देहिनः ।
नरनागाश्वसंहारः कृतस्तेन दिने दिने । त्वया दूरं चिरायाते तद्भयेन समाकुला ।
राजानो राजपुत्रा वा तद्भयेन विशङ्किताः । गृहेभ्यो नात्र निर्यान्ति प्रवृत्ते चण्डदारुणे ।
तामिति ब्रुवतीं मुग्धां निषिध्य च विहस्य च । सक्रीड इव तां रात्रिं जयापीडोऽत्यवाहयत् ।
अपरेद्युर्दिनापाये निर्गतो नगरान्तरात् । सिंहागमप्रतीक्षोऽभून्महावटतरोरधः ।
अदृश्यत ततो दूरादुत्फुल्लबकुलच्छविः । अट्टहासः कृतान्तस्य सञ्चारीव मृगाधिपः ।
अध्वनान्येन यान्तं तमथ मन्थरगामिनं । राजसिंहो नदन् सिंहं समाह्वयत हेलया ।
लब्धसंज्ञो व्यात्तवक्त्रः कम्प्रकुर्च्चः प्रदीप्तदृक् । तदभ्यपूर्व्वकायस्तं सगर्ज्जं समुपाद्रवत् ।
तस्यान्यस्तानलविभे कफोणिं पततः क्रुधा । चिप्रकारी जयापीडो वक्षः क्षुरिकयाभिनत् ।
शोणितं जवगन्धिभमिन्दूराभं विमुञ्चता । एकप्रहारभिन्नेन तेनात्यज्यत जीवितं ।
आमुत्रणपट्टः स कफोणिमथ गोपयन् । प्रविश्य नर्त्तकीवेश्म निशि सुष्वाप पूर्व्ववत् ।
प्रभातायां विभावर्य्यां श्रुत्वा सिंहं हतं नृपः । प्रपद्य कौतुकाद्द्रष्टुं जयन्तो निर्ययौ स्वयं ।
स दृष्ट्वा तं महाकायमेकप्रहृतिसंहतं । मायर्य्या निश्चयान्मेने प्रहर्त्तारममानुषं ।

तस्य दन्तान्तरालग्नं केयूरं पार्थिवार्पितं । श्रीजयापीडनामाङ्कं ददर्शाथ सविस्मयः ।
स्यात् कुतोऽत्र स भूपाल इति ब्रुवति पार्थिवे । जयापीडागमाद्धि पुरमासीद्भयाकुलं ।
ततः पौरान् विहस्यैव जयन्तः क्षितिपोऽब्रवीत् । प्रहर्षावसरे मूढाः कस्मादो भयसम्भवः ।
श्रूयते हि जयापीडो राजा भुजबलोर्जितः । केनापि हेतुना भ्राम्यन्नेकाक्येव दिगन्तरे । ५१०
राजपुत्त्रः कलट इत्युक्ता कल्याणदेव्यसौ । तस्मै नियमिता दातुं निष्पुत्त्रेण सता मया ।
सोऽन्वेष्यश्चेत् स्वयं प्राप्तस्तद्दाहरणेच्छया । रत्नदीपं प्रतिष्ठासो निधानमादनं गृहात् ।
अस्मिन्नेव पुरे तेन भाव्यं भुवनवासिना । ब्रूयादेनं समान्वेष्य योऽस्मै दद्यामभीप्सितं ।
वाचि सम्प्रत्ययाः पौरा भूपतेः सत्यवादिनः । अन्विष्य कमलावासवर्त्तिनं तं न्यवेदयन् ।
सामात्यान्तःपुरोऽभ्येत्य प्रयत्नेन प्रसाद्य तं । ततः स्वेवेश्म नृपतिर्निनाय विहितोत्सवः । ५१५
कल्याणदेव्यास्तेनाथ कल्याणाभिनिवेशिना । राजलक्ष्म्या यथाप्तायाः इव सोऽजिग्रहत्करं ।
व्याधादिनापि सामर्थ्यं तत्र शक्तिं प्रकाशयन् । पञ्च गौडाधिपान् जित्वा श्वशुरं तदधीश्वरं ।
गतेष्वथ प्रभुत्यक्ते सैन्यं सम्वाहयन् स्थितः । मित्त्रशर्मात्मजो देवशर्मामात्यस्तमाययौ ।
निजदेशं प्रति ततः स प्रतस्थे तदर्पितः । अग्रे जयश्रियं कुर्व्वन् पश्चात्स्त्रीय सुलोचने ।
संहासनं जितादादौ कान्यकुब्जमहीभुजः । स राज्यककुदं राजा जहारोदारपौरुषः । ५२०
तस्मिन् प्रविष्टे स्वभुवं स्फूर्जदूर्जितविक्रमे । सैन्यैस्तस्य समित्वन्यैर्जज्जोयोद्धुं विनिर्ययौ ।
पुष्कलेत्राभिधे ग्रामे तेन सार्द्धं सुदारुणः । जयापीडस्य सङ्ग्रामः सुबहूनि दिनान्यभूत् ।
अनुरक्तप्रजो राजा जज्जराज्यासहिष्णुभिः । युधि सोऽन्वियमाणोऽभूद्भ्राम्यद्विक्रमण्डलैः ।
श्रीदेवो ग्रामचण्डालः प्राप्तो ग्राम्यैः समं युधि । कोऽत्र जज्ज इति भ्राम्यन् योधान् पप्रच्छ सर्व्वतः ।
तृष्णार्तं स्वर्णभृङ्गारात् पिबन्तं वारि तस्य ते । रणमध्ये हयारूढं तं दूरात् समदर्शयन् । ५२५
भ्रमयन् क्षेपणीयं स चिप्राश्मानं तदानने । सोऽयं हतो मया जज्ज इत्यमोघक्रियोऽनदत् ।
साहायकाय राज्ञोऽहं यामीत्युक्ता हितात्मनः । मातुर्हमन्या जज्जस्य प्रतिज्ञाय यथौ वधं ।
अश्मसंरम्भीमास्यं मुमूर्षुं पतितं हयात् । विवेष्टमानं मेदिन्यां जज्जं त्यक्ता ययुर्निजाः ।
स समर्थाहितापातचिन्तासततदुःस्थितः । द्रोहाञ्चितेन राज्येन त्रिभिर्वर्षैर्व्ययुज्यत ।
न्यासापहाराद्विजानां वेश्यानां कामिवञ्चनात् । द्रोहावरोपनता राज्ञामस्थिरा एव सम्पदः । ५३०
हते जज्जे जयापीडः प्रत्याहृत्य निजां श्रियं । जग्राह दोष्णा भूभारं छलेन च सतां मनः ।
प्रपेदे यत्र कल्याणं स विरोधिवधात्रृपः । देशे कल्याणपुरस्तत्र कल्याणदेव्यभूत् ।
राजा मल्हाणपुरं चक्रे विपुलकेशवं । कमला सा स्वनाथापि कमलाख्यं पुरं व्यधात् ।
महाप्रतीहारपीठाधिकारं प्रतिपद्य सः । कल्याणदेवी दाक्षिण्यादकरोदधिकोन्नतिं ।
उत्पत्तिभूमौ देशेऽस्मिन् दूरदूरतिरोहिता । कश्यपेन वितस्तेव तेन विद्यावतारिता । ५३५
वचोमूर्खोऽयमित्येव कश्चिद्वदते स्फुटं । सर्व्वज्ञानं ददश्चक्रे सर्व्वान् विद्याभियोगिनः ।

देशान्तरादागमय्य व्याचक्षाणः क्षमापतिः । प्रावर्त्तयत विच्छिन्नं महाभाष्यं स्वमण्डले ।
क्षीराभिधाच्छब्दविद्योपाध्यायात् संभृतश्रुतः । बुधैः सह ययौ वृद्धिं स जयापीडपण्डितः ।
भूपतिरात्मनः स्पर्द्धां चक्षमे न स कस्यचित् । आत्मनस्तु बुधैः स्पर्द्धां शुद्धधीर्बह्वमन्यत ।
तावत्पण्डितशब्दोऽभूद्राजशब्दादपि प्रभुः । तैस्तैर्दोषैर्नतु स्थानिं कालान्तरवदाययौ । ४९०
नृपतौ विद्वदायत्ते राज्यसामुख्यकाङ्क्षिभिः । गृहा बभूवुर्विदुषां व्याप्ताः सेवागतैर्नृपैः ।
समग्रहीत्तथा राजा सोऽन्विष्यन्निखिलान् बुधान् । विद्वद्दुर्भिक्षमभवद्यथान्यनृपमण्डले ।
अध्यक्षो भक्तशालायां शुक्रदन्तस्य मन्त्रिणः । विद्वत्तया थक्कियाख्यस्तेन स्तोकात्य वर्द्धितः ।
विद्वान् दीनारलक्षेण प्रत्यहं कृतवेतनः । भट्टोऽभूदुद्भटस्तस्य भूमिभर्त्तुः सभापतिः ।
स दामोदरगुप्ताख्यं कुट्टिनीमतकारिणं । कविं कविं बलिरिव धुर्य्यं धी सचिवं व्यधात् । ४९५
मनोरथः शङ्खदत्तश्चटकः सन्धिमांस्तथा । बभूवुः कवयस्तस्य वामनाद्याश्च मन्त्रिणः ।
सुस्वप्ने पश्चिमाशायां लक्षयन्नुदयं रवेः । देशे धर्मोत्तराचार्य्यप्रविष्टं साध्वमन्यत ।
सचेताः संस्तवव्यक्तविवकृतो बभूव सः । भावानां भुज्यमानानामास्वादान्तरविन्नृपः ।
अपश्यद्भिर्महास्वादान् भावान् स्वादुविवेकिभिः । किं श्रेयमस्मादन्यत् स्वापैरन्यैर्विवेचिभिः ।
आरूढस्य चितां कृतानुमरणोद्योगप्रियालिङ्गनं पुण्ड्रेक्षुद्रवपानमुल्वणमहामोहप्रलुप्तस्मृतेः ।
वीतासारवतंसमाल्यवलयामोदस्य यादृग्भवेद्भावानां सुभग. स्वभावमहिमा निश्चेतश्चस्तादृशः । ५००
मन्त्रविक्रमयोस्तस्य द्वयोर्दर्पणयोरिव । एकैव विदिता मूर्त्तिः सहस्रगुणतां ययौ ।
अकुर्व्वन् विगुणामाज्ञां लङ्केन्द्रात्पञ्च राक्षसान् । तेनानयेति जगदे दूतोजातु पुरःस्थितः ।
सान्धिविग्रहिकः सोऽय गच्छन् पोतच्युतोऽम्बुधौ । प्राप पारन्तिमिग्रासं तिमिमुत्पाट्य निर्गतः ।
प्रियमर्त्यो रामभक्त्या नृपाज्ञालेखदायिनं । स्वदेशमनयद्दूतं चाभिमतं विभीषणः ।
दूतं वित्तैः पूरयित्वा सर्गेऽगाधस्य राक्षसैः । चक्रे जयपुरं कोट्टं त्रिविष्टपसमन्नृपः । ५०५
पुरत्रयं महाकारं विहारस्य विधाय सः । नगरान्तर्जयादेवीं पुण्यकर्मा स निर्ममे ।
तत्पुरे चतुरात्मा च शेषशायी च केशवः । विष्णुलोकस्थितिं त्यक्ता ध्रुवं यज्ञाति सन्निधिं ।
अन्यत् कर्म्मान्तरं किञ्चित् कारयित्वा स राक्षसान् । व्यधात् कारुभिरेवास्य इति शंसन्ति केचन ।
स हि स्वप्ने जलान्तर्मे कुरु द्वारवतीमिति । उक्तः कंसारिणा चक्रे विनिर्म्माणं तथाविधं ।
द्वारवत्यधिष्ठानं राज्ञः कोट्टं तथाद्यभो । अभ्यन्तरं जयपुरं शून्येऽद्याप्यखिलो जनः । ५१०
सम्यो पद्मसहामद्भासमं जगतीभुजः । तस्मिन् जयपुरे कोट्टे जयदत्तोऽप्यधान्मठं ।
राजपत्नुः प्रमोदस्य जामाता मथुरापतेः । आचाभिधोऽय्य स्वपच्छुपिराधेश्वरं हरं ।
पुनः सम्भृतसामग्र्यो दिग्जयाय विनिर्ययौ । यैर्जलधिवेलाद्रीन् प्रापयत्तपुद्विपैः ।
सम्प्रविष्टोपि पूर्व्वाद्रिमर्विष्कम्भा हिमाचले । भगीरथस्य गङ्गेव रेजे सम्यानुगा चमूः ।
द्वाः प्रचण्डदण्डानेरटन्तः कटकादद्रिः । तस्याभन् यामिकारावे मुसुनिप्रमुखा नृपाः । ५१५

नामान्यद्विनयादित्य इति प्रख्यापयन्नृपः । पूर्व्वाभां विनयादित्यपुरेणाजह्रुतं व्यधात् ।
अभ्युत्सेकेन महसा सहसाध्यवसायिनां । श्रीरागेहति सन्देहं महतामपि भूभृतां ।
भीमसेनाभिधानस्य स दुर्गं पूर्व्वभूपतेः । निःशब्दो व्रतिभिः सार्द्धं व्रतिलिङ्गी विवेश यत् ।
तं रन्ध्रान्वेषिणं तत्र परिज्ञाय चिरस्थितः । भ्राता जज्जस्य सिद्धाख्यो गत्वा राज्ञे न्यवेदयत् ।
भूपतिर्भीमसेनोऽथ राजा कश्मादबध्य तं । नक्रपाजगरो भीममिव भीमपराक्रमं । ५२०
तस्मिन् वीरे तथा बद्धे धुर्य्ये पुरुषकारिणां । पौरुषद्वेषिणा जाने दैवेनोन्नमितं शिरः ।
जयापीडस्त्वभंमूढो व्यसनेऽप्यतिदारुणे । तांस्तान् सञ्चिन्तयन्नासीदुपायानुदयोन्मुखः ।
अत्रान्तरे नरपतेः पौराणामतिदुस्तरा । लूतामयकृता व्यापदुदपद्यत मण्डले ।
आमयः स्पर्शसञ्चारी तत्र व्यापादकश्च सः । देशदोषादतोजन्तुर्लूताव्याप्तो विवर्ज्यते ।
तदाकर्ण्य जयापीडो जातोपायप्रयुक्तधीः । स्वभृत्येनोपयुक्तानि द्रव्याण्यानीतवान् रहः । ५२५
तैः पित्तोद्रेचकैर्भुक्तैर्ज्वलत्पित्तोऽवहज्ज्वरं । वज्रदृढपयश्चाङ्गे चिप्रा स पिटकोऽभवत् ।
तं लूताव्याप्तमाकर्ण्य विपचोरचिणां मुखात् । विपत्स्यते ध्रुवमिति ध्यात्वा देशाद्बहिर्व्यधात् ।
एवं स्वमतिमाहात्म्यात् सन्तीर्णो विपदर्णवात् । व्याप्तव्योमाशदोर्दुर्गं यशश्च परिपन्थिनः ।
यः सर्व्वकालमबुधैः परिहृश्यमानो मूलाङ्कुराद्यपि न जातु पुरस्करोति ।
व्यापत्सु शास्त्रविटपी स फलं प्रसूय पुंसः किलैकपद एव लुनात्यनर्थो ।
तमेच्छदभिसन्धातुं विद्याविक्रमसंयुतः । मायाव्यरमुडिर्नाम राजा नेपालपालकः ।
अक्षतप्रणतिस्तस्य प्रविष्टस्य स्वमण्डलं । अयात् सुदूरमध्वानं ससैन्योऽपससार सः । ५३०
जिगीषोस्तस्य तु तथा तत्तत्पार्थिवनिर्जयः । पृथक् प्रयत्ननिर्वर्त्यो नाभूत्तदनुसारिणः ।
संप्रेक्षापि क्वचिद्दृश्यं प्रतिदेशं स वैरिणं । श्येनः कपोतं कचान्तरितोऽन्विष्यन् जगाम सः ।
ततो निःशेषितापाये तस्मिन् कुर्व्वन् स दिग्जयं । आसन्नाब्धेस्तटे सिन्धोस्तमुपावेशयद्बलं ।
प्रतस्थे दिवसैर्द्वित्रैरथ पूर्व्वार्णवोन्मुखः । कर्षन् वेलानिलस्पर्शोत्सृष्टध्वजपटाद्यमूः ।
ततस्तस्मिन् सरित्पारे दक्षिणस्मिन् क्षमापतेः । तस्थावरमुडिस्सैन्यं स्वच्छत्राङ्कं प्रकाशयन् । ५३५
भूरिभेरीरवोद्गारि प्रबलं वीक्ष्य तद्बलं । प्रजज्वाल जयापीडः पीतसर्पिरिवानलः ।
स जानुदघ्नं निर्विघ्नं पश्यन्नग्रे सरिज्जलं । अपूर्व्वत्वादभूमिज्ञः क्रुद्धस्तत्तं व्यगाहत ।
मध्यं प्राप्ते नृपे पूर्णा वेलया वर्द्धमानया । अकाण्डेऽभूदगाधाम्भाः सार्णवाभ्यर्णगा सरित् ।
नरनागाश्वसङ्कुलं तया सैन्यं महीपतेः । प्रवृद्धया क्षाव्यमानं क्षणात् संक्षयमाययौ ।
नृपतिर्वीचिसंमर्द्दभ्रंशिताभरणांशुकः । बाहुभ्यां लहरीश्छिन्दन् जलैर्दूरमनीयत । ५४०
एकस्य करुणाक्रन्दैः सैन्यस्यान्यस्य गर्ज्जितैः । सरित्तरङ्गघोषैश्च बभूवुस्तुमुला दिशः ।
चिप्रकारी स दूतिभिः सन्नद्धैः तरितोऽन्तरात् । स चाकृष्य जयापीडं बबन्ध विदितोत्सवः ।
दैवस्यामुमुपस्य नास्ति नियमः कोऽप्यानुकूल्यं प्रति व्यञ्जन् यः प्रियमुत्कटं घटयते जन्तोः क्षणादप्रियं ।

क्षिप्रं दीर्घनिदाघग्रीष्मविपत्संतापनिर्व्वापणं प्रादुष्कृत्य वनस्पते: प्रकुरुते विद्युद्विसर्गं च य: ।
स कालगण्डिकातीरास्रयात्युच्चाश्मवेश्मनि । निचिक्षेप जयापीडमाप्तानां रक्षिणां करे ।
तथा काश्मीरिको राजा निमग्नो व्यसने पुन: । स किंकर्त्तव्यतामूढः शुचा गूढमदह्यत ।
कलावत्सु शशाङ्कोऽपि तेजस्विष्वर्य्यमापि तं । न ददर्श यथा धीमान् स ररक्ष तथा नृप: ।
अपश्यन्निर्गतं किञ्चिदालोकन्यस्तलोचन: । आसन्नां तटिनीमासीदुपायांश्च स चिन्तयन् ।
अत्रस्यावेदकास्तत्र प्रथिता: पृथिवीभुजा । आर्द्रान्त:करणै: श्लोका: स्मर्य्यन्तेऽद्यापि सूरिभि: ।
तथा तस्मिन् स्थिते मानी देवशर्म्मैव मन्त्रिषु । चिन्तयन् स्वामिसम्मानमनिशं पर्य्यतप्यत ।
भर्त्तु: स्वदेहत्यागेन स हितं कर्त्तुमुद्यत: । दूतैररमुडेश्चक्रे प्रियवाग्भि: प्रलोभनं ।
जयापीडश्रिया साकं राज्यं कश्मीरमण्डले । दास्यामि तुभ्यमित्यस्य दूतै: स श्रावितोऽभवत् ।
प्राप्तेषु प्रतिदूतेषु पूर्णायामथ संविदि । गृहीतकटको मन्त्री नेपालविषयं ययौ ।
स कालगण्डिकासिन्धोरर्वाचि कटकं तटे । स्थापयित्वा परं पारं ययौ मितपरिच्छद: ।
सामन्तैरग्रमायातैस्तां सभां सम्प्रवेशितं । सत्कृत्यारमुडे: शक्रं न्यवेशयत विष्टरे ।
अध्वश्रान्त इति क्षिप्रं प्रतिमुक्त: क्षमाभुजा । तद्दिष्टोपचारस्तन्निनायावसथे दिनं ।
स चारमुडिभूपश्च प्रीतकोशौ परस्परं । आसतां निर्जनेऽन्येद्यु: कर्त्तव्यकृतनिश्चयौ ।
नृपमूचेऽथ सचिवो जयापीडार्जितं धनं । अस्ति सैन्ये तदाप्तानां तस्य वा विदितश्च तत् ।
दानेन भविता मोक्षस्तेनेत्युक्त्वा विमोहयन् । तस्मात्त्वं प्रष्टुमिच्छामि क्व वसु न्यस्तमित्यहं ।
अत एव मया सैन्यं संहृतं न प्रवेशितं । यदि तन्मध्यगा: शक्या न बन्धुं न्यासधारिण: ।
तस्मादेकैकमाहूय तेषु सहेषु सैनिका: । कोपमज्ञातहृदया न यास्यन्ति विवक्षव: ।
एवं विमोहितात्तस्मात् प्राज्ञोऽप्याज्ञां स लब्धवान् । वद्धस्य प्रययौ पार्श्वं जयापीडमहीभुज: ।
तदालोकनजं शोकं दर्शयन् धैर्य्यसागर: । गृहं तन्निर्ज्जनं कृत्वा क्षिप्रं पप्रच्छ तं नृप: ।
अपि त्वया निजं तेजो भित्तिभूतं न हारितं । तस्मिन् हि सति तिष्ठन्ति साहसान्तेष्यकल्पना ।
स तं बभाषे नि:शङ्को मन्त्रिन्नेवं व्यवस्थित: । अहृतं कर्म किं कुर्य्यां ध्रियमाणेन तेजसा ।
मन्त्री तमूचे तेजश्चेद्राजन् निहतं तव । जानीहि तत्क्षणेनैव लङ्घितं विपदर्णवं ।
अपि वातायनादस्मात् पतित्वा निम्नगाम्भसि । पारं गन्तुं समर्थोऽसि सैन्यं यत्र निजं तव ।
राजा जगाद तं नास्मात् पतित्वोत्थीयतेऽश्मस: । विना दृतिं दृतियाश्च दूरपातादिदीर्य्यते ।
तस्मान्न्यायमुपायोऽत्र मम च नाम विमानित: । मन्ये मन्ये तनुत्यागमनिर्मय्यापकारिणं ।
इति निर्दिश्य सोऽमात्यस्तमवादीन्महीपते । बहि: केनाप्युपायेन वह त्वं मामितादयं ।
प्रविश्यैकाकिनैवाप द्रष्टव्य: सम्भृतो मया । सरिदुत्तरणोपाय: सोऽमुष्टेयोऽप्यसंहितं ।
युक्तेति निर्गतो गत्वा पापुत्तामशेषम: । प्रविश्य स्वं वहिर्व्वेलां तदुक्तामत्यवाहयत् ।
एकाकी सम्प्रविष्टोऽथ तं ददर्श च्युतं क्षितौ । विपन्नं गलमुद्बद्ध दृढया चेलचीरया ।

सद्यो व्यापादिततनुः श्वासापूरितविग्रहः । आभेद्योऽहं तव दृतिर्मामारुह्य तरापगां ।
आरोढुरुत्वन्धाय खोर्म्मीरुष्णीषपट्टिका । वद्धा मया तां प्रविश्य चिप्रमेव पताम्यपि ।
नखनिर्भिन्नगात्रास्तल्लिखितामिति संविदं । दृष्ट्वा चावाचयत्कण्ठनिवद्धांऽकपत्त्रके । १८०
॥ तिलकं ॥ विस्मयखेदयोः पश्चात् पूर्व्वं स सरितस्ततः । प्रवाहे पतितो राजा परं पारं समासदत् ।
माससैन्यः प्रविश्याथ चर्णेनैव निनाय सः । तमश्चेयं सभूपालं नेपालविषयं चयं ।
रचिणोऽपि न यावत्तमजानन् वन्धनाच्युतं । तावदेव कथाशेषं विषयन्तं चकार सः ।
तत्यत्कवन्धः स्वर्गस्त्रीमुकस्तक् ठयर्थघोषवान् । भूपतेर्व्विम्बनाम्नोऽभूत्संबभूव समरोत्सवः ।
दावानलोल्वणभुवा गिरयो निदाघे यत्रैव दूरमितरे परिवर्ज्जनीयाः ।
तत्रैव सम्भवति सान्द्रहिमद्रवार्द्रश्चित्रतुषारशिखरी नितरां निषेव्यः । १८५
जज्जादीनां चयं यत्र जन्मस्वामिद्रुहामभूत् । तत्रैव मन्त्रिणश्चित्रं छतिनो देवशर्म्मणः ।
नाभूद्विसदृशः सूनुः स पितुर्म्मित्रशर्म्मण । तमोमयो भासुरस्य भानोरिव शनैश्चरः ।
दयारत्नोपमे तस्मिन् सचिवेऽस्तमुपागते । प्राप्तामपि श्रियं मेने नृपतिर्हारितामिव ।
तस्य दिग्विजयस्यान्ते सा न ग्लानिर्व्विनिर्ययौ । मानसात् पृथिवीभर्त्तुर्नामात्योऽपि क्रिया पुनः ।
चित्रं जितवतस्तस्य स्त्रीराज्ये मण्डलं महत् । इन्द्रियग्रामविजयं बक्कमन्यत भूभुजा । १९०
कर्णश्रीपट्टमावद्य श्रीराज्यान्निर्ज्जिताद्धृतं । धर्म्माधिकरणाख्यञ्च कर्म्मस्थानं विनिर्म्ममे ।
द्वितीयञ्चलगञ्जाख्यं कर्म्मस्थानमपि व्यधात् । उपयुक्तं प्रयाणेषु गञ्जे दूरस्थिते निजे ।
किमन्यद्भुजावासनिवासिन्या जयश्रियः । चत्वारोऽम्बुधयोऽभूवन् विलासमणिदर्पणाः ।
पुनः प्रविश्य कश्मीरान् स भूपैः परिवारितः । चिराय बुभुजे राजा विजयोपार्ज्जितां श्रियं ।
तं कदाचिन्नृपं स्वप्ने सर्व्वाशाविजयोर्ज्जितं । पुमान् दिव्याकृतिः कोऽपि व्याजहार कृताञ्जलिः । १९५
सुखं त्वद्विषये राजन् वसन्नस्मि सबान्धव । नागेन्द्रोऽहं महापद्मनामा त्वां शरणं श्रितः ।
द्राविडो मान्त्रिकः कश्चिन्मामितो नेतुमुद्यतः । जलाकाङ्क्षिणे वित्तेन विक्रेतुं मरुमण्डले ।
तस्माद्रक्षसि मां तत्ते स्वर्णधातुसुवद्गिरिं । स्वदेशे दर्शयिष्यामि स्फीतोपलतिकारिणः ।
राजा स्वप्ने निशम्येति दिक्षु सम्प्रेरितैश्चरैः । कुतोऽपि प्राप्तमानीय तं पप्रच्छ चिकीर्षितं ।
दत्ताभयः स नागार्थं यथावत् सर्व्वमुक्तवान् । सविस्मयेन भूभर्त्रा स्वयं भूयोऽप्यपृच्छ्यत । २००
भूरि योजनविस्तीर्णात् सरसोऽभ्यन्तरात् त्वया । नागः प्रभावोत्कृष्टः स निष्क्रष्टुं शक्यते कथं ।
स तं यशिष्यप्राजन्त्रचिन्त्यामन्त्रशक्तय । तात्येद्दिदृचवे चिप्रमेत्याश्चर्य्यं विलोक्यतां ।
अथानुगम्यमानः स राज्ञा प्रातः सरोन्तिकं । अभिमन्त्र्योज्झितैर्व्वाणैर्व्वद्वाशोऽशोषयज्जलं ।
राजाऽपश्यत्ततः पङ्के लुठन्तं मानुषाननं । वितस्तिदैर्घ्यमुरगं भूरिक्षुद्रोरगान्वितं ।
मन्त्रकृष्टोचितं राजन् गृह्णाम्यमुमिति ब्रुवन् । मापहीरिति भूपेन सोऽभिधाय न्यषिध्यत । २०५
द्वष्टं राजाज्ञया याते मन्त्रशैर्थ्येऽथ संहते । सरोऽभूत् प्रागवस्तत्तत् पुनर्ध्यातं दिगन्तरं ।

देशान्तरं प्रयातेभ्यो ये शेषास्ते व्यरंसिषुः। विक्रोशन्तोऽनुसरणाद्धरणान्नापि पार्थिवः।
विप्राणां शतमेकोनमेकाहेन विपद्यते। निर्वेदमेतदित्यूचे कौर्य्याक्रान्तोऽथ पार्थिवः।
विपर्य्यस्तचरित्रस्य तस्य क्रूरस्य भूपतेः। एवं स्तुतिविपर्य्यासः काव्येष्वपि बुधैः कृतः।
नितान्तं कृतकृत्यस्य गुणवृद्धिविधायिनः। श्रीजयापीडदेवस्य पाणिनेश्च किमन्तरं।
भाष्यव्याख्याचणे श्लोकैर्व्वितथव्यस्तहतैः कृतः। सोऽयं तस्य विपर्य्यासो बुधैरिव विवर्त्तितः।
कृतविप्रोपसर्गस्य भूतनिष्ठाविधायिनः। श्रीजयापीडदेवस्य पाणिनेश्च किमन्तरं।
तुलमूलापहर्त्ता च चन्द्रभागातटे स्थितः। विप्राणां शतमेकोनमष्टणोत्तज्जने मृतं।
ततोऽग्रहारहरणादेव प्रविरतोऽभवत्। वास्तव्यानां कृतां भूमिं नतु निःशेषतो जहौ।
अथ विज्ञप्तिसमये तुलमूलौकसो द्विजाः। चुक्रुशुर्जातु तस्याग्रे प्रतीहारकराहताः।
मनुमान्धातृरामाद्या बभूवुः प्रवरा नृपाः। अन्नभावि तदग्रेऽपि ब्राह्मणैर्न विमानना।
सेन्द्रं स्वर्गं सशैलां क्ष्मां सनागेन्द्रं रसातलं। निर्दग्धुं हि क्षणेनैव विप्राः शक्ताः प्रकोपिताः।
तदाकर्ण्यास्तसामन्तत्यक्तधैर्य्यः क्षमापतिः। उल्लासितैकभ्रूलेखो दर्पाद्वचनमब्रवीत्।
भिक्षाकणभुजां कोऽयं शठानां वो मदज्वरः। येनधेय इव ब्रूथ प्रभावव्यापकं वचः।
भीमभ्रूभङ्गभीतेषु तेषु तूष्णीं स्थितेष्वथ। इद्दिलाख्यस्तमाह स ब्रह्मतेजोनिधिर्द्विजः।
राजन् युगानुरूपेण भावभावानुवर्त्तिनः। शक्तिहतेऽनुसारेण न कस्माद्दृप्यथो वयं।
आहस्म विश्वामित्रो वा वसिष्ठो वा तपोनिधिः। त्वमगस्त्योऽथ वा किंस्वि इति दर्पेण तं नृपः।
ज्वलन्निव ततः स्फूर्जत्तेजोदुष्प्रेक्ष्यविग्रहः। स फणीवोत्फणस्ताम्यन् कोपान्नृपतिमब्रवीत्।
भवान् यत्र हरिश्चन्द्रस्त्रिशङ्कुर्नहुषोऽपि वा। विश्वामित्रमुखेभ्योऽहं तत्रैको भवितुं क्षमः।
विहस्योवाच तं राजा विश्वामित्रादिकोपतः। हरिश्चन्द्रादयो नष्टास्त्वयि क्रुद्धे तु किं भवेत्।
पाणिना ताडयन्नुर्व्वीं ततः क्रुद्धोऽभ्यधाद्द्विजः। मयि क्रुद्धे क्षणादेव ब्रह्मदण्डः पतेन्न किं।
तत् श्रुत्वा विहसन्राजा कोपाद्ब्राह्मणमब्रवीत्। पततु ब्राह्मदण्डोऽसौ किमद्यापि विलम्बते।
नन्वयं पतितो जाल्मेत्यथ विप्रेण भाषिते। राज्ञः कनकदण्डोऽङ्गे वितानस्खलितोऽपतत्।
कृतव्रणः स तेनाङ्गे विसर्पिक्लिन्नविग्रहः। कीर्य्यमाणकृमिकुलः क्रकचैर्दारितैरभूत्।
अनुभाव्य व्यथा भावि निरयक्लेशवर्षिका। गणरात्रेण तं प्राणा काङ्क्षितापगमा जहुः।
ब्रह्मदण्डहतं दण्डं भुक्त्वा दण्डधराधिपः। अकाण्डदण्डघट्टाय ययौ दण्डधरान्तिकं।
तस्यानियतचित्तस्य त्रिंशतं परिवत्सरान्। एवं प्रतापिनः सैकान् भूभागो भूपतेरभूत्।
तथाभूयश्च स्वद्रविणकणपाश्चःकृतलयः क्षितिं स्वामुग्भ्रान्तो विदधति कुमार्गानुसरणं।
क्रियन्ते कान्तान्तानुगविहतकैवर्त्तनिवहैर्यथाश्वेते कस्मात् स्थिरनिरयपातप्रणयिनः।
कृतपापं तमुद्दिश्य विपन्नमल्पतप्रभा। मृतोद्धाराय तन्माता व्यधत्तामृतकेशवं।
ललितापीडनामाभूत्ततो वसुमतीपतिः देव्यां दुर्गाभिधायां यो जयापीडादजायत।

द्राविडं द्रविणं दत्वा विसृज्याचिन्तयन्नृपः। दद्यान्माद्याप्यसौ नागः कथं स्वर्णाकरं गिरिं।
ध्यायन्तमेव तं स्वप्ने ततः प्रोवाच पन्नगः। केनापकारेण गिरिः स्वर्णमूर्द्दृश्यते तव।
स्वदेशोऽयं विदेशोऽयमिति बुद्धेः प्रवर्त्तकः। अन्वयव्यतिरेकाभ्यां स्थित्यभ्यासः शरीरिणां।
शरणं त्वामहमगामवमानभयात् पुनः। शरण्येन सता तत्तु भवतैव प्रदर्शितं।
उदन्वानिव योऽन्येभ्यो ज्ञायते संश्रितैः प्रभुः। का ह्रीस्ततोऽन्या योऽन्यैर्यत्तेषामप्येऽभिभूयते।
याभिरन्याभिभूताभिरोचितस्त्रातुमक्षमः। तासां केनाभिमानेन स्त्रीणां द्रक्ष्याम्यहं मुखं।
ये कारणसधर्म्माणो व्यामूढस्य भवाम ते। विडम्ब्यमानाः क्रीडायै ते वयं प्राकृता इव।
अथ वा श्रीमदान्धानामप्रेक्षापूर्व्वकारिणां। यत्किञ्चन विधायित्वं पार्थिवानां किमद्भुतं।
मन्यन्ते क्ष्माभुजः क्रीडामुन्नतानां विमानिनां। यावज्जीवन्तु सश्वासं मरणं त्वां विदन्ति ते।
उपेक्ष्यपक्षे भूपानां मानः स्वार्थस्य सिद्धये। स तु प्राणानुपेक्ष्यापि ग्राह्यपक्षे मनस्विनां।
महतो येऽवमन्यन्ते घटन्ते च विमानितैः। मानखण्डपाभिज्ञत्वं तेषां केनानुमीयते।
भवन्त इव तत्रापि न वयं व्यर्थदर्शनाः। ताम्रधातुरसस्यन्दी दृश्यते तद्गिरिस्तव।
इत्युक्त्वा संविदं तस्मै स्वप्न एव सतां ददौ। यथा प्रबुद्धः प्रत्यूषे प्राप ताम्राकरं गिरिं।
स तस्मात् क्रमराज्यस्थात्ताम्रमाहृत्य निर्ममे। शतन्दीन्नारकोटीनामेकोनं स्वाभिधाङ्कितं।
पूर्णं कोटिशतं कुर्य्याद्यः स मां निर्ज्जयेदिति। दर्पभङ्गाय भूपानां समयं स्थापयेन्नृपः।
समस्या इव स क्ष्माभृत् सावशेषैर्व्विचेष्टितैः। चिक्षेप तुल्यनिर्म्माणकुण्ठतायेति भूभृतां।
अथाकस्मान्महीपालः प्रजाभाग्यविपर्य्ययैः। त्यक्त्वा पैतामहं मार्गं ययौ पित्र्येण सोऽधुना।
किं दिग्जयादिभिः क्लेशैः स्वदेशादर्ज्यतां धनं। इत्यर्थ्यमानः कायस्थैः स्वमण्डलमदण्डयत्।
शिवदासादिभिर्लुब्धैर्धनस्थानाधिकारिभिः। प्रविवर्द्धितवित्तेच्छः सोऽभूल्लोभवशम्वदः।
काश्मीरकाणामुत्पन्नं निजाज्ञाव्यवधायकं। कायस्थवक्त्रप्रेक्षित्वं ततः प्रभृति भूभृतां।
मन्त्रस्तस्य महीभर्त्तुर्योऽभूत्तत्तन्नृपाग्रहे। वास्तव्यबन्धचिन्तायां स एव स्थैर्य्यमाययौ।
यत् सतां प्रथमादायि पापस्योपदिदेश तत्। जयापीडस्य पाण्डित्यं प्रजापीडनशौण्डतां।
स सौदास इवानीकलोकप्राणापहारकृत्। अस्तुत्यकृत्यैर्धाहित्यं स्वप्नेऽपि न समाययौ।
कुर्म्मः किल्बिषमेतदेव हृदये कृत्वेति कौतूहलात् स्वैरिण्यः क्षितिपाश्च धिक् चपलतां क्रौर्य्यंञ्च कुर्युः सकृत्।
क्रान्तधियो भवन्ध्यय यथा नाम्यात् सूनम्योऽपि ता दूयन्ते न च ते यथा स्वपितरैरा घ्नन्तोऽपि शान्तनपाः।
लोभाभ्यासात्तथा क्रौर्य्यं स ययौ वत्सरत्रयं। सह कार्षकभागेन यथाहार्षीत् क्षेत्रफलं।
सम्भलध्वस्तधीर्भूभृत् स्वल्पवित्तवरप्रदान्। सर्व्वस्वहारिणो मेने कायस्थान् हितकारिणः।
सामुद्रास्तिमयो नृपाय मकरारके हतानभसः स्वस्मादेव कणान् घनस्य जहतो जानन्ति ये दातृतां।
मर्व्वणात् स्फुटलुण्ठितादितरतो लेशात् किमन्येऽपि ये दुष्कायस्थकुलस्य हन्त कलयन्त्यन्तर्हिताधायितां।
सर्व्वकालं ब्राह्मणानामेहोधैर्य्यमकुण्ठितं। निस्त्रिंशस्य बभूवुर्ये तस्यापि परिपन्थिनः।

देशान्तरं मयातेभ्यो ये भयास्ते व्यरंसिषुः। विक्रोशन्तोऽनुसरणाद्धरणाच्चापि पार्थिवः।
विप्राणां शतमेकोनमेकाहेन विपद्यते। निर्वेदमेतदित्यूचे क्रौर्य्याक्रान्तोऽथ पार्थिवः।
विपर्य्यस्तचरित्रस्य तस्य क्रूरस्य भूपतेः। एवं स्तुतिविपर्य्यासः काव्येष्वपि बुधैः कृतः।
नितान्तं कृतकृत्यस्य गुणवृद्धिविधायिनः। श्रीजयापीडदेवस्य पाणिनेश्च किमन्तरं।
भाष्यव्याख्याचरणे श्लोकैर्व्विनचण्डहतैः कृतः। सोऽयं तस्य विपर्य्यासो बुधैरिव विवर्त्तितः।
कृतविप्रोपसर्गस्य भूतनिष्ठाविधायिनः। श्रीजयापीडदेवस्य पाणिनेश्च किमन्तरं।
तुलमूलापहर्त्ता च चन्द्रभागातटे स्थितः। विप्राणां शतमेकोनमष्टाणोत्तस्मिते स्मृतं।
ततोऽग्रहारहरणादेव प्रविरतोऽभवत्। वास्तव्यानां कृतां भूमिं न तु निःशेषतो जहौ।
अथ विज्ञप्तिसमये तुलमूलीकयो द्विजाः। चुक्रुशुर्जातु तस्याग्रे प्रतीहारकराहताः।
मनुमान्धातृरामाद्या बभूवुः प्रवरा नृपाः। अन्वभावि तदग्रेऽपि ब्राह्मणैर्न विमानना।
सेन्द्रं स्वर्गं सशैलां क्ष्मां सनागेन्द्रं रसातलं। निर्दग्धुं हि चणेनैव विप्राः शक्ताः प्रकोपिताः।
तदाकर्ण्यास्तेषामन्तव्यकष्टिदः चमापतिः। उल्लासितैकभूलेखो दर्पाद्वचनमब्रवीत्।
भिक्षाकणभुजां कोऽयं शठानां वो मदज्वरः। येनपेय इव भूय प्रभावव्यापकं वचः।
भीमभ्रूभङ्गभीतेषु तेषु तूष्णीं स्थितेष्वथ। इट्टिलाख्यस्तमाह स्म ब्रह्मतेजोनिधिर्द्विजः।
राजन्युगानुरूपेण भावभावानुवर्त्तिनः। शक्तिस्तेऽनुसारेण न कस्माद्वयं वयं।
आहस्म विश्वामित्रो वा वशिष्ठो वा तपोनिधिः। त्वमगस्त्योऽथ वा किंस्या इति दर्पेण तं नृपः।
ज्वलन्निव ततः स्फूर्ज्जत्तेजोदुःप्रेक्ष्यविग्रहः। स फणीवोत्फणस्तम्भन्कोपान्नृपतिमब्रवीत्।
भवान्यत्र हरिश्चन्द्रस्त्रिशङ्कुर्नहुषोऽपि वा। विश्वामित्रमुखेभ्योऽहं तत्रैको भवितुं क्षमः।
विहस्योवाच तं राजा विश्वामित्रादिकोपतः। हरिश्चन्द्रादयो नष्टास्त्वयि क्रुद्धे तु किं भवेत्।
पाणिना ताडयन्नुर्व्वीं ततः क्रुद्धोऽभ्यधाद्द्विजः। मयि क्रुद्धे चणादेव ब्रह्मदण्डः पतेन्न किं।
तत श्रुत्वा विहसथाजा कोपाद्ब्राह्मणमब्रवीत्। पततु ब्राह्मदण्डोऽसौ किमद्यापि विलम्बते।
नन्वयं पतितो जात्वेत्यथ विप्रेण भाषिते। राज्ञः कनकदण्डोऽङ्गे वितानस्खलितोऽपतत्।
कृतव्रणः स तेनाङ्गे विसर्पिक्लिन्नविग्रहः। कीर्य्यमाणकृमिकुलः क्रकचैर्दारितैरभूत्।
अनुभाव्य व्यथा भावि निरयक्लेशवर्णिका। गणरात्रेण तं प्राणाः काङ्क्षितापगमा जहुः।
ब्रह्मदण्डकृतं दण्डं भुक्त्वा दण्डधराधिपः। अकाण्डदण्डसृष्टाय ययौ दण्डधरान्तिकं।
तस्यानियतचित्तस्य चिरतं परिवत्सरान्। एवं प्रतापिनः सैकान्भूभागो भूपतेरभूत्।
तयामूर्त्तमस्तद्रविणकणपान्थःकृतव्ययः चितिं स्वामुज्झन्तो विदधति कुमार्गानुसरणं।
कियन्तो कान्तन्तानुगविकृतकैवर्त्तनिवहैर्यथाद्यैते कस्मात्स्थिरनिरयशालप्रणयिनः।
कृतपापं तमुद्दिश्य विपन्नमस्ततप्रभा। स्वतोद्धाराय तन्माता व्यधत्तामृतकेशवं।
ललितापीडनामाभूत्ततो वसुमतीपतिः देव्यां दुर्गाभिधायां यो जयापीडादजायत।

बभूव रागिणो राज्ञे राज्यकार्य्याण्यपश्यत । यस्य वाराङ्गनाभोज्यं राज्यं दुर्णयदूषितं ।
दुष्कृतेनार्ज्जितं वित्तं पित्रा निरयभागिना । यच्चारणादिषु न्यस्यन्ननुरूपं व्ययं व्यधात् ।
बन्धकीबन्धुभावेन प्राप्तराजगृहाश्रयाः । तं पौंश्चलीयविद्यानामन्तरङ्गं व्यधुर्व्विटाः ।
केशान् स्त्रीदशनच्छिन्नान् वक्षस्तन्नखलाञ्छितं । वपुषो मण्डनं मेने किरीटकटकोज्झितः ।
यो यो वेश्याकथाभिज्ञो यो यो नर्म्मविचक्षणः । स स तत्प्रियतां लेभे न शूरो नच पण्डितः ।
अदृप्तः स्त्रीभिरल्पाभिरुग्ररागः स पार्थिवः । जडं मेने जयापीडं स्त्रीराज्यान्निर्गतं जितात् ।
दिग्विजयव्यसनिनः पूर्व्वभूपाञ्जहास सः । गणिकाभोगसुखितः स्वसामयिकमध्यगः ।
सङ्कोचकारिणो वृद्धान्नर्म्मोक्त्योद्वेज्य वारयन् । तस्मादिटजनो लेभे सम्प्रीतात् पारितोषिकं ।
अट्टचेट इव स्पष्टपरिहासविचक्षणः । सोऽलज्जयन्मन्त्रिवृद्धानास्थाने गणिकासखः ।
बन्धकीपादमुद्राङ्कचारुप्रावरणादि सः । गौरवार्हान् दुराचारैः सचिवान् पर्य्यधापयत् ।
मानीमनोरथो मन्त्री परं परिजहार तत् । अशक्नुवन् यमयितुं मध्यपातपराङ्मुखः ।
कुकृत्यं यागवार्द्धिलं वैधुर्य्यं द्रोहदृप्तिता । दुर्व्वृत्तस्य प्रभोरन्यत् परिहारान्न भेषजं ।
सुवर्णपार्श्वं विप्रेभ्यो दधत् फलपुरं तथा । भूभृत्स लोचनोत्सञ्च द्वादशाब्दानभूद्विभुः ।
कल्याणदेव्यां सञ्जातो जयापीडमहीभुजा । संग्रामापीडनामाथ बभूव भुवनेश्वरः ।
पृथिव्यापीड इत्यन्यन्नाम बिभ्रत् स पार्थिवः । समाप्तिं सप्तभिर्व्वर्षैः साम्राज्यस्य समासदत् ।
श्रीचिप्पटजयापीडो बृहस्पत्यपराभिधः । ललितापीडजो राजा शिशुदेश्यस्ततोऽभवत् ।
रागग्रहगृहीतस्य ललितापीडभूपतेः । वेश्यायां कल्पपाल्यायां जयादेव्यामजायत ।
उपाख्यस्याखुवग्रामकल्पपालस्य तां सुतां । रूपलुब्धोवरुद्धत्वमनैषीत् स हि भूपतिः ।
पद्मोत्पलककल्याणमम्मधर्मैः समातुलैः । बालकः पाल्यमानाभूत् पृथिवी भोगभागिभिः ।
तस्य पञ्च महाशब्दाञ्ज्यायानुत्पलकोऽग्रहीत् । अन्ये जगृहिरेऽन्यानि कर्म्मस्थानानि मातुलाः ।
आयत्तीकृतसाम्राज्यैर्भ्रातृभिर्वन्दिताज्ञया । भूभृज्जनन्या विदधे जयादेव्या जयेश्वरः ।
राज्ञां कृपणवित्तैर्यत् प्रविष्टो दूष्यते धनं । अचिरान्नीयते शान्तिमपूर्व्वैः कश्चिदेव तत् ।
जयापीडस्य यत्किञ्चित् सूनुना हि व्ययीकृतं । स्वनुश्यालैरशेषन्तैः क्रमेण हृतं वसु ।
भगिनीभगसौभाग्यसम्भवैर्व्विभवैः कृताः । ते भङ्गुराणां भोगानां भोक्तारो भाग्यभागिनः ।
निरङ्कुशं चेष्टमानाः सनैकस्यकर्णोशवात् । ते स्वस्त्रीयान्नृपान्नाममकुलीनाः समहिरे ।
अथाभिचारक्रियया मिथः संमन्त्र्य पापिभिः । राज्येच्छया तैः स्वस्रीयः स्वामी च स नृपो हतः ।
भुक्तवितो द्वादशाब्दांस्तस्मिन् व्यापादिते तथा । नैच्छन्नेकस्य ते राज्यं परस्परमहङ्कृताः ।
तेषामाशान्तदेशानां सामसाध्यमहीपतीन् । तांस्तान् कर्त्तुमसामान्यान् विरोधोऽन्योन्यमुद्ययौ ।
अथ मेघावलीदेव्यां जातो वप्पियभूपतेः । ज्येष्ठोऽप्यधार्म्मिकतया योऽभूद्राज्यविवर्ज्जितः ।
सोऽयं त्रिभुवनापीडो जयादेव्यासमीजमत् । राजानमजितापीडं सं महादुत्पन्नो व्यधात् ।

॥ युग्मं ॥ श्वेतादिगणनास्थाननिष्यन्दोत्था नृपाय ते। पद्ममाङ्गणनास्थानादश्मनाच्छादने ददुः।
एकसम्भाषणात् खेदं यात्स्वन्येषु दिने दिने। पद्मतुल्यमुखान्वेच्छद्दुःखो राजा तदाश्रितः।
ते राजन्यजितापीडे राज्योत्पत्त्यपहारिणः। पुरदेवगृहादीनां प्रतिष्ठाकर्म चक्रिरे।
आपत्यास्ते बुभुजिरे राज्यं स्वामिविवर्जितं। निर्जने महिषं श्रान्तं मिथः सेर्ष्या वृका इव।
उत्पलेनोत्पलस्वामी तथोत्पलपुरं कृतं। पद्मस्य पद्मस्वाम्यन्ते कृतिः पद्मपुरं तथा।
वधूर्व्यधत्त पद्मस्य गुणादेवी गुणोज्ज्वला। मठमेकमधिष्ठाने द्वितीयं विजयेश्वरे।
धर्मो धर्माश्रमे हेतुर्धर्मस्वामिविनिर्मिते। कल्याणवर्मा सत्कर्मा कल्याणस्वामिकेशवे।
दीनाराणां सहस्राणि पञ्चोपकरणं कृती। एकैकस्याः सुधीर्धेनोः कृत्वा मम्मो महाधनः।
पञ्चाशीतिसहस्राणि गवां दत्त्वा प्रकल्पयन्। कुम्भप्रतिष्ठासम्भारं योमम्मस्वामिनं व्यधात्।
तस्यैकस्यैव सामर्थ्यां कः सङ्ख्यां कर्तुमर्हति। भ्रातॄणां किं पुनस्तेषां सर्वेषां भूरिसम्पदां।
द्रोहार्जितास्तु वा लक्ष्मीः सुकृतोपार्जिताथवा। सर्वेषां स्पृहणीयैव तेषां दातृतया तया।
कृता देवगृहास्तैर्ये तत्पार्श्वे ऽन्यसुरालयैः। दिङ्मातङ्गसमीपस्थकलभौपम्यमाश्रितं।
एकोननवते वर्षे स्वलीये शान्तिमागते। निर्विघ्नभोगास्तेऽभूवन् षट्त्रिंशाब्दात्ययावधि।
अथ मम्मोत्पलकयोरुदभूद्दारुणो रणः। रक्तप्रवाहा यत्रासीद्वितस्ता सुभटैर्हतैः।
कविर्बुधमनःसिन्धुशशाङ्कः शङ्कुकाभिधः। यमुद्दिश्याकरोत् काव्यं भुवनाभ्युदयाभिधं।
मम्मसूनुर्यशोवर्मा संग्रामाग्रे व्यपाहरत्। स यत्र तेजः शूराणां नक्षत्राणामिवार्यमा।
अथोत्पाट्याजितापीडं संग्रामापीडसम्भवः। अनङ्गापीडनामाभूत् कृतो मम्मादिभिर्नृपः।
मम्मोत्साहासहिष्णुत्वात् सम्भृतामर्षविक्षतः। तस्य राज्ये द्विवर्षासीत् सुखवर्मोत्पलात्मजः।
वर्षत्रयेणोत्पलके ततः प्रमयमागते। स चकारोत्पलापीडमजितापीडजं नृपं।
तेषामाश्वयुजे राजसद्मनां महीभुजां। भूत्वापि भृत्याः कृतिनो विभूतिं केऽपि लेभिरे।
सान्धिविग्रहिकस्तस्य रत्नोनाम विभूतिभाक्। तस्मिन् कालेऽपि यश्चक्रे रत्नस्वामिसुरास्पदं।
भेजुर्दार्वाभिसारादीन् देशानुत्क्रम्य भूपतां। विमलाद्याधामभुजो नराद्या व्यवहारिणः।
राज्ञां कर्कोटवंश्यानां क्षीणप्रायमभूत् कुलं। वंशस्तूत्पलकुल्यानां भुवि वैपुल्यमाययौ।
सामर्थ्यापनतप्रायपार्थिवत्वोऽव्यपद्यत। विद्वेषात् सुखवर्मा च शुम्भाख्येन स्वबन्धुना।
ततः शूराभिधो मन्त्री सुखवर्मात्मजेऽकरोत्। राज्ययोग्योऽयमित्यास्थां सगुणेऽवन्तिवर्मणि।
एकत्रिंशे स वर्षेऽथ प्रजाविप्लवशान्तये। विनिवार्योत्पलापीडं तमेव नृपतिं व्यधात्।
यस्मिन्ते विफलक्लेशा आसन् पितृपितामहाः। पौत्रेण हेलया प्राप्ता सा सिद्धिः पुण्यकर्मणा।
लुब्धाः पयोनिधिपयोहरणप्रवृत्ता नित्यश्च हन्ति किल ये विफलश्रमत्वं।
चित्रं क्षणादिह तदेकसमुद्भवेन सन्दर्शिता निखिलवारिधिपानलीला।
अभ्रूत तद्गुरुमूर्ध्नि राजलक्ष्मीघटितकटाक्षच्छटादिपट्टबन्धे।

कनकघटमुखान्नवाभिषेकं झटिति पतन्तमवन्तिवर्मदेव ।
सम्प्राप्तावुपदेष्टुमिन्दुतपनौ युक्तं स्ववंशोद्भवैर्भूपालैर्नवराज्यतन्त्रमिव स श्रोत्रद्वये धारयन् ।
राजा मण्डनकुण्डलद्वयमिषात् स्वच्छातपत्रच्छलात्सङ्क्रोविष्टरपुण्डरीकघटितच्छायोदयो दिद्युते ॥ १२५ ॥

॥ राजानः ॥ १७ ॥ ग्रन्थाः ॥ ७२८ ॥ आदितः राजानः ॥ ७० ॥ ग्रन्थाः ॥ २७ ॥

इति श्रीकाश्मीरिकमहामात्यचम्पकप्रभुसूनोः कह्लणस्य कृतौ राजतरङ्गिण्यां चतुर्थस्तरङ्गः ॥

समाशतद्वये षष्टियुते मासेषु षट्सु च । निर्दिष्टाहेषु कार्कोटवंश्ये सप्तदशाभवन् । ९१०

## ॥ अथ पञ्चमस्तरङ्गः ॥



काप्येतेषु रुचिः कचेषु फणिनां पुंस्कोकिलस्येव ते गोभिः कण्ठतटस्य हृष्यति पुरो दृक् पश्य चक्षुःश्रुतेः।
सन्धानेऽभिनवे मिथो भगवतोर्जिह्मा पृथक्स्यन्दिनो भिन्नार्थां सदृशाक्षरामपि वदन्त्येवं गिरं पातु वः।
अवन्तिवर्म्मा साम्राज्यं प्राप्य पाटितकण्टकः। चकार चरितैश्चित्रं सतां कण्टकितं वपुः।
आसतां क्षितिपामात्यौ तौ द्वावपि परस्परं। आज्ञादाने परिच्छेदौ भृत्यावाज्ञापरिग्रहे।
कृतज्ञः क्षान्तिमान् क्ष्माभृन्मन्त्री भक्तः स्मयोज्झितः। अभङ्गुरोऽयं संयोगः सुकृतैर्जातु दृश्यते।
विवेको प्राप्तराज्यः स क्ष्माभृद्वीक्ष्य नृपश्रियं। अविलुप्तस्मृतिर्धीमानन्तरेवमचिन्तयत्।
गोभुजां वल्लभा लक्ष्मीर्मातङ्गोत्सङ्गलालिता। सेयं स्पृहां समुत्पाद्य दूषयत्युन्नतात्मनः।
स नास्ति कश्चित् प्रथमं यः प्रदर्श्यानुकूलतां। सन्ताप्य तेन च रसं नीचप्रीत्येव नानया।
सपत्नीभिः प्रहृष्टेयं स्ववेश्याभिः सहाम्बुधौ। तदेकचारिणीवृत्तमनया शिक्षितं कुतः।
निःस्नेहानन्वगात् कांश्चित् सुचिरं संस्तुताप्यसौ। परलोकाध्वगान् भूपानपाथेयानबान्धवान्।
हेमभोजनभाण्डादि भाण्डागारे यदर्ज्जितं। कस्मादस्य न नाथास्ते लोकान्तरगता नृपाः।
अन्योच्छिष्टेषु पात्रेषु भुक्तेतेषु महीभुजः। कस्मान्न लज्जामवहन् शौचचिन्तां नवा दधुः।
स्थलेषु राजतस्थालकपालेष्ववलोकितैः। प्रेतभूपालनामाङ्कैः मङ्क्षा कस्य न जायते।
हृष्टाः प्रविष्टे ये कालपाशे कण्ठान्मुमूर्षतां। अमस्ता अपविन्नाय ते हाराः कस्य हारिणः।
सन्दूष्य वाष्पैर्दुःखोष्णैस्तकान् पूर्व्वैर्मुमूर्षुभिः। स्पृशन्नेतानलङ्कारान्न सङ्कोचः कमाप्नुयात्।
या वारिराशिसलिलान्तरसन्निधानसंसेवयापि सततं मलिनैव लक्ष्मीः।
पात्रेषु गोरधिभागिषु सा विमुक्ता वैमल्यमेति हरिणीव कृतायशौचे।
इति निर्धार्य नृपतिर्नीत्वा स्वर्णादिवर्णतां। निजैरञ्जलिभिः प्रादाद्द्विजन्मभ्यः करम्भकं।
साधु भूपेति वक्तव्ये हर्षाश्रुगौरवं द्विजः। साध्ववन्तिमिति वदन्नेकः प्रापाञ्जलीन् बहून्।

लक्ष्मीं कृत्वार्थिसात्कृत्स्नां कृतिनावन्तिवर्म्मणा । विभूतिश्चामरच्छत्रमात्रशेषा व्यधीयत ।
अनन्तसम्पत्सम्पन्नभूरिगोचर्जविस्तरे । राजश्रीर्दुर्जरा तस्य नवत्वे भूभुजोऽभवत् ।
विश्रुतः समरे भ्रातॄन् भ्रातृव्यांश्च विजित्य सः । चकार भूरिरिभर्व्वारिराज्यं विगतकण्टकं । २५
राज्यं निष्पाद्य निर्व्विघ्नमथ वात्सल्यपेशलः । विभज्य बन्धुभृत्येषु बुभुजे पार्थिवः श्रियं ।
भ्राता दैमातुरस्तेन शूरवर्म्माभिधः सुधीः । ज्ञातिप्रियेण वितते यौवराज्येऽभ्यषिच्यत ।
स्वाधूयाहस्तिकर्णाख्यावग्रहारौ प्रदाय यः । शूरवर्म्मा स्वामिनश्च गोकुलस्य विनिर्ममे ।
सम्पूर्णपुण्यमहिमा मर्त्यमाहात्म्यमन्दिरं । पञ्चहस्तप्रदश्चक्रे मठं सुकृतकर्मठः ।
भ्राता व्यधत्त नृपतेरपरः समराभिधः । केशवं चतुरात्मानं समरस्वामिनं तथा । ३०
द्वौ शूराग्रजौ धीरर्विचपाख्यौ निजाख्यया । व्यधत्तां विबुधावासौ द्वावन्यौ गणनापती ।
भूत्वा बाकुलताकृत्स्नप्रभावानुभवौ भुवि । गतौ सविग्रहाविव हरावासाग्र्यसत्यतां ।
॥ युग्मं ॥ राजदौवारिकः श्रीमाञ्छूरस्यासीन्महोदयः । महोदयस्वामिनोयः प्रतिष्ठां समपादयत् ।
रामजाख्यमुपाध्यायं ख्यातव्याकरणश्रमं । व्याख्यातृपदकं चक्रे स तस्मिन् सुरमन्दिरे ।
अमात्येन महीभर्त्तुः श्रीप्रभाकरवर्म्मणा । कृतं प्रभाकरस्वामिनाम्नो विष्णोर्निकेतनं । ३५
आयातेन शुकैः सार्द्धमन्दला गृहशुकेन यः । मुक्ताः प्राप्य प्रतिष्ठायां चक्रे ख्यातां शुकावलीम् ।
विच्छिन्नप्रसरा विद्या भूयः शूरेण मन्त्रिणा । सत्कृत्य विदुषः सभ्यान्देशेऽस्मिन्नवतारिता ।
युग्मे. क्षितिभुजां योग्यैरुह्यमानामहर्द्धयः । बुधाः प्रवृद्धसत्काराभूपतेर्व्विविशुः सभां ।
मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः । प्रथां रत्नाकरश्चागात्साम्राज्येऽवन्तिवर्मणः ।
आस्थाने कृतमन्दारो वन्दी शूरस्य मन्त्रिणः । सङ्कल्पस्मृतिमाधातुमिमामार्य्यां सदापठत् । ४०
अयमवसरउपकृतये प्रकृतिचला यावदस्ति सम्पदियं ।
विपदि समाभ्युदयिन्यां पुनरुपकर्त्तुं कुतोऽवसरः ।
कृतः सुरेश्वरी क्षेत्रे बह्वगेहविधायिना । शिवयोर्मिश्रयोस्तेन प्रासाद. सोऽव्ययस्थितिः ।
शूरेश्वरं प्रतिष्ठाप्य स्वक्षेत्रैव समुन्नतं । चक्रे शूरमठन्धीमान् स भोगाय तपस्विनां ।
स्वकृते पत्तनवरे तेन शूरपुराभिधे । क्रमवन्तु प्रदेशस्थोढक्कोऽभूद्विनिवेशित. ।
सुरेश्वरीप्राङ्गनतश्चक्रे भूतेश्वरं हरं । मठं शूरमठान्तश्च शूरजोरत्नवर्धनः । ४५
काव्यदेव्यभिधा शूरवधूः शुद्धान्वया व्यधात् । सदाशिवं सुरेश्वर्यां काव्यदेवीश्वराभिधं ।
निर्मत्सरोऽवन्तिवर्म्मा सोदरेभ्योऽनपायिनीं । शूराय स्वां सुताय नृपतिः प्रक्रियान्ददौ ।
छन्दानुवर्त्ती भूपालो दैवतस्येव मन्त्रिणः । आबाल्याद्वैष्णवोऽप्यासीच्छैवतामुपदर्शयन् ।
क्षेत्रे विश्वैकसाराख्ये स्मृतानामपवर्गदे । भूरिभोगास्पदं राज्ञा तेनावन्तिपुरं कृतं ।
अवन्तिस्वामिनं तत्र प्रापाध्याधिगमात्पुरो । विधाय प्राज्यसाम्राज्यश्चक्रेऽवन्तीश्वरं तदा । ५०
त्रिपुरेश्वरभूतेशविजयेशेषु भूभुजा । स्नानद्रोण्यो रौप्यमय्यो तेन पीठचयं कृतं ।

शूरस्यापि नरेन्द्रं तं ध्यायतः स्वाधिदैवतं। तत्प्रियार्थमुपेक्ष्योऽभूद्धर्मः प्राणाः सुतोऽपि वा।
तथा चार्चयितुं जातु यातो भूतेश्वरो नृपः। विभवानुगुणेष्वस्मिन् पूजोपकरणेऽर्पिते।
ददर्श पीठे देवस्य पूजकैरुपपादितम्। वन्यमुत्पलशाकाख्यं तिक्तशाकमवस्थितं।
तत्रस्थाः क्ष्माभुजा पृष्टास्तन्निवेदनकारणं। व्यजिज्ञपन् क्षितिन्यस्तजानुप्राञ्जलयस्ततः।
डामरो धन्वनामास्ति लहरे विषये बली। शूरस्य मन्त्रिणो देवसेवको यः सुतोपमः।
हृतेषु तेन ग्रामेषु निरवग्रहशक्तिना। निवेद्यमेतद्देवास्मै भूतेशाय निवेद्यते।
अकाण्डशूलजनितां पार्थिवः कथयन् व्यथां। श्रुतमश्रुतवत्कृत्वा त्यक्तपूजोऽथ निर्ययौ।
पूजां सन्त्यज्य गमनं शूलं चाकस्मिकं प्रभोः। सहेतुकं विदन्शूरो वृत्तान्तान्वेषकोऽभवत्।
ज्ञाततत्त्वस्ततस्तूर्णं भूतेशाभ्यर्णवर्त्तिनः। क्रुद्धः समाढ्यचक्रस्य भैरवस्याविशद्गृहं।
निषिद्धजनबाहुल्योभूत्वा विरलपार्श्वगः। प्राहिणोद्धन्वमानेतुं ततो दूतान् पुनःपुनः।
स क्षितिं पत्तिपृतनासंमर्देन प्रकम्पयन्। अप्रकम्पतनुः प्राप क्रूरः शूरान्तिकं पुनः।
तस्य प्रविष्टमात्रस्य शस्त्रिणः शूरचोदिताः। मुण्डं सजीवितस्यैव चिच्छिदुर्भैरवाग्रतः।
आसन्ने सरसि क्षिप्त्वा रुधिरोद्गारि तद्वपुः। क्ष्मापतेः क्षालितामर्षो धीरः शूरो विनिर्ययौ।
तस्य श्रुत्वा शिरश्छिन्नं स्वपुत्रस्येव मन्त्रिणा। क्षीणमन्युः क्षितिपतिः सवैलक्ष्य इवाभवत्।
शूरोऽथ पृष्टकुशलो निर्व्यथोऽस्मीति भाषिणं। उत्थाप्य तल्पात्तं देवं पूजाशेषमकारयत्।
इत्थं समस्तकृत्येषु भावज्ञः स महीपतेः। अनुक्त्वैव हितं तत्तु प्राणांस्त्यक्त्वाप्यसाधयत्।
परस्परमनुत्पन्नमन्युकालुष्यदूषणौ। न दृष्टौ न श्रुतावन्यौ तादृशौ राजमन्त्रिणौ।
श्रीमेघवाहनस्येव साम्राज्येऽवन्तिवर्म्मणः। अशेषप्राणिनामासीत्कुमारी दशवत्सरान्।
जलं जहद्भिः शिशिरं तटानेत्याकुतोभयैः। तत्कालं सेवितः पृष्ठे पाठीनैः शरदातपः।
अनुग्रहाय लोकानां भट्टाः श्रीकल्लटादयः। अवन्तिवर्म्मणः काले सिद्धा भुवमवातरन्।
चरिते बहुवक्तव्ये येषामेकस्य पावनः। अयं प्रासङ्गिकः कश्चिद्वृत्तान्तो वर्णयिष्यते।
देशः प्रवलतोयेऽयं महापद्मसरोजलैः। कूलिनीभिश्च शवलः स्वल्पोत्पत्तिः सदाभवत्।
ललितादित्यभूभर्त्तुरुद्योगेन बलीयसा। किञ्चिदाकृष्टसलिलः प्रापोत्पत्तिं मनाक्ततः।
जयापीडे क्रमायाते स्वल्पवीर्य्येषु राजसु। सलिलोपप्लवैरासीत्पुनरेवावृता क्षितिः।
दीनाराणां द्विशती पञ्चाशत्यधिकाभवत्। धान्यखारीक्रये हेतुर्देशे दुर्भिक्षविप्लवे।
अवन्तिवर्म्मणः पुण्यैर्जन्तूञ्जीवयितुं ततः। स्वयमन्नपतिः श्रीमान् सुय्यः क्षितिमवातरत्।
यस्याविज्ञातसम्भूतेस्तूर्य्ये कालेऽपि निश्चितं। अयोनिजत्वकृतिनश्चरितैर्भुवनाद्भुतैः।
पुरा रथ्यारजःपुञ्जं सम्मार्ज्जन्ती पिधानवत्। सुय्याभिधाना चण्डाली मृद्भाण्डं प्राप नूतनं।
तस्मिन् पिधानमुद्धृत्य सापश्यन्मध्यशायिनं। बालं कमलपत्राक्षं धयन्तं स्वकराङ्गुलीः।
साधा कयापि त्यक्तोऽसौ सुन्दरो मन्दभाग्यया। अयेति चिन्तयन्त्यासीत्सा स्नेहात्प्रस्नुतस्तनी।

अदूषयन्त्याः स्पर्शेन धात्र्याः शूद्रस्त्रियो गृहे। तया विहितवृत्तिः स शिशुर्वृद्धिमनीयत।
स सुय्यनामा मतिमान् प्रवृद्धः शिक्षिताक्षरः। कस्याप्यासीद् गृहपतेरर्भकाध्यापको गृहे।
व्रतस्नानादिनियमैस्तं सतां हृदयङ्गमं। गोष्ठीषु विशदप्रज्ञं विदग्धाः पर्य्यवारयन्।
तेषां कथाव्यवस्थासु निन्दतां जलविप्लवं। धीरस्ति मे निरर्थस्तु किं कुर्य्यामिति सोऽब्रवीत्।
उन्मत्तस्येव वदतस्तस्य तन्नियमाद्वचः। निशम्य भूमृच्चारेभ्यश्चिरमासीत् सविस्मयः।
ततस्समानीय नृपः किं ब्रूष इति पृष्टवान्। धीरस्तीत्यादि राजाग्रेऽप्यवोचत्सोऽप्यसम्भ्रमः।
वातूलोऽसाविति निर्दिष्टोऽप्यथ महीपतिः। धियं दिदृक्षुर्व्विदधे तस्यायत्तं निजं धनं।
कोशाद्दीनारभाण्डानि बहून्यादाय हेलया। ययौ मडवराज्यं स नावमारुह्य रंहसा।
ग्रामे तत्र प्रवृद्धाम्बुनिमग्ने नन्दकाभिधे। एकं निक्षिप्य दीनारभाण्डं व्यावर्तत द्रुतं।
सत्यं वातूल एवासौ सभ्येष्वपि वदत्स्वपि। वार्तां निशम्य तां राजा तन्निष्ठान्वेषकोऽभवत्।
क्रमराज्यं समं प्राप्य देशे यक्षदराभिधे। अञ्जलिभ्यां निचिक्षेप दीनारान् सलिलान्तरे।
यत्र तीरद्वयालम्बि शैलनिर्लुठिताः शिलाः। चक्रुर्व्वितस्तां निष्पीड्य पयः प्रतिपथोन्मुखं।
दुर्भिक्षोपहता ग्राम्या दीनारान्वेषिणस्तदा। शिलाः प्रवाहादुद्धृत्य वितस्तां समशोधयन्।
एवं दिनानि दित्राणि पयोयुक्त्या विरुध्य तत्। वितस्तामेकतः स्थानात्कर्मकृद्भिरबन्धयत्।
पाषाणसेतुबन्धेन सुय्येनाद्भुतकर्मणा। सप्ताहमभवद्रुद्धा निखिला नीलजा सरित्।
अधः प्रवाहं संशोध्य लुठदश्मप्रतिक्रियां। कृत्वा बद्धैः शिलाबन्धैः सेतुबन्धमपाटयत्।
चिरकालनिरोधेन सोत्कण्ठेवाम्बुधिं प्रति। ततः प्रावर्त्तत जवाद् गन्तुं सागरगामिनी।
जम्बालाढ्या स्फुरन्मीना भूर्व्वभौ सलिलोज्झिता। व्यक्तकार्ष्णासनच्छवा निर्म्मेघेव नभस्थली।
यत्र यत्र विवेदौघरोधं सलिलविप्लवे। तत्र तत्र वितस्तायाः प्रवाहान्नूतनान् व्यधात्।
मूलस्रोतोऽयनिष्ठूतभूरिस्रोता बभौ सरित्। एकभोगाश्रयानेकफणेवासितपन्नगी।
वामेन सिन्धुर्क्षिप्याम्या वितस्ता दक्षिणेन तु। याभ्यां ये समगंसातां प्राग्वैन्यस्वामिनोऽन्तिके।
वर्त्ततेऽद्य महानद्योः कल्पापायेऽप्यनत्ययः। सङ्गमो नगरोपान्ते स सुय्योपक्रमस्तयोः।
अद्याप्यास्तां फलपुरपरिहासपुरस्थितौ। विष्णुस्वामी सङ्गमस्य वैन्यस्वामी च तीरयोः।
सुन्दरीभवनाभ्यर्णप्राप्तस्यायतनस्य तु। योगशायी हृषीकेशस्सुय्यस्याभ्यर्चितस्तटे।
दृश्यन्तेऽद्यापि सरितां पूर्व्वस्रोतस्तटोद्भवाः। निपातोत्कृष्टनौरज्जुरेखाङ्काजीर्णपादपाः।
स्फुरत्तरङ्गजिह्वास्य नदीभोगानजिग्रहत्। तास्ताः स्वेच्छानुसारेण मान्त्रिकः पन्नगीरिव।
बद्ध्वा शैलमयान् सेतूंश्चितस्तां सप्तयोजनीं। महापद्मसरोवारि स चकार नियन्त्रितं।
महापद्मसरः कुण्डादितस्ता येन योजिता। जवान्निर्याति कोदण्डयन्त्रादिषुरिवाधुना।
उद्धृत्य सलिलादुर्व्वीमित्थमादिवराहवत्। अनेकशस्सङ्कीर्णान् ग्रामान् ग्रामानिवाधात्।
पालीभिरभः संरोध्य यान् कुण्डसदृशान् व्यधात्। कुण्डलानीति सर्व्वांस्तान् सम्बुद्धान् मुवते जनाः।

उत्खातकीलनिवहा नद्योऽद्यापि शरत्क्षया:। व्यञ्जन्ति जलगम्भीभवन्धनं स्तम्भसन्निभान्।
दीन्नारभाण्डानीज्झीत्स यद्गाधजलान्तरे। नन्दके निर्गतजले स्थलान्तात्तदलभ्यत।
अदेवमातृकान् ग्रामान् परीक्ष्य विविधाः चितीः। संविभेजे विभक्तेन नाद्येन स वारिणा।
असिञ्चच्च जलैर्ग्रामान् ग्रामान्मृदमुपाहृतां। या यावता क्षणेनागाच्छोषं तां तावता हृदि
कालेन मत्वा सेकार्द्धाम्प्रतिग्रामं जलस्रुतेः। परिमाणं विभागञ्च परिकल्प्य निरत्ययं।
चकार चानूलाद्याभिः सिन्धुभिः सर्व्वतोदिशः। सत्फलोदारकेदारसम्पत्संपन्नविभ्रमाः।
॥ तिलकं ॥ न कश्यपेनोपक्वतं न यत्सङ्कर्षणेन वा। हेलया मण्डलेऽमुष्मिंस्तत्सुय्येन सुकर्मणा।
भूमेर्जलादुद्धरणं द्विजचैत्रे तथार्पणं। सेतुबन्धोऽश्ममिस्तोये यमनं कालियस्य च।
चतुर्षु सिद्धमिति यद्विष्णोः सत्कर्मजन्मसु। सुय्यस्य तत्पुण्यराशेरेकस्मिन्नेव जन्मनि।
॥ युगलकं ॥ यस्मिन्महासुभिक्षेषु दीन्नाराणां शतद्वयी। धान्यखारी प्राप्तिहेतुराधर्गादभवत्पु
ततः प्रभृति तत्रैव चित्रं कश्मीरमण्डले। षट्त्रिंशता धान्यखारी दीन्नारैरुदितः क्रय.।
निर्गताया महापद्मसलिलात्स्वर्गसन्निभं। वितस्तायास्तटे चक्रे स्वनामाङ्कं स पत्तनं।
सुय्यता स्थापिता तेन सरसि व्याप्तदिक्तटे। आसंसारं स्थिरा मारमर्यादाश्मपचिता।
सुय्याकुण्डलनामानं ग्रामं कृत्वा द्विजातिसात्। सुय्यामुद्दिश्य तन्नाम्ना सुय्यासेतुं स निर्ममे।
तेनोद्धृतासु सलिलाद्भूषु ग्रामाः सहस्रशः। अवन्तिवर्मप्रमुखैर्जयस्थलमुखाः कृताः।
ईदृग्भेर्धर्म्यवृत्तान्तैः प्रवर्त्तितकृतादयः। अवन्तिदेवः पाति स्म मान्धातेव वसुन्धरां।
प्राणप्रयाणसोद्योगरोगग्रस्तस्ततो यथा। चैत्रं स त्रिपुरेशाद्रिनिष्ठज्येष्ठेश्वराश्रितं।
आत्मनस्तत्र निश्चित्य विपत्तिं चिरगोपितां। प्राणान्ते प्राञ्जलिः शूरो वैष्णवत्वमदर्शयत्।
तेनान्ते भगवद्गीताः शृण्वता भावितात्मना। ध्यायता वैष्णवं धाम निरमुच्यत जीवितं।
आषाढशुक्लपक्षस्य तृतीयस्यां क्षमापतिः। वर्षे एकोनषष्ठे स क्ष्माष्टपात्समुपाययौ।
तस्मिन् प्रशान्ते प्रत्येकं विभवोल्लिकचेतसां। तुल्यमुत्पन्नवंश्यानां राज्येच्छा भूयसामभूत्।
ततश्चक्रे प्रतीहारः प्रयत्नाद्रत्नवर्धनः। नृपं शङ्करवर्माणमवन्तिनृपतेः सुतं।
कर्णपोविन्नपामात्यस्तनूजं शूरवर्म्मणः। तद्वैपाल्सुखवर्माख्यं यौवराज्येऽप्ययोजयत्।
अतस्तयोरभूद्वैरं चितीशयुवराजयोः। यस्मिन् क्षणे क्षणे राज्यमासीद्दोलामिवाश्रयत्।
शिवशक्त्यादयोवीराः स्वामिकार्योज्झितासवः। यत्राभूवन् स्वबलस्य परीक्षाक्षणलाभिनः।
कुर्व्वतां स्वामिशत्रूणां दानमानप्रतिश्रवं। सत्त्वैकाग्र्याश्च ते यस्मादानुकूल्यमशिश्रयन्।
पिण्डस्पृष्टामशित्यज्याहकृताः शिविताः कचित्। तावन्न वीततमसः स्ववृत्तिमनुजीविनः।
कथञ्चिदथ निर्जित्य युवराजं महोजसं। प्राज्यः स्वविजयोद्धारश्चक्रे शङ्करवर्मणा।
सम्राट् समरवर्मा चैर्व्वितीर्णसमरोऽसकृत्। कीर्त्तिं श्रिया सपत्नीं लक्ष्मयाधिविवेद सः।
अथ निर्जित्य दायादान्लब्धा लक्ष्मीं चितीश्वरः। जिष्णुर्दिग्विजयं कर्त्तुं श्रीमानासीन्महोद्यमः।

तस्य कालबलाद्देशे प्रक्षीणजनसम्पदि । लक्षाणि नवपत्तीनां दाराग्निश्रमतोऽभवन् ।
स्वपुरस्योपकण्ठेऽपि योऽभूत्कुण्ठितशासनः । स एव रत्नोत्तंसेषु राज्ञामाज्ञां न्यवेशयत् ।
गच्छन्नाम्नायविच्छेदसम्प्रदायः कतुजये । स्वप्रज्ञया समुन्नीतो राज्ञा शङ्करवर्म्मणा ।
तत्सेनानरनाथानां पृतनाभिः पदे पदे । कुल्यापगेव कुल्याभिर्व्विशन्तीभिरवर्द्धत । १४५
दार्व्वाभिसारराजेन त्रस्यता समुपाश्रिताः । अद्रिद्रोण्यो न वादित्यस्तत्सेनानादमादधुः ।
जनोत्वर्णैर्हरिगणैर्हृन्दरिगणं क्षणात् । अनासादितदुर्गं स चक्रे दुर्गान्तरार्तिथिं ।
लक्षाणि नवपत्तीनां वारणानां शतत्रयी । लक्षश्च वाजिनामासीद्यस्य सेनापुरःसरं ।
स गुर्ज्जरजयव्यग्रः स्वपराभवशङ्किनं । त्रैगर्तं पृथिवीचन्द्रं निन्ये तमसि द्राग्यतां ।
पुत्रं भुवनचन्द्राख्यं नीविं प्रागेव दत्तवान् । स ह्यभूत्प्रणतिं कर्तुं तस्याभ्यर्णमुपागतः । १५०
अथ तत्कण्टकं भ्राम्यद्भूरिमण्डलनायकम् । वीक्ष्य सम्मुखमायान्तं महार्णवमिवोज्ज्वलं ।
समागमक्षणे यस्माच्छङ्कमानः स्वबन्धनं । पलाय्य प्रययौ दूरं निर्व्वाणौजोविजृम्भितः ।
॥ तिलकं ॥ यमप्रतिमसौन्दर्य्यमद्याप्याहुः पुराविदः । तमेवाद्रावुदत्रस्ता नृपाः कालि
उच्चखानालखानस्य संख्ये गुर्जरभूभुजः । बद्धमूलां क्षणाल्लक्ष्मीं शृङ्गं दीर्घामरोपयत् ।
तस्मै दत्वा टक्कदेशं विनयादङ्गुलीमिव । स्वशरीरमिवापासीन्मण्डलं गुर्जराधिपः । १५५
हृतं भोजाधिराजेन स साम्राज्यमदापयत् । प्रतीहारतया भृत्यी भूते थक्कियकान्वये ।
दरत्तुरुष्काधिपयोर्यः केशरिवराहयोः । हिमवद्विन्ध्ययोरासीदार्य्यावर्तद्रवान्तरे ।
नक्षत्रेष्विव भूपेषु नभसीवोत्तरापथे । यस्यैव विपुला ख्यातिर्मार्तण्डस्येव मण्डलं ।
स श्रीमांल्ललियः शाहिरलखानाश्रय. क्रुधा । निराकरिष्णु. साम्राज्यात्तस्य सेवां न लब्धवान् ।
एवं दिग्विजयं कृत्वा प्राप्त स निजमण्डलं । प्रदेशे पञ्चसत्राख्ये स्वनाम्ना विदधे पुरं । १६०
तस्य श्रीस्वामिराजस्य तनयोदक्पथप्रभोः । पूर्व्विमेव क्षपाबन्धोः सुगन्धाख्याभवत्प्रिया ।
तया समं पुरवरे सुरराजोपमो नृपः । तस्मिन् शङ्करगौरीशसुगन्धेशौ विनिर्ममे ।
द्विजस्तयोर्नायकाख्यो गौरीशसुरसद्मनोः । चातुर्व्विद्यः कृतस्तेन वाग्देवीकुलमन्दिरं ।
परकाव्येन कवयः परद्रव्येण चेश्वराः । निर्व्वाठितेन स्वकृतिं पुष्णन्त्यद्यतने क्षणे ।
स्वल्पसत्त्वो नरपतिः स्वपुरख्यापनाय सः । सारापहारमकरोत्परिहासपुरस्य यत् । १६५
ख्यातिहेतुः पट्टवानां पशूनां क्रयविक्रयौ । इत्यादि यत्पत्तनेऽस्ति तत्तस्मिन्हि पुरेऽभवत् ।
राज्यप्रदेन नृपतेरत्नवर्धनमन्त्रिणा । श्रीरत्नवर्धनेशाख्यो व्यधीयत सदाशिवः ।
चित्रं नृपद्विपाः पूतभूतं य. कीर्त्तिनिर्झरैः । भवन्ति व्यसनाशक्तिपांशुस्नानमलीमसाः ।
अथ क्रमेण नृपतिर्लोभाभ्यासेन भूयसा । अधीयमानचित्तोऽभूत्प्रजापीडनपण्डितः ।
आरब्धैर्व्ययसंरम्भैर्भूत्वा क्षीणकोशः क्षणे क्षणे । देवादीनां स सर्व्वस्वं जहारायासयुक्तिभिः । १७०
कर्म्मस्थाने पुरस्थग्रामादिधनहारिणा । तेनाट्टपतिभागाख्यगृहकृत्याभिधे कृते ।

धूपचन्दनतैलादिविक्रयोत्थं समादधे । द्रविणं देववेश्मभ्यः क्रयमूल्यकलाच्छलात् ।
प्रत्यवेक्षां मुखे दत्वा विभक्तैरधिकारिभिः । चतुःषष्टिं सुरगृहान्मुमोचेतरदञ्जसा ।
ग्रामान्देवगृहग्राह्यान्राजा प्रतिकरेण सः । स्वयं स्वीकृत्य चोत्पत्तिं स्वां कार्षक इव व्यधात् ।
तुलां कृत्वा त्रिभागोनां वर्षदेयां सपर्षदे । भुक्तिकम्बलमूल्यादि द्रम्भादप्यधिकं ददौ ।
दिगन्तरस्थो ग्रामीणानूढभारानानागतान् । तद्देशैर्दैर्भारमूल्यं वर्षमेकमदण्डयत् ।
वर्षेऽपरस्मिन्निखिलाभारमूल्यं निरागसः । तथैव संख्यया ग्राम्यान्प्रतिग्राम्यमदण्डयत् ।
इत्येषा रूढभारोढिः प्रथमं तेन पातिता । दारिद्र्यदूतीग्रामाणां या त्रयोदशधा स्थिता ।
स्कन्दकग्रामकायस्थमासवृत्त्यादिसङ्क्षैः । अन्यैश्च विविधायासैर्व्यधाद्ग्रामांश्च निर्धनान् ।
तुलापहारोपचयग्रामदण्डादिसङ्क्षैः । इत्येष तेन संवाहो गृहकृत्ये प्रवर्त्तितः ।
व्यधत्त पञ्च शिबिरांश्च तस्मिन्भिन्नकर्मणि । षष्ठं तथा गञ्जवरं प्रकचं लवटाभिधं ।
आत्मनो निरयं मूढः सोऽङ्गीकृत्येत्युपक्रियां । भाविनामकरोद्राज्ञां पापीयस्त्वानि योगिनाम् ।
निमित्तं मण्डलेऽमुष्मिन्सविद्यानामनादरे । राज्ञां प्रतापशालो च नान्यः शङ्करवर्मणः ।
मुख्येन गुणिना राज्ञां धनहान्या प्रयापदा । मूर्खेण येन कायस्था दास्याः पुत्राः प्रवर्त्तिताः ।
तथा कायस्थभोज्या भूर्जाता तत्प्रत्यवेक्षया । यथा सञ्जायते वर्णहरणादिव भूभुजाम् ।
तस्मिन्घोरे प्रजादुःखे क्षपार्द्रः पृथिवीपतिं । पुत्रो गोपालवर्माख्यः कदाचिदिदमब्रवीत् ।
प्रदातुस्तात भवतः पूर्व्वं न्यासीकृतः स्थितः । वरो यः सत्यसन्धस्य सोऽधुना प्रार्थ्यते मया ।
कायस्थप्रेरणादेतैर्देवेनाद्य प्रवर्त्तितैः । आयासैः श्वासशेषैव प्राणवृत्तिः शरीरिणां ।
न च नामास्ति तातस्य काचिल्लोकद्वयोचिता । मनागपि हितप्राप्तिरेतया जनपीडया ।
अदृष्टविषयां वार्तां गहनां विवृणोति कः । दृष्टेऽप्यनिष्टादन्यत्र कर्मणा नेन दृश्यते ।
एकतो व्याधिदुर्भिक्षप्रमुखा विपदोऽखिलाः । प्रजानामेकतस्त्वेका लुब्धता वसुधापतेः ।
भूभुजोऽभ्यस्तलोभस्य श्रीः कैश्चिन्नाभिनन्द्यते । अकालकुसुमस्येव फलसम्भावनोज्झिता ।
दानञ्च सूनृता स्फूर्तिर्विश्वसंवननं प्रभोः । लोभः पूर्व्वं तयोरेव विनाशाय महोद्यम. ।
प्रतापमायतिं शोभां हेमन्तादस्य वारिदः । क्षतिशेषां करोत्येव लोभश्च पृथिवीभुजां ।
दायादव्ययभीरुता परिहतारम्भैर्भवन्त्युन्नता भृत्याः प्रत्युपकारकातरमते. कुर्य्युर्न कोऽपि प्रियं ।
राशीभूतधनस्य जीवितहृतो शश्वद्यतेरन्निशा भूभर्तुः क्रियते द्विषेव रभसा लोभेन किं नाप्रियं ।
राजा संवाहनामायं नवायासो जनासृक्हृत् । तदेष लोभप्रभवः प्रजानाश निवार्य्यतां ।
श्रुत्वेति राजपुत्रस्य सौजन्येनोज्ज्वलं वचः । स्मितधौताधरो राजा शनैर्वचनमब्रवीत् ।
तवाहत्य विसम्वादि वचः सौजन्यपेशलं । स्मारयत्यद्य मामेतच्चित्तवृत्तिं पुरातनीं ।
कुमारभावे पूर्व्वं मे तवेवार्द्रान्तरात्मनः । प्रजावत्सलता वत्स पर्य्याप्ता पर्य्यवर्धत ।
सोऽहं घर्म्मे वहन्वर्म्म शीतेऽदत्वोष्णसंवृकं । पदातिरपपादत्रः पित्रा सञ्चारितोऽभवं ।

मृगव्याधा इवे. सार्द्धमटन्तं कण्टकक्षतं। अन्तर्व्व्यथं मां विलोक्य तमसूयिषुरग्रगाः।
स तानुवाच सामान्यो भूत्वाहं राज्यमाप्तवान्। काले कार्ये सेवकानां जाने सेवापरिश्रमं।
ईदृग्दुःखमयं भुक्त्वा ज्ञास्यत्यन्यथयां भुवं। प्राप्तैश्वर्य्यो भवेन्मूढो गर्भेश्वरतयान्यथा।
उपायैरीदृशैर्य्योऽहं कृतः पित्रा सुशिक्षितः। तेनापि प्राप्तराज्येन मयैवं पीडिताः प्रजाः।
गर्भवासव्ययां जातः शरीरी विस्मरेद्यथा। प्राप्तराज्यस्तथा राजा नियतं पूर्व्वचिन्तनं। २०५
त्वयैव तस्मादेकोऽद्य वरो मह्यं प्रदीयतां। प्राप्तराज्यः प्रजापीडां माकार्षीस्त्वमतोऽधिकां।
बाढमयमिति तेनोक्तः कृतान्योन्यस्मितैर्व्विटैः। राजाप्तैर्व्वीक्षितश्चासीत्कुमारो ह्रीनताननः।
त्यागभीरुतया तस्मिन् गुणिसङ्गपराङ्मुखे। आसेवन्तावराद्वृत्तीः कवयो भल्लटादय.।
निर्व्वेतनाः सुकवयो भारिकोलवटस्त्वभूत्। प्रसादात्तस्य दीनारसहस्रद्वयवेतनः।
कल्यपालकुले जन्म तत्तेनैव प्रमाणितं। क्षीवो चितापर्श्वेशाकैर्देवी वाग्यस्य नाभवत्। २१०
वेष्टितश्मश्रुरुष्णीषो घ्राणस्याग्रे प्रदेशिनी। ध्यानैकाग्रा दृगित्यासीत्सुखराजस्य मन्त्रिणः।
योऽयमार्य्यो चितोवेशो दुर्नयासेविन. प्रभोः। छन्दानुवृत्त्या स प्राप नटस्येव विडम्बनां।
॥ युग्मं ॥ सोऽनुगैः सह निर्द्रोहं जघान द्रोहशङ्कया। शूरं दार्व्वाभिसारेशं शर्व्वर्य्यां नरवाहनं।
प्रजाभिशापे पतिते नृपस्योन्मार्गवर्त्तिनः। त्रिंशद्दिनाः सुतास्तस्य व्यपद्यन्तामयं विना।
वंशः श्रीर्जीवितं दारा नामापि पृथिवीभुजां। क्षणादेव क्षयं याति प्रजाविप्रियकारिणां। २१५
इत्युक्तं वक्ष्यते चाग्रे व्यक्तमेतत्तु चिन्त्यतां। प्रनष्टं तस्य नामापि यथा क्रूरेण कर्म्मणा।
नाम्ना पत्तनमित्येव प्रख्यातं स्वपुरं कृतं। कस्यान्यस्याभिधाध्वंसि यथा शङ्करवर्म्मणः।
स्वस्रीयः सुखराजस्य तेन द्वाराधिपः कृतः। वीरानकाभिधे स्थाने प्रमादादासदद्वधं।
तत्कोपात्स स्वयं राजा दत्तयात्रामदोर्ज्जितः। वीरानकं समुन्मूल्य प्रविवेशोत्तरापथ।
सिन्धुकूलाश्रयान्देशाञ्जित्वा भूरीन्भयातुरैः। कृतानतिर्महीपालैः प्रत्यावृत्तोऽभवत्तत.। २२०
उरशाम्शिरतस्य वास्तव्यैरारमैस्सम। निकोहोतो सैन्याकाम्पकशाद्दुरन्मूक्तलिः।
गिरिशृङ्गाधिरूढेन श्वपाकेन निपातित.। वेगवाही शरस्तस्य प्रसादादविशद्गलं।
मुमूर्षुराप्तान् कटकं संरक्ष्य नयतेति सः। उक्त्वा कर्णीरथारूढः स्थानात्तस्माद्विनिर्ययौ।
क्षीणदर्शनसामर्थ्य परिज्ञाय शनैर्गिरा। क्रन्दन्त्या वनुराविक्ष्य स्थितायाः ध्यानभापितः
पुत्रं गोपालवर्म्माख्यं न्यासीकृत्य च रक्षितुं। शिशुदेश्यं महादेव्याः सुगन्धायाश्च बान्धवं। २२५
फाल्गुणे कृष्णसप्तम्यां वत्सरे सप्तसप्ततौ। उत्खायमानविशिखो मार्ग एव व्यपद्यत।
॥ तिलकं ॥ सुखराजादयः सैन्यं रक्षन्त. परभूमिषु। कृत्वान्तर्गोपयन्तस्तं यान्त एवाभव.....
तं यक्षरक्षैस्ते मूर्द्धा लघतोम्रघनावहे.। प्रतिप्रणामं प्राप्तानां सामन्तानामकारयन्।
षड्भिर्दिनैर्भिंशे स्थाने प्राप्ते बोलासकाभिधे। चक्रिरे गतसम्पातासामन्तस्तस्यान्त्यसत्क्रियां।
लिश. सुरेन्द्रवत्याद्या राज्ञो राजानमन्वयुः। बाह्याविदुः कृतस्य जयसिंहाश्रयः क्षतौ। २३०

द्वौ लाडोवज्ञधारस्य तं भृत्यावनुजग्मतुः । इति सञ्चिन्त्यिताक्रुष्टैः सहसाक्रियताग्निसात् ।
ततो जुगोप गोपालवर्म्मा धार्म्मिकतोज्ज्वलः । सुगन्धया पाल्यमानः सत्यसन्धो वसुन्धरां ।
मध्ये लालितकादीनां दुर्वृत्तानां वसन्नपि । अनतिक्रान्तवान्योऽपि तु संस्कारान्न सोऽग्रहीत् ।
भूपालजननी भोगैर्वैधव्येऽधिकमुन्मदा । सा प्रभाकरदेवाख्यमचोकमत मन्त्रिणं ।
तया निर्भरसम्भोगप्रीतया स व्यधीयत । सौभाग्यपदशृङ्गारमौलिचक्रत्रयाङ्कितः ।
कोषाध्यक्षेण रागिण्यास्तस्या लुण्ठितसम्पदा । तदा भाण्डापुरे तेन शाहिराज्यं व्यधीयत ।
आज्ञातिक्रमिणः शाहेः कृत्वा कमलकाभिधं । तोमराणाय स प्रादाद्राज्यं लल्लियसूनवे ।
प्रत्यावृत्तोऽथ नगरं विवेश विजयोर्ज्जितः । शौर्य्यशृङ्गारवसतौ साभिमानः स्वविग्रहे ।
स राजजननीजारः साहङ्कारो जयार्जनात् । मानचतिमधिचेपैर्व्वीराणां व्यधितान्वहं ।
क्षुद्रेण कामिना वेश्यावेश्मनीव नृपास्पदे । तेनावृते सम्प्रवेशो नाभूदन्यस्य कस्यचित् ।
शनैर्व्विज्ञातवार्त्तस्य धनमानापहारकृत् । सोऽभूद्विगतोऽत्यर्थं राज्ञो गोपालवर्म्मणः ।
विद्यते यत्र गञ्जेऽस्मिंस्तत्सर्व्वं शाहिविग्रहे । गतमित्यब्रवीद्भूपं स कोषगणनोद्यतं ।
अथ गञ्जाधिपो राजभीतः स्वर्णादवेदिनं । रामदेवाख्यं बन्धुमभिचारमकारयत् ।
तयाभिचारक्रियया मुक्तभूर्व्वत्सरद्वयं । गोपालवर्म्मनृपतिर्ज्जातदाहो व्यपद्यत ।
व्यक्तीभूतकुकर्म्मा स राजदण्डभयाकुलः । रामदेवोऽवधीत्पापः स्वयमेव स्वविग्रहं ।
रथ्यागृहीतो गोपालवर्म्मभ्राताथ सङ्कटः । बभूव प्राप्तराज्यः स दशभिर्द्दिवसैर्व्वसुः ।
अथ वंशक्षये वृत्ते राज्ञः शङ्करवर्म्मणः । प्रजाप्रार्थनया राज्यं सुगन्धा विदधे स्वयं ।
गोपालपुरगोपालमठगोपालकेशवान् । सा पुरञ्च स्वनामाङ्कं विदधे धर्म्मवृद्धये ।
गोपालवर्म्मणो जाया नन्दा निन्द्यान्वयोद्भवा । शिरश्रय्यभवन्नन्दा मठकेशवधारिणी ।
अन्तर्व्वत्न्याः क्षणे तस्मिन् पत्न्या गोपालवर्म्मणः । जयलक्ष्म्यां सवन्धायां श्वश्रूः सन्तानकाङ्क्षिणी ।
तस्यां विपन्नापत्यायां प्रसवान्तेऽतिदुःखिता । साभूदन्वयिने राज्यं कस्मैचिद्दातुमुद्यता ।
तस्मिन् काले महीपालविग्रहानुग्रहक्षमं । तत्र तत्र पदातीनां कृत्यसंहत्यभूत्कुलं ।
ततः समाश्रितैकाङ्गा स्वयं सम्वत्सरद्वयं । सुगन्धा विदधे राज्यं समन्त्रिवेन तन्त्रिणां ।
योग्याय दातुं साम्राज्यं कस्मैचित्सा किलैकदा । मन्त्राय मन्त्रिसामन्तान्त्यैकाङ्गानढौकयत् ।
अवन्तिवर्म्मवंशान्ते नप्तारं शूरवर्म्मणः । गर्गायाः स्वकुटुम्बिन्याः सञ्जातं सुखवर्म्मणा ।
अनुमतो मे सम्मन्त्रिसेव्यादेवं भवेदिति । राज्ये निर्ज्जितवर्म्माख्यं कर्त्तुं तस्या मनोऽभवत् ।
॥ युग्मं ॥ तया तदुक्तं विपयव्यसनित्वेन जागरात् । रात्रौ दिवाशयतया योऽप्यनुत्थानदूषितः ।
नाम पङ्गुरिति प्राप राज्ये का तस्य योग्यता । इत्युदीर्य्याभवन् प्रन्तो यावत्केचन मन्त्रिणः ।
संहतैर्भेदनिर्यातैस्तावन्निर्ज्जितवर्म्मजः । दशवर्षः कृतो राजा पार्थस्तंत्रिपदातिभिः ।
॥ तिलकं ॥ ते गञ्जाधिपवाक्यानां सुगन्धोत्पाटनात्कृतं । प्रायश्चित्तममन्यन्त मानचतिविधायिनां ।

सा राजधान्याः साम्राज्यपरिभ्रष्टा विनिर्ययौ । हृताधिकारा द्वारस्थ पतितैर्बाष्पबिन्दुभिः ।
शरणं प्रत्यभाङ्गृत्यो यो यस्तस्याः क्रमागतः । तं तमैच्छिष्ट निर्यान्ती विपक्षैः सह सङ्गतं ।
वर्षे एकोननवते सम्भूयैकाङ्गसैनिकाः । गत्वा सुगन्धामानिन्युः पुनर्हुष्कपुरे स्थितां ।
तामापतन्तीमाकर्ण्य पार्थानुग्राहकामरात् । चैत्रान्ते तन्त्रिणः सर्व्वे निर्ययुः समरोन्मुखाः ।
ते जित्वा नवते वर्षे वैशाखे भिन्नसंहतीन् । एकाङ्गान् व्यूढसङ्घातान्वबन्धुस्तान् पलायितान् ।
निष्पालकविहारान्तस्तैर्ब्बद्धा सा व्यपद्यत । अनित्यपतनोच्छ्राया विचित्रा भाग्यवृत्तयः ।
अस्मिन्धनजनच्छेदनिमित्तं मण्डलोत्तमे । सर्व्वतो दिक्कमुक्तस्थावधानर्थपरम्परा ।
जनकः पालको भूत्वा पङ्गुर्ब्बालस्य भूपतेः । सामात्योऽपीडयल्लोकमुत्कोचग्रहतत्परः ।
भूभुजो ग्रामकायस्था इवान्योन्यविपाटनं । दत्ताधिकाधिकोत्कोचा विदधुस्तन्त्रिसेवया ।
यद्राजैः कान्यकुब्जाद्या विलब्धास्तत्र मण्डले । तन्त्रिणां ऊण्डिकादानाद्भूभुजां जीविकाभवत् ।
विष्णुः पुराणाधिष्ठाने मेरुवर्धनमन्त्रिणा । श्रीमेरुवर्धनस्वामिनामा येन व्यधीयत ।
तदात्मजाः क्षणे तस्मिन् गहनद्रोहचाक्रिकाः । चक्रुर्निगूढराज्येच्छाः प्रजायासधनार्ज्जनं ।
॥ युग्मं ॥ सार्धं सुगन्धादित्येन गूढं शङ्करवर्धनः । तेषां ज्येष्ठो बद्धसख्यो मुमोष नृपमन्दिरं ।
क्षीणप्रजे क्षणे तस्मिन् क्षारपात इव क्षते । उद्दीपः श्रावितांशेषशरच्छालिरजृम्भत ।
खार्य्यां सहस्रक्रयायां दुर्लभे भोजनेऽभवत् । वर्षे त्रिनवते घोरे दुर्भिक्षेण जनक्षयः ।
शवैस्थिरप्रविष्टाम्बुसंसेकोच्छूनविग्रहैः । वितस्ता सर्व्वतश्छन्ना दुर्लक्ष्यसलिलाभवत् ।
विश्वतोऽस्थिमये जाते नैविद्याल्लितिमण्डले । सर्व्वभूतभयादायि श्मशानैक्यमजायत ।
महार्घधान्यसम्भारविक्रयप्राप्तसम्पदः । मन्त्रिणः क्ष्मापतेः प्रापुस्तन्त्रिणश्च धनाढ्यतां ।
आधेयः क्ष्माभुजः सोऽभून्मन्त्री यस्याद्भुतीः प्रजाः । विक्रीय वाहयन्नासीत्तन्त्रिणां ऊण्डिकाधनं ।
अटव्यां दृष्टिसम्पाते वातवर्षैरुपद्रुतं । वहिः सर्व्वं जनं पश्यन् कश्चित्प्राप्तोष्णमन्दिरः ।
यथा तथा जनं दुःस्थं वीक्ष्य कापुरुषस्थिरं । राजधानीस्थितः पङ्गुः स्वसुखं बह्वमन्यत ।
॥ युग्मं ॥ तुञ्जीनचन्द्रापीडादिप्रजापालप्रियाः प्रजाः । एवं तस्मिन् क्षणे नीताः सङ्क्षयं राजराक्षसैः ।
प्रापुस्थिरमवस्थानं पार्थिवा न तदा क्वचित् । धारासम्पातसम्भूतादुद्बुदा इव दुर्दिने ।
पार्थः पितरमुत्पाट्य कदाचित् प्राभवत्स्वयं । कदाचित्सुतमुत्पाट्य तन्त्रिचक्रिकयाप्यभूत् ।
अक्षीणयत्पङ्गुवधूवडवामण्डलं युवा । सुगन्धादित्यवीजाश्वो व्यवायविधिसेवया ।
राज्यावष्टदेव्याः स निर्दयैः सुरतोत्सवैः । खण्डयामास यां दूतीं साध्यस्थार्यैरगां धरेः ।
भगिनीभगसौभाग्यबद्धराज्याः स्वयं दधुः । यं पङ्गवे मनोभाङ्गीं मेरुवर्धनसूनवः ।
सुगन्धादित्यभोग्युक्त्यांशापि देवी मृगावती । स्वयं संबुभुजेऽत्यर्थकान्ताकामितकामिनी ।
पर्य्यायेणाभवद्भृत्यः सुतयोर्भोगवृद्धये । दरिद्र्योपितोरेकं भुक्तिपात्रमिवाम्बहं ।
पुत्रयोराज्यलाभाय स्पर्द्धयाभ्यां स्वमन्त्रिणे । दत्ता निधुवनश्रद्धा धनदानैः सदक्षिणा ।

अथ पार्थं समुत्पाट्य तत्पिता पङ्गुराश्रितः। तन्त्रिभिः सप्तनवते वर्षे पौषेऽभिषेचितः।
माघेऽष्टानवते वर्षे सोऽभिषिच्य शिशुं सुतं। चक्रवर्माभिधं राज्ये क्षीणपुण्यो व्यपद्यत।
पैतृकं वाञ्छतो राज्यं पार्थस्यानुचरा व्यधुः। एकाङ्गैः सह संग्रामं तत्र तन्त्रिपदातयः।
मातुर्वप्पटदेव्याः स कञ्चित्कालं शिशुर्नृपः। मातामह्याः चिल्लिकायाः पाल्यस्तामीत्समा दश।
वाक्ष्याद्व्यतक्तौःश्रीस्थे तस्मिंस्तत्पालनं तयोः। निर्दोषमासीद्दण्डस्थफणिलालनसन्निभं। २९५
जातः पङ्गोर्मृगावत्यां नवमेऽब्देऽथ मन्त्रिभिः। चक्रवर्माणमुत्पाट्य शूरवर्मा नृपः कृतः।
निःस्नेहा मातुलामात्याः प्रययुः स्वार्थतत्पराः। अदत्वा तन्त्रिणां देयं तस्योत्पाटनहेतुतां।
अदुर्वृत्तोऽपि स ध्माष्टह्निना भूरिधनार्पणं। गुणवानिव वेश्यानां तन्त्रिणां नाभवत्प्रियः।
वर्षे गते तमुत्पाट्य दृष्टोत्पत्तितया नृपं। सङ्कर्षदं पुनः पार्थं व्यधुस्तन्त्रिपदातयः।
अभूत्साम्ववती वेश्या साम्येश्वरविधायिनी। पार्थप्रिया तन्त्रिचक्रसंग्रहे ख्यातचक्रिका।
कालापेक्षी चक्रवर्मा ततोऽप्यैच्छद्धनं बहु। एकादशाब्दस्याषाढे कृतोभूयोऽपि तन्त्रिभिः। ३००
पार्थादीन् ये समुत्पाट्य भुक्तं चक्रिकया पुरा। तैस्तैः स्थानैश्च ये तेभ्यो जीवनाद्युपलेभिरे।
पिता भ्राता च यैरस्य राज्यादुत्पाटितोऽभवत्। सम्बन्धिभ्योऽपि यैर्दुग्धं कन्यां दत्तेतरेतरं।
अकरोद्दृष्टदोषाणां तेषामेव स नष्टधीः। मेरुवर्धनपुत्राणामधिकारसमर्पणं।
॥ तिलकं ॥ कृतोऽवपटलाधीशस्तेन शङ्करवर्धनः। स्वहस्तत्येऽप्यसत्कृत्योदाधिकः शम्भुवर्धनः। ३०५
पौषे तस्यैव वर्षस्य धनाभावात्स तन्त्रिणां। अदत्तझण्डिकादेयः पलायिष्ट भयाकुलः।
स्थिते मडवराज्यान्तस्तस्मिंश्शङ्करवर्धनः। राज्यार्थी तन्त्रिणां दूतं प्राहिणोच्छम्भुवर्धनं।
आवर्जितैः स निखिलैरधिकोत्कोचचर्चया। वञ्चयित्वाग्रजं राज्ये तैः स्वमेवाभ्यषेचयत्।
तीर्थस्थितः स्वकुलजां तिमिरत्ति भुङ्क्ते मौनी वकस्तिमिमुपेत्य वनान्तवासी।
व्याधीन्निहन्ति तु वकं प्रभवन्ति ते ते पात्राद्युपर्युपरि वञ्चनचञ्चुतायाः।
भ्रष्टश्रीश्चक्रवर्माथ निशि श्रीढक्कवासिनः। एकदा डामरास्यस्य संग्रामस्याविशद्गृहं। ३१०
ज्ञात्वा कान्तिविशेषेण राजानं स कृताञ्जलिः। प्रणम्य ग्राहयामास संभ्रमान्निजमासनं।
राज्यभ्रंशादिवृत्तान्तमुक्त्वा साहायकार्थिनं। तं विपत्प्रियवं प्रज्ञो विचिन्त्योवाच डामरः।
तन्त्रिणां वा तृणानां वा राजन् का गणना रणे। त्वत्सेवनार्थं सामर्थ्यं कश्चिन्न मम कर्मणि।
प्राप्तोत्साहः पुनर्नूनमस्मानेव हनिष्यसि। विस्मरन्त्युपकारं हि कृतकार्या महीभुजः।
ऊर्ध्वारोहे य आलम्बहेतुर्भूभृच्छिनत्ति तम्। कुठारिकस्तरुस्कन्धमिवाधोगमनोन्मुखः। ३१५
धीधैर्यादिप्रकर्षेण येनोपक्रियते नृपः। प्राप्तोदयः स तेनैव शङ्कां वेत्त्युपकारिणं।
अस्मिन् स्थिते विपद्भूदिति सञ्चिन्त्य वर्ज्यते। मूढैः परिष्टढैरापल्लेबको मल्लेच्छुभिः।
सम्पद्यापत्सहायस्य विस्मृतोपक्रिया नृपाः। मध्ये प्रमादस्खलितमुत्पन्नं यदि कुर्वते।
आमयार्तिरिपुत्रासदुर्दादौ दृष्टवैकृतान्। लज्जोदयात्रीभयेन पापा प्रभ्वनुयायिनः।

सा राजधान्याः साम्राज्यपरिभ्रष्टा विनिर्ययौ । च्युताधिकारा हारस्य पतितैर्बाष्पबिन्दुभिः ।
शरणं प्रत्यभाङ्क्त्यो योयस्तस्याः क्रमागतः । तं तमेवेत्य निर्यान्ती विपक्षैः सह सङ्गतं ।
वर्षे एकोननवते सम्भूयैकाङ्गसैनिकाः । गत्वा सुगन्धामानिन्युः पुनर्हुष्कपुरे स्थितां ।
तामापतन्तीमाकर्ण्य पार्थानुग्राहकामरात् । चैत्रान्ते तन्त्रिणः सर्व्वे निर्ययुः समरोन्मुखाः ।
ते जिलानवते वर्षे वैशाखे भिन्नसंहतीन् । एकाङ्गान् व्यूढसङ्ग्रामान्वबन्धुमान् पलायितान् ।
निष्पालकविहारान्तस्तैर्ब्बद्धा सा व्यपद्यत । अनित्यपतनेच्छाया विचित्रा भाग्यवृत्तयः ।
अस्मिन्धनजनवैर्य्यानिमित्तं मण्डलोत्तमे । सर्व्वतो दिक्षुमुत्तस्थावयानर्थपरम्परा ।
जनकः पालको भूत्वा पङ्गुर्व्वालस्य भूपतेः । आमात्योऽपीडयल्लोकमुत्कोचग्रहतत्परः ।
भूभुजो ग्रामकायस्था इवान्योन्यविपाटनं । दत्ताधिकाधिकोत्कोचा विदधुस्तन्त्रिसेवया ।
यद्राजैः कान्यकुब्जाद्या विलब्धास्तत्र मण्डले । तन्त्रिणां ऊण्डिकादानाद्भूभुजां जीविकाभवत् ।
विष्णुः पुराणाधिष्ठाने मेरुवर्धनमन्त्रिणा । श्रीमेरुवर्धनस्वामिनामा यो येन व्यधीयत ।
तदात्मजाः क्षणे तस्मिन् गद्दनद्रोहचक्रिकाः । चक्रुर्निगूढराज्येच्छाः प्रजायासेधनार्जनं ।
॥ युग्मं ॥ सार्धं सुगन्धादित्येन गूढं शङ्करवर्धनः । तेषां ज्येष्ठो बहुसख्यो मुमोष नृपमन्दिरं ।
क्षीणप्रजे क्षणे तस्मिन् चारपात इव क्षते । उद्दीपः स्नावितायेषशरच्छालिरजृम्भत ।
खार्य्यां सहस्रक्रेयायां दुर्लभे भोजनेऽभवत् । वर्षे त्रिनवते घोरे दुर्भिक्षेण जनक्षयः ।
प्रवेशितुमविश्चाम्नुसंघेकोच्छूनविग्रहैः । वितस्ता सर्व्वतश्छन्ना दुर्लक्ष्यसलिलाभवत् ।
विस्मृतोऽस्मिमये जाते नैरिच्याच्छितिमण्डले । सर्व्वभूतभयादायि श्मशानैकमजायत ।
महार्घधान्यसम्भारविक्रयप्राप्तसम्पदः । मन्त्रिणः क्ष्मापतेः प्रापुस्तन्त्रिणश्च धनाढ्यतां ।
आधेयः क्ष्माभुजः सोऽभून्मन्त्री यस्माद्दृशीः प्रजाः । विक्रीय वाहयन्नासीत्तन्त्रिणां ऊण्डिकाधनं ।
अटव्यां दृष्टिसम्पाते वातवैर्धरुपद्रुतं । वह्निः सर्व्वं जनं पश्यन् कश्चित्प्राप्तोष्णमन्दिरः ।
यथा तथा जनं दुःखं वीक्ष्य कापुरुषस्थिरं । राजधानीस्थितः पङ्गुः स्वसुखं बहुमन्यत ।
॥ युग्मं ॥ तुञ्जीनचन्द्रापीडादिप्रजापालप्रियाः प्रजाः । एवं तस्मिन् क्षणे नीताः सङ्क्षयं राजराक्षसैः ।
प्रापुश्चिरमवस्थानं पार्थिवा न तदा क्वचित् । धारासम्पातसम्भूताद्बुद्बुदा इव दुर्दिने ।
पार्थः पितरमुत्पाट्य कदाचित् प्राभवत्स्वयं । कदाचित्सुतमुत्पाट्य तन्त्रिचक्रिकयाप्यभूत् ।
अमीणयत्पङ्गुर्मधूवङ्वामण्डलं युवा । सुगन्धादित्यवीजाश्रो व्यवायविधिसेवया ।
राज्ञ्यावप्यटदेव्याः स निर्दयैः सुरतोत्सवैः । खण्डयामास कां दूतीं यायस्याजैरणां धनैः ।
भगिनीभगभोभाग्यबहुराज्याः स्वयं दधुः । यं पङ्गवे मनोज्ञाङ्गीं मेरुवर्धनसूनवः ।
सुगन्धादित्यभोगस्त्वांस्तापि देवी मृगावती । स्वयं संबुभुजेऽत्यर्थकान्ताकामितकामिनी ।
पर्य्यायेणाभवद्भृत्यः क्षतयोर्भोगवृद्धये । दरिद्रयोर्वितीर्णैकं भुक्तिपात्रमिवाच्छहं ।
पुत्रयोराज्यलाभाय स्पर्द्धयाभ्यां स्वमन्त्रिणे । दत्ता निधुवनश्रद्धा धनदानैः सदाचिरा ।

अथ पार्थं समुत्पाट्य तत्पिता पङ्गुराश्रितः। तन्त्रिभिः सप्तनवते वर्षे पौषेऽभिषेचितः।
माघेऽष्टानवते वर्षे सोऽभिषिच्य निर्जं सुतं। चक्रवर्माभिधं राज्ये चीणपुण्यो व्यपद्यत।
पैतृकं वाञ्छतो राज्यं पार्थस्यानुचरा व्यधुः। एकाङ्गैः सह संग्रामं तत्र तन्त्रिपदातयः।
मातुर्वप्पटदेव्याः स कञ्चित्कालं शिशुर्नृपः। मातामह्याः चिल्लिकायाः पाल्यस्त्वासीत्समा दश।
वाल्यदव्यक्तदोःशौर्ये तस्मिंस्तत्पालनं तयोः। निर्दोषमासीदण्डस्फफणिपालनसन्निभं। २९५
जातः पङ्गोर्मृगावत्यां नवमेऽब्देऽथ मन्त्रिभिः। चक्रवर्माणमुत्पाट्य शूरवर्मा नृपः कृतः।
निःस्नेहा मातुलामात्याः प्रययुः स्वार्थतत्पराः। अदत्वा तन्त्रिणां देयं तस्योत्पाटनहेतुतां।
अदुर्वृत्तोऽपि स स्वार्थहीना भूरिधनार्पणं। गुणवानिव वेश्यानां तन्त्रिणां नाभवत्प्रियः।
वर्षे गते तमुत्पाट्य ढूरोत्पत्तितया नृपं। चक्रुर्द्वयं पुनः पार्थं व्यधुस्तन्त्रिपदातयः।
अभूत्सास्यवती वेश्या साम्बेश्वरविधायिनी। पार्थप्रिया तन्त्रिचक्रसंपदे ख्यातचक्रिका। ३००
कालापेक्षी चक्रवर्मा ततोऽयैच्छद्धनं बहु। एकादशाब्दस्याषाढे कृतोऽभ्यर्थोऽपि तन्त्रिभिः।
पार्थादीन्ये समुत्पाट्य भुक्तं चक्रिकया पुरा। तैस्तैः स्थानैश्च ये तेभ्यो जीवनायुपलेभिरे।
पिता भ्राता च यैरस्य राज्यादुत्पाटितोऽभवत्। संबन्धिभ्योऽपि यैर्दुग्धं कन्यां दत्वेतरेतरं।
अकरोद्दुष्टदोषाणां तेषामेव स नष्टधीः। मेरुवर्धनपुत्राणामधिकारसमर्पणं।
॥ तिलकं ॥ कृतोऽचपटलाधीशस्तेन शङ्करवर्धनः। रहकृत्येऽप्यसत्कृत्योद्दाम्भिकः शम्भुवर्धनः। ३०५
पौषे तस्यैव वर्षस्य धनाभावात्स तन्त्रिणां। अदत्तडड्डिकादेयः पलायिष्ट भयाकुलः।
स्थिते मडवराज्यान्तस्तस्मिंश्छङ्करवर्धनः। राज्यार्थी तन्त्रिणां दूतं प्राहिणोच्छम्भुवर्धनं।
आवर्जितैः स निखिलैरधिकोत्कोचचर्चया। वञ्चयित्वाग्रजं राज्ये तैः स्वमेवाभ्यषेचयत्।
तीर्थस्थितः स्वकुलजां तिमिरत्ति भुङ्क्ते मीमी वकस्तिमिमुपेत्य वनान्तवासी।
व्याधानिहन्ति तु वकं प्रभवन्ति ते ते पात्राण्युपर्युपरि वञ्चनचञ्चुतायाः।
अष्टत्रीश्चक्रवर्माथ निशि श्रीढकवासिनः। एकदा डामरास्यस्य संग्रामस्याविशद्गृहं। ३१०
ज्ञात्वा कान्तिविशेषेण राजानं स कृताञ्जलिः। प्रणम्य ग्राहयामास संभ्रमान्निजमासनं।
राज्यभ्रंशादिवृत्तान्तमुक्त्वा साहायकार्थिनं। तं विपत्पेशलं प्रह्वो विचिन्त्योवाच डामरः।
तन्त्रिणां वा तृणानां वा राजन्का गणना रणे। त्वत्सेवनार्थं सामर्थ्यं कश्चिन्न मम कर्मणि।
प्राप्तोत्साहः पुनर्नूनमस्मानेव हनिष्यसि। विस्मरन्त्युपकारं हि कृतकार्या महीभुजः।
ऊर्ध्वारोहे य आलम्बहेतुर्भूमेश्छिन्दन्ति तम्। कुठारिकतरुस्कन्धमिवाधोगमनोन्मुखः। ३१५
धीधैर्यादिप्रकर्षेण येनोपक्रियते नृपः। प्राप्तोदयः स तेनैव शङ्क्यं वेश्युपकारिणं।
अस्मिन्स्थिते विपद्भूयादिति सञ्चिन्त्य वर्ज्यते। मूढैः परिवृढैरापत्सेवको मत्रसेवकैः।
सम्पद्यापत्सहायस्य विस्मृतोपक्रिया नृपाः। मध्ये प्रमादस्खलितमुत्पन्नं हृदि कुर्वते।
आमयार्तिरिपुत्रासदुर्दशादौ दृष्टवैकृतान्। वर्मोदया श्रीमदेन स्वापा प्रत्यनुयायिनः।

सा राजधान्याः साम्राज्यपरिभ्रष्टा विनिर्ययौ । च्युताधिकारा हारस्य पतितैर्बाष्पबिन्दुभिः ।
शरणं प्रत्यभाङ्गृत्यो योग्यस्तस्याः क्रमागतः । तं तमैचिष्ट निर्यान्ती विपचे. सह सङ्गतं ।
वर्षे एकोननवते सम्भूयैकाङ्गसैनिकाः । गत्वा सुगन्धामानिन्युः पुनर्हुष्कपुरे स्थितां ।
तामापतन्तीमाकर्ण्य पार्थानुग्राहकामरात् । चैत्रान्ते तन्त्रिणः सर्व्वे निर्ययुः समरोन्मुखाः ।
ते जिलानवते वर्षे वैशाखे भिन्नसंहतीन् । एकाङ्गान् व्यूढसङ्घातान्बन्धुस्तान् पलायितान् ।
निष्पालकविहारान्तस्तैर्ब्बद्धा सा व्यपद्यत । अनित्यपतनेच्छाया विचित्रा भाग्यवृत्तयः ।
अस्मिन्धनजनचैर्य्यनिमित्तं मण्डलोत्तमे । सर्व्वतो दिक्षु सुस्थावयानर्थपरम्परा ।
जनकः पालको भूत्वा पङ्गुर्व्वालस्य भूपतेः । सामात्योऽपीडयल्लोकमुत्कोचग्रहतत्परः ।
भूभुजो ग्रामकायस्था इवान्योन्यविपाटनं । दत्ताधिकाधिकोत्कोचा विदधुस्तन्त्रिसेवया ।
यद्राज्ञः कान्यकुब्जाद्या विलभ्यास्तत्र मण्डले । तन्त्रिणां ऊण्डिकादानाद्भूभुजां जीविकाभवत् ।
विष्णुः पुराणाधिष्ठाने मेरुवर्धनमन्त्रिणा । श्रीमेरुवर्धनस्वामिनामा येन व्यधीयत ।
तदात्मजाः चणे तस्मिन् गहनद्रोहचक्रिकाः । चक्रुर्निगूढराज्येच्छाः प्रजायाः सर्धनार्ज्जनं ।
॥ युग्मं ॥ सार्धं सुगन्धादित्येन गूढं शङ्करवर्धनः । तेषां ज्येष्ठो वहुसख्यो मुमोष नृपमन्दिरं ।
चीणप्रजे चणे तस्मिन् चारपात इव चते । उदीपः प्लावितारोपमरच्छालिरजृम्भत ।
स्वार्थी सहस्रैर्यायां दुर्लभे भोजनेऽभवत् । वर्षे त्रिनवते घोरे दुर्भिचेण जनचयः ।
अवेचिमप्रविष्टाम्बुसंसेकोच्छूनविग्रहैः । वितस्ता सर्व्वतश्छन्ना दुर्लक्ष्यसलिलाभवत् ।
विस्नतोऽस्थिमये जाते नैविड्यात्क्षितिमण्डले । सर्व्वभूतभयादायि श्मशानैक्यमजायत ।
महार्हधान्यसम्भारविक्रयप्राप्तसम्पदः । मन्त्रिणः क्ष्मापतेः प्रापुस्तन्त्रिणश्च धनाढ्यतां ।
आधेयः क्ष्माभुजः सोऽभून्मन्त्री यस्माद्वृतीः प्रजाः । विक्रीय वाहयन्नासीत्तन्त्रिणां ऊण्डिकाधनं ।
अटव्यां दृष्टिसम्पाते वासवैर्धरुपद्रुतं । वहिः सर्व्वं जनं पश्यन् कश्चित्प्राप्तोष्णमन्दिरः ।
यथा तथा जनं दुःखं वीक्ष्य कापुरुषस्थिरं । राजधानीस्थितः पङ्गुः स्वसुखं बह्वमन्यत ।
॥ युग्मं ॥ सुखोनचन्द्रापीडादिप्रजापालप्रियाः प्रजाः । एवं तस्मिन् चणे नीताः सङ्क्षयं राजराचसैः ।
प्रापुश्चिरमवस्थानं पार्थिवा न तदा क्वचित् । धारासम्पातसम्भूताद्बुद्बुदा इव दुर्दिने ।
पार्थः पितरमुत्पाट्य कदाचित् प्राभवत्स्वयं । कदाचित्सुतमुत्पाट्य तस्मिंश्चक्रिकयाप्यभूत् ।
अमोलयत्पङ्गुर्वधूवङ्गामण्डलं युवा । सुगन्धादित्यवीजाश्वैः व्यवायविधिसेवया ।
राजावष्टदेव्या च निर्दयैः सुरतोत्सवैः । खण्डयामास कां दूतीं मात्सर्याद्वैरयां घनैः ।
भगिनीभगधेभाग्यवहुराज्याः स्वयं दधुः । यं पङ्गवे मनोज्ञाङ्गीं मेरुवर्धनसूनवः ।
सुगन्धादित्यभागुल्यापि देवी मृगावती । स्वयं संबुभुजेऽत्यर्थकामाकामितकामिनी ।
पर्य्यायेणाभ्युद्य सत्पौर्भोगहृद्ये । दरिद्रेणोपितोरिकं भुक्तिपात्रमिवान्वहं ।
पुत्रयो राज्यलाभाय स्पृहं बाध्दां स्वमन्त्रिषे । दत्ता निधुवनग्रहा धनदानैः कदर्थिता ।

अथ पार्थं समुत्पाट्य तत्पिता पङ्गुराश्रितः। तन्त्रिभिः सप्तनवते वर्षे पौषेऽभिषेचितः।
माघेऽष्टानवते वर्षे सोऽभिषिच्य शिशुं सुतं। चक्रवर्माभिधं राज्ये क्षीणपुण्यो व्यपद्यत।
पैतृकं वाञ्छतो राज्यं पार्थस्यानुचरा व्यधुः। एकाङ्गैः सह संग्रामं तत्र तन्त्रिपदातयः।
मातुर्व्वप्पटदेव्याः स कञ्चित्कालं शिशुर्नृपः। मातामह्याः चिल्लिकायाः पाल्यस्त्वासीत्समा दश।
बाल्याद्व्यक्तदौःशील्ये तस्मिंस्तत्पालनं तयोः। निर्दोयमासीदण्डस्यफणिलालनसन्निभं। १९५
जातः पङ्गोर्म्मृगावत्यां नवमेऽब्देऽथ मन्त्रिभिः। चक्रवर्माणमुत्पाट्य शूरवर्मा नृपः कृतः।
निःस्नेहा मातुलामात्याः प्रययुः स्वार्थतत्पराः। अदत्वा तन्त्रिणां देयं तस्योत्पाटनहेतुतां।
अदुर्वृत्तोऽपि स स्वामिद्विना भूरिधनार्पणं। गुणवानिव वेश्यानां तन्त्रिणां नाभवत्प्रियः।
वर्षे गते तमुत्पाट्य दुष्टोत्पत्तितया नृपं। चक्रुर्येदं पुनः पार्थं व्यधुस्तन्त्रिपदातयः।
अभूत्साम्बवती वेश्या साम्बेश्वरविधायिनी। पार्थप्रिया तन्त्रिचक्रसंग्रहे ज्ञातचक्रिका। २००
कालापेक्षी चक्रवर्मा ततोऽर्थैच्छद्धनं बहु। एकादशाब्दस्याषाढे कृतोभूयोऽपि तन्त्रिभिः।
पार्थादीन् यैः समुत्पाट्य भुक्तं चक्रिकया पुरा। तैस्तैः स्थानैश्च ये तेभ्यो जीवनाद्युपलेभिरे।
पिता भ्राता च यैरस्य राज्यादुत्पाटितोऽभवत्। सम्बन्धिभ्योऽपि यैर्द्दुग्धं कन्यां दत्वेतरेतरं।
अकरोद्दृष्टदोषाणां तेषामेव स नष्टधी.। मेरुवर्धनपुत्राणामधिकारसमर्पणं।
॥ तिलकं ॥ कृतोऽचपटलाधीशस्तेन शङ्करवर्धनः। गृहकृत्येऽथसत्यात्योदाम्भिकः शम्भुवर्धनः। २०५
पौषे तस्यैव वर्षस्य धनाभावान्स तन्त्रिणां। अदत्तडिण्डिकादेयः पलायिष्ट भयाकुलः।
स्थिते मडवराज्यान्तस्तस्मिञ्छङ्करवर्धन। राज्यार्थी तन्त्रिणां दूतं प्राहिणोच्छम्भुवर्धनं।
आवर्जितैः स निखिलैरधिकोत्कोचचर्चया। वञ्चयित्वाग्रजं राज्ये तैः स्वमेवाभ्यषेचयत्।
तीर्थस्थित. स्वकुलजां तिमिरत्ति भुङ्क्ते मौनी वकस्तिमिमुपेत्य वनान्तवासी।
व्याधोनिहन्ति तु वकं प्रभवन्ति ते ते पाचाण्युपर्य्युपरि वञ्चनचञ्चुतायाः।
भ्रष्टश्रीश्चक्रवर्माथ निशि श्रीढकवासिनं। एकदा डामराग्र्यस्य संग्रामस्याविशद्गृहं। २१०
ज्ञात्वा कान्तिविशेषेण राजानं स कृताञ्जलिः। प्रणम्य ग्राहयामास संभ्रमान्निजमासनं।
राज्यभ्रंशादिवृत्तान्तमुक्त्वा साहायकार्थिनं। तं विपत्पेशलं प्रह्वो विचिन्त्योवाच डामरः।
तन्त्रिणां वा तृणानां वा राजन् का गणना रणे। त्वत्सेवनार्थं सामर्थ्यं कस्मिन्न मम कर्मणि
प्राप्तोत्साहः पुनर्नूनमस्मानेव हनिष्यसि। विस्मरन्त्युपकारं हि कृतकार्य्या महीभुजः।
ऊर्ध्वारोहे य आलम्बहेतुर्भूस्थैश्छिन्दन्ति तम्। कुठारिकास्तरस्कन्धमिवाधोगमनोन्मुखः। २१५
धीधैर्य्यादिप्रकर्षेण येनोपक्रियते नृप। प्राप्तोदयः स तेनैव शङ्क्यं वैरूप्यकारिणं।
अस्मिन् स्थिते विपद्भूदिति सञ्चिन्त्य वर्ज्यते। मूढैः परिवृढैराप्तस्तैवको मन्त्रलेच्छुभिः।
सम्पद्यापत्सहायस्य विस्मृतोपक्रिया नृपाः। मध्ये प्रमादस्खलितमुत्पन्नं यदि कुर्व्वते।
आमयार्तिरिपुत्रासचुदादौ दृष्टवैकृतान्। सभोद्या ह्रीभयेन प्रापा प्रमध्यनुयायिनः।

सा राजधान्याः साम्राज्यपरिभ्रष्टा विनिर्ययौ । च्छिन्नाधिकारा हारस्य पतितैर्बाष्पबिन्दुभिः ।
शरणं प्रत्यभाङ्क्षीत्यो योयसस्याः क्रमागतः । तं तमैचिष्ट निर्यान्ती विपदे, सह सङ्गतं ।
वर्षे एकोननवते सम्भूयैकाङ्गसैनिकाः । गत्वा सुगन्धामानिन्युः पुनर्हुष्कपुरे स्थितां ।
तामापतन्तीमाकर्ण्य पार्थानुग्राहकामरात् । चैत्रान्ते तन्त्रिणः सर्व्वे निर्ययुः समरोन्मुखाः ।
ते जिलानवतेे वर्षे वैशाखे भिन्नसंहतीन् । एकाङ्गान् व्यूढसङ्घातान्बन्धुस्तान् पलायितान् ।
निष्पालकविहारान्तस्तैर्ब्बद्धा सा व्यपद्यत । अनित्यपतनोच्छ्राया विचित्रा भाग्यवृत्तयः ।
अस्मिन्धनजनचैर्य्यनिमित्तं मण्डलोत्तमे । सर्व्वतो दिक्कमुत्तस्थावयानर्थपरम्परा ।
जनकः पालको भूत्वा पङ्गुर्व्वालस्य भूपतेः । सामात्योऽपीडयल्लोकमुत्कोचग्रहतत्परः ।
भूभुजो ग्रामकायस्था इवान्योन्यविपाटनं । दत्ताधिकाधिकोत्कोचा विदधुस्तन्त्रिसेवया ।
यद्राज्ञैः कान्यकुब्जाद्या विलब्धास्तत्र मण्डले । तन्त्रिणां ऊण्डिकादानाद्भूभुजां जीविकाभवत् ।
विष्णुः पुराणाधिष्ठाने मेरुवर्धनमन्त्रिणा । श्रीमेरुवर्धनस्वामिनामा येन व्यधीयत ।
तदात्मजाः क्षणे तस्मिन् गहनद्रोहचाक्रिकाः । चक्रुर्निगूढराज्येच्छाः प्रजायार्थैधनार्ज्जनं ।
॥ युग्मं ॥ सार्धं सुगन्धादित्येन गूढं शङ्करवर्धनः । तेषां ज्येष्ठो बद्धसख्यो मुमोष नृपमन्दिरं ।
क्षीणप्रजे क्षणे तस्मिन् क्षारपात इव क्षते । उद्दीपः प्लाविताशेषशरच्छालिरजृम्भत ।
खार्य्यां सहस्रक्रियायां दुर्लभे भोजनेऽभवत् । वर्षे त्रिनवते घोरे दुर्भिक्षेण जनक्षयः ।
शवैर्यत्र प्रविष्टाम्बुसंसेकोच्छूनविग्रहैः । वितस्ता सर्व्वतश्छन्ना दुर्लक्ष्यसलिलाभवत् ।
विश्वतोऽस्थिमये जाते नैविद्यात्स्थितिमण्डले । सर्व्वं भूतभयादायि श्मशानैक्यमजायत ।
महार्घधान्यसम्भारविक्रयप्राप्तसम्पदः । मन्त्रिणः क्ष्मापतेः प्रापुस्तन्त्रिणश्च धनाढ्यतां ।
माधेयः क्ष्माभुजः सोऽभून्मन्त्री यस्मादृशीः प्रजाः । विक्रीय वाहयन्नासीत्तन्त्रिणां ऊण्डिकाधनं ।
अटव्यां दृष्टिसम्पाते वातवर्षैरुपद्रुतं । वहिः सर्व्वं जनं पश्यन् कश्चित्प्राप्तोष्णमन्दिरः ।
यया तया जनं दुःस्थं वीक्ष्य कापुरुषश्चिरं । राजधानीस्थितः पङ्गुः स्वसुखं बह्वमन्यत ।
॥ युग्मं ॥ तुष्टीमचन्द्रापीडादिप्रजापालप्रियाः प्रजाः । एवं तस्मिन् क्षणे नीताः सङ्क्षयं राजराक्षसैः ।
प्रापुश्चिरमवस्थानं पार्थिवा न तदा कश्चित् । धारासम्पातसम्भूताद्बुद्बुदा इव दुर्दिने ।
पार्थः पितरमुत्पाट्य कदाचित् प्राभवत्स्वयं । कदाचित्सुतमुत्पाट्य तन्त्रिचक्रिकयाप्यभूत् ।
अमीणयत्पङ्गुवधूवश्यामण्डलं युवा । सुगन्धादित्यवीजाख्यो व्यवायविधिसेवया ।
राज्यावष्टब्देया स निर्दये, सुरतोत्सवे. । खण्डयामास कां दूतीं मायस्यायैरणां धरै ।
भगिनीभगधैभाग्ययद्धराज्याः स्वयं दधुः । यं पङ्गवे सनोशार्ङ्गी मेरुवर्धनसूनवः ।
सुगन्धादित्यभोग्यस्यास्यापि देवी मृगावती । स्वयं संबुभुजेऽत्यर्थकान्ताकामितकामिनी ।
पर्य्यायेणाभजन्मृत्य सपत्नीभोगवृद्धये । दरिद्रयोपितोरेकं भुक्तिपात्रमिवाश्वहं ।
पुत्रयोराज्याभाय स्पृहयाभ्यां स्वगस्मिणे । दत्ता निधुवनश्रद्धा धनदाने. ददृचिरा ।

तर्ज्जयन् कृतझङ्कारांलुम्भकांलुण्ठितापणान्। शिरोऽक्षिसंज्ञया चस्तवास्तथज्ञातसान्त्वनः। १५०
भेरीरवैः श्रुतिं छिन्दन् पौराणोघोपरोधिभिः। संग्रामजयशोभाङ्कः शङ्करवर्माविशत्पुरं।
॥ कुलकं ॥ तस्मिन् सिंहासनं प्राज्यमाक्रम्यातिश्रयोर्जिते। बद्धा कुतश्चिदानिन्ये भूभटः शम्भुवर्धनं।
राज्ञः पुरस्तात्तं शस्त्रपातभीमीलितेक्षणं। भक्तिं प्रदर्शयन् पापश्चण्डाल इव सोऽवधीत्।
उज्झतां धर्ममर्य्यादां भृत्यानां जनकोपमान्। हन्तुं नरेन्द्रान्द्रोहेण प्रारब्धः शम्भुवर्धनः।
प्राप्य निष्कण्टकं राज्यं चक्रवर्मनृपः क्रमात्। अजायत धृतोत्सेको नृशंसविषमक्रियः। १५५
स्वविक्रमकथास्तोत्ररोमन्थप्रियताहृतः। सोऽभवद्विटवन्द्यादिचाटुकारविधेयधीः।
आत्मानं देवतमिव स्तुतिमोहितचेतसः। जानतः प्राभवंस्तस्य विवेकविगुणाः क्रियाः।
तस्मिन् प्रसङ्गे रंगाख्यः प्रख्यातो डोम्बगायनः। वैदेशिकोऽभवद्राज्ञा वितीर्णावसरोवहिः।
प्राप्तान् सचिवसामन्तान्विन्यस्यन्तो यथाक्रमं। प्रतीहारानुपस्थाप्यमनयन्त विविक्ततां।
विबभौ धवलोष्णीषा सभा दीपप्रभोज्ज्वला। शेषशय्येव मणिभिः कृतालोका फणोद्भवैः। १६०
कृतावरोधधम्मिल्लमालान्दोलनकेलिभिः। प्रदोषपवनैश्चक्रे शिशिरैर्घ्राणतर्पणं।
जातगीतदिदृक्षाणां गवाक्षावलयो बभुः। आसवामोदिभिर्व्वक्त्रैरवरोधमृगीदृशां।
हारकङ्कणकेयूरपारिहार्यादिशोभिना। स्वच्छन्देनानुयातोऽथ प्राविशत डोम्बगायनः।
हंसीनागलताचास्य सुते ललितलोचने। चक्रतुः कौतुकोद्ग्रीवां सभाञ्चित्रार्पितामिव।
तयोर्व्विलासवलितैश्चलितापाङ्गविभ्रमैः। द्वितीयपुष्पप्रकरोव्यकीर्य्यत सभान्तरे। १६५
गायनैर्जयजीवेति कृतकोलाहलैरभूत्। सदः सशब्दं कुर्व्वद्भिस्तत्तन्नृपगुणग्रहं।
भुक्तोत्तरोचितोदञ्चत्पञ्चमस्थानचारिणः। वंशेरागविशेषस्य दत्ते स्थाने ततः शनैः।
अविक्रियशिरःकम्पधूर्नेत्रभ्रमशोभितः। अभिन्नइव गायन्त्या गीतध्वनिरजृम्भत।
अथ ताम्बूलरोमन्थत्यागनिश्चलमूर्त्तिना। जातं राजकुरङ्गेण प्रमोदास्पन्ददृष्टिना।
गायन्त्यौ भावमालम्ब्य तस्य स्निग्धमगायतां। अधिकोद्रेचिताभिख्यं विलासस्मितविभ्रमैः। १७०
राज्ञस्तयोश्च संसक्तचित्तयोरितरेतरं। दृग्व्यापारैः स्वसंवेद्यैः संलाप इव पप्रथे।
नृपं हारितचित्तन्तं विज्ञायैकः प्रियो विटः। ततः प्रसङ्गे प्रोवाच प्रीतिवृद्धिकरं वचः।
देव गीतमिदं यातं संप्रार्थ्येते मनोरमे। कर्पूरपारीपतितं मैरेयमिव हारितं।
गायन्त्योर्माञ्जितामेतां रागाद्युत्तचतुष्किकां। अनयोः प्रतिमाव्याजाञ्चुम्बतीव निशाकरः।
करन्यस्तकपोलान्तमुद्रायस्याविमे ध्रुवं। कटाक्षैः कुरुते व्योम्नि वैमानिकविमोहनं। १७५
जानन्त्या स्वाश्रयां चर्च्चामनयोरेकयानयोः। असूयास्मितगर्भोऽयं कटाक्षः पश्य पातितः।
गायन्त्येकानतमुखी कर्णव्यालोलकुण्डला। विपरीतरतोद्रेकश्रान्तारम्भेव शोभते।
सफलं तस्य तारुण्यमीदृश्यो निर्ज्जने स्त्रियः। डोम्बस्याद्विरदे यस्य गायन्त्येवंविधैः स्वरैः।
उपपत्तिपरित्यक्तशास्त्रानुष्ठानमोहितैः। एकसार्थप्रयातेभ्यः कथमेको विवर्ज्यते।

राज्ञः सतोऽपि नाश्वासो यस्मिन्नस्येव कर्णयोः। अविशङ्क्यप्रकृतयो ध्वनन्ति मधुपा इव। १२०
दिवसे सन्निधानेन पिशुनप्रेरणा प्रभोः। ईर्ष्यालुना स्वैरिणीव रचितुं यदि पार्यते।
राजन् राजन्युपाध्यायो देवी यच्छिचयेद्दृढः। तत्र प्रजागरः कर्तुमसर्वज्ञेन शक्यते।
कथञ्चिदङ्कि हृदये कुशलैर्विनिवेशिता। शिक्षा गोरखरेणेव राज्ञा विस्मार्यते निशि।
न के लोभं समुत्पाद्य जिह्वया स्निग्धदीर्घया। पिपीलिका इव यस्याः च्छायालैः शर्कैरिव।
जानन्ति हन्तुं हन्तव्यमासन्नं न तु दूरगं। एको वकः परं सत्यं द्रोहवृत्तिर्महीपतिः। १२५
न नाम कण्टकाकीर्णः कौटिल्यं सव्यतां नयेत्। कालापेक्षो क्षितिपतिः शरीरमिव जाय्यकः
नमन्नपि हरिर्हन्यादाश्लिष्यन्नपि पन्नगः। विहसन्नपि वेतालः स्तुवन्नपि महीपतिः।
अद्रोहवृत्त्या तस्मात्त्वं द्रव्यस्तस्मात् सदा यदि। सर्वैन्यस्ते तदेषोऽहं भ्रातरेव पुरःसरः।
तदाकर्ण्याब्रवीद्राजा लज्जास्मितसिताधरः। स्वात्मेव यूयं संरक्ष्या मम पूर्वोपकारिणः।
ततो निक्षिप्य चरणं रक्ताक्ते मेषचर्मणि। कोशं चक्रतुरन्योन्यं सखड्गौ नृपडामरौ। १३
अथ सन्नद्धितासंख्यचण्डडामरमण्डलः। चक्रवर्माकरोद्यात्रां प्रत्यूषे नगरोन्मुखः।
तस्मिन् क्षणे पुरस्कृत्य योद्धुं शङ्करवर्धनं। विनिर्ययुः सिताष्टम्यां चैत्रे तन्त्रिपदातयः।
कालानुवृत्तिप्रच्छन्नं तेषां सम्भावनोज्झितं। स तत्ररे पुरस्कर्तुं चक्रवर्मा स्वविक्रमं।
अथ प्रवृत्ते संग्रामे घोरे पद्मपुराद्बहिः। जघान प्रेरितहयः पूर्वं शङ्करवर्धनं।
हते सेनाधिपे तत्र शतधा तन्त्रिवाहिनी। प्रययौ पवनाघातप्रेरिता नौरिवार्णवे। १३५
दृष्टानुसारेणोद्युक्तो नृपस्तेषामपाहरत्। गतिं तुरगवेगेन शिरःश्रेणिं तथासिना।
भ्रमतः समरे वक्षुर्वीरपट्टाञ्चलच्छटाः। चक्रवर्ममृगेन्द्रस्य सटापाटलविभ्रमं।
किमन्यत्पञ्चपाश्चासन् सहस्राणि रणाङ्गने। पतितानि क्षणादेव हतानां तत्र तन्त्रिणां।
तन्त्रिशो रणसंरम्भपरिश्रान्ताः क्षमातले। स्वाङ्गपक्षक्षतच्छाये शायिताश्चक्रवर्मणा।
विशृङ्खलंवंशैर्गुणिभिर्निहतैः संश्रितैः समं। अभूद्यद्वीरशय्यां शूरः शङ्करवर्धनः। १४०
उदयं संहता एव संहता एव च क्षयं। प्रयान्तः स्पृहणीयत्वं तन्त्रिणः कस्य नागमन्।
मानमीयानधृष्यांश्च महावंशान् महीपतीन्। अहीनिव खिलीकृत्य भिक्षयन्तः क्षणे क्षणे।
अनयन् क्रीडया शोभां माद्यन्तो जीविकाकृते। मागाहितुण्डिकाः क्रूरा इव ये शश्वदुन्नतयः।
ते त स्मिरः क्षणाद्दग्धा गूढवैरविषाग्निना। विमानना विविशेन चक्रवर्ममदाहिना।
॥ तिलकं ॥ अथ द्वितीये दिवसे भग्नानामपि तन्त्रिणां। वीरसङ्घट्टनं यावदकरोच्छम्भुवर्धनः। १४५
तावन्निर्जितशत्रुसंघर्षचरैकाङ्गलालितः। सैन्यैर्नानापथायातैर्नदद्भिर्याप्तदिक्पथः।
सरागमध्ये सुताराणां मूर्त्तेवाप्रशासिना। वल्गाङ्केनोद्वहन्नश्वं शिरस्त्रं वामपाणिना।
सस्वेदेनरहस्तापवेष्टमोक्षार्थमन्युषः। खड्गस्य विम्बितार्कस्य भाभिर्योतितकुण्डलः।
करवालोत्थसंरम्भकृष्टायासेन ताम्यता। वक्रभ्रुकुटिसम्भेन वदनेन भयावहः।

तर्ज्जयन् छतडङ्कारांस्तुभकांस्तुण्ठितापणान् । शिरोऽचिसंज्ञया चस्तवास्तथकृतसान्त्वनः । ११०
भेरीरवैः श्रुतिं छिन्दन् पौराशीर्व्वापरोधिभिः । संग्रामजयशोभाढ्यश्चक्रवर्माविशत्पुरं ।
॥ कुलकं ॥ तस्मिन् सिंहासनं प्राज्यमाक्रम्यातिजयोर्जिते । बद्धा कुतश्चिदानिन्ये भूभटः शम्भुवर्धनं ।
राज्ञः पुरस्तात्तं शस्त्रपातभीमीलितेचणं । भक्तिं प्रदर्शयन् पापश्चण्डाल इव सोऽवधीत् ।
उज्झतां धर्म्ममर्य्यादां भृत्यानां जनकोपमान् । इन्तुं नरेन्द्रान्द्रोहेण प्रारब्धः शम्भुवर्धनः ।
प्राप्य निष्कण्टकं राज्यं चक्रवर्म्मनृपः क्रमात् । अजायत धृतोत्सेको नृशंसविषमक्रियः । ११५
स्वविक्रमकथास्तोत्ररोमन्थप्रियताहृतः । सोऽभवद्विटवन्द्यादिचाटुकारविधेयधीः ।
आत्मानं दैवतमिव स्तुतिमोहितचेतसः । जानतः प्राभवंस्तस्य विवेकविगुणाः क्रियाः ।
तस्मिन् प्रसङ्गे रंगाख्यः प्रख्यातो डोम्बगायनः । वैदेशिकोऽभवद्राज्ञा वितीर्णावसरोवहिः ।
प्राप्तान् सचिवसामन्तान्विन्यस्यन्तो यथाक्रमं । प्रतीहारानुपस्थायमनयन्त विविक्ततां ।
विबभौ धवलोष्णीषा सभा दीपप्रभोज्ज्वला । शेषशय्येव मणिभिः कृतालोका फणोद्भवैः । १२०
कृतावरोधधम्मिल्लमालान्दोलनकेलिभिः । प्रदोषपवनैश्चक्रे शिशिरैर्घ्राणतर्पणं ।
जातगीतदिदृक्षाणां गवाचावलयो बभुः । आसवामोदिभिर्व्वक्त्रैरवरोधमृगीदृशां ।
हारकङ्कणकेयूरपारिहार्यादिशोभिना । स्वच्छन्देनानुयातोऽथ प्राविशत डोम्बगायनः ।
हंसीनागलताचास्य सुते ललितलोचने । चक्रतुः कौतुकोद्ग्रीवां सभाञ्चित्रार्पितामिव ।
तयोर्व्विलासवलितैश्चलितापाङ्गविभ्रमैः । द्वितीयपुष्पप्रकरोव्यकीर्य्यत सभान्तरे । १२५
गायनैर्जयजीवेति कृतकोलाहलैरभूत् । सदः सशब्दं कुर्व्वद्भिस्तत्तनृपगुणपदं ।
भुक्तोत्तरोचितोदञ्चत्पञ्चमस्थानचारिणः । वंशैरागविशेषस्य दत्ते स्थाने ततः शनैः ।
अविक्रियशिरःकम्पभ्रूनेत्रभ्रमशोभितः । अभिन्न इव गायन्त्या गीतध्वनिरजृम्भत ।
अथ ताम्बूलरोमन्थत्यागनिश्चलमूर्त्तिना । जातं राजकुरङ्गेण प्रमोदास्पन्ददृष्टिना ।
गायन्त्यौ भावमालम्ब्य तस्य स्निग्धमगायतां । अधिकोद्रेचिताभिख्यं विलासस्मितविभ्रमैः । १३०
राज्ञस्तयोश्च संसक्तचित्तयोरितरेतरं । दृग्व्यापारैः स्वसंवेद्यैः संलाप इव पप्रथे ।
नृपं हारितचित्तन्तं विज्ञायैकः प्रियो विटः । ततः प्रसङ्गे प्रोवाच प्रीतिवृद्धिकरं वचः ।
देव गीतमिदं याते संप्रार्थिते मनोरमे । कर्पूरपारीपतितं मैरेयमिव हारितं ।
गायन्त्योर्मार्ज्जितामेतां रागाद्वृत्तचतुष्किकां । अनयोः प्रतिमाव्याजाच्चुम्बतीव निशाकरः ।
करन्यस्तकपोलान्तमुद्गायन्त्याविमे ध्रुवं । कटाचैः कुरुते योषि वैमानिकविमोहनं । १३५
जानन्त्या स्वाश्रयां चर्चामनयोरेकयावयोः । असूयास्मितगर्भोऽयं कटाचः पश्य पातितः ।
गायन्त्येकानतमुखी कर्षन्त्यालोलकुण्डला । विपरीतरतोद्रेकक्लान्तारब्धेव शोभते ।
सफलं तस्य तारुण्यमीदृश्यो निर्ज्जने स्त्रियः । उत्सुक्यादिरहे यस्य गायन्त्येवंविधैः स्वरैः ।
उपपत्तिपरित्यक्तमास्तानुद्दामसोहितैः । एकसार्थप्रयातेभ्यः कथमेको विवर्ज्यते ।

सेवस्य नूपं श्रोत्रस्य ध्वनिं संस्पृशतोन चेत्। तदङ्गस्यान्यकान्ताङ्गं स्पृशतो दुष्कृतं कुतः। १८०
अभिलाषाङ्कुरः सिक्त इव तैर्व्विटभाषितैः। राज्ञः स्वभावलोलस्य शतशाखलतामायथौ।
ये विस्तारितवर्णसङ्कररुचः सन्दर्श्य गोचान्तशदद्रावस्थिति चापलंघनमलं पार्श्वे ध्वनत्युद्धताः।
नीयन्ते विपथावपातपरतां तन्मोदयैस्तैः क्षणात् सिंहावारिधरैरमी च रभसाद्भूपालसिंहा विटैः।
वस्तुक्षणादनुपपत्त्युपपत्तियुक्तं कृत्वा जडान् यदि विमोहयितुं समर्थाः।
न स्युर्व्विटा अथ कुतर्कपथस्थिताय नित्योद्यमेषु निरयेषु कृतागसोऽरेयुः।
सन्तोष्य हारकेयूरकुण्डलैर्डोम्बमण्डलं। अमार्गत्यागराधेयः प्रश्नद्वान्तमगमन्नृपः।
कान्तोऽस्याः क्षितिवल्लभोऽयमभिधेत्युर्व्वीपतेरेकतो धूनेऽस्यावति चण्डताण्डवयुतं डोम्बः स्वनामान्यतः।
मध्ये यत्किमपीति गीतिरचना काव्यं यदेतद्विदो यत्तज्ज्ञौ क्षपयन्ति तान्धिगबुधान् कीर्त्यर्थिनः पार्थिवान्। १८५
वेश्मानुरागस्य महेन्द्रचापधाम्नोहरिद्रारसरञ्जनस्य। उपाङ्गगीतस्य च हारिणोऽपि सौन्दर्यमस्थैर्यहतप्रकर्षं।
दर्शनाभ्याससम्वृद्धचक्षूरागः क्षमापतिः। विनाश्वपाककन्ये ते न पुनः प्राप निर्वृतिं।
गायन्त्यौ शयनोपान्ते शनैर्व्विहितचुम्बनं। नृपं रतिसुखाभिज्ञं तं हठात्ते प्रचक्रतुः।
समागमेन नवेन तयोर्व्वैयात्यशोभिना। चक्रे क्षपितसामर्थ्यः सलज्जोद्वहनाक्षमः।
रत्यन्तसुलभाङ्गैदैर्निःसृतैः स्वेदबिन्दुभिः। भाव्योन्मषङ्गयजडं वपुस्तस्य व्यधीयत। १९०
रागान्धेन कृता हंसी महादेवी महीभुजा। भेजे राजवधूमध्ये वालव्यजनवीजनं।
तस्याश्चैर्भुक्तमुच्छिष्टं ते यथा चक्रवर्मणः। नृपान्तराणामन्येषामप्यभूवन् सभासदः।
मन्त्रिणामक्षपटलप्रख्यमुख्याधिकारदा। महर्द्धिहेतुतां प्राप डोम्बसेवनचक्रिका।
मोक्षोत्सवचितां केचिच्छ्वपाका न व्यधुः स्वयं। केचित्तत्कुर्व्वन्तोनित्या राजकार्य्याणि मन्त्रवत्।
मन्त्रिणस्तस्कराराज्ञीश्वपाकीश्वपचाः प्रियाः। किं न लोकोत्तरमभूद्भूपतेश्चक्रवर्मणः। १९५
ऋतुस्नातार्तवाङ्कानि श्वपाकी स्वांशुकान्यदात्। तदाच्छादनकृत्प्रेच्छा मन्त्रिणः प्राविशन् सभां।
केचित् क्षितिभुजा वैरमङ्गीकृत्यापि तत्क्षणं। यैर्नाश्रि श्वपचोच्छिष्टं तेऽभवन् सोमपैः समाः।
मण्डलेऽस्मिन् प्रभावोया न देवान्यवसन् ध्रुवं। तदेश्मनि तदा नेचिच्छ्वपाकी प्रविशेत्कथं
तां रणस्वामिनं द्रष्टुं तिलद्वादश्यहेऽागतां। सामन्तेभ्यः साभिमानानन्वयुर्डामराः परं।
राजकोटुम्बदृप्तानां डोम्बानां निर्गता मुखात्। राज्ञामिवाज्ञा दुर्लङ्घ्या न केनाप्युदलङ्घ्यत। २००
राज्ञा प्रदत्ते रङ्गाय हेलुग्रामेऽग्रहारवत्। लिलेख पट्टोपाध्यायो न यदा दानपट्टकं।
तदाक्षपटलं गत्वा रङ्गः कोपात्तमब्रवीत्। रङ्गः स हेलुदिन्नेति दासीसुत न लिख्यते।
लिलेख सोऽथ सन्त्रासाद्रङ्ग भ्रूभङ्गतर्ज्जितः। कोन राजनि दुर्वृत्ते भवेन्नीतिव्यतिक्रमः।
अन्त्यागमनपापस्य पापः पृच्छन् स निष्कृतिं। विटैर्हास्यावहान्येव प्रायश्चित्तानि कारितः।
हिमेनैव हिमं शाम्येद्दुष्कृतेनैव दुष्कृतं। सोऽनुशिष्टो विटैरेवं दधत्यामरसारतां। २०५
पवित्रास्पर्शतोस्पृश्या स्पर्शपापं जिहीर्षुणा। तेनादूष्यत विप्रस्य योषिन्मासोपवासिनः।

ततोऽपि पापिनोऽभूवन् केऽपि तस्मिन् क्षणे द्विजाः। तस्मादप्यग्रहारान् ये जगृहुर्गर्दभोजिनः।
चक्रे चक्रमठं सोऽपि पापः पाशुपताश्रयं। तस्मिन् हतेऽर्द्धनिष्पन्नं तद्वधूर्यद्योजयत्।
पूर्वापकारान् विस्मृत्य डामरांश्च निरागसः। नृपतिः श्वपचाकामी विश्वस्तांश्छद्मनावधीत्।
हन्तुं व्याजेन विश्वस्ताः केचिड्डामरतस्कराः। तस्थुस्तस्यान्तिके द्रोहच्छिद्रान्वेषणतत्पराः।
श्वपाकीशयनावासासन्नावस्करमन्दिरे। शौचस्थितं तं निःशस्त्रं ते राज्ञो प्रापुरेकदा।
अथ तैः प्राप्तसमयैरकस्मात्तस्य सर्व्वतः। क्षिप्रं न्यपात्यताशेषशातशस्त्रपरम्परा।
सुप्तस्तटाद्ह्रदे भ्रष्ट इव निद्रालसेक्षणः। प्रबुद्धः शस्त्रपातैः स व्यमुचद्भैरवान् रवान्।
निःशस्त्रः शस्त्रमन्विष्यन् घरट्टगतजर्जरः। अनुद्रुतोऽरिभिर्धावन् शय्यावेश्म विवेश तत्।
अप्राप्तहेतिं क्रन्दन्त्या श्वपाक्यालिङ्गिताङ्गकं। तत्कुचोत्सङ्गलग्नाङ्गं जघ्नुस्तेऽनुप्रविश्य तं।
खैरेव प्रेरितादारैस्ते तस्य नृपतेः किल। मुमूर्षोर्जानुनी स्वैरं शिलायां समचूर्णयन्।
त्रयोदशाब्दे ज्यैष्ठस्य शुक्लाष्टम्यां क्षपाक्षणे। श्वपाकभोग्यः स श्वेत्रावस्करे तस्करैर्हतः।
उन्मत्तावन्तिनामाथ पार्थसूनुर्दुराशयः। अभ्यषिच्यत वैधेयैः सचिवैः शर्व्वटादिभिः।
श्वपाकीकामुके पापे निहते निशि तस्करैः। प्रजानां पाप्मना सोऽभूत्पापात्पापतरो नृपः।
स्खलिता तत्कथापापस्पर्शभीत्या सरस्वती। कथंचित्तत्पुरस्थेव सेयं प्रस्थाप्यते मया।
आसीत्पितृकुलं तस्य भक्ष्यं दुर्नृपरक्षसः। शौर्व्वाभिधस्य हव्याशविशेषस्येव जीवनं।
तस्यार्धपृष्ठकराघातसटाङ्कारकरोटिकाः। घाणस्कन्दादिवाचाटाः सभायां मुख्यमन्त्रिणः।
तेऽमात्याश्चारणत्वेन निर्लज्जास्तमरञ्जयन्। कालान्तरेण यैरेव भूमिपालैर्भविष्यते।
पर्व्वगुप्तोऽभवत्तस्य सर्व्वेभ्योऽप्यधिकं प्रियः। आस्थाने नर्त्तनं कुर्व्वन्नपाकृतकटीपटः।
आतन्त्रिविसंवादाद्दृष्ट्वा कीटप्रायान्महीपतीन्। पर्व्वगुप्तः सदाभूद्राज्यावाप्तिकृतोद्यमः।
तदा निगूढराज्येच्छः सख्यं मुख्यैः स मन्त्रिभिः। पोतकोशैः प्रविदधे पञ्चभिर्भूभटादिभिः।
भूभटः शर्व्वटश्चोजः कुमुदः सोऽमृताकरः। पर्व्वगुप्तेन सम्बन्धश्चक्रिरे कोशपायिनः।
गवाक्षसरसि प्राप्तश्रीजलोवागलद्विजः। संग्रामडामरगृहे योरक्षः ख्यातपौरुषः।
पदातिमात्रो भूपेन दृष्टशौर्य्यः स संयुगे। महोदरो महाकायः प्रापितो मुख्यमन्त्रितां।
यादृशी तेन ददृशे देवी श्रीः सरसोऽन्तरे। तादृक्पङ्कजया देवीत्यभिधानेन निर्ममे।
राज्यं निष्कण्टकं कर्तुं धूर्त्तेनापजिहीर्षुणा। प्रेरितः पर्व्वगुप्तेन भूभृच्चक्रे कुलक्षयं।
सेन लुण्ठितसर्व्वस्वः पार्थस्तस्मै कलत्रवान्। श्रीजयेन्द्रविहारान्तः श्रमणैर्दत्तभोजनः।
शिशून् शङ्करवर्म्मादीन् भ्रातॄन् दारान्निरोध्य सः। तत्र क्षितानन्नशनैस्तत्कान्तास्तनकारयत्।
उद्यतः पितरं हन्तुं मन्त्रिणोऽनुमतप्रदान्। बद्धपटान् यथाबद्धनिगडानितरान् पुनः।
एकदा मन्त्रिसामन्तान्निकायस्यसैनिकाः। पार्थं तदाशामामाद्य निशायां पर्य्यवेष्टयन्।
घ्नानदीणां वरां पत्नीं रुद्धद्वारां निपात्यते। आलिङ्ग्यमानां क्रन्दद्भिस्तर्णकैरिव दारकैः।

केशानालम्ब्य कर्षन्तः शर्करोत्पाटिताङ्गकं । विपन्नं गोकुलाद्दान्तमिव निर्हृत्य तं गृहात् ।
क्षुत्क्षामरूक्षं क्रन्दन्तं निजघ्नुर्नग्नविग्रहम् । चण्डालाद्दव निःशस्त्रं कुमुदाद्या नृपप्रियाः ।
पितरं निहतं श्रुत्वा राजा सञ्जातकौतुकः । प्रातः स्वसचिवैः सार्द्धं द्रष्टुं वा धष्टोऽथ दृष्टवान् ।
अत्राङ्गेऽस्य प्रहारोऽयं मद्दत्त इति वादिनः । तस्याग्रे राजपुरुषाः शशंसुर्निजविक्रमं ।
न्यक्कृत्य स्वीकृतो राज्ञा तदा तद्रञ्जनोद्यताः । अचूचुदत्पर्वगुप्तो देवगुप्ताभिधं सुतं ।
पार्थस्य निहतस्याङ्गे सोऽक्षिपत्क्षुरिकां ततः । रञ्जितो येन भूपालो जातहासोऽभवच्चिरं ।
डामरैर्लुण्ठितो देशः प्रणाशे चक्रवर्मणः । उत्पाद्य पापकायस्थांस्तेन भूयोऽपि दण्डितः ।
सम्प्रेरितः कुसचिवैः शस्त्राभ्यासञ्चकार सः । पाटयन् क्षुरिकाघातैः कोट्टवीस्तनकोटरं ।
गर्भिणीनाञ्च जठरं गर्भान् द्रष्टुमपाटयत् । काठिन्यस्य परीक्षार्थमङ्गकर्मकृतामपि ।
प्रतिग्रहाग्रहाद्धाराद्यदा बधभयाद्द्विजाः । प्रत्यगृह्णन्प्रहारांस्तस्मादपि नृपाधमात् ।
क्रूरपापानुरूपेण क्षयरोगेण पार्थिवः । तेनानुबाध्यमानोऽभूदपर्यन्तव्ययातुरः ।
व्यथया तस्य तादृश्या प्रजा एव न केवलं । तुतुषुर्निजशुद्धान्तमहिष्योऽपि चतुर्दश ।
अथान्तःपुरदासीभिर्यः कुतश्चिदुपाहृतः । क्षितिपालात्मजातोऽयमिति प्रख्यापितो मृषा ।
तं शिशुं शूरवर्माख्यं विनिवेश्य नृपासने । हस्ते निक्षिप्य सामन्तसचिवैकाङ्गतन्त्रिणं ।
कम्पनाधिपतेर्बद्धद्वेषः कमलवर्धनात् । विभ्यन्मडवराज्यस्था डामरोत्पाटनक्षमात् ।
आसन्ननिरयप्राप्तिः पितृहा पार्थिवाधमः । शुचौ पञ्चदशाब्दस्य प्रजापुण्यैः क्षयं ययौ ।
॥ चतुर्भिः कुलकं ॥ पितृघातिसुतो राजा जयस्वामिविरोचनं । आषाढशुक्लसप्तम्यां शिशुर्द्रष्टुं विनिर्ययौ ।
नवा विरेजे राजश्रीर्बालस्य पृथिवीपतेः । कृपाणवेणिललिता च्छत्रचामरहासिनी ।
अत्रान्तरे जवायातैश्चारैरावेदितश्रुतः । सामन्तैर्नगरोपान्तं प्राप्तः कमलवर्धनः ।
एकाङ्गतन्त्रिसामन्तस्यालहारकसादिभिः । नगरं प्रविशन् श्रान्तः समं सैन्यैररुध्यत ।
विरुद्धडामरानीकान् युद्ध्वा मार्गेषु निर्गतः । श्रान्तोऽप्यसौ वैरिसेनामजयद्विक्रमोर्जितः ।
सहस्रमश्ववाराणां विद्राव्य तुरगैर्मितैः । राजधानीमसंरुद्धः प्रविवेश ततः क्षणात् ।
तं लब्धजयमाकर्ण्य सैन्यैस्त्यक्तं पलायितैः । एकाकिनं क्वाप्यनयज्जननी शिशुभूपतिं ।
प्राक्कर्मभिर्मोहितो वा प्रेरितो वा कुमन्त्रिभिः । नाभूत्सिंहासनारूढो मूढः कमलवर्द्धनः ।
तदानीं स्वगृहान् यातो राज्यकामोऽन्यवासरे । सङ्घट्टयन् द्विजान् सर्व्वानचूचुददनीतिवित् ।
प्रौढं प्रकाश्य कुरुत क्ष्मापं कश्चित् स्वदेशजं । मामेव कुर्य्युः सामर्थ्यादिति मूढः स चिन्तयन् ।
एकाकिनीं रहः क्षीवां लब्ध्वा दुर्लभयोषितं । अप्रौढोऽनुपभुज्यान्यदिने दूत्यार्थयेत यः ।
विभूतिं रभसावाप्तां यत्र सन्त्यज्य तत्क्षणं । नीत्या कामयतेऽन्येद्युः शोच्यस्ताभ्यां परोऽस्ति कः ।
॥ युग्मं ॥ अथोत्पलकुले छिन्ने स्थूलकम्बलवाहिन. । अग्रद्गोत्तनिभा विप्राः समगंसत गोकुले ।
धूमनिर्दग्धकूर्चानां राजशंसांशिचकीर्षतां । राज्यव्यवस्थोपन्यासस्तेषां चिरमवर्द्धत ।

वैमत्येन मिथस्तेषां नान्यः कोऽप्यभ्यषिच्यत । कूर्चाभाषणनिश्च्यूतैः स्वकूर्चष्ठीवनैः परं ।
राज्यार्थान्वेषिभिर्विप्रैः प्राप्तः स्वस्तिकृतये । अवार्य्यतेष्टकाघातैर्मुग्धः कमलवर्धनः ।
पञ्चषाणि दिनान्येव यावत्तस्थुर्द्विजातयः । काहलाकांस्यतालादिवाद्यकोलाहलाकुलं ।
उत्पताकध्वजच्छत्त्रशोभियुग्यार्पितासनं । अशेषं पारिषद्यानां तावत्तत्राभिलद्बलं । ४७०
॥ युग्मं ॥ स्वपत्नीं बन्धकीभूतामिवान्यत्रप्रवर्त्तिनीं । वीक्ष्य राजश्रियं शोचन्नासीत्कमलवर्धनः ।
पिष्टघातिवधूस्कन्नपुत्त्रराज्यार्थिनी ततः । प्राहिणोद्राजपुरुषान् पार्श्वं प्रायोपवेशिनां ।
पिशाचकपुरे ग्रामे वीरदेवाभिधस्य यः । कुटुम्बिनः कामदेवनामा सूनुरजायत ।
स शिक्षिताचरो लब्ध्वा मेरुवर्धनमन्दिरे । बालाध्यापकतां स्थानशीलादिगुणभूषितः ।
क्रमाद्गञ्जाधिकार्य्यासीदथ तस्यात्मजः शनैः । लेभे गञ्जाधिकारित्वं राज्ञः शङ्करवर्म्मणः । ४७५
यः प्रभाकरदेवोऽपि सुगन्धाछन्नकामुकः । लक्ष्म्या सरस्वतीदेशाद्देशविश्रुतो गतः ।
विद्वान् यशस्करो नाम तत्पुत्त्रोऽत्यन्तदुर्गतः । सख्या फल्गुणकाख्येन समं देशान्तरं गतः ।
सुस्वप्नदर्शनैः पीठदेव्याशोर्भिय हृष्टः । तस्मिन् प्रसङ्गे सोत्साहः प्रत्यावृत्तो निजाम्भुवं ।
पिष्टघातिवधूदूतैर्यातैर्बोधयितुं द्विजान् । मध्ये गृहीता वाग्मित्वात्प्रविवेश तदन्तिकं ।
॥ कुलकं ॥ दृष्ट्वैव तं दैववशादेकमत्यस्पृशो द्विजाः । ध्वनिं राजायमेवास्त्वित्युच्चकैरुदचारयन् । ४८०
अथाभ्यषिच्यत क्षिप्रं विप्रैरेत्य यशस्करः । क्ष्माधृतिः प्रौढसामर्थ्यैः सानुमानिव तोयदैः ।
दग्धं वेणुवनं परस्परमहासंघर्षजेनाग्निना तन्मूलोद्धृतिरम्भसा चणधृतोद्रेकेण सम्पादिता ।
वात्यावेगविपाटितं विटपिनं प्राप्तं कुतश्चिद्दृढां रूढिं नेतुमहो महाद्रिकुहरे धात्रा न किं संचितं ।
भ्रत्यप्रेरणया वंशम्पार्थजः स्वत्रचेद्रहेत् । तत्पुत्त्रोत्पाटनं कुर्य्यान्नचेत्कमलवर्धनः ।
अनुच्चकुलजातस्य दरिद्रस्याटतः क्षितिं । तद्यशस्करदेवस्य राज्यप्राप्तिः कथम्भवेत् ।
पद्भ्यां व्रजन्निरनुगो दृदृशे जनेन यस्तत्क्षणं निखिललोकसमानकीर्तिः ।
साम्राज्यरम्यममुमीक्षितुमास नारीदृङ्नीरजस्तवकितो नरनाथमार्गः । ४८५
नृपतिवसतिं प्रत्यागच्छन् यशस्करभूपतिः पुरन्ध्रगदृशामाशीर्मध्ये वचोऽपि विवेचितं ।
स्तिमितवलितापाङ्गं शृण्वन्निमीलदृहङ्कृतिः क्षतपरिकरस्याग्रैर्भेजे प्रजापरिपालने ।
प्रतिमितरविदीपोद्भासिशुभ्रातपत्रप्रचयरजतपात्रासज्जितारात्रिका श्रीः ।
अथ मुखरितमार्गीर्मङ्गलैरङ्गनानामवनिहरिणधामा राजधाम प्रपेदे ।
श्रीकाश्मीरिक महामात्यचम्पकप्रभुसूनोः कह्लणस्य कृतौ राजतरङ्गिण्यां पञ्चमस्तरङ्गः । राजानः आदितः ॥ ११ ८० ॥
अधिकार्यां समाश्रीतौ माधेषु च चतुर्थ्वगात् । कल्पपालाष्टकं रथ्याहतस्त्रीषचिवा अपि ।

॥ अथ षष्ठस्तरङ्गः ॥



नेदं पर्णसमीरणाशनतपोमाहात्म्यमुच्चोरगौ पश्यैतावत एव संप्रति कृतौ तन्मात्रवृत्ती वहिः।
प्रेम्णैवार्द्रमिदं चराचरगुरोः प्राप्येयमात्मस्तुतीरेवं देववधूमुखाच्छ्रुतिसुखाः श्रृण्वन्नपर्णावतात्।
दृष्ट्वा लङ्घनीयत्वमथ कक्ष्यां विलङ्घयन्। प्रतीहारान् द्विजा दूरं वार्य्यन्तामिति सोऽन्वशात्।
वेत्रिविक्षिप्यमानांस्तु तान् कृताञ्जलिरब्रवीत्। राज्यप्रदाश्च पूज्याश्च यूयं नो दैवतैः समाः।
राज्यदानाभिमानेन वर्त्तिष्यत मदोद्धताः। यत्कार्य्यकालादन्यत्र नागन्तव्यं मदन्तिकं।
तदाकर्ण्याखिलो लोकस्तमदृश्यममन्यत। व्यस्मरत्सहसंवाससम्भूतमपि लाघवं। ५
खिलीभूताः पूर्व्वराजव्यवस्था प्रतिभावलात्। उन्नीतवान्स सुकविः प्राक्तविप्रक्रिया इव।
अचौराभूत्तया भूमिर्यया रात्रौ वणिक्पथाः। अतिष्ठन्विवृतद्वारा मार्गाश्चाविघ्निताध्वगाः।
प्रत्यवेक्षापरे तस्मिन्नासीत्सर्व्वापहारिणां। कृष्यध्वलमुत्सृज्य कृत्यं नान्यन्नियोगिनां।
ग्राम्याः कृषिपराधीना नापश्यन् राजमन्दिरं। विप्राः स्वाध्यायसंसक्ता नाकुर्व्वन् शस्त्रधारणं।
न विप्रगुरवः साम गायन्तो मन्दिरं पपुः। न तापसाः पुत्रदारपशुधान्यान्यढौकयन्। १०
न मूर्खा गुरवो मत्या पूपयागविधायिनः। चक्रिरे स्वकृतैर्ग्रन्थैस्तर्कागमपरीक्षणं।
नादृश्यन्त च गेहिन्यो गुरुदीक्षात्यदेवताः। कुर्व्वाणा भक्तिशीलश्रीनिषेधं मूर्धधूननैः।
कार्त्तान्तिको भिषक्सभ्योगुरुर्मन्त्री पुरोहितः। दूतः स्थेयो लेखको वा न तदाभूदपण्डितः।
प्रायोपवेशाधिकृतैर्व्वोधितेन महीभृता। प्रायोपविष्टो निकटं प्रापितः कश्चिदब्रवीत्।
अहमाढ्योऽभवं पूर्व्वं वास्तव्योऽत्र महीपते। निर्व्विघ्नमत्नं शनकैराग च्छन्देवयोगतः। १५
उत्तमर्णैः पीडितस्य महद्धर्णस्य तस्य मे। नियर्योऽभृद्धृणं छित्वा परिभ्रान्तुं दिगन्तरे।
अथ विक्रीय सर्व्वस्वमृणं शोधयता मया। महाधनाय वणिजे विक्रीतं निजमन्दिरं।
भार्य्यामुद्दिश्य भर्तव्यामेकएव तु वर्जितः। सोपानकूपो विक्रीतान्महतो वेश्मनस्ततः।

निदाघे पुष्पताम्बूलीपर्णं यत्नातिशीतले । न्यस्तश्चिर्मानिकैर्दत्ता सा चीरेणाटकादिति ।
ततोदिगन्तराक्रान्त्या विंशत्या वत्सरैरहं । लब्धानल्पवित्तः सम्प्राप्तो जन्मभूमिमिमां पुनः ।
अन्विष्यता मया साध्वी स्ववधूर्दृष्टेऽथ सा । विवर्णदेहा जीवन्ती भेद्यालिनान्यवेश्मसु ।
किं दत्तजीविकापि त्वमीदृशीं वृत्तिमाश्रिता । मयेति सा सुदुःखेन पृष्टा स्वोदन्तमब्रवीत् ।
सोपानकूपं सम्प्राप्ता त्वयि याते दिगन्तरं । लगुडैस्ताडयित्वाहं वणिजा तेन वारिता ।
तदन्या कास्ति मे वृत्तिरित्युक्त्वा विरराम सा । तदाकर्ण्य निमग्नोऽहमन्तरे शोककोपयोः ।
कृतप्रायोपवेशोऽथ स्थेयैस्तैस्तैः पदे पदे । प्रत्यर्थिनो दत्तजयैः किमप्यस्मि पराजितः ।
जडत्वादेषि न न्यायं न विक्रीतो मया पुनः । सोपानकूप इत्यस्मिन्नर्थे प्राणा इमे पणः ।
सोऽहं विपद्ये चीर्णार्थो द्वारि शास्तु तव ध्रुवं । वृजिनादस्ति चेन्नीतिर्वस्तु निर्णीयतां स्वयं ।
राजेति तेन विज्ञप्तो दत्त्वा धर्माधनं स्वयं । समाहूयाखिलान् स्थेयानासीत्तत्तत् विचारयन्
स्थेयास्तमूचुर्व्वृद्धशो विचार्य्यायं पराजितः । शाठ्यादगणयन्नाय्यं दण्ड्यो लिखितदूषकः ।
सोपानकूपसहितं विक्रीतं गृहमित्यथ । राजा विक्रयपत्रस्थान् स्वयं वर्णानवाचयत् ।
ततोऽधिगतमित्येव सभ्येषु निगदत्स्वपि । अन्तरात्मा जगादेव नृपतेरर्थिनो जयं ।
मुहूर्त्तमिव सञ्चिन्त्य राजान्याभिरभूच्चिरं । कथाभिरतिचित्राभिर्मोहयन्सभ्यमण्डलं ।
कथान्तराले सर्व्वेभ्यो गृह्णन् रत्नानि वीक्षितुं । छद्मप्रत्यर्थिनो हस्तादुपादत्ताङ्गुलीयकं ।
क्षणादिवाखिलैः स्थेयनित्यमेवेति सस्मितं । वचो ब्रुवाणः प्रययौ पादचालनकैतवात् ।
अभिज्ञानाय तत्रस्थः स वितीर्याङ्गुलीयकं । भृत्यमेकं वणिग्वेश्म प्राहिणोद्दत्तवाचिकं ।
स वणिग्गणनाध्यक्षं ययाचे साङ्गुलीयकः । यत्राब्दे पत्रमुत्पन्नं गणनापत्रिका ततः ।
निर्णयेऽद्य तया कृत्यमस्ति भाण्डपतेरिति । श्रुत्वादाद्गणनाध्यक्षस्तां गृहीताङ्गुलीयकः ।
दीनाराणां द्वयशती तस्यां भूभृदवाचयन् । व्ययमध्येऽधिकरणलेखकाय समर्पितां ।
तस्मै मितधनार्हाय बहुमूल्यार्पणान्नृपः । रेफे सकारं वणिजा कारितं निश्चिकाय सः ।
सभायां तत्प्रदर्श्याथ पृष्ट्वा दत्त्वाभयञ्च तं । आनीय लेखकं सभ्यान्सञ्जातप्रत्ययान् व्यधात् ।
सभ्यैरभ्यर्च्यमानेन राज्ञा सार्द्धं वणिग्गृहं । वितीर्णमर्थिनो देशात्प्रत्यर्थी च प्रवासितः ।
कृताह्निकं नोक्तुकामं तं दिनान्ते च भूपतिं । अकालविदनादिभ्यस्त्यक्त्वा जातु व्यजिज्ञपत् ।
देवः समागतस्त्योऽद्य विज्ञप्तौ यस्तव क्षणः । इत्युक्तो दर्शने प्राणत्यागी विप्रो बहिःस्थितः ।
दत्तप्रवेशादेशोऽथ कद्रुस्सदेन भूभुजा । द्विजः प्रविष्टः पृष्टोऽथ तीव्रार्त्तिरिदमब्रवीत् ।
सुवर्णरूपकशतं भ्रान्त्वा देशान्तरेऽर्जितं । गृहीत्वा श्रुतमौराज्यः स्वदेशमहमागतः ।
त्वयि राजनि निश्चौरैरध्वभिर्विंशतः सुखं । ह्योऽभवन्नत्रयोऽश्वे मे दिनान्ते श्रान्ततः स्थितिः ।
दीर्घाध्वदहनक्लान्तस्तथाहमकुतोभयः । मार्गारामतरोर्मूले विश्रामायत्यवाहयं ।
वितानं यन्त्रिबद्धं नाद्रुत्याच्चौरपतन्मम । अरघट्टे समीपस्थे कचयोगादसचिते ।

तस्मिन्दुरवरोहेति निर्व्वसुलाज्जहद्वपुः । सोऽहं हारितसर्व्वस्वः शोचन् रुद्धस्थिरं जनैः ।
एकोऽध्यवसितः कोऽपि साहसी पुरुषोऽब्रवीत् । मह्यं दापितवित्ताय किन्ददासीति मां ततः ।
तमस्म्यवोचं वित्तस्य तस्यार्थस्यास्मि कः प्रभुः । तुभ्यं यद्रोचते मह्यं तत्ततो दीयतां त्वया ।
अवरुह्याधिरूढोऽथ रूपकेभ्यो द्वयं मम । स प्रादात् स्पष्टमेवाष्टानवतिं स्वीचकार तु ।
व्यवहारा वचोनिष्ठा एका राज्ञि यशस्करे । निन्दन् व्यवस्थां तां लोकैर्न्यकृतोऽस्मीति वादिभिः ।
उपचारोक्तिसारस्य च्छलहारितवेतनः । सोऽहं जहाम्यसून्द्वारे दुर्व्यवस्थापकस्य ते ।
पुंसस्तस्य स राज्ञाथ पृष्टः सक्तिनामनी । वदनसत्यभिज्ञैव ममास्तीत्यभ्यभाषत ।
प्रातस्त्वेप्सितावाप्तिं करिष्यामीति भूभुजा । प्रतिज्ञाय कथञ्चित्स स्वपार्श्वे कारितोऽशनं ।
लवणोत्सौकसां दूताह्वतानां स विशां ततः । स्थितमन्तर्द्विजोऽन्येद्युस्तं राज्ञेऽदर्शयन्नरं ।
पृष्टः स राज्ञा विप्रेण यथैवोक्तं तथैव तत् । सर्व्वमूचे वाक्प्रतिष्ठं व्यवहारमुदीरयन् ।
सत्यवाक्पारतन्त्र्यस्य वस्तुवृत्तस्य चान्तरं । अलक्षयन्तः प्रैक्षन्त दोलाकुलधियो घरां ।
धर्म्मासनस्थो राजाथ रूपकाणामभाषत । तमष्टानवतेः पात्रं विप्रमन्यं द्वयस्य तु ।
अनुयोक्तुञ्जगादापि दुःसंचिन्त्या महात्मनः । धर्म्मस्याधर्म्ममुद्वृत्तं निहन्तुं धावतो गतिः ।
सार्थं कृताग्रं प्रविशन्नमयं चेन्दुमण्डलं । स्वतेजसा संविभजन् प्रदीपैर्ज्योत्स्नयाप्यसौ ।
तदुत्थाय यथाभानुर्निहन्ति ध्वान्तमुद्धृतं । अनन्यकर्म्मा धर्म्मोऽयं तथाधर्म्मं व्यपोहति ।
॥ युग्मं ॥ दुःसंलक्ष्यस्तु धर्म्मोऽसावधर्म्मं बाधतेऽञ्जसा । तिष्ठन्नित्यमधिष्ठाय दारुं काष्ठमिवानलः ।
ददाति यद्भवान् दत्तां तदित्याद्युक्तमुज्झत । तुभ्यं रोचतइत्यादिवचोऽस्य निःसृतं तदा ।
रुचितास्य सभूवाष्टानवतिर्दीभिर्नोऽस्य तां । नादादस्मायरुचितं रूपकाणां द्वयं ददत् ।
इत्यादिसूक्ष्मेक्षिकया धर्म्माधर्म्मान्तरं विदन् । प्रत्यवेक्षापरः क्ष्माभृद्व्यधात्कृतयुगोदयं ।
इत्यञ्जनं स विनयन् हासोऽभून्निजदुर्नये । परस्योपदिशन् पथ्यमपथ्याशीव रोगहृत् ।
श्रोत्रियेणैव तेनापि मृदश्च शौचशालिना । डोम्बाच्छिष्टभुजोऽभ्यत्याः पार्श्वान्न परिजिह्रिरे ।
यथोत्तरं संश्रितार्थैरन्योन्यं पृष्ठपातिभिः । नगराधिकृतैश्चक्रे चतुर्भिः सोऽर्थसङ्ग्रहं ।
लेभिरे निधनं तस्मात्तत्प्रद्वारात्पदातयः । श्रीरणेश्वरपीठायन्यस्तखड्गादपि प्रभोः ।
स ज्येष्ठे भ्रातरि मृते तथाभूदुदितस्थिरं । तदुपज्ञैर्यथाप्राप्तैस्तेनात्मेप्सितसार्पणं ।
भीतस्य सण्डनेशत्वं वेत्ताविततस्य भूभुजा । देवीः कामयमानस्य चक्रे गजनिमीलिका ।
रागात्कृच्छ्रान्तकान्तानां मूर्द्धानमधिरोपिता । स्वस्त्रानामाभवद्देश्या तस्य वैवश्यकारिणी ।
अवकाशः सुवृत्तानां हृदयान्तर्न्न योषितां । इतीव विहितौ धात्रा सुवृत्तौ तद्बहिः कुचौ ।
कुसुमाधमर्ण्णको जानन्सद्वृत्तिताम् । नारीणां ग्रुषितप्राणानामङ्गनात्वे व्यधाद्विधिः ।
सा कामितापि राज्ञा सलज्जा मन्त्रितलोचना । चण्डालशयामिकैर्गागायामिनीषु समागमं ।
॥ युग्मं ॥ सुभगङ्करणं किंचिच्चण्डालस्य तस्याऽभवत् । यं चन्द्रभावविवशा भेजे राजवधूरपि ।

सा वा चण्डालकुलजा स वा कार्म्मणकर्म्मवित्। अन्यथा भद्गम. किं स्यादसम्भाव्यस्तथाविधः।
सोऽभूत्केन प्रकारेण तया सह समागत। इत्येष लेभे वृत्तान्त. प्रतिभेदं न कुत्रचित्।
केवलं मत्यवात्तादृक् पापिनो. प्रेम तत्तयो। दुर्व्यापारेचणात्विप्रं छादिनाखोऽधिकारिणः।
तमर्थमथ तथ्येन वीच्य प्रणिधिभिर्नृप.। प्रायश्चित्तानुचरणचामः कृष्णाजिनं दधौ।
कुपितोऽपि स यत्नेना न्यवधीद्रागमोहित.। तेनैवागात्पुरोभागिवितर्कातद्धपात्तनां।
डोम्बोच्छिष्टानुगामद्भ्नादग्ऽविलं यत्रस्करे। संक्रान्तं कुष्ठसंसर्गात् कुष्ठं दुःखमिवाभवत्।
सामान्येन सता कैश्चिद्वदृशै. शुभकर्म्मभि। जन्मान्तरीयं साम्राज्यं मया प्रापीति चिन्तयन्।
साम्राज्यकामोऽपि नृपो भाविष्यपि स जन्मसु। युक्त्या प्रादान्निरातङ्का राजलक्ष्मीं द्विजन्मने।
भूभुजा दानशौण्डेन पैतृके स्थण्डिले कृत'। छात्राणामार्यदेश्यानां तेन विद्यार्थिनां मठ'।
मठाधिपतये तत्र च्छत्रचामरहासिनीं। स नरेन्द्राश्रितां प्रादात्स्वकान्ता पुरवर्जितां।
वितस्तापुलिने राजा नानोपकरणान्वितान्। ब्राह्मणेभ्य सोऽग्रहारान् पञ्चपञ्चाशतन्ददौ।
अथ जातोदरव्याधिर्न ज्ञातो नायमित्यसौ। जानन् संग्रामदेवाख्यं परिवर्ज्य निजात्मजं।
समर्थं सचिवैकाङ्गमामन्त्रानभ्यषेचयत्। रामदेवात्मजं राज्ये वर्ण्टं प्रपितृव्यजं।
शक्ये राज्यादपाकर्तुं शिशावनभिषेचिते। निराशाः समपद्यन्त तदा राज्यजिहीर्षव'।
स पर्व्वगुप्तकौटिल्यप्रयुक्तेहृद्योन्मुख। विपाककालस्तत्राक्लि भङ्गोन्मुखइवाभवत्।
राजधानीस्थितस्यापि वर्ण्टो राज्यदायिन.। आरोग्यवार्तयाप्याशीन्मुमूर्षोरनिरीक्षकः।
तत आनुशयी राजा तान्यन् प्रेर्थ्यत मन्त्रिभि। राज्यं सङ्ग्रामदेवाय दातुमाश्वाशकारिभि।
राजाज्ञया नियामिकां बहुिऽप्यस्तासमण्डपात्। वहिर्दत्तार्गलात्प्रातर्वर्ण्टो निरवर्त्स्यत।
भयात्प्रजागरादापि तद्भृत्यानां विवेकिनां। आस्थानमण्डपं प्राप पायुचालनभूमितां।
एकादशराजपुरुषस्तदाशिं विजयेश्वरे। श्रीडाह्वेवप्रसादाख्यो राजवीजी समर्पयत्।
अथाभिषिच्य सङ्ग्रामदेवं तीव्रीभवद्रुज.। स राजधान्यानिर्गत्य मर्तुं निजमठं ययौ।
धी केशश्मश्रुवपने शिरःशाटकवर्जनं। काषायग्रहणेऽदिश शस्त्रत्यागग्रहस्य य'।
राजसत्ये प्रतिज्ञात. स तस्मिन्निश्चितचर्ये। जीवन्नेव कृतज्ञलव्यक्तै: परिवर्जित'।
॥ युग्मं ॥ द्वे सहस्रे सुवर्णस्य सार्द्धं बद्धा पटाञ्चले। योनिर्जगाम राजासौ मुमूर्षुर्निजमन्दिरात्।
पञ्चभि. पर्व्वगुप्ताद्यैर्यातकं तस्य मन्त्रिभि। हतं सजीविनम्यैव शिभकान्योन्यमग्रत।
॥ युग्मं ॥ विवेष्टमान शय्यायां व्याधिदग्धान्तरो नृपः। तिष्ठन्मठाङ्गनकुटीगर्भे ध्वान्तान्धकारिते।
अजातमस्तिष्कोऽपि पश्यन् द्रोहपरान्निजान्। प्राणैरहानि दिवाणि नयदानिरमुच्यत।
तदा सुहृदनुमृत्यवेत्तावित्ते कृतत्वरे.। जिहीर्षुभिय साम्राज्यं विपन्दना विपादित।
॥ तिलकं ॥ अवरोधवधूमध्यात्सती तं पतिमन्वगात्। एका चैलोक्यदेव्येव स्तम्भेव विराचनं।
वर्णाश्रमप्रत्यवेक्षा बद्धकच्य' चितीश्वरः। चक्रभानुर्निधं चक्रे सेवके द्विजतापस।

इतात्माचारमालोक्य राजा धर्मवशम्वदः। निजयाहास्यपादेन ललाटतटमङ्कयन्।
तन्मातुलेन तद्रोषादीरनाथेन योगिना। सान्धिविग्रहिकेणाथ स स्वेनैव न्यगद्यत।
पूर्वाचार्य्यप्रभावेण स्वमाहात्म्याधिरोपणं। प्रख्यापयद्भिर्गुरुभिः श्रद्धयेति यदुच्यते।
तत्ख्यापितैव सन्माहात्म्ये विपत्र इति श्रुतिः। दीर्घव्याधिहते तस्मिन्नुपपत्तिः कथम्भवेत्।
अथामयान्तरे वाभूत्सा वार्तेत्युच्यते यदि। वर्णटाद्यभिशापोऽपि तदायातत्र हेतुतां।
भुक्तैश्वर्य्योनवसमाश्चतुर्भिः स हायने। मासि भाद्रपदे कृष्णतृतीयस्यां व्यपद्यत।
पितामही शिशोर्गोप्त्री विनिवेश्य नृपासने। भूभटाद्यैः समं प्रादात्पञ्चगुप्तोऽथ पञ्चभिः।
क्रमात्समं पितामह्या तान् व्यापाद्येतरान् बली। एकः स एवमाक्रान्तः प्रबभूव नृपास्पदे।
स पार्थिवत्वमन्त्रित्वमिश्रया चेष्टया स्फुटं। राजा राजानकश्चेति मिश्रामेवं धियं व्यधात्।
सेवमानः स्वयं बालभूपं भोज्यार्पणादिभिः। स्वजूनां भत्यभात्पवैगुप्तो द्रोहवहिष्कृतः।
यान् द्रोहभीरून् सम्भाव्य संविभेजे यशस्करः। तस्य तत्तनयोच्छेदे त एवासन् प्रयोजकाः।
करभाङ्करुहापिङ्गे श्मश्रुणि क्षितिपालवत्। स ददौ कुङ्कुमालेपं वचं श्राद्धविस्तृते।
विम्बदेकाङ्गसङ्घातात्प्रकटोत्पाटनाक्षमः। प्रमापणाय प्रायुङ्क्त शिशोः कर्माभिचारिकं।
न्याय्यं ते साम्ययस्यास्ति राज्यस्यैवादिवासरे। अन्यथा चरतो नाशः क्षिप्रं वंशायुषोर्भवेत्।
इतीमामपि यामिन्यां श्रुतवान् भूतभारतीं। अभिचारस्य वन्ध्यत्वं निर्ध्यायाधिकशङ्कितः।
एकाङ्गेभ्यो विभिन्नेभ्यो विभ्यदुद्विग्नसंभ्रमः। उदतान्यत्तया चिन्तानुप्रसक्तिर्दिवानिशं।
यदा महाहिमापातनिःसञ्चारजने दिने। अकस्मात्सम्भृतवलो राजधानीं निरुद्धवान्।
विरोधकारिणं युद्धाभिधेन सह सूनुना। निर्द्रोहमाहवे हत्वा मन्त्रिणं रामवर्धनं।
दिव्येन सेवावित्तेन प्राभृतार्थमुपाहृतां। गले पुष्पस्रजं बद्ध्वा पातितः पार्थिवासनात्।
स तं बकाह्वसंग्रामं हतमन्यत्र मन्दिरे। पातयित्वा वितस्तान्तः कण्ठबद्धशिलं निशि।
चतुर्भिरस्य वर्षस्य दशम्यां कृष्णफाल्गुने। पापः सखड्गकवचो न्यविशत नृपासने।
चतुर्भिः कुलकं ॥ पारे विमोकं शिविराज्ज्ञातस्याभिनवाभिधात्। सूनुः संग्रामगुप्तस्य स तथा पार्थिवोऽभवत्।
केचित्तं मध्यवस्थानं ये पुरा प्रतिजज्ञिरे। ते सर्व एव तद्भीताः मातरेव प्रणेमिरे।
पार्थिवैकाङ्गधामस्तम्भमन्त्रिकायस्थतस्करा। तद्भीत्या द्रोहदृप्तानां द्रोहादे तमदृश्यत।
एवाकृष्य गदा स्वामे शुष्यभिजनसम्भ्रमः। प्रमादाम्मदमादिश्यनाथो ढक्का यदीर्यत।
स्वांशुकेन भूभर्त्रा कुपितेन स्वतोहतः। स निष्क्रान्तकचस्तस्मुत्पम्नो समपद्यत।
मातृकस्य पुत्रस्य सर्वोत्तमसौख्यः। सत्याप्यभिजने जाता वसन्ति पितुरेश्वरे।
कुर्वता सर्वगुप्तेन भूभुजा द्रविणार्जनं। मापिताः पुनरप्याहु प्रजा रोगाभियोगिनः।
इत्थं स स्वभवनविहारसद्धर्मिणि। सद्गुणैर्वरं सोऽपि हजिन्नाभिनया धिया।
सीयमस्ताम्भाईस्तहानाय विशुद्धधीः। सौभाग्यमधुमादिवा गौरीव नृपसुन्दरी।

सुचिराङ्कुरितप्रीतेः पर्व्वगुप्तस्य साकरोत् । समागमार्थिनो युक्त्या वञ्चनामुचितां सती ।
इदं यशस्करस्वामिसुरवेश्मार्द्धनिर्म्मितं । त्यक्ता पत्युर्व्विपन्नस्य कृत्वा निर्वाणपूरणं ।
अमोघमस्मि नियमाद्विधास्यामि त्वदीप्सितं । सद्युपच्छन्दयन्नेवं सुभ्रुवाभिहितस्तया ।
अथ प्रहृष्टगर्वेण तत्स्वल्पैरेव वासरैः । सम्पूर्णतां सुरगृहं गमितं तेन भूभुजा ।
सा यागज्वलने राजललना पीतसर्पिषि । पूर्णाहुत्या समं साध्वी जुहाव सहसा तनुं ।
उपर्य्यस्यानिरस्ताशाः पुष्टाः कुसुमवृष्टय. । तत्कांचिणस्तु न्यपतन्नवर्णमुखरा गिरः ।
सुदीर्घसाहसारम्भचिन्तासंरम्भशोषित' । पर्वगुप्तो बभूवाथ तृष्णामयपथातिथिः ।
व्याध्याधिप्रशमायासैर्ज्ञात्वाप्यस्थायिनीं स्थितिं । मूढाः समृद्धिं नोज्झन्ति द्रोहे श्रीलोभमोहिताः ।
आशङ्क्य तादृङ्क्लिष्टोऽपि सोऽकुण्ठैः प्राक्तनैः शुभैः । कैश्चित्सुरेश्वरीक्षेत्रे परासुः समपद्यत ।
षड्विंशवत्सराषाढशुक्लेऽह्नि त्रयोदशे । द्रोहार्जितेन नृपतिः स राज्येन व्ययुज्यत ।
अतीन्द्रियायां परलोकवृत्ताविहैव तीव्राशुभपाकशंसी । दृश्येत नाशो यदि नाम नाशु न कः कुकृत्येन यतेत भूत्यै ।
क्षेमगुप्ताभिधानोऽभूदथ राजा तदात्मजः । आसवासेवनोत्सिक्तवित्त तारुण्यसंज्वरः ।
सोऽभूत्स्वभावदुर्वृत्तो नितरां दुर्जनाश्रयात् । कृष्णपक्षपाचरोघोरमेघान्ध इव भीतिकृत् ।
स्वतुल्यवेशालङ्काराः शतं लालितकान्नृपं । तं फल्गुणप्रभृतयो दुराचारा. सिषेविरे ।
द्यूतासवाङ्गनासेवाव्यसनेऽपि स पार्थिवः । विटनिर्लुण्ठ्यमानोऽपि नाभूत्सत्त्वोपवहिष्कृत ।

राग्री मधुप्रणयवाग्विहिताश्रयक्लि थं' सख्यमेति मधुपैर्व्वृतकोशसारैः ।
पद्मे प्रयाति दिनमात्रमपि प्रसक्तिं श्रीस्तत्र चेत्किमिव तत्र कुतूहलाय ।

विटाः प्रविष्टा हृदयं जिष्णुशा वामनादयः । पिशाचस्येव रुचितामशुचिं तस्य चक्रिरे ।
परोपहासकुशलः परनारीरतिप्रियः । परायत्ताशयस्तस्थौ पार्थिवोऽनर्थतत्परः ।
ष्ठीवनं श्मश्रुमालासु गालयः श्रोत्रपालिषु । तेन क्षिप्ता. प्रतीच्छाणां करोटीषु च टक्करा. ।
कटिसङ्घट्टनाग्रार्थ्यो मृगव्याश्ववनाटनैः । विटाश्चासोलरटनैर्व्विश्रम्भं तस्य लेभिरे ।
पुंश्चलीशालावैधेयवालकङ्कोगधूर्निर्भरा । समभूदप्रवेशार्हा राजपर्षन्मनस्विनां ।
जिष्णुपुत्रे क्षेमगुप्तश्चमाभृद्यस्यपुत्रक । चारणत्वगुणाकृष्ट. किं न धूर्तैरनर्त्यत ।
तस्य कङ्कणवर्षोऽसीत्यभिधानं विधाय ते । मोषितायामकम्पकुर्देप्योः कङ्कणवर्षिताम् ।
निर्दोषदोषाविष्कारे गजवस्तुप्रदर्शने । अधृष्यटक्कराधाने प्रमादः प्रापि तैर्नृपात् ।
संलभ्य कुचकव्यान्ताः कृत्वा निजवधूः पुरः । रागी राजा गृहाश्रीतो द्यूते तैर्निर्धन. कृतः ।
संभोगाभप्रशैभाग्यकृतस्पर्धे. परस्परं । सम्भुञ्ज्यताभवान्कुविशेषमिति चोदितः ।
उपभोगं स्वभार्याणां निःशङ्कैस्तैः स कारितः । क्व द्वयेति च रत्यन्ते पृष्टोऽभीष्टधनप्रदः ।
॥ युग्मं ॥ तस्य लालितकेष्वास्तां मूढा सम्भोगढौकने । मालोधारिवरचित्साद्विपाकौ हरिधूर्जटी ।
नीत्वा नर्मकथाङ्कतां निजवपुर्भुञ्जन्ति मानोन्नतिं सन्दूष्य स्वयमङ्गनाः प्रङ्गचितया त्यक्तं कुचं कुर्व्वते ।

सौख्यं घ्नन्ति सुदीर्घमेव न समासत्त्या यदर्थं श्रमः प्रत्याख्याय तदेव वेद्मि न विटैः किं प्रार्थ्यते सेवया ।
यशस्करस्य भूत्वापि सचिवो भट्टफल्गुणः । तस्याभूदनुजीव्यन्ते धिग्भोगाभ्यामवासना ।
फल्गुणस्वामिमुख्यानां प्रतिष्ठानां विधायिनः । तस्योपदेशो भूभर्त्रा पर्य्यहाय्यसकृद्बहुः ।
गृह्णन् विद्वेषितां हन्तुं टक्करादिबलात्ततः । हट्टौरकः कम्पनेशोदुर्गोष्ठीमध्यगोऽभवत् । १७०
तीक्ष्णचेपे सम्प्रविष्टं हन्तुं सङ्ग्रामडामरं । श्रीजयेन्द्रविहारं स निर्घृणो निरदाहयत् ।
सुगतप्रतिमारीतिं हृत्वा दग्ध्वा ततोऽखिलात् । जरद्देवगृहेभ्यश्च सङ्ग्राह्य ग्रावसञ्चयं ।
सुरप्रतिष्ठया दार्ढ्यं मूढः स्वयशसोविदन् । नगरापणवीथ्यन्तः चेमगौरीश्वरं व्यधात् ।
एकः प्रयात्युपरमं द्रविणं तदीयं कृत्वा परः प्रसभमुद्वहति प्रमोदं ।
नो वेत्ति तत्स्वनिधने परकोषगामि धिग्वासनामसममोहकृतान्धकाराम् ।
त्यागिना चेमगुप्तेन भुक्त्यर्थं स्वशभूभुजे । हृत्वा विहारान्निर्दग्धान् ग्रामाः षट्त्रिंशदर्पिताः । १७५
दुर्गाणां लोहरादीनां शास्ता शतमखोपमः । नृपतिः सिंहराजाख्यस्तस्मै स्वान्तनयां ददौ ।
स तस्यां शाहिदौहित्र्यां दिद्दायां सक्तमानसः । दिद्दाचेम इति ख्यातिं ययौ लज्जावहां नृपः ।
मातामहेन भूभर्त्तुर्बध्वास्तस्या व्यधीयत । श्रीभूमिस्वामिनो दत्तप्रसादो भीमकेशवः ।
चन्द्रलेखाभिधां कन्यां राज्ञे दत्तवताभवत् । फल्गुणदारपतिना समं दिद्दा समत्सरा ।
गुरूपदेशः सुमहान् कुन्तविद्याश्रमस्तथा । तस्य निर्वहणाद्दृष्टाद्भूभुजो हास्यतां ययौ । १८०
अमोघपतनान् प्रासान्योग्यान्सङ्ग्रामकर्म्मसु । शृगालमृगयासक्त्या स हि श्लाघ्यानमन्यत ।
तं वृतं वागुरावाहिडोम्बाटविकपेटकैः । पर्य्यटन्तं श्वभिः सार्द्धमपश्यन्सततं जनाः ।
तस्य दामोदरारण्यलक्ष्मानशिमिकादिषु । स्थानेषु क्रोष्टुमृगयारसिकस्य वयोऽगमत् ।
अथ कृष्णचतुर्दश्यां स कुर्व्वन्मृगयां नृपः । ज्वालामपश्यत् क्रोशन्त्याः शृगाल्या निर्गतां मुखात् ।
तदालोकनसञ्जातसन्त्रासाकम्पितस्ततः । लूताभयज्वरेणाभूत्परोतो मृत्युहेतुना । १८५
मर्त्तुं ययौ च वाराहचेत्रं यत्र विधायकः । श्रीकण्ठचेममठयोराराशोहुष्कपुरान्तिके ।
मसूरविदलाकारलूताक्षिप्तकलेवरः । पौषे चाब्दे चतुस्त्रिंशे नवमेऽब्दे सिते मृतः ।
चेमगुप्तात्मजः क्ष्माभृदभिमन्युरभूत्ततः । शिशुर्निस्त्रिंशधर्म्मिण्या दिद्दादेव्यानुपालितः ।
मन्त्रिविग्रहशङ्कान्तमुख्यकर्म्माधिकारिणः । निःसाध्वसं राजवधूमबन्ध्यशपथैर्व्यधु ।
अभिमन्यौ चितिं रचायकस्मादेव दारुणः । तुङ्गेश्वरापणोपान्तादुज्जगाम हुताशनः । १९०
वर्धनस्वामिपार्श्वस्थभिक्षुकीपारकावधिः । वेतालसूत्रपातस्थान् स ददाह महागृहान् ।
डोमचण्डालसंस्पृष्टभूपसम्पर्कदूषितान् । दग्ध्वा महागृहान्वह्निर्भुवः शुद्धिमिवाकरोत् ।
रक्षिषी क्ष्मापतेर्भ्राता स्त्रीस्वभावादिमूढधीः । सारासारविचारेण लोलकर्णी न पस्पृशे ।
राज्ञः सुतार्पणाद्दृढवैरा सख्या पुरा यतः । पतिवत्नीव सा सार्द्धं फल्गुणेनाप्यमन्त्रिणा ।
पत्यौ मृते सपत्नीनां दृष्ट्वानुसरणं ततः । दम्भेनामुमुमूर्षन्तीमनुमेने स तां द्रुतं । १९५

निषिषेधानुबन्धात्तु सानुतापां चितान्तिके। कृपालुर्मरणादेताममात्यो नरवाहनः।
अतोनिसर्गपिशुनो रक्तस्तां मन्युदूषिताम्। फल्गुणाद्राज्यहरणाशङ्कां राज्ञीमजिग्रहत्।
विरागशंसिभिर्लिङ्गैस्तां ज्ञात्वा विषमाशयां। समन्युं साखिलामात्यां फल्गुणोऽप्यास्त शङ्कितः।
स हि सर्वाधिकारस्थः सर्वस्याचिरतोऽभवत्। दीप्यमानोऽधिकं मन्त्रशौर्य्योत्साहादिभिर्गुणैः।
अस्योनि क्षेमगुप्तस्य गृहीत्वा जाह्नवी गते। पुत्त्रे कर्दमराजाख्ये प्रबलैरन्वितो बलैः। २००
तत्प्रत्यागमपर्य्यन्तं पर्णोत्से स्थातुमुद्यतः। अविश्वसन्नृपगृहे फल्गुणो वैरिशङ्कितः।
निर्गत्य नगराद्यावत्सभाण्डागारिसैनिकः। काष्ठवाटान्तिकम्प्राप्य तावद्रक्षादिचोदिता।
आकलय्य द्रुतं दिद्दा सनयज्ञ प्रार्थनादिकं। पृष्ठे प्रत्युत याष्टीकांस्तस्य हन्तुं व्यसर्जयत्।
नवावमानखिन्नः स मिलितानन्तसैनिकः। प्रत्यावृत्त्य ततो मानी वाराहं क्षेत्रमाययौ।
श्रुत्वा समेतसैन्यं तं प्रत्यायातं प्रतापिनं। आस्कन्दशङ्किनी दिद्दा सामात्या समकम्पत। २०५
तस्मिन् क्षेत्रे गतं शान्तं विलप्य स्वामिनं चिरं। वराहपादसविधे तेन शस्त्रं समर्पितं।
द्रोहसम्भावनापापं शस्त्रत्यागेन मन्त्रिणा। स्वस्य सम्मार्जितं तेन राजमातुश्च साध्वसं।
युक्तायुक्तविचारवाह्यमनसः सेवा महद्देशसं क्रुद्धेऽस्मिन् प्रतिकारकर्म्मगहनद्रोहापवादावहं।
येन न्यूनगुणे दृशोपकरणीभावोऽपि तस्मै परं कोपः कोऽपि विवेकिनः समुचितः शास्ताय शस्ताय वा।
पर्णोत्समेव शनकैः ससैन्ये फल्गुणे गते। विगताध्यापका बाला इवामोदन्त मन्त्रिणः।
योगक्षेमौ चिन्तयन्तो क्षेमगुप्तवधूरपि। अनिशं मज्जागार स्वयं कण्टकपाटने। २१०
राज्यप्रार्थी पर्व्वगुप्तो मन्त्रिणौ कोशपोषिणौ। अजिग्रहत्करौ पूर्व्वं पुत्र्योर्यौ च्छोजभूभटौ।
तयोः प्रजातौ तनयौ ख्यातौ महिमपाटलौ। अवर्द्धिषातां यौ राजमन्दिरे राजपुत्त्रवत्।
तौ तत्रावस्थिताविव तत्कालं राज्यलालसौ। संमन्त्र्य समगंसातामुद्दामैर्हिमकादिभिः।
बलिनौ तावबलया राज्ञ्यापास्तौ नृपास्पदात्। समन्यू स्वगृहाद्रास्तां यावत्तत्रगतागतौ।
एकतः पृष्ठतः प्रादान्महिमो निर्गतस्य सा। निर्वासनाय याष्टीकांस्तावत्युत्कटवेतना। २१५
॥ युग्मं ॥ शक्तिसेनाभिधानस्य श्वशुरस्य निवेशनं। प्रविवेश स तज्ज्ञात्वा तं ते तत्रापि दुद्रुवुः।
शक्तिसेनेन याष्टीकाः सान्त्विता नाचलन् यदा। तदा भीतस्य जामातुर्व्यक्तं प्रादात्स संश्रयं।
तं लब्धसंश्रयं प्राप हिमकोमुत्कलस्तथा। एरमन्तकनामा च परिहासपुराश्रयः।
श्रीमानुदयगुप्ताख्योऽप्यन्दताकरनन्दनः। ललितादित्यपुरजा यशोधरमुखास्त्रपि।
एकैकं तं मिथः सैन्यैर्भुवनक्षोभकारिणः। सम्भूय चक्रुर्दैराज्यं महिमः पक्षमाश्रिताः। २२०
तस्मिन्महाभये दिद्दापक्षं मन्त्री सबान्धवः। एकएव तु तत्याज नाद्रोही नरवाहनः।
प्रवर्द्धमानपृतना योद्धुं वद्धोद्यमास्ततः। पद्मस्वाम्यन्तिकं प्रापुर्दीप्यमानायुधा द्विषः।
अथ शूरमठे दिद्दा विसृज्यात्मजमाकुला। आपच्छान्तिक्षमांस्तांस्तानुपायान्समचिन्तयत्।
ललितादित्यपुरजान्द्विजान् स्वर्णेन भूरिणा। ढौकनं स्वीकृत्य विदधे रिपूणां सङ्घभेदनं।

एकाक्षेपेऽखिलैः कोपो विधेय इति वादिभिः। महिमः पोतकोशेस्तैः सन्धिर्देव्या समं कृतः। २२५.
गोष्पदोल्लङ्घने यस्याः शक्तिर्नाज्ञायि केनचित्। वायुपुत्रायितं पंग्व्या तया सद्वाब्धिलङ्घने।

यत्सङ्ग्रहो रत्नमहोपधीनां करोति सर्व्वव्यसनावसानं।
त्यागेन तद्यस्य भवेन्नमोऽस्तु चित्रप्रभावाय धनाय तस्मै।

उल्कोचकाञ्चनादानेऽप्युच्चान्ध्यायन्त्युपक्रियां। दिद्दा यशोधरादिभ्यः कम्पनादि समार्पयत्।
अभिचारं महिमस्य कृतवत्यामितैर्दिनैः। मण्डले खण्डिताञ्चलं दिद्दाया समजृम्भत।
कदाचित् ढक्कमाख्यस्य शाहेशस्योपरि क्रुधा। सत्रासं वंशजैर्यात्रां कम्पनाधिपतिर्ददौ। २३०
तद्देशं निम्नगाशैलदुर्गं प्रविशता जवात्। अखण्डशक्तिना तेन बलादग्राहि थक्कनः।
स कृतप्रणतेस्तस्य करमादाय भूपतेः। अभिषेकाम्बुभिस्त्यक्ते श्रीलनाथायनं पुनः।
लब्धप्रवेशः समये तस्मिन् रक्कादिभि. खलैः। कम्पनाधिपतौ राज्ञा विद्वेषोऽग्राहि मूढया।

उर्वीपतेश्च स्फटिकाश्मनश्च शीलोज्झितस्वोदयस्य चान्तः।
असन्निधानात्सततस्थितीनामन्योन्यराग. कुरुते प्रवेशं।
स्वचित्तसम्यादिव चोवदन्तो धूर्ता वितन्वन्ति मनः प्रवेशम्।
पृथग्जनानां गणिकावधूनां विटाः प्रभूणामपि गर्भचेटाः। २३५

द्रोगधायं थक्कनं रचन्धनादायीति पैशुनं। तथ्यमेव तदीयं सा स्वयं वादादमन्यत।
अथ स्ववसतिं प्राप्ते कम्पनेशे जयोर्जिते। याष्टीकान् व्यसृजद्दिद्दा स्फुटं निर्व्वासनोद्यता।
तदाक्षेपं समाकर्ण्य स्मरन्तः कोशवेदिनं। ते हिम्मकेरसत्ताद्याः पूर्व्ववद्विक्रियां ययुः।
नरवाहनमुख्यास्तु राज्ञीपक्षं न तत्यजुः। विभेदं पूर्व्ववत्प्राप देवं निजबलं पुनः।
प्रविष्टेषु ततः कोपात्पुरं शुभधरादिषु। भट्टारकामठे दिद्दा भूयः पुत्त्रं व्यसर्जयत्। २४०
दत्तार्गले नृपगृहे स्थितां तां दैवमोहिताः। तं तदैव विना पुत्त्रं विमूढा नोदपाटयन्।
राज्ञ्याः सङ्कटे लोकः परस्मिन्नेव वासरे। यद्बलेन तदा स्थैर्य्यं सा किञ्चित्समदर्शयत्।
जयाभट्टारिकापार्श्वाद्यावच्छूरमठान्तिकं। व्याप्य स्थितैर्द्विपत्सैन्यैरथ प्रवर्त्तते रणं।
राजधानीं राजसैन्ये प्रविष्टे चाभविद्रुते। सिंहद्वारे घटाबन्धमेकाङ्गाः समदर्शयन्।
शरीरैर्निरपेक्षास्ते भीतं संस्तभ्य तद्बलं। अधावन्विद्विषां सैन्यं चेलुः केचिच्च शत्रवः। २४५
तस्मिन्नवसरे राजकुलभट्टः समाययौ। तूर्य्यघोषैर्द्विषां सैन्यं भिन्दन्नानन्दयन्निजं।
तस्मिन् प्राप्ते द्विषां सैन्यं विननाश विनश्वरं। न द्रोहं विनयं जातु सहन्ते शस्त्रदेवताः।
लोटयन्नायमान् मन्थान् स्फोटयन्नुपलानिति। यः ख्यातिमावहत्तस्या हिम्मको भीमविक्रमः।
तस्यापि ना राजकुलभट्टदेहार्द्धपातिना। चर्म्मासं न तु चेट कंकटस्यातिसङ्कटे।
विशेष्य तदसाध्यं सैन्ये दैन्यं समाश्रिते। अपाति हिम्मकोयोधैरवाप्यपि यशोधरः। २५०
गदाप्यायीन्स्फुरन्संख्ये यशेरमत्तकः क्षणं। स भग्नास्थियुतो वाहाञ्जीवग्राहमग्राहत।

नाजौ तैरेथ्यताधातुं यः श्रीमान् राजवान्धवः। जगामोदयगुप्तः स क्वापि त्यक्त्वा महाहवं।
इत्थं लब्धजया राज्ञी तत्क्षणान्न्यग्रहीद्रुषा। यशोधरं शुभधरं मुकुलञ्च सवान्धवं।
काश्मीरिकाणां यः श्राद्धशुल्कोच्छेत्ता गयान्तरे। सोऽप्येरमन्तकः शूरः परिहासपुराश्रयः।
वद्ध्वा महाशिलां कण्ठे वितस्ताम्भसि पातितः। स्वदुर्नयफलं देव्याः सकोपेनानुभावितः। २०५
ये सप्तसप्तताद्वर्षाद्गोपालनृपात्पुरा। अभिमन्युं यावदासन् षोडशानां महीभुजां।
वर्षषष्टिं प्रतापायुः श्रीहराद्रोहवृत्तयः। ते क्षिप्रं मन्त्रिणः सर्व्वे सान्वयाः सहानुगाः।
भीमभ्रूभङ्गमात्रेण दिद्दादेव्या सकोपया। आसन्निःशेषतां नीता दुर्गयेव महासुराः।
॥ तिलकं ॥ अभवन्विहिता राज्ञा तानुत्पाट्य मदोद्धतान्। रक्कादयः कम्पनादिकर्मस्थानाधिकारिणः।
इत्थं मन्त्रिप्रकाण्डः स रण्डामाखण्डलोपमां। अखण्डमण्डलां चक्रे निर्द्रोहां नरवाहनः। २१०
राज्ञी कृतज्ञभावेन सापि मन्त्रिसभान्तरे। तमाजुहाव निर्द्रोहं स्वयं राजानकाख्यया।
सुप्ते सुष्वाप निष्पन्नभोजनेऽश्निन्नभुक् सा। हृष्टे जहर्ष निर्व्विण्णे निर्विवेदानुकूल्यतः।
आरोग्यान्वेषणं शिक्षाप्रार्थनां गृहवर्त्तिनः। सात्मवस्तुविसर्गञ्च नाकृत्वा तस्य पिप्रिये।
अभूतां युग्यवाहस्य कुष्यनाम्नः सुतौ पुरा। यौ सिन्धुभुय्यौ तज्ज्यायान् सिंधुर्लालितकः किल।
पर्व्वगुप्तगृहे भूत्वा गञ्जाध्यक्षे स्थिते क्रमात्। लब्ध्वा गञ्जाधिकारित्वं तस्या राज्ञाः सखैरभूत्। २१५
रुद्ध्वा तथैव गञ्जेशो नवायामविधायकः। कर्मस्थानस्य निर्माता सिन्धुगञ्जाभिधस्य यः।
प्रायेशा हृतराज्यस्ते वर्त्तते नरवाहनः। इति नैयधियं राज्ञीं सोऽभ्यधत्त दुराशयः।
मा तथेत्यब्रवीद्यावत्तावत्प्रेम्णा स जातुचित्। मन्त्री तां प्रार्थयामास भोक्तुं निजगृहागमं।
सा सानुगान्तत्र यातां भुवन्त्यामेव वक्ष्यति। इत्युक्त्वा सिन्धुनापृच्छत्तत्कर्त्तव्यं भयाकुला।
अनुक्तैव प्रचलिता राजधानीमलक्षिता। स्त्रीधर्मिण्यस्मि जातेति पश्चादातां व्यसर्जयत्। २२०
संप्रवृत्तोपचारायां गतायां तत्पयात्तया। राज्ञां नाशममात्यस्य मोतिसम्बिच सा ययौ।
तयोस्ततः प्रभृत्येव निष्कृष्टस्नेहयोः कृतम्। चाक्रिकैरतिच्छद्मवे तिलपिण्याकयोरिव।
कुलिशं सर्व्वलोहानामश्मशां शैलमेतवः। अभेद्याः प्रतिभाव्यन्ते न किञ्चिदसतां पुनः।
ये वालादपि संमूढाः प्राज्ञाः सुरगुरोरपि। तेषां न विद्मः किन्तावन्निर्माणपरमाणवः।
विद्यासोज्झितधीः शिशून् कलयते काकोऽन्यदीयान्निजान् हंसः क्षीरपयोविभागकुशलस्तत्सत्यमाराद्धनात्।
लोकावेक्षणतीक्ष्णधीः खलगिरं जानाति सत्यां नृपो धिग्वैदग्ध्यविमुग्धताव्यतिकरस्पृष्टं विधानं विधेः। २२५
मूढाचरणहीना सा श्रुतिवाह्यतया तया। वैधेयविप्रप्रकृतिरिव मायादिगर्हिता।
उद्वेजितस्तया प्रायस्तया स नरवाहनः। यथा विमाननोत्तप्तः स्वयं तत्याज जीवितं।
प्रकुप्यत्यप्रतीकार्य्ये स्वतेजस्तप्तचेतसां। शरणं मरणं त्यक्त्वा किमिवान्यद्यशोर्थिनां।
शशिहीनेव रजनी सत्यत्यक्तेव भारती। विरराज न राजश्रीर्नरवाहनवर्जिता।
सा क्रौर्य्याभ्यासविषमा हन्तुं विततविक्रमान्। संग्रामडामरमुखान् समीपस्थानचिन्तयत्। २३०

निजमुत्तरघोषं ते तन्नयेन विनिर्गताः। कल्यकद्दारपत्यादीन् छागरव्यीन् व्यपादयन्।
उत्पित्सभीतया राज्ञ्या त्यक्ता परिभवत्रपां। ते यत्नात्समघट्य त मानः स्वार्थार्थिनां कुतः।
स्थानेश्वरादिभिर्मुख्यैर्डामरै रितरैः समम्। ते भीताः पुरतस्त्याः पुनरेत्य जजृम्भिरे।
अथ तद्भीतया राज्ञ्या रक्षे समयनागते। आनीतः फल्गुणो भूयो वीरार्थिन्या निजान्तिकं।
राजकार्य्याणि कुर्व्वाणः स भूयः शस्त्रमग्रहीत्। न्यस्तमप्यस्य दुस्त्यजा भोगवासना।
मद्दिमा राजपुर्य्यादिजयिनस्तस्य पश्चिमः। अद्भुतो दृढबन्धव्या अवस्तद्दवाभवत्।
अभूदुदयराजस्य देवीभ्रातुरतिप्रियः। यः सहाये ऽक्षपटले जयगुप्ताभिधः सुधीः।
अन्येऽधिकारिणस्तेन सहिता. क्रूरवृत्तयः। कश्मीरेषु व्यधुर्लुण्ठं दुष्कृतैस्तदुपार्जितैः।
दौःशील्यभाजो मातुश्च पापभिर्व्विधुरीकृतः। अभिमन्युः चये तस्मिन् चयरोगेण पस्पृशे।
पण्डितः पुण्डरीकाक्षो विद्युत्पुञ्जैरुपस्कृतः। कृतश्रुतः स वैदुष्यतारुण्याभ्यां विदिद्युते। ९०
तया विप्रङ्खप्रकृतेस्तस्य दुष्कृतसङ्गमः। शोषाधायी शिरीषस्य रवितापइवाभवत्।
वर्धमानः प्रजाचन्द्रस्तृतीयस्यां स कार्तिके। षट्त्रिंश्चाचत्वारिंशाब्दे यस्तो नियतिराङुणा।
तत्पुत्रो नन्दिगुप्तस्तु बालप्रक्षे निजासने। दृढरूस्तनयशोकस्तु दिद्दाया हृदये पदं।
सा शोकपिहितक्रौर्य्या तस्थौ प्रशमशीतला। रविरत्नशलाकेव ध्वान्तच्छन्नोष्मवैकृता।
ततः प्रशत्यहुताभिस्तस्या धर्मप्रवृत्तिभिः। कुकर्मभिरुपोढापि लक्ष्मीः प्राप्ता पवित्रतां। ९५
नगराधिपतिर्भुय्यः सिन्धुभ्राता शुभाशयः। तदीयधर्मचर्चायां बभूव परिपोषकः।
सा तेनोत्पादितानर्घजनरागागतैनसा। ततः प्रशत्यभूद्देवी सर्व्वलोकस्य सम्मता।
राज्ञः सर्मचित्रः सत्यन्दुःप्रापो नुतचण्डिमा। कुर्य्याद्यः सुखसेव्यत्वं हेमन्तइव भास्वतः।
सा निर्म्ममौ विपन्नस्य सूनोः सुकृतवृद्धये। अभिमन्युस्वामिनोऽभूदभिमन्युपुरस्य च।
अथ दिद्दापुरोपेतौ दिद्दास्वामी तया कृतः। मठश्च मध्यदेशीयलाटसौडोचसंश्रयः। १००
भर्तुः कङ्कणवर्षस्य पुण्योत्कर्षाभिवृद्धये। चकार कङ्कणपुरं रमणी स्वर्णवर्षिणी।
श्वेताश्मलसदंशान्यं सा दिद्दा स्वामिनं व्यधात्। धवलं चरणोद्भूतगङ्गाम्भःस्नपनैरिव।
चक्रे काश्मीरिकाणाञ्च दैशिकानां समाश्रयं। तयाप्युत्सचतुःशालो विहारश्चारुसम्पदा।
श्रीसिंहस्वामिनं नाम्ना सिंहराजस्य सा पितुः। मठञ्च विदधे स्थित्यै दैशिकानां द्विजन्मनां।
मठप्रतिष्ठादेवगृहनिर्म्माणाद्यैः स्वकर्मभिः। सपत्निपतनप्रक्षे वितस्तासिन्धुसङ्गमः। १०५
तेषु तेषु प्रदेशेषु किमुक्तैर्व्विभिः शुभैः। सा प्रतिष्ठा व्यरचयचतुःषष्टिमिति श्रुतिः।
जीर्णोद्धाराः कृता देव्या सुप्रप्राकारमाण्डसाः। प्रायः सुरग्रहाः सर्व्वे शिलावप्रावृताः कृताः।
क्रीडाधनसमणे गत्यापल्यातिवियदवादिनी। वल्गाभिधा वैवधिकी वल्गामठमकारयत्।
गोदांसिवसमौसभागपि तिमिः सक्षः स्वकुल्याभने यातायात परते शिखी धनपयोसाधासनोऽप्यस्यहं।
विद्वत्ताम्रवधारिणः प्रकटितध्यानोऽपि भुङ्क्ते बकः सत्कर्म्माचरणेऽपि दोषविहतौ न प्रत्ययः पापिनां।

वर्षिणी वर्षमात्रेण शान्तशोका बभूव सा। भोगोत्सुकाभंके तस्मिन्नरि व्यभिचारकृत्।
वर्षएकान्नपञ्चाशे नीतः पक्षे सिते क्षयं। स मार्गशीर्षद्वादश्यामभार्गव्यग्रया तया।
पौत्त्रस्त्रिभुवनो नाम मार्गशीर्षे सितेऽहनि। पञ्चमेऽप्येकपञ्चाशे वर्षे तद्दत्तया हतः।
अथ मृत्युपथे राज्ञ्याशि स्वैरं निवेशितः। क्रूरया चरमः पौत्त्रो भीमगुप्ताभिधस्तया।
तस्मिन्नवसरे वृद्धः फल्गुणोऽपि व्यपद्यत। निगूढकौर्य्यदोःशील्या दिद्दा यद्गौरवादभूत्।
बभूव साथ सुस्पष्टदुष्टचेष्टाशतोत्कटा। भ्रष्टवल्कपटा मत्तदन्तिमूर्त्तिरिवोत्कटा।
महाभिजनजातानामपि हा धिङ्निसर्गत.। सरितामिव नारीणां वृत्तिर्निम्नानुसारिणी।
स्रोतोधिराज्यमधिगम्य विराजमाना सिन्धोः प्रसूय कमलाल्पपयोनिकेते।
जाते सरस्यविरतं जलजे प्रसक्ता नार्य्यो महाभिजनजा अपि नीचभे याः।
खशस्य वह्विवासाख्यपर्णोत्सग्रामजन्मनः। बाणस्य सूनुस्तुङ्गाख्योऽविशन्महिषपालकः।
प्रविष्टो जातु काश्मीरांल्लेखहारककर्मणा। सुगन्धिसीहप्रकटनागाद्द्र्यिकृषणमुखैः।
पञ्चभिर्भ्रातृभि. सार्धं सन्धिविग्रहकान्तिके। देव्यादृग्गोचरं यातो हृदयावर्ज्जकोऽभवत्।
॥ तिलकं ॥ रहःप्रवेशितो दूत्या समाव्यर्थबलाद्युवा। सम्भुक्तभूरिजारायाश्रपि तस्याः प्रियोऽभवत्।
तुङ्गानुरागिणी राज्ञी पापा लज्जोज्झिता ततः। रसदानेन वैमुख्यभाजं भुय्यमघातयत्।
धिङ्निर्व्विचारान् कुपतीन् येषां विषमचेतसां। फलशून्या स्तुतिस्तोषे दोषे प्राणधनक्षयः।
रक्कोजोदेवकलशोवेलावित्तः कृतस्तया। भुय्याधिकारे कौटिल्यामाचरन्निस्तपोविटः।
येऽपि कर्द्दमराजाद्या वीराद्वारादिनायकाः। तेऽपि कौटिल्यमभजन्नन्येषां जननैव का।
चतुःपञ्चानि वर्षाणि तिष्ठन्नृपगृहे शिशुः। भीमगुप्तोऽभवद्यावत्किञ्चित्प्रौढीभवन्मतिः।
राज्यव्यवस्था यावच्च पितामह्यास्य वृत्तयः। दुःखिताः प्रत्यभायन्त सर्व्वाप्यास्तस्य चेतसि।
अङ्गशीलविहीनाया निर्घृणाया निसर्गतः। तावन्नेर्ष्यधियस्तस्याः सचिन्त्यः समपद्यत।
अभिमन्युवधूस्तं हि चक्रे गूढप्रवेशितं। महाभिजनजन्मत्त्वं तस्मात्सोऽभूत्तयाविधः।
सा देवकलशेनाथ दत्तमन्त्राविशङ्किता। त्रपोज्झिता स्पष्टमेव भीमगुप्तमबन्धयत्।
निगूढे नन्दिगुप्तादिद्रोहे लोकस्य योऽभवत्। सन्देहः स तया तेन व्यक्तकृत्येन वारित.।
ताभिस्ताभिर्यातनाभिर्भीमगुप्तं निपात्य सा। षट्पञ्चाशेऽभवद्वर्षे स्वयं क्रान्तनृपासना।
प्रवृद्धरागया राज्ञ्या दत्तोद्रेको दिने दिने। सर्व्वाधिकारी तुङ्गोऽथ बभूवाधारिताखिल.।
सभ्यात्वकेन तुङ्गेन मौलिताःपूर्व्वमन्त्रिणः। राज्यविप्लवमाधातुमयतन्त विरागिणः।
तेऽथ संमन्त्र्य कश्मीरानानिन्युः क्रूरपौरुषं। उग्रं विग्रहराजाख्यं दिद्दाभ्रातुः सुतं नृपं।
सुप्तागमहारान् स प्राप्तो विधातुं राज्यविप्लवं। धीमान् प्रायोपवेशाय द्रुतं प्रावेशयद्द्विजान्।
विहितैक्येषु विप्रेषु लोकः सर्व्वोऽपि विप्लुतः। अभियेयान्वहं तुङ्गं तत्र तत्र जिघांसया।
कस्मिंश्चित्पिहितद्वारो तुङ्गं प्रहाय वेश्मनि। दिनानि कतिचिद्दिद्दा तस्थावास्कन्दशङ्किनी।

तयो स्वर्णप्रदानेन सुमनोमत्तकादयः। ब्राह्मणाः समग्टह्णन्त ततः प्रायोन्यवर्त्तत।
एवन्तस्मिन्महाक्षेपे तया दानेन वारिते। ययौ विग्रहराजः स भग्नशक्तिर्यथागतं। १४०
अथ दार्व्वां समासाद्य तुङ्गाद्याः प्रभविष्णवः। शनैः कर्दमराजादीञ्शुर्व्विहितविश्लवान्।
सुलक्क्नो रक्कसूनुस्तथान्ये मुख्यमन्त्रिणः। दृष्टैर्निर्व्वासितादेशात्तुष्टैस्तैः सम्प्रवेशिताः।
प्रवर्द्धमानवैरेण गूढदूतैर्विसर्जितैः। प्रायस्विग्रहराजेन ब्राह्मणाः कारिताः पुनः।
उत्कोचादित्सया विप्रा भूयः प्रायविधायिनः। लब्धस्थैर्य्येण तुङ्गेन सन्निपत्यापहस्तिताः।
तेषां मध्ये वसन् गूढमादित्याख्यः पलायितः। हतोविग्रहराजस्य प्रियः कटकवारिकः। १४५
प्रवलचतः प्रतीहारो वत्सराजाभिधः पुनः। न्यङ्कोतकादिभिर्धावञ्जीवग्राहमग्टह्यत।
ते स्वर्णग्राहिणोविप्राः सुमनोमत्तकादयः। सर्व्वेऽपि वद्धास्तुङ्गेन कारागारं प्रवेशिताः।
अथ फल्गुणनाशेन दृप्ते राजपुरीपतौ। तां प्रत्यारब्धिरभवत्क्रुध्यतां सर्व्वमन्त्रिणां।
निपत्य सङ्कटे वीरः पृथ्वीपालाभिधस्ततः। चक्रे राजपुरीराजकाश्मीरिकवलक्षयम्।
शिपाटको हंसराजोविपन्नौ तत्र मन्त्रिणौ। चन्द्राद्रेर्दुर्गतिन्दृष्ट्वा मरणं यत्र भेषजं। १५०
अथान्येन पथा कश्मात्तुङ्गः सार्धं सहोदरैः। हत्वा राजपुरीं वीरः प्रविश्य सहसादहत्।
ननाश तेनोपायेन पृथ्वीपालः सपार्थिवः। शेषाणां मन्त्रिणां सैन्यं प्राप मुक्तिश्च सङ्कटात्।
अवशः सन्स भूपालस्तुङ्गाय प्रददौ करं। एवं कृतं ततस्तेन नष्टस्यार्थस्य योजनं।
प्रविश्य नगरं तुङ्गस्ततः स्वीकृतकंपनः। चकार डामरग्रामसंहारं सिंहविक्रमः।
दिद्दाप्युदयराजस्य भ्रातुः पुत्रं परीक्षितं। चक्रे संग्रामराजाख्यं युवराजमशङ्किता। १५५
सा हि सर्व्वान् शिशुप्रायान् पुरो भ्रातृसुतान् स्थितान्। परीक्षितुं मुमोचाग्रे पाले वत फलावलिं।
ग्रहः कियन्ति कः प्राप्तुं फलान्यत्रेतिवादिनी। साभवद्राजपुत्राणां तेषां कलहकारणं।
ग्टहीतान्यफलांस्तत्प्रहारांस्तान्ददर्श च। सङ्ग्रामराजं त्वस्वल्पफलभाजमविक्षतं।
अनन्तफलसम्प्राप्तावक्षतत्वे च कारणं। सविस्मयं तया पृष्टस्स तामेवं तदाब्रवीत्।
अन्योन्यकलहव्यग्रानेतान् कृत्वा पृथग्जनान्। समवायं फलान्यस्मिन्नचाभूवमपरिक्षतः। १६०
श्रमने संप्रविश्यान्यान् स्थितानामप्रमादिनां। न काः क्लेशविहीनानाङ्घटन्ते स्वार्थसिद्धयः।
श्रुत्वेति तस्य सा वाचमप्रमत्तत्वसूचिकां। भीरुर्भीरुस्वभावेन राज्येऽमन्यत योग्यतां।
शूरस्य लभ्यं शौर्य्येण भीरोर्भीरुतया यथा। कार्य्यं हि प्रतिभात्यन्तर्न भवेच्च तदन्यथा।
यद्दृष्टं वस्तुरम्यतमपि भवेच्छीलमार्गेण कपीनां सेव्यं शुद्धौ सलिलमनलयाग्निशौचिणकानां।
शक्ताभावा विदधति यथा भाविनः कार्य्यसिद्धिं तद्वन्तेषां क्वचन सहजं वस्तु तेनास्ति किञ्चित्।
नाडामेराघमौत्यन्दाग्रभाद्राष्टमीदिने। देव्यां दिवं प्रयातायां युवराजोऽभवन्नृपः। १६५
क्षोणीपमध्येन भूपालवंशानां भुवनाद्भुतः। तृतीयः परिवर्त्तोऽयं वर्त्ततेमुत्र मण्डले।

निनष्टकण्टककुल वसुसम्पदाढ्य आसातवाहकुलमाप महीतलेऽस्मिन्।
दावाग्निदग्धकुतरौ जलदाम्बुसिक्ते चूतप्ररोह इव केलिवने महर्द्धिम्।
अथ स मृदुतयान्तर्गूढधैर्य्यानुभावः सुखमवनिमशेषां दोष्णि संग्रामराजः।
विषकुलनिभभीमानिह्नुतप्राणसारः फणकुल उरगाणामोघ्रितेव न्यधत्त।
इति श्रीकाश्मीरिकमहामात्यचम्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां षष्ठस्तरङ्गः॥
अत्र वर्षचतुर्ष्वष्टमासेऽप्यथ दिनेषु च। अष्टस्वभूवन् भूपाला इस भूभोगभोगिनः। १७०

## ॥ अथ सप्तमस्तरङ्गः ॥



मातुस्तेऽजनि निर्मिते पितृकुले श्लाघ्या तनुर्वेधसा त्वं सन्ध्याहितसन्निधिर्मम जपारक्तेऽधरे खेलसि।
सन्ध्यावन्दनसाभ्यसूयगिरिजास्तुत्येद्दृशैर्व्याकुलैर्यैः सन्ध्यामपि वन्दते स्म स जगत्प्रीणातु गौरीश्वरः।
क्ष्मां क्ष्मापतिर्विभिन्नमनसा च भुजेन च। गाम्भीर्य्येण च शक्त्या च सोऽजयद्वाहिनीपतीन्।
जज्ञे राज्ञः क्षये भङ्गो यैस्तुङ्गस्य तदाखिलैः। दिनश्रीविगमे सन्ध्याप्रसङ्गस्येव रागिणः।
तत्तत्प्रतिभटाटोपत्रोटनात्प्रत्युतास्य ते.। उदयो ददृशे शश्वद्गतिं कोवेत्ति वेधसः।
॥ युग्मम् ॥ नृपेण जातश्चातेय शूरः शक्तिसमन्वितः। सर्व्वाधिकारयोग्योऽगात्तदा चन्द्राकरः क्षयम्।
अन्ये भीमतिकाग्रामदिवि रम्योरुसम्पदः। पुण्याकरस्य तनयाः शूरा शान्तिं प्रपेदिरे।
समर्थमन्त्रिविरहादनिच्छन्नपि वेधसा। निन्ये गत्यन्तरत्यक्तस्तुङ्गपक्षं क्ष्मापतिः।
संग्रामराजतुङ्गादीन्देवी क्रोशमपाययत्। मुमूर्षन्ती पुरा स्वातुमद्रोहेणेतरेतरम्।
क्षेमासहोमहीपालस्ततः कार्य्यवशादपि। तुङ्गन्यस्तप्रजाकार्य्यो भोजाभ्यासालसोऽभवत्।
पर्य्याप्तं तस्य भीरुत्वं कियदन्यत्प्रकाश्यतां। असमैर्य्यैनसम्बन्धैर्यक्षमे यशसः क्षतिम्।
साहायकार्थी यत्पादाच्छ्रीशौर्य्यादिमते सुताम्। दिद्दामठाधिपतये प्रेमनाम्ने सलोठिकाम्।
क लोकोद्वहनोन्नद्धभूभृद्योग्या नृपात्मजा। प्रतिग्रहजलक्लिन्नपाणिः क्वाल्पमनाद्विजः।
अथ तुङ्गादिभिश्चाय प्रायं ब्राह्मणमन्त्रिणः। परिहासपुरे विप्रपारिषद्यानकारयन्।
विप्रमन्त्रिमतैक्येन कृतो राज्ञः प्रविश्य। दु सहापत्रमानाग्निसमागमसमोऽभवत्।
राज्ञोऽप्युत्पाटने मन्त्रैः कथंचित्प्रार्थितोद्विजैः। मतिः क्षान्तिवरमाये तुङ्गनिःसारणे कृता।
राज्ञस्तुङ्गादिभिर्यैतच्चावत्तेभ्यः प्रतिश्रुतम्। अन्यत्प्रार्थयितुं सम्प्राप्तावत्ते शठयुद्धय.।
तुङ्गास्कन्देन विप्रोऽयं योग्यतस्तद्वृ वयम्। तं निर्दहामहत्युक्त्वा शवः कोऽप्यरघट्टतः।
नेरक्कृत्य यदानीतः शठैस्तुङ्गगृहान्प्रति। क्षेमहोमाय विहितान्याशयोत्यापिताभवत्।

तया प्रतीपपातिन्या निःशौचानां द्विजन्मनाम् । अकस्मान्निरगाच्छस्त्रविनाशायेत्थिते कलौ ।
तिलकं ॥ ततः पलायिता विप्रा यत्तेषां मन्त्रदोऽभवत् । निगूढं राजकलशस्तद्देश्म प्राविशद्भयात् ।
स व्यक्तीभूतकौटिल्यः सङ्ग्रामं सुचिरं व्यधात् । अपद्वारैस्तु ते विप्राः पलाय्य स्वगृहान् ययुः ।
विजिते राजकलशे समकार्य्या द्विजातयः । मन्त्रिणः श्रीधरसुताः सप्तागत्य व्यधुर्वधम् ।
ते कृत्वा सुमहत्कर्म समाप्तिं समरे गताः । निर्भिद्य मण्डलं सप्त सप्तसप्तेर्द्रुतं ययुः ।
जिनः सुगन्धिसीहेन तेषु शान्तेषु संयुगे । बद्धाथ राजकलशस्तुङ्गेनानायितो गृहम् ।
नीयमानोऽधिरोप्याशु स्कन्दमार्गेषु विद्धतः । तुङ्गस्य युग्यवाहैः स नर्त्तितोपहृतायुधः ।
अन्योऽपि भूतिकलशो नाम मन्त्री विनिर्जितः । सुतेन राजकाख्येन सह शूरमठं ययौ ।
क्रमात्सुगन्धिसीहाद्यैर्मुक्ता करुणया ततः । स पुत्त्रः सेवमानाश्रितसौदिशान्तरं ययौ ।
परिहासपुरादेवं जातोयोद्देशविप्लवः । स दैवयोगात्तुङ्गस्य शुभाय प्रत्युताभवत् ।
ततः प्रसादिते राज्ञि गुणदेवेन मन्त्रिणा । आययौ भूतिकलशः कृतगङ्गानिमज्जनः ।
पुनर्नृपगृहे तस्मिन् किञ्चिल्लब्धपदे शनैः । तुङ्गं निहन्तुं राज्ञैनं गूढं दूताः प्रयोजिताः ।
ज्ञातवार्त्तेन तुङ्गेन तस्मिन्नर्थे प्रकाशिते । स्वपुत्त्रो भूतिकलशो राज्ञा निर्वासितः पुनः ।
अवष्टम्भं मनाक् लेभे चन्द्राकरसुतः शनैः । योमध्यामत्तकः सोऽपि तस्मिन् काले व्यपद्यत ।
भूत्वा किञ्चित् क्षणं भूभृत्कन्यासम्भोगभाजनम् । राजोपकारकृच्छ्रीमान् प्रेमापि प्रमयं ययौ ।
विवेदिरेऽन्ये गङ्गाद्याः सर्व्वेऽपि नृपतिप्रियाः । अवाशिष्यत भोगाय तुङ्गः सम्राडकः परम् ।
इति योयो हि वृत्तान्तस्तस्य नाशाय शंकितः । स स दैवानुकूल्येन प्रत्युतोद्रेचकोऽभवत् ।
कालक्रमत्रुटितसंश्रयभूः स्वमूलमान्नाथयी तटतरुः सरितोऽम्बुपूरैः ।
..धैः शंक्यते निपततीति वितीर्णदृष्टिस्तैरेव तस्य हि भवेत् स्थितिभूमिदार्ढ्यम् ।
नीत्युज्ज्वलं व्यवहरन् प्रजाराधनतत्परः । प्राक् पुण्यसङ्क्षयात्तुङ्गः शनैरासीत् स्खलन्मतिः ।
यतस्वभाग्यापहाराथ हीनजन्मानमाददे । साहायकाय कायस्थं क्षुद्रं भद्रेश्वराभिधम् ।
विट्वाणिज्यं सौनिकत्वं काष्ठविक्रयितादि च । आरामिकस्य यस्यासीत्कृत्यं वंशक्रमोचितम् ।
कण्ठशोढूष्टपृष्ठोऽथ भाजनार्थमवालगत् । अव्यामर्षी भाण्डवाही यश्च पश्चान्नियोगिना ।
अनन्तराजकार्य्यादिचिन्ताश्रान्तो विधाय तम् । तुङ्गः सहायन्नावुद्ध धंसर्गाङ्गाग्यसङ्क्षयम् ।
धार्म्मिकं तेन धर्म्मोत्कं विनिवार्य्यार्य्यचेतसम् । गृहकृत्याधिकारे स दुष्कृती विनिवेशितः ।
देवगोब्राह्मणानाथातिथिराजोपजीविनाम् । अकालमृत्युर्व्विदधे वृत्तिच्छेदं स दुर्म्मतिः ।
..जीवोऽपि पुष्णाति क्रूरः कापालिको निजान् । भद्रेश्वरस्तु पापोऽभून्निजानामपि जीवहृत
..ेन चैत्रे सर्व्वत्र कृते भद्रेश्वरे प्रभौ । सुगन्धिसीहः प्रययावाषाढे मासि सङ्क्षयम् ।
..लोकं गते तस्मिन् सर्व्वभारसहेऽनुजे । तुङ्गस्त्विन्नात्तमाङ्गल्यं सदैन्योऽमन्यतात्मनः ।
त्रिलोचनपालस्य शाहेः साहायकार्थितः । देशान्ततोमार्गशीर्षे मासि तं व्यसृजन्नृपः ।

राजपुत्रमहामात्यसामन्तादि निरन्तरम्। सैन्यं तमन्वगाद्भूरि भुवनक्षोभनक्षमम्।
आगतेन स तथा शाहिना कृतसत्क्रियः। पञ्चषाणि दिनान्यासीत्तद्देशे स यदोन्मदः।
प्रजागरचरन्यासस्नानाभ्यासादिवासनाः। अभियोगोचिताः शाहिरपश्यंस्तं तदाब्रवीत्।
युग्मं॥ तुरुष्कसमरे यावन्न यूयं कृतबुद्धयः। आलस्यविश्वासात्तावत्तिष्ठतास्मिन् गिरेस्तटे।
एवं त्रिलोचनेनोक्तं सोऽग्रहीन्न हितं वचः। तस्थौ परं समं सैन्यैरुत्सेकादाहवोत्सुकः।
हम्मीरेण तदा सैन्यञ्जिज्ञासार्थं विसर्जितम्। तौषीपारे मितप्रायैस्तत्सौर्व्वावधीद्दलैः।
ततस्माहितोत्सेकमपि शाहिः पुनः पुनः। जगादाहवतत्त्वज्ञः पूर्व्वोक्तामेव संविदम्।
स तस्य नाग्रहीद्वाक्यं रणोत्सुक्यत्रपम्वदः। प्रत्यासन्नविनाशानामुपदेशो निरर्थकः।
प्रातस्ततः स्वयङ्कोपात्तुरुष्कानीकनायकः। सर्व्वाभिसारेणाद्गच्छच्छलाहवविशारदः।
अथ तुङ्गस्य कटकं सहसा भङ्गमाययौ। शाहिसैन्यं परं संख्ये ददृशे विचरत्क्षणम्।
शाहिसैन्ये गतेऽप्यासीज्जयसिंहः स्फुरन् रणे। श्रीवर्धनश्च सङ्ग्रामे विभ्रमार्कश्च डामरः।
घोरे तुरङ्गतुमुले प्रहरद्भिस्त्रिभिर्भटैः। वीरव्रते निजे देशे रचितस्तैर्यशश्चयः।
कस्त्रिलोचनपालस्य माहात्म्यं वक्तुमीश्वरः। निःसंख्या अपि यं संख्ये न जेतुमशकन् द्विषः।
शुशुभे रुधिरासारवर्षी युद्धे त्रिलोचनः। कल्पान्तदहनज्योतिर्व्विसारीव त्रिलोचनः।
स योधयित्वा सङ्ग्रामे कोटीः कङ्कटवाहिनाम्। एकाकी कार्य्यमर्म्मज्ञो निर्ययौ रिपुसङ्कटात्
गते त्रिलोचने दूरमशेषं रिपुमण्डलम्। प्रचण्डचण्डालचमूशलभच्छायमानशे।
सम्प्राप्तविजयोऽप्यासीन्न हम्मीरः समुच्छ्वसन्। श्रीत्रिलोचनपालस्य स्मरन् शौर्य्यमनुपमम्
त्रिलोचनोऽपि संस्थित्य हास्तिकं स्वपदाच्युतः। प्रयत्नोऽभून्महोत्साहः प्रत्याहर्त्तुं जयश्रियम्।
यथा नामापि निर्नष्टं शीघ्रं शाहिश्रियस्तथा। इह प्रासङ्गिकत्वेन वर्णितं न सविस्तरम्।
स्वप्नेऽपि यदसम्भाव्यं यत्र भग्ना मनोरथाः। हेलया तद्विदधतो नासाध्यं विद्यते विधेः।
ईंपत्कृनिःपुत्रे राज्ञः शङ्करवर्मणः। वृत्तान्तवर्णने पूर्व्वममुत्र प्रकटीकृतम्।
स शाहिदेशः सामात्यः सभृत्यपरिच्छदः। किमभूत्किमु वा नाभूदिति सन्दिह्यतेऽधुना।
अवतारं तुरुष्काणां दत्वा क्षेपे महीतले। प्राप्तभङ्गस्ततस्तुङ्गः स्वदेशं प्राविशच्छनैः।
हगालायेव तुङ्गाय स्वभङ्गाय भूपतिः। न तदागमि चुक्रोध सधैर्य्यमदृशाशयः।
किन्तु खेदाय समभूत्तुङ्गाय तत्समीशितुः। परायत्तभयाचित्तं पर्य्योरण्युपतप्यते।
तुङ्गात्मजोऽपि कन्दर्पसिंहः श्रीशौर्य्यगर्व्वितः। राज्योचितं यशहरेस्तस्यादेगपदेशोऽभवत्।
कूटलेखैः चले तस्मिन्नृद्राग्नेयो स भूभुजाम्। भ्राता विग्रहराजोऽपि प्रैरयत्तुङ्गमारणे।
सोमादिस्मरणाद्राज्ञा चिरं दीनायमानधीः। अभीक्ष्णप्रेरणोद्विग्नः प्रेरयत्नमशीत्ततः।
स्वाधीनं कपुरं स गोचरो नः कदाचन। पतेयदि घने तस्मिन् पश्यामः किं विदध्महे।
अन्यदा ध्रुवमाहिलो हन्यादस्मानसौ यतात्। इति कामापहारार्थमुक्तोऽन्तरितोन्नृपः।

तावन्मात्रं वचोवीजभूतं हृदि निधाय ते । विधातुं तदवस्थत्वं तुङ्गस्यासन् कृतोद्यमाः ।
पण्साधाभ्यन्तरे तुङ्गो भूपेनाकारितो गृहात् । ससुतो निर्ययौ दृष्टदुःस्वप्नोऽपि विधेर्वशात् ।
स प्रविश्य नृपास्थानं स्थित्वा राज्ञोऽग्रतः क्षणम् । पञ्चषैः सहितो भृत्यैः प्राविशन्मन्त्रमण्डपम् ।
पश्चात्प्रविष्टास्तत्रैनं पंवमंकरकादयः । अनुक्त्वापि महीपालं तुङ्गं शस्त्रैरपातयन् ।
मन्त्री महारथो नाम योऽभूच्छङ्करवर्मणः । तद्वंश्यस्तुङ्गभृत्येषु श्लाघ्यः सिंहरथः परम् ।
निःशस्त्रो यः क्षणे तस्मिन्परित्राणविधित्सया । हन्यमानस्य तुङ्गस्य पृष्ठे स्वं वपुरक्षिपत् ।
तुङ्गस्य प्रथमाघाते रुद्धश्वासोऽभवद्भयात् । राजा तस्मिन्निरुच्छ्वासे सोच्छ्वासः समपद्यत ।
आस्था न ब्राह्मणस्यासीद्दुर्म्मनाम्नः सुतोऽन्तिके । यः पापकारी तुङ्गस्य पार्श्वः कद्रुश्च दुर्मतिः ।
ताभ्यामाशुविरेकिभ्यां त्राणार्थस्याङ्गुलीमुखे । क्षिपद्भ्यां पशुवत्तत्र शस्त्रं त्रासवशाज्जहे ।
अन्तरङ्गाश्च चङ्गाद्या येऽभूवंस्तत्र मन्त्रिणः । तैः स्त्रीवत्त्रासितैस्तूष्णीं तस्थे शस्त्रान्वितैरपि ।
अज्ञाततुङ्गमृत्युभ्यस्तुमुले तत्र भूपतिः । तद्भृत्येभ्यः शङ्कमानो वह्निदानादिवादिकम् ।
आश्वासाय स्वभृत्यानां छित्त्वा खड्गेन सत्वरम् । पातयामास तुङ्गस्य ससुतस्य शिरो बहिः ।
दृष्ट्वा स्वामिशिरश्छिन्नं सैन्ये दैन्यात्पलायिते । भृत्यतामुज्ज्वलीचक्रुः कतिचित्तुङ्गसेवकाः ।
भुजङ्गनामा सामन्तदिशापत्यो गृहागतः । संग्रामराजं विदधे गेहाद्गेहं पलायितम् ।
द्वारं कनकदण्डेन भञ्जञ्छर्गलितं ततः । विंशतिं हतवान् योधान् स राजास्थानमण्डपे ।
कोशाधिकारी त्रैलोक्यराजनामा हतो रणे । कम्पामत्तकधात्रेयो वीरोऽप्यभिनवाभिधः ।
अङ्गने त्रिंशदेकाङ्गा वीरास्तुङ्गोपजीविनः । श्रेणौ सबन्धुर्निहता निःश्रेणौ स्वर्गपद्धतेः ।
सङ्ग्रामं पद्मराजाख्यः कृत्वापि निहतोऽच्युतः । स्वामिभमयदुःखाग्नितापं तीर्थाश्रयाज्जहौ ।
अन्ये लोकद्वयत्राणमिच्छं शस्त्रं रणाङ्गने । संत्यजन्तोऽप्ययुज्यन्त यशसा जीवितेन च ।
चन्द्राख्यः सुभटस्त्वन्यो दैशिकश्चार्जुनाभिधः । हेलाचक्रो डामरश्च त्यक्तशस्त्राः परैर्हताः ।
लोठितावसथस्तुङ्गो लुण्ठितश्रीर्महीभुजा । आषाढशुक्लद्वादश्यां कथाशेषो व्यधीयत ।
निर्द्रोहवृत्तौ भूभर्त्ता तुङ्गे सतनये हते । लक्ष्मीर्दया व्यजृम्भत खलमाया नृपास्पदे ।
राज्ञो मनः कलुषयन् गूढपैशुन्यकर्म्मणा । योभ्राद्भ्राद्वसुतयोर्व्विपत्तौ हेतुतां गतः ।
सदुश्रवादनिर्दग्धो नागो निजकुलान्तकः । तुङ्गभ्राता ततो राज्ञा कम्पनाधिपतिः कृतः ।
युगलकम् ॥ भार्य्या कन्दर्पसिंहस्य क्षेमा परमचर्पणी । नागेन सङ्गमं चक्रे रक्षसेवासितत्रपा ।
प्रयाते तुमुले ठिक्का चतुर्भिर्द्दिवसैः सती । तुङ्गस्नुषा सुता शाहेः प्रविवेश हुताशनम् ।
सभायामवरुद्धायां कन्दर्पो यावजोजनत् । पुत्रं विचित्रसिंहं च भ्रातृसिंहं च विश्रुतौ ।
गृहीत्वा तौ स्नुषां तां च सङ्गमा तुङ्गवल्लभा । देशाद्विनिर्गता दीना राजपुर्य्यां स्थितिं व्यधात् ।
॥ युग्मं ॥ तुङ्गस्थाने ततो राज्ञा पापो भद्रेश्वरः कृतः । भूतेश्वरादिदेवानां चक्रे कोशादिलुण्ठनम् ।
कियद्विवेकवैकल्यमस्य राज्ञः प्रकाश्यताम् । तादृशानपि यश्चक्रे पार्थादीनधिकारिणः ।

पार्थो परमदुर्मेधाः ख्यातो भ्रातृकलत्रगः। निर्व्यभिचारेण यत्नेन नगराधिकृतः कृतः।
यथादिपापं पार्थेन सुकृतत्यक्तचेतसा। पवित्रे प्रवरेशस्य रङ्गपीठे प्रवर्तितम्।
चक्रे लुब्धस्य भूभर्तुर्मतङ्गः क्षपणायणीः। सिंधोः सुतः कोशवृद्धिं प्रजापीडनपण्डितः। ११०
पुरा देवमुखाख्यस्य द्विविरस्य किलाजनि। आपूपिकायां वेश्यायां पुत्रश्चन्द्रमुखाभिधः।
यस्तुङ्गोपाश्रयाल्लब्धा लालितत्वं महीपतेः। वराटकावमर्द्यामीत्कोटीनां शतमक्षयः।
विभूतिमध्ये लुब्धस्य प्रभुता यान्यढौकिति। अपूपैर्निजभृत्येषु विक्रियोऽभूत्कुलोचितः।
प्रभूताग्निररोगश्च भूत्वा सन्ध्योदयः पुनः। यो मन्दाग्निः सरोगश्च तिष्ठलोकैर्व्यहस्यत।
एकमेवाभवद्यस्य सुकृतं मरणक्षणे। कोटेस्त्रिभागं यद्दात्क्षीरणेश्वरयोजने। ११५
तदात्मजाः कृता नानाभागनन्दिमुखास्त्रयः। अधीशाः पत्तनाङ्गस्य राज्ञा तुङ्गोपजीविनः।
हास्यं बभूव भूभर्तुस्तेषां तुङ्गपदार्पणम्। बन्धनं यवकाण्डीनां हेमस्थाने शिशोरिव।
ते तुरुष्काहवे राज्ञा तुङ्गवत्प्रहिताः पुनः। प्रत्यावृत्त्य यथोद्देशं निजमेव पलायिताः।
इत्थं मन्त्रिषु योग्येषु क्षान्तिशीले च भूपतौ। केचिदुद्रेकमभजन्दर्हद्विविरडामराः।
सा लोठिकामठं कृत्वा लोठिका नृपतेः सुता। तिलोत्तमाया विदधे मातुर्नाम्ना मठं परम्। १२०
पापिनामपि हन्तीयद्भाविः सत्कर्मवासना। भद्रेश्वरोऽपि यच्चक्रे विहारं सुकृतोद्यतम्।
सत्यं विवेक्य सङ्ग्रामराजीयो न्याय्यतोऽर्ज्जितम्। निजं ब्रुवाणो द्रविणं प्रपामपि न निर्ममे।
श्रीलेखा पार्थिववधूः श्रीयशोमङ्गलात्मजा। पत्यौ शिथिलसामर्थ्ये स्वैरिणीत्वमसेवत।
सुतः सुगन्धिसीहस्य जयलक्ष्म्यां बभूव यः। वल्लभो निर्भरन्देव्याः सोऽस्यास्त्रिभुवनोऽभवत्।
स जयाकरगञ्जादिगञ्जस्वद्वातितीक्ष्णधीः। कोशोपकारकृत्तस्या जारोऽप्यासीज्जयाकरः। १२५
नयग्रामीणगञ्जादिकर्त्री सञ्चयतत्परा। साभूद्भर्तुः प्रसादेन सुभगा भूरिवैभवा।
स चतुर्थसमाषाढप्रारब्धाहे महीपतेः। हरिराजाभिधे पुत्र मा भैषीस्रात्तमाययौ।
सुमनःसेवितः कुर्वन्नशेषाशाप्रकाशनम्। ह्लादावहः स सर्वस्य चैत्रोत्सव इवाभवत्।
अमोघाज्ञेन तेनेमां निश्चौरां कुर्वता महीम्। पण्यवीथ्यां निशीथिन्यां निषिद्धाहारसम्वृतिः।
अचिरस्थायिनी राज्ञस्तस्याश्चित्तनोन्नतिः। वन्ध्या नवेन्दुलेखेव पार्थिवानामजायत। १३०
द्वाविंशतिमहान्युर्व्वीं स रचित्वा क्षमापतिः। क्षयं ययौ शुचियशाः शुचिशुक्लाष्टमीदिने।
प्राणिनां द्योतगानानां नक्षत्राणामिव क्षणात्। लक्ष्मीर्ग्रीष्मक्षपेवेयं सद्गता भङ्गदायिनी।
क्षमन्योः स्वैरिणीवृत्तिः सुतस्य जननी निजा। अभिचारञ्चकारास्येत्यविगाना जनश्रुतिः।
राज्योपकरणे सज्जीकृते राज्यार्थिनी स्वयम्। सा राजमाता श्रीलेखा यावत्स्नात्वा समागता।
मिलितैस्तावदेकाङ्गैर्भ्राता धर्मिशकेन च। सागराख्येन तत्पुत्रोबालोऽनन्तोनृपः कृतः। १३५
॥ युग्मं ॥ रवं क्षिप्रचोरन्येन हृते तत्र प्रमापणम्। तद्रक्षिणोऽहेलुब्धस्य पापायैव यथा किल।
राजमातुस्तथा राज्यलुब्धायाः पुत्रनाशनम्। अभूदन्यहृते राज्ये वृजिनायैव केवलम्।

॥ युग्मं ॥ स राज्यविप्रलम्भेन तादृशा व्यथिताशयाः। व्यस्मरंस्तनयस्येहं धिग्भोगाभ्यासवासनाम् ।
अथाजगाम स्थविरः पितृव्यो बालभूपतेः। राज्यं विग्रहराजाख्यो हन्तुं विततविक्रमः ।
स लोहरात्प्रचलितो दग्ध्वा द्वारमतर्कितः। दिनद्वयेन सार्धेन नगरं सत्वरोऽविशत्।
श्रीलेखाप्रेरिताः सेनाः प्रविष्टं लोठिकामठम्। उद्दीपिताग्रयस्तत्र निजघ्नुस्तं सहानुगम्।
मठद्वयं ततः कृत्वा स्वस्य भर्तुः सुतस्य च। तस्थौ व्ययवती राज्ञी राज्यद्रोहोद्यतानिशम्।
ततो नरपतिः किञ्चिच्छनैः शिथिलशैशवः। अतिव्ययादिव्यसनी गर्भेश्वरतयाऽभवत् ।
तस्यासन् रुद्रपालाद्याः शाहिपुत्राः परःप्रियाः। अनल्पवेतनादानैराज्योत्पत्त्यपहारिणः।
कृतप्रत्याहनिर्वाहः सार्धलक्षेण भूभुजा। रुद्रपालो दरिद्रत्वं कदाचिदपि नात्यजत्।
दिद्दापालः क्षमापालवल्लभ्यया प्रतिवासरम्। सहस्राणामशीत्यापि शेते तस्मिन् सुखं निशि।
अनङ्गपालवेतालश्चक्रे क्ष्मापालचालितः। प्रशस्तवर्णगीर्वाणप्रतिमापाटने मनः।
रुद्रपालः परित्राता धनप्राणादिहारिणाम्। बभूव चौरचण्डालप्रायाणां वज्रपञ्जरः ।
कायस्था रुद्रपालाप्ताः प्रजानां पीडमं व्यधुः। चकारान्नमठं श्रीमानुत्पलाख्यो यदग्रणीः।
विधवूपालवात्सल्यमन्यत्तस्याभिधीयताम्। जालन्धराधिपस्येन्दुचन्द्रस्येन्दुमुखीं सुतां।
उपयेमे मनोज्ञलाञ्ज्येष्टामाससमतिं स्वयम्। यया मठः स्वाभिधया विदधे त्रिपुरेश्वरे ।
तस्याः किञ्चिदिव न्यूनां स्वसारं योयवीयसीम्। अथ सूर्यमतीं देवीं भूभुजे परिणीतवान्।
रुद्रेण भूपतिः सख्या स कर्णसुखदायिना। पाञ्चीकृतो दुर्नयानां कर्णेनेव सुयोधनः ।
कम्पनाधिपतिस्तत्र क्षणे त्रिभुवनो बली। आययौ भूपतेर्हन्तुं राज्यं सम्भृतडामरः ।
आकृष्टाशेषकटके तस्मिन् योद्धुमुपागते। एकाङ्गाः सहसाराहो राजपत्त्र तत्यजुः ।
असिना लङ्घयन् प्रासानमोघान् श्लाघ्यविक्रमः। प्रजहारानन्तदेवः स्वयन्त्रिभुवनं रणे ।
सन्नाहरचिताङ्गः स दृढप्रहतिपीडितः। विद्रुतो वदने चाहक् स्वप्रतापमिवोद्वमन् ।
विनयच्छन्नशौटीर्यः शिशुप्रायः स भूपतिः। दृष्ट्वा बालमसम्भाव्यन्तस्मिंस्त्यक्त्वा रणं गते।
प्रमात्ता डामरं प्रन्तं प्रासैरभिनवाभिधम्। शालास्यत्रे व्यधात् श्लाघ्यविक्रमो मोघविक्रमम्।
मांसासृग्मेदनाघट्टीभूतखड्गो भ्रमन् रणे। भुवनक्षोभकृद्भूद्भैरवोऽनन्तभूपतिः।
पश्यन् प्रहारलूनाङ्गानेकाङ्गान् स पदे पदे। निवेद्यमानानग्रस्थैर्नामग्रहणपूर्वकम्।
चितिक्ष्मातदाचिख्यो विलम्बिस्थावरे ततः। चाञ्चल्यमचपटलादेकाङ्गानां न्यवारयत्।
॥ युग्मं ॥ एवं तत्र कृतज्ञेन भृत्येभ्यः प्रतिपादिता। विलम्बितेन दीनारकोटिरशवतः क्रमात् ।
राज्ञो रणाविष्टस्य दुग्धसेकैः करात्मरुः। स्थिरग्रहदृढः कष्टचिरेणेति जनश्रुतिः ।
प्रहो महत्त्वं भूभर्तुर्दीनो देशान्तरागतः। तादृक् त्रिभुवनो येन संविभेजे विमन्युना ।
ब्रह्मराजाभिधस्तेन वन्धुर्गञ्जाधिपः कृतः। रुद्रपालकृतद्वेषो विरक्तश्चलितो ययौ।
षड्भिर्वर्षैः क्ष्मापालैस्समं मिलितडामरः। तेनानीतो दरद्राजो यत्नादचलमङ्गलः ।

चोरस्थ्गाभिधं ग्रामं प्राप्तस्य समरोत्सुकः। तस्यायं विक्रमोदग्रो रुद्रपालो विनिर्ययौ।
श्वोव्यवस्थापिते युद्धे सैन्याभ्यां दरदीश्वरः। क्रीडापिण्डारकाख्यस्य नागस्य भवनं ययौ।
दुर्नयाचरणात्तत्र पार्श्वस्थैर्वारितोऽपि सः। प्लवमानस्य मत्स्यस्य गात्रे कुन्तमपातयत्।
अथोज्जगाम गोमायुवपुःकुण्डाद्भुजङ्गमः। स च तं मृगयौत्सुक्यादधावद्दरदीश्वरः।
तमापतन्तमालोक्य व्यवस्योन्मूलनं विदन्। आस्कन्दायाह्नि भूभर्तुः सैन्यं युद्धाय निर्ययौ।
अभूत्ततोऽस्त्रसङ्घर्षसंजातानलसंहतिः। क्षतस्रग्गाङ्गनोद्दाहो वीराणां समरोत्सवः।
तस्मिन्महाभटाटोपे शिरश्छिन्नं दरत्पतेः। रुद्रस्य रौद्रमहसः संप्ररूढं यशः पुनः।
समरे वधबन्धादि म्लेच्छराजाः प्रपेदिरे। सम्प्राप हेमरत्नादि पुनः कश्मीरभूपतिः।
उत्तंसमुक्ताद्योताम्भःशावितास्यज्ञलज्ज्वलम्। रुद्रपालो दरद्राजशिरो भर्तुरुपानयत्।
भ्रात्रोदयनवत्सेन क्षतप्रायैस्तथा द्विजैः। तथाह्येवंविधास्तस्य समभूवुरवदालिकाः।
रुद्रपाले ततो लूतामयेन प्रमयङ्गते। अन्येऽपि शाहितनयाः क्षिप्रमेव क्षयं ययुः।
पात्रस्नेहान्ध्यविगमे ग्रुद्धाशयजुषोऽभवत्। देवी सूर्य्यमती भर्तुर्दर्पणस्येव बिम्बिता।
सुभटापरनामा सा गौरीश्वरविधायिनी। पुण्यं वितस्तापुलिने निर्ममे सुभटामठम्।
गोहेमहयरत्नादिप्रदानैः स्तुवन्हन् द्विजान्। सदाशिवप्रतिष्ठायामद्रिद्रांश्चकार सा।
आशाचन्द्रापराख्यस्य कल्लनस्यानुजन्मनः। नाम्ना यथापि वात्सल्यात्साग्रहारो मठस्तया।
सिल्लनाख्यस्य च भ्रातुर्भर्तुस्वाभिधया सती। मठौ चकार यत्पार्श्वे विजयेशामरेशयोः।
अष्टोत्तरं चाग्रहारशतं श्रीविजयेश्वरे। ब्राह्मणेभ्यो महापुण्यं विदग्धः प्रत्यपादयत्।
पत्युर्नाम्नाप्यग्रहारान् प्रददावमरेश्वरे। त्रिशूलबाणलिङ्गादिप्रतिष्ठाश्च विनिर्ममे।
दम्पती राजराजाख्ये मृते पुत्रे प्रचक्रतुः। सदाशिवान्तिके राजवेश्म सन्त्यज्य तौ स्थितिम्।
ततःप्रभृति सन्त्यज्य पूर्व्वराजकुलस्थितिम्। तत्रैव रूढा भूपालास्तत्रैव वसतीर्व्यधुः।
पार्थिवस्याश्वशालीयाः प्रियवाजितया प्रियाः। प्रसादैर्देशलुण्ठ्या च सर्व्वतः समतां ययुः।
गर्भेश्वरतया भर्तुर्भंसभो नर्मकोविदः। अलुण्ठयत्प्रजानित्यं डक्को नाम दैशिकः।
माण्डवाधिपतिर्भोजः प्रहितैः स्वर्णसञ्चयैः। अकारयद्येन कुण्डयोजनं कपटेश्वरे।
प्रतिज्ञा भोजराजेन पापसूदनतीर्थजैः। सततं वदनस्नाने या तोयैर्व्विहिताभवत्।
अपूरयत्तस्य यस्तां दुस्तरां नियमाद्रितः। प्रहितैका च कमनीकुम्भैराद्यारिपूरितैः।
स तस्य पद्मराजाख्यः पर्णप्राप्तिकदैशिकः। प्रियताम्बूलयोगस्य त्यागिनो वल्लभोऽभवत्।
येन नागरखण्डादिपर्णविक्रयिणा नृपः। देशोत्पत्तिधनं प्रायो निःशेषं दापितस्तदा।
पद्मरत्नकरेभादभोर्त्विधेयदास्ते नृपात्। सन्धापादस्य सर्व्वं धने च धनिकोऽधिके।
महार्घरत्नमाप्यार्गेपयुक्त तस्य मन्दिरात्। आमीयमार्गं मासार्धशाम्बरे मासि कासभूत्।
लक्षेशरदर्पं दत्वा देवीप्रध्वंमतीमतः। पद्मराजेन्द्रशान्देशलाग्यवरप्याद्यवारयत्।

शमिते चाश्वशालीयडक्षकादिभये तदा । प्रावर्त्तन्त पुनर्देशे व्यवस्था निरुपद्रवाः ।
ततः प्रभृति राज्ञ्येव राजकार्य्योद्यताभवत् । तस्यै शौर्य्यकथां त्यक्त्वा राजा कार्य्यकरः पुनः
भर्तुर्नारीविधेयत्वन्तस्याभर्त्तजयस्तथा । निष्कलङ्केन शीलेन नान्योन्यं स्पृह्यतामगात् । २००
भवभक्तिव्रतस्नानत्यागशीलादिभिर्गुणैः । क्षितिनानन्तदेवेन मुनयोऽपि विनिर्ज्जिताः ।
राज्ये तस्य महीभर्तुर्दीर्घे तांस्तानलङ्घयत् । पतिम्बरेव राजश्रीर्धत्यान्तवनवोन्मुखी ।
क्षेमाभिधे राजगञ्जपूरणे बालभञ्जकः । व्यधाद्वादशभागादिप्रकारैर्ढौकयन्धनम् ।
मन्त्री ततोऽभवत्साधुस्वैगतः केशवो द्विजः । येषश्चन्द्रातपेनेव भूपालो येन भूषित. ।
भ्राम्यन् गतश्रीरेकाकी स एव ददृशे जनैः । भाग्याम्बुवाहतडितो निविडाः कस्य सम्पदः । २०५
॥ युग्मं ॥ भाग्याधीनं धनं ध्यात्वा मुधा मुग्धधियामसौ । कुलविक्रमयोर्दर्पो मिथ्यैव पृथुतां प्रति ।
प्रासादपालवैश्यस्य गौरीशन्दिरशालये । भूतेर्हलधरो वज्रो वराहश्चाभवन्सुताः ।
तेभ्यो हलधरः सूर्य्यमत्या विहितसेवनः । वृद्धिं दिने दिने गच्छंल्लेभे सर्व्वाधिकारिताम् ।
विधेयान् बुद्धियुक्तेन कुर्व्वतः चित्यनन्तराम् । सपत्नीकोऽभवत्तस्य मुखप्रेक्षी क्षमापतिः ।
क्षेमेण सूचितं पूर्व्वं सपादाग्रमुदग्रधीः । कर्मस्थानं स्फुटीचक्रे सर्व्वं स्थानधुरन्धरम् । २१०
अभूदर्णकमूल्यादिलेखनं कनकस्य यत् । राजायत्तं जनस्यार्थसञ्चयानां प्रकाशकं ।
स तन्निवारयामास भाविनां भूभुजां विदम् । स्थाने सञ्चितवित्तस्य दण्डाद्यायासकारिताम् ।
भर्त्सिनागस्वशालीयान्धनदारापहारिणः । कांश्चिद्व्यापाद्य स शमं निन्ये लोकस्य विप्लवम् ।
तेनायासहृतानीतः कश्चित्स्वर्णैः सुरास्पदैः । शोभां मठाग्रहारैश्च वितस्तासिन्धुसङ्गमः ।
भ्रातरश्च सुतास्तस्य लक्ष्मीपरिचयोन्मदाः । द्विरदा इव न क्वापि दानप्रणयितां जहुः । २१५
तद्भ्रातृपुत्रो बिम्बाख्यः श्रीमान्वीरो वराहजः । दूराधिकारकार्य्यासीद्दानप्रलयवारिदः ।
स डामरकुलाकालमृत्युः स्वल्पानुगोऽभवत् । स्वशाहवे जहत्प्राणान् पलायनपराङ्मुखः ।
चम्पायां सालभूपालमुन्मूल्यानन्तभूपतिः । तत्तन्नृपजयी नव्यन्धराधवमरोपयत् ।
मन्त्रिशून्येन शौर्य्येण परदेशेषु भूपतिः । हठप्रवेशान्निरुधस्तोऽभूत्स्यक्कगतोऽसकृत् ।
तुक्कात्मजस्य कलशस्यारब्धो खिन्नसैनिकम् । अमोचयत् हलधरो युक्त्यावल्लापुरादमुम् । २२०
उरशाश्च प्रविष्टस्य वैरिरुद्धाध्वनो व्यधात् । कम्पनाधिपतिस्तस्य मार्गात्संशोध्य निर्गमम् ।
कालेऽनन्तमहीभर्तुर्व्वैरिविग्रहसङ्कटं । साहसान्युदजृम्भन्त तानि तानि क्षणे क्षणे ।
राजेश्वरो द्वारपतिः श्रीमान् भट्रेश्वरात्मजः । डामरैः क्रमराज्यस्थैरन्येऽपि बहवो हताः ।
वोच्छ नीतिदृशा कार्य्यं भीत्या व्यवहरन्नपि । म्लायतां निष्परिभवां को भुङ्क्ते नृपमन्दिरे ।
दुष्प्रवादास्पदीभूतो देव्या निविडसेवनात् । आशाचन्द्रादिभिः क्रुद्धैर्व्वेद्धा हलधरोऽप्यभूत् । २२५
स राज्ञा हृतसर्व्वस्वो बन्धनक्लेशमन्वभूत् । भाग्यप्रभावे निःसारे सुखमेकान्ततः कुतः ।
नृपेण बन्धनात्त्यक्तं तं श्रीः प्रत्यागता पुनः । आलिलिङ्ग सितच्छत्रलक्ष्मास्मितसितानना ।

स राज्ञ्याः प्रावृष इव प्रणयेन क्षणे क्षणे । कोपप्रसादमेघार्कपर्यायापातमन्वभूत् ।
ततः सरलचित्तस्य क्रमेण समपद्यत । भार्याजितत्वं भूभर्तुर्दुर्विपाकार्पणोन्मुखम् ।
अधिकारपरित्यागाद्दिवाननुशयावहान् । वदद्भिर्वार्यमाणोऽपि प्राज्ञैर्हलधरादिभिः ।
पत्न्या संप्रेरितः शश्वत्तनयस्नेहमूढया । पुत्राय कलशायाभूद्राज्यं दातुं समुद्यतः ।
यात्रास्वनुशयं राजलोकैर्वाद्यपि कारितः । सज्जं तेन रणादित्यनाम च्छत्राभिषेचनं ।
एकोनचत्वारिंशस्य वर्षस्य तनयः सिते । षष्ठेऽह्नि बहुलस्याभूदभिषिक्तो महीभुजा ।
अथ स्थाने रणादित्यो राजपुत्रान्निवेशयन् । चिन्तयन् राज्यमाहात्म्यं प्रतिपत्तिषु निष्ठुरः ।
अनन्तो राजपुत्रोऽयं देवेति कथयन्वचः । छाकाटिकान्यस्तहस्तः क्षितिपालं न्यवेदयत् ।
कुपितेन स भूभर्त्रा परिदृत्यावलोकितः । एवं हतस्मितो व्यक्तं तमूचे नीतिनिष्ठुरः ।
इत्थं यत्र निवेद्यन्ते कान्यकुब्जादिभूभुजः । तत्रैव त्यक्तराज्यस्य काऽन्या स्यात् प्रक्रिया तव ।
दिने दिने सानुशयो नियतं भविता भवान् । नाभिमानपरित्यागः कर्तुं शक्यो मुनेरपि ।
सुदूरदर्शिनां तत्र मन्त्रिणां हृदयङ्गमम् । राजा तस्य वचः श्रुत्वा प्रतिवाक्याक्षमोऽभवत् ।
दृष्ट्वाऽन्येद्युर्नवं भूपं राजचक्रेण सेवितम् । नवेतरस्य सहितं परिमितैः परिच्छदैः ।
धीमान् हलधरो युक्त्या हतकाशयया नृपम् । एवं निर्भर्त्सयंल्लक्ष्मीं तं प्रत्याजीहरत्पुनः ।
विधाय निःसुखं स्वं राज्यभारार्पणाच्छिशुम् । कस्मात्त्वसुखमापेक्षो न जिह्रेष्यत्र वार्द्धके ।
तत्स्वयं राजकार्याणां कार्यमुद्वहनं त्वया । अस्तूद्यो यौवनाभोगैरयमस्तु सुतस्तव ।
इत्युक्त्वा स पुनर्भूपमधिकारमशिग्रहत् । चक्रे कलशदेवस्य कलया युक्तिवञ्चितम् ।
पितोरेवान्तिके कुर्वन्नाहाराद्यपि सन्ततम् । ततो बभूव कलशो नाममात्रमहीपतिः ।
सर्वस्नानात्मपूजादिविधाने पार्थिवोचिते । पितुः सहायकल्पः स पौरोहित्यमिवाकरोत् ।
अनिमित्तप्रहृष्टानामनिमित्तानुतापिनां । न क्वापि चलचित्तानां तिरश्चामिव निश्चयः ।
दापयित्वा पतिं राज्यं निर्बन्धेनापि तावता । सूनौ बभूव पट्टराज्ञी विभ्रंशानुतापिनी ।
सेर्ष्या स्नुषाणामुत्कर्षं पार्थिवप्रपदोषितं । वेश्मादिहरणादौ सा हृतचित्ता न चक्षमे ।
हासीदित्थं मया पुत्रभर्दिष्टः कारितास्तदा । स्नेहोपलेपने यावन्न वैमुख्यमदर्शयत् ।
पुत्रो विषदराजस्य क्षितिराजाभिधस्ततः । राज्ञः पितृव्यजो भ्राता कदाचित्पार्श्वमाययौ ।
तस्मै न्यवेदयत् खेदं स चित्तस्योपतापकं । पुत्रे भुवनराजाख्ये राज्यलुब्धेऽतिविश्रुते ।
स हि तस्यात्मजो लोष्टः पुरा राज्यं समाश्रितः । तदन्ते पितुरार्त्यर्थं विधातुं सोद्यमोऽभवत् ।
नाम भागवताय पूज्यानां स्वपितृद्रव्यधात् । दत्तयत्रोपशीलानां सुनामरुदुषिमानसः ।
क्षितिराजः स्वभाराय विहङ्गस्यां विरक्तधीः । मनस्तापापहे चक्रे स मैत्र्यामागते स्पृहां ।
राज्यं चन्द्रपुत्राय ज्येष्ठाय स्मरजन्मने । रामलेखाभिधानायां राज्ञ्यां जाताय सत्वरं ।
दत्त्वा स्वमन्यतारापि महोत्सर्गाभिराम च । राजर्षिर्विबुधैः सार्द्धं विदधे तीर्थसेवनं ।

भुक्त्वा ग्रामसुखं भूरीन्वर्षान् परमवैष्णवः। स चक्रायुधसायुज्यं ययौ चक्रधरे सुधीः।
स च भोजनरेन्द्रस्य दानोत्कर्षेण विश्रुतौ। सूरी तस्मिन् चणे तुल्यं द्वावास्तां कविबान्धवौ।
पितुः पितृव्यजाङ्गातुर्जातस्यानन्तभूभुजा। तन्वङ्गराजस्योत्सङ्गे नप्ता न्यासीकृतः शिशुः।
तन्वङ्गे ऽपि विपट्टं तन्नीत्वा राष्ट्रं शिशुश्च तम्। पुनः प्रविष्टः कश्मीरानस्तं चक्रधरे ययौ।
सर्व्वसाधारणीभूतभोगानां राजवीजिनाम्। तावज्ज्ञातियमभवन्नेह द्रोहकलङ्कितम्।
दन्दुराजात्मजाज्जिन्दुराजो यो बुद्धराजतः। जातो मदनराजाख्यं वीरं पुत्त्रमजीजनत्।
अत्युत्सिक्त. सुतस्तस्य दरन्नृपतिमण्डलात्। विधुरे राज्ञि निर्यातः शौर्य्योद्रेकादखण्डितः।
तदानीं जिन्दुराज्याख्यो डामरोद्रेकखिन्नया। राज्ञ्या स्वयं गृहं नीत्वा साचिव्यं ग्राहितोऽभवत्।
काणः शोभाभिधस्तेन गाढोद्वेगावहः प्रभोः। देवग्रामस्थो डामरो ऽथ दलास्कन्दं निपातितः।
कम्पनाधिपतां दत्वा ततस्तस्य प्रतापिन। पार्थिवो राजपुर्य्यादीन् देशांश्चक्रे करप्रदान्।
अनन्तभूभुजो राज्ये तत्तत्स्खलितसङ्कटे। आलम्बयष्टिप्रतिमो ययौ हलधरः चयं।
मुमूर्षुणा चक्रधरे तेन पार्श्वस्थितो नृपः। सजानिरुपदेशार्थी स तदेत्थमकथ्यत।
मा काष्ठं परराष्ट्रेषु रभसारब्धिमाहवम्। युक्त्या वज्रायुरादौ वा व्यपोढं व्यसनं मया
विप्रङ्गो जिन्दुराजोऽयं परार्ध्यां वृद्धिमागतः। भेदं वः सह पुत्त्रेण जयानन्दो विधास्यति।
कथितं तेन तत् श्रुत्वा जिन्दुराजं महौजसं। विघ्नेनाबन्धयद्राजा युक्तिमांस्त्याजितायुधम्।
अथ कालेन कलशस्नाम्नत्कलुषिताशय.। मृत्यैरसाधुमसेव्ये प्रसक्तिं ग्राहितोऽध्वनि।
तस्याभवद्विज्जयित्यराजपाजादयः प्रियाः। उत्सेकदा राजपुत्राश्चत्वारः शाहिवंशजाः।
पुत्तोगश्चपतेर्नागनाम्नो निकटसेवकः। सोऽपि तस्य जयानन्दः कौटिल्याध्यापको ऽभवत्।
द्विजेन्द्रेऽमरकण्ठे तु याते शिवसमानतां। राजा प्रमदकण्ठस्य ययौ तज्जस्य शिष्यतां।
दुःशीलस्य प्रकृत्यैव तस्याकृत्योपदेशकृत्। गम्यागम्यविचारस्य परिहर्ताभवद्गुरु।
गुरोर्गताविकल्पत्वं तस्यान्यत्किमिवोच्यतां। त्यक्तशङ्कः प्रवर्तते स्वसुतासुरते ऽपि यः।
महासमयसञ्चारचतुरैर्थ्यैरभीतितः। गच्छते स्वप्रभावेशैर्भैरवोऽपि न निर्भयः।
ते भट्टपादास्त्रासेन पतिता भग्नजानवः। विडालवणिजा स्वस्याः शिरोहस्तार्पणैः कृताः।
पुराकृत्य विडालाङ्को वणिक् कश्चिदिहाभिधां। विडालवणिगित्यात्मनामविस्मारिकान्दधे।
यो व्याजमूर्खो वैद्यत्वगुरुत्वाहङ्कृतः क्रमात्। पादूछत्रजकादीनां शिल्पिनां गुरुतामगात्।
सभट्टपादानुसाधांश्चक्रे मूर्द्धसुधिरोपयन्। श्रेष्ठी विडालविष्ठोघविस्रगन्धोत्कटङ्करं।
एवं प्रकृतिनि.सारैरपि गर्जद्भिरन्वहं। आन्ध्यं स गुरुभिर्निन्ये दिवसोऽम्बुधरैरिव।
ये दीर्घजागरा रात्रौ भूरिभोजनसेविनः। अजीर्णपिशितोद्गारनित्यदुर्गन्धकन्धराः।
अवस्करप्रणालाभाः पृष्ठे चिप्तमध.पयः। शौचपाय इव चिप्रमुञ्झन्ति मधुनिर्झरं।
नक्तमातोद्यवाद्यज्ञैस्तै. सार्द्धं कृतसेवनः। चारणो वेणुवाद्यज्ञो योषितां धर्षयन् हठात्।

सन्देहं प्रथमं प्रयात्यभिजनं पश्चात्पुनर्जीवितं किन्नाभ्येति विपर्य्ययं विगलने शीलस्य चिन्तामणेः।
राजधानीमवाप्तस्य दुःशीलस्य महीपतेः। चपायामेव तां वार्त्तां पितरावधिजग्मतुः।
तौ हृदित्वा सुतस्नेहलज्जाशोकान्वितौ चिरं। निश्चयं बन्धने तस्य सदोषस्य प्रचक्रतुः।
सर्व्वविद्यानिधिं ज्येष्ठं नप्तृणां बप्पिकात्मजम्। हर्षं राज्ये चिकीर्षू च निन्यतुस्तां निशीथिनीं।
आकारितस्ततस्ताभ्यां प्रातः कलशभूपतिः। ऊचे विज्जजयानन्दौ सामन्तौ जनकाङ्कयं।
तन्मतेन जयानन्ददत्तहस्तः कथञ्चन। अन्वीयमानो विज्जेन सपित्रोः प्राविशद्गृहं।
पिता प्रविष्टमाचन्तं वक्त्रे दत्तचपेटकः। अभाग्यभागिन् जहिहि छुरिकामित्ययाब्रवीत्।
एन चाशविसृत्वाङ्गसन्धिमालम्ब्य पाणिना। सावष्टम्भं स्पृशन् शस्त्रं विज्जो राजानमब्रवीत्।
राजन्मानवतां धुर्य्यो भवन्नपि भवान् कथं। न त्याज्यं मानिनां वेत्ति मानग्रहमहाशस्त्रं
गृहीतवेतनेनायं राजपुत्रेण शस्त्रिणा। सङ्कटेऽस्मिन्मया स्वामी जीवता त्यज्यते कथं।
पिता भवानयं पुत्रः क्षणेऽन्यस्मिन्महीपते। मय्यसन्निहितेऽमुष्य यथोग्यं तद्विधीयतां।
इत्थं विमोह्य नृपतिमिच्चोभिः स्निग्धकर्कशैः। विज्जः स्वामिनमादाय निराक्रामत्तदन्तिकात्।
विज्जस्यापूजयन्धीरास्तद्धैर्य्यमतिमानुषं। अनन्तदेवस्याप्यग्रे यदेवं स व्यजृम्भत।
चण्डी नरपतेः पत्नी भाव्यर्थवलवत्तया। असाध्यजनशीनस्या तस्मिन्नवसरेऽभवत्।
सा चेदाशिष्यतेत्युक्ता नाभविष्यत्तदेतरत्। नियमात्सर्व्वनाशादाबन्धनात्कलशस्य वा।
ततो विज्जेन कलशः सत्वरेण प्रवेशितः। व्रजन् दिद्दाभिधानाया वल्लभाया निवेशनं।
शिरोर्त्तिरस्य सञ्जातेत्युक्त्वा भीतं पतिं व्यधात्। सा प्राज्ञा ज्ञातवृत्तान्ता तैलेनाभ्यक्तमस्तकं।
व्याजेन तेन सर्व्वस्य सम्प्रवेशं निषिध्य सा। पतिं जुगोप विन्यस्य विज्जं द्वारस्य रक्षणे।
ततः संमार्जेर्व्विरता राज्ञी निर्भर्त्स्य भूपतिं। कुशलान्वेषणमिषात्तनयस्यान्तिकं ययौ।
बन्धुं व्यधात्सो राजानं तथैव प्रययौ यदा। दत्तप्रवेशो विज्जेन तदेकाकीव सोऽभवत्।
निषेधादनुगन्तृणां ततः क्रुद्धो धराधवः। रुषित्वा विजयक्षेत्रं गन्तुं प्रावर्त्ततोद्धतः।
तं प्रयातं सपत्नीकं प्राप्तं पद्मपुरान्तिकं। अवोचन्नेत्य तत्रस्था विश्वावटादयो द्विजाः।
अधिकारं स्वयं त्यक्त्वा राजन् किमनुतप्यसे। कृतस्यानुशयो युक्तो न सतो नासतोऽपि वा।
न च ते दुर्म्मतौ त्यक्ताः प्रजा एतामयेत्यपि। ध्यात्वा सूनोः समुचिता कर्त्तुं दुष्टस्य वाच्यता।
न यन्त्रपुत्रकस्येव शक्तिः कापि हि भूभुजः। भवेत्साधुरसाधुर्व्वा स प्रजानां शुभाशुभैः।
उज्झन्ति यत्पयोवाहा जलानि तडितोऽथ वा। वनस्पतीनां सदसत्कर्म्मपाकस्य तत्फलं।
यथापथस्थितं पुत्रं त्यक्त्वेच्छस्यासितुं सुखं। कोशं त्यक्त्वा प्रस्थितस्य घटते तत्कथं तव।
धाराधिरूढसामर्थ्यः सदंशः शुचिमानपि। संस्पृश्यते क्षीणकोशः कृपाणइव कैः पुमान्।
श्रुत्वेत्येच्छन्नृपो यावत्प्रत्यावृत्तिं विचारवान्। तावत्सपुत्रेणाभ्येत्य सभार्य्येण प्रसादितः।
अथ प्रविश्य नगरं सप्रमादापवर्ज्जितां। अशान्तमन्युरादाय लक्ष्मीं भूयो विनिर्य्ययौ।

हयायुधतनुत्रादि स्वयं स्वीकृत्य निर्गतः। देवीं प्रतीक्षमाणोऽस्थात्सरित्पारे ततः क्षणं।
नानाप्रकारानारोप्य कोशान्वैषु नृपाङ्गनाः। नार्य्यः शङ्कूनपि गृहे निर्य्यान्त्यः पर्य्यशेषयन्।
अज्ञातवार्त्तः प्राक् तूष्णीं तत्रस्थानेऽभवज्जनः। ज्ञातवार्त्तस्तदा त्वासीदाक्रन्दमुखराननः।
प्रतिमोक्तुं पुरे ताभ्यां दत्तपुष्पाञ्जलौ जनः। वाष्पविन्दुमिषादौज्झीद्दीर्घानर्घकणानिव।
हा मातर्हा पितः क्वेत्थं गच्छतः परिदेवितात्। इत्यस्मादपरः शब्दो मार्गेषु न तदा श्रुतः।
मार्गेऽन्तरान्तराक्रन्दविरतौ निर्झरध्वनिः। शैलानां शोकनिश्वासझङ्कार इव शुश्रुवे।
तयोराक्रन्दितैः शश्वत्पथि सञ्जातसंस्तवौ। कर्णौ शून्येऽप्यशृणुतामाक्रन्दितमिवासकृत्।
पुत्त्रागसा तादृशौ तौ दृष्ट्वा मार्गे द्रुमौकसां। खगानां शावभरणमपि लोकोव्यगर्हत।
तयोः पुत्त्रानयोत्तप्तचेतसोर्व्विजयेश्वरः। मनःप्रसादं संहृष्टः स्निग्धबन्धुरिवाकरोत्।
तत्तत्र भाण्डागाराद्य भृत्याद्यावसथार्पणैः। संविधानक्रियाभिश्च व्यययोरगमद्दिनं।
देशे कोशोपकरणपूर्णगोणीगणावृते। आसन्निन्धनगण्डालीच्छन्नरथ्या इवापणाः।
तन्वङ्गराजतुङ्गादि शान्तिपुत्त्रानृपात्मजाः। तं सूर्य्यवर्मचन्द्राद्या डामराश्चानुवव्रजुः।
डामरान् चौरभूपादीन् राजानो नगरादिषु। स्थानेषु स्वेषु निक्षिप्य रक्षिते गुप्तिमानभूत्।
विश्रान्तसर्व्ववित्तस्य श्रीमतोऽनन्तभूपतेः। प्रावर्त्तन्तात्मवैर्गन्तुं दिनानि विजयेश्वरे।
राजपुत्त्रहयारोहखशखिडामरमण्डलैः। छत्रैस्तैरेव स्थितिर्बद्धा सविधे वृद्धभूभुजः।
वत्सरे पञ्चपञ्चाशे ज्येष्ठे मासि विनिर्गतः। आसाद्य विजयक्षेत्रं स स्वर्गसुखमन्वभूत्।
कलशस्तु गते राज्ञि प्राप वीतवसुं महीं। रत्नाढ्ये चलिते यातरत्नां निधिमहीमिव।
स्वराज्यमुज्ज्वलीकर्त्तुं रिक्तोऽपि विहितोद्यमः। चक्रे समस्य विज्ञाद्यैः समतानधिकारिणः।
तेन सर्व्वाधिकारेषु जयानन्दो नियोजितः। द्वारे वराहदेवश्च वितस्तात्रपुरोद्भवः।
योऽध्वराधिकार्थ्याशी जिन्दुराजस्य कम्पने। राज्ञा विजयमित्रः स कम्पनाधिपतिः कृतः।
यथाधिकारमन्यांश्च विनिधायाधिकारिणः। राजार्थचिन्तामारेभे संरब्धः पितृविग्रहे।
जयानन्दः पदातीनां चिकीर्षुरथ संग्रहं। यस्मादनुचितेभ्योऽपि धनिकेभ्योऽग्रहीदृणम्।
स्वीकृत्य पत्तीन्बिम्बादिराजपुत्त्रगणान्वितः। अथावन्तिपुरं प्राप योद्धुं वृद्धनराधिपम्।
[illegible]भ्यर्थ्य कारितो वैरं राज्ञा काराविनिर्गतः। शिमिकावर्त्मना योद्धुं जिन्दुराजो विनिर्ययौ।
[illegible]षामुद्योगमाकर्ण्य क्रुद्धा वृद्धमहीभुजं। स्वे डामरास्त्वराराद्याः संरम्भादुपतस्थिरे।
[illegible]गायत[illegible]सगुहश्रीड[illegible]रगमण्डला। सद्यः सवाटवी कृत्स्ना संकटा विजयेश्वरे।
[illegible] सर्व्वंगती पत्न्यात्पतिं परमकोपनं। ययाचे पुत्त्रवात्सल्यादयुद्धं दिवसद्वयम्।
[illegible]ायातान् सप्पादीन् द्विजान्निशि विसृज्य सा। तन्मुखेनातिवात्सल्यादिदमूचे रहः सुतम्।
[illegible]िनाकृत्यं पुत्र कथं मतिविपर्य्ययः। तीव्रशौर्य्येण पितरं यदेवं योद्धुमिच्छसि।
यद् [illegible]भूमिमात्रेण दरद्राजादयो [illegible]ताः। [illegible]पानने [illegible]दीहशे [illegible]भाविहं।

अस्मिंस्तु वीतिमारूढे वीतिहोत्रसमे नृपे। कष्टाता च तदीयानां तृणानामिव शुष्लिगं।
सेनाङ्गैः कतमैः केन शौर्य्येण कामैर्धनैः। भवान्क्रान्तिमतां धूर्य्यं योद्धुमेनं प्रधावति।
दैवात्सन्त्यक्तमेतेन भुंच्व राज्यमखण्डितं। पित्रा तीर्थोपविष्टेन किमित्रापकृतं तव।
दैधेच्छुभिः पात्यमानो व्यसनेऽस्मिन् सुदारुणे। प्रयास्यसि दिनैरेव रिक्तोऽप्यत्यन्तरिक्ततां।
नय सेनाः पितुर्भीतिर्जीवन्त्या मयि नास्ति मे। ऋजुमेनं नयस्वाहं प्रत्युतानुनयोक्तिभिः।
इति दूतमुखैर्मूढं पुत्रो मात्रा कृतार्थनः। सर्व्वाशाभ्योऽनयत्सैन्यं रात्रावेव निजान्तिकं।
श्रुत्वापसारं सैन्यानां दूतैश्चैत्यप्रसादितं। उपालेभे पतिं प्रातर्धृष्टा प्रत्युत वल्लभा।
राज्ञा मियस्तयोरेवं शमिताक्षेपयोरपि। पिशुनप्रेरणात्प्राप कालुष्यं धीः क्षणे क्षणे।
वैरस्वरूपमेतद्धि भेदं याति मुहुर्मुहुः। सन्धीयमानमपि यत् छिन्नाम्बरमिवाशयम्।
वाह्यात्पादौ सुतोदन्तं श्रुत्वा तप्ताशयो नृपः। गृहं प्रविष्टो दुष्टस्त्रीभाषितैर्जडतां ययौ।
एवं प्रतिदिनं तप्तस्त्यक्तताप: प्रतिक्षणं। स्वच्छाशयः शरत्तुच्छतडागोपम्यमाययौ।
चकार पितृपक्षाणां पुत्रो वेश्मादिनाशनं। पिता तु पुत्रपक्षाणां न किञ्चित् स्त्रीवशीकृतः।
पुत्रस्नेहान्धया पत्न्या बाधितश्चानुयायिभिः। रूक्षोक्तिभिस्ताप्यमानस्तस्थौ दुःस्थः सदा नृपः।
राज्यं जिहीर्षुः पुत्रस्य निःशूरं तद्बलं विदन्। दर्पात्स जिन्दुराजस्य गणनां पौरुषेऽकरोत्।
पुत्राज्जिहीर्षुणा राज्यं तेन तम्बङ्गनन्दनाः। प्रार्थ्यन्ते स्म तदा राज्यकृतये तत्पराङ्मुखाः।
सम्प्रेर्ष्य तं तदा राज्ञै स्वान्वयाशर्मशङ्किनी। द्रष्टुं देवी नृपं कर्तुं दूतैराह्वतवत्यभूत्।
स पितामहयोर्दूतैराहूतः साहसोन्मुखः। वाह्याल्यां निर्गतः सञ्चैरच्यमाणोऽपि रक्षिभिः।
दत्तपार्ष्णिकषाघातः क्षणार्द्धेनोदलङ्घयत्। मनोजवेनाश्वभोजा वाजिना पञ्चयोजनीं।
वाजिनं विजिताभ्याममनुगन्तुं समुद्यताः। अगच्छन् बहवो मार्गे दीनाः सेनाहयाः श्रमं।
प्राप्तस्य पादयोस्तस्य पतितस्य पितामहौ। आनन्दाश्रुजलस्यन्दैरभिषेकं प्रचक्रतुः।
पुत्रे तन्निकटं प्राप्ते कलशः कम्पिताशयः। अप्रियाचरणात्पित्रोः संधित्सुः स न्यवर्तत।
स तस्य नगरात्पित्रोः पार्श्वं प्राज्ञो व्यसर्जयत्। अकरोदिस्तुते राज्ञे स्वभेदस्याप्रकाशनं।
एवं प्रवर्द्धमानेऽपि वैरे कलशभूपतिः। कञ्चित्कालं मते मातुरवर्तिष्ट समागिव।
खशालाः कलशादेशान् यियासोः कम्पनापतेः। तथा प्रावर्त्तितनतैर्मार्गं संत्याजितः पतिः।
अत्रान्तरे शमयितुं वैरं देशोपघातकृत्। तावुद्दिश्य पितापुत्रौ द्विजाः प्रायं प्रचक्रिरे।
सन्धिबन्धे समुत्पन्ने ततस्तदनुरोधतः। दम्पती सम्प्रविष्टौ तौ सार्द्धं मासद्वयं पुरं।
जयानन्दादिवुद्धाय बुद्धा बन्धोद्यतं सुतं। भूयोऽपि जयत. खेदान्निर्गत्य च जयेश्वरं।
तस्याश्वघासकूटानि पुत्रो रात्रावदाहयत्। व्यापादयत् पदातींश्च विषशस्त्राग्नियुक्तिभिः।
तया प्रवर्द्धमानेऽपि विरोधे सत्यरोधयन्। वात्सल्यविवशा राज्ञी भर्तुः प्रतिचिकीर्षितं।
लङ्काभिधाभूत्कैवर्तसन्धकी तद्विधेयधीः। थक्कडामरनामा च तज्जारः खशतिस्तदा।

स तत्रास्त्रेव दुष्टात्मा कथ्यमानो समीपगैः । शुश्राव पितरौ नित्यं लीलास्मितसितानन: ।
॥ युग्मं ॥ तौ दम्पती पुनर्हेमतुलापुरुषयुग्मदौ । चित्रामिर्धनचर्य्याभिर्मनस्तापममुञ्चताम् ।
यदा पुनस्तयोर्दाढ्यमाद्यलान्न व्यहीयत । तदा सेर्ष्यः सदुष्पुत्त्रो रात्रौ वह्निमदापयत् ।
तेनाग्निनोर्व्वरीशस्य सर्व्वोपकरणैः समम् । भस्मावशेषमभवद्विजयेश्वरपत्तनम् ।
सर्व्वनाशशुचा दीना राज्ञी मर्त्तुं समुद्यता । तन्वङ्गपुत्त्रैश्शलभे कथञ्चिज्ज्वलतो गृहात् ।
त्यक्ताङ्गकानि शय्याभ्यो निशायां सुप्तमुत्थितम् । निःशेषं राजसैन्यं तदजायत दिगम्बरम् ।
तद्राजधानीसौधाग्रात्पश्यन्कलशभूपतिः । तोषादनृत्यज्ज्वालौघैर्गगनालिङ्गिभिः समम् ।
अतरत्सर्व्वसर्व्वस्वः स पारं सरितो नृपः । निममज्ज सजानिस्तु दुस्तरे शोकसागरे ।
सम्प्राप्य मातरग्रुष्टं रत्नलिङ्गं नृपाङ्गना । व्यक्रीणाल्लक्षसङ्ख्या टङ्कानां पार्श्वमीयुषाम् ।
क्रीत्वा तत्प्रददौ पूर्व्वं भृत्यानां भोजनांशुके । धनेन तेन निर्दग्धान्यपि धामान्यशोधयत् ।
भस्मकूलतलात्तावल्लक्षं स्वर्णादिभूभुजा । कयापि यावतोद्दन्त यथयत्यश्च कौतुकम् ।
राजा शून्याटवीभूते पत्तने तत्र सानुगः । नडलकुर्य्यितच्छत्रपटलाच्छादितोऽवसत् ।
तावत्पर्य्यसामर्थ्ये चिकीर्षोस्तत्पुरं नवम् । विना राजोचितामाशां न सिद्धं इद्धभूपतेः ।
अदृष्टाभिभवो मातुरानुकूल्यान्नवो नृपः । परितापं पितुस्तैस्तैर्दुःसन्देशैः सदाकरोत् ।
निर्व्वन्धादथ पुत्त्रेण पर्णोत्सगमनं पिता । निर्व्वासनोत्सुकेनोक्तः शश्वद्दूतमुखैर्यदा ।
प्रभवन्त्या यदा चासीत्पत्न्या तस्यैव वस्तुनः । निष्पत्तये प्रेर्य्यमाणः साधिक्षेपं क्षणे क्षणे ।
तदा जातु रहः कुर्य्यत्स्वभङ्गे एकले स्थिते । उवाचानुकपूर्व्वं तामेवं सपरुषं वचः ।
तिलकम् ॥ अभिमानो यशः शौर्य्यं राज्यमोजोमतिर्धनम् । मया जायाविधेयेन हन्त किं किं न हारितम् ।
मिथ्योपकरणं नारीर्गणयन्ति नृणाधमाः । परिणामे तु नारीणां क्रीडोपकरणं नराः ।
दैवोन्मेषात्प्रमत्ताभिर्व्विषक्ताभिरसूयया । के नाम नात्र कान्ताभिः क्षतात्मानोऽतिधीक्षताः ।
दर्पं काश्चिदनं काश्चित्प्रशां काश्चित्त्व कार्य्यणैः । पुंस्त्वं काश्चिदसून्काश्चिन्नहर्न्ति जडरङ्गनाः ।
हरन्ति यावभिरिव स्वां पुत्त्रैरन्यगोत्रजैः । मत्ताः पयोधरोन्नत्यात्तरङ्गिण्य इवाङ्गनाः ।
पर्य्यन्ते वेतनमिमे किञ्चीर्णरोहगैरिति । पोषयन्ति सुतान्भर्तृन्शोषयन्ति तु योषितः ।
सर्व्वकालं विदिमापि दोषान्योषित्सतामसून् । प्रतिपाद्यगुरोधेन मयेयं नावधीरिता ।
प्रभविष्णुमिदंयेषमेहिवीः सुपममदः । परलोकसुखन्याशामपि हन्तुं समोद्यता ।
सतीपलितपुत्त्रस्य मेदोयोमरणावधेः । विहाय विजयक्षेत्रं कुत्र गन्तुं ममोचितम् ।
दयाकरकमामे.सः किञ्चिदवमदमा । दारोपकरण्डमेखैवोत्कण्ठाकुण्ठीभवेत्कथम् ।
पुत्रो लोकद्वयघाता यस्तान्यकैर्हृष्टो भवेत् । सोऽर्थात्प्रज्ञापयन्मां यत् कुपथे गतमिच्छति ।
मतिमात्त्वगतोऽयं प्रवादो मेऽपि देवदपि । श्रमयात्यशुभोद्भूतो यदयं सम्प्रवेशितः ।
विषमादिमताकारवारे हेतुविरोधिनम् । पुत्रं पितुर्व्वधिकायं आसोयादन्यरेतसम् ।

सुचिराविष्कृताकूतां त्यक्ता प्राणाय यन्त्रणाम्। एवं वदन् पतिस्तस्याश्चक्रे मर्म्मसु ताडनम्।
गोत्रजस्य पुरः पुत्रोत्पत्तिगुह्ये प्रकाशिते। आम्रट्टविप्रियाख्याया साभूदधिकलज्जिता।
मद्दत्तमस्य पुत्रो हि प्रश्नस्याख्यस्य सोऽभवत्। विपन्नापत्ययायातत्तयेत्याशोज्झनश्रुतिः।
उत्त्रिक्तभाषितं भर्तुर्योषितो जितभर्तृकाः। जानन्त्यान्त्याङ्घ्रिसम्भूतशिरस्ताडनसन्निभम्।
अतः सा सुदृढं प्रौढिसंस्कारपरुषं वचः। प्राकृतप्रमदेवोचैरित्युवाच रुषा पतिम्।
गतश्रीस्तापसो मन्दो जातभाग्यविपर्य्ययः। वृथा वृद्धः क्व किं वाच्यमिति मूढो न वेत्त्ययम्।
स्वालोत्थितस्य यस्यास्य नाभूत्प्रावरणं पुरा। लोको जानात्ययं किं न तेन मां प्राप्य हारितम्।
स्वकुलस्यौचमुचितं यत्किञ्चिन्मामभाषथाः। क्रियते किं न कालोऽयं यत्प्रायश्चित्तसेवने।
अकर्म्मण्यो गतवया देशात्पुत्रेण वारितः। पत्न्यापि त्यक्त इत्यप्रात्परिवादान् हि मे भयम्।
कुलदोषादिदृष्टान्तगर्भोपालम्भनिर्भरैः। वचोभिर्व्यथितस्तस्यास्तस्थौ तूष्णीं यदा नृपः।
तदा तस्यासनप्रान्तनिःसृतः प्रसरन्बहिः। निर्व्विकाराकृतेर्व्यक्तं ददृशे रक्तनिर्झरः।
सम्भ्रान्तायां ततो राज्ञामपश्यत्यक्तनीरुदन्। असिधेनुं गुदे तेन क्रुधा राज्ञा प्रवेशिताम्।
ततोऽतिधीरो राजैव तं लज्जाचकितोऽन्वशात्। राज्ञी रक्तातिसरणं जातमित्युच्यतां बहिः।
विधेया नारीणां तनयनिहिताशेषविभवाः कृतस्वाम्यो भृत्ये पुनरुदितविश्वम्भरभयाः।
नयन्तो गण्यत्वं प्रथमममियोगं वपुर्मरिं नयत्यक्ताः क्ष्मापाः प्रलयमुपगच्छन्ति न चिरात्।
नृपतिर्व्वाहितहृयः शारदातपखेदितः। तृष्यन्निपीय धान्याम्बुच्युतासृक् जात इत्यभूत्।
गम्भीरै राजपुरुषैस्तथा वार्त्ता प्रवर्त्तिता। यथा नावुद्ध वृत्तान्तमेतं कोऽपि बहिर्जनः।
॥ युग्मम् ॥ वत्सरे सप्तपञ्चाशे पौर्णमास्यां स कार्त्तिके। विजयेशाग्रतो राजा जीवितेन व्ययुज्यत।
पत्न्याः पुत्रस्य चोद्वेगैस्त्यक्तो राजा सुखोचितः। प्रसार्य्य पादौ निद्रातुं प्राप सोऽवसरं चिरात्।
शुक्रोपाशो न कस्मैचिच्छुकोपास्मै न कश्चन। चक्रे सुखी विमन्युश्च मरणेन महामनाः।
सङ्ग्रामराजदायादो न कस्यचिदिव प्रियः। श्वेगुरुकाच्छादितो भूमावनाथ इव सोऽस्वपत्।
न प्रियाक्रन्दितैः खिद्यन्नकुप्यन्न प्रियोक्तिभिः। सर्व्वत्यागी ययौ राजा दीर्घनिद्रारसज्ञताम्।
दाक्षिण्यौसङ्गनप्रायश्चित्तायेव त्यजन्नसून्। कृतज्ञया पतिः पत्न्या ततो निन्ये सनाथताम्।
आराजपुत्रचण्डालं देयं प्रत्याह वेतनम्। ददौ स्वस्येव भृत्येभ्यः सा कर्तुमनृणं पतिम्।
गृहीतवेतना भृत्याः कोशं सर्व्वं तया स्वयं। पुरस्ताद्विजयेशस्य नप्तुः क्षेमाय पायिनाः।
पादन्यस्तशिराः पौत्रो रुदन्नर्पितकोशया। मूर्द्ध्न्याघ्राय कथितो मा पितुर्व्विषमीरिति।
उत्थितेव ततो भूत्वा स्वयमाकुलिता सती। प्रातिहार्य्यं यथाङ्कर्तुः कारयन्त्यन्तमण्डनाः।
षादिनां प्रतमादिश्य नप्तुस्तनैव रक्षणे। सा पुनः शिविकारूढमय प्रास्थापयत्पतिं।
सपाशेकान्दिनार्द्धश्च स्त्रियेवं पतिदेवता। प्रणम्य विजयेशानं युग्यारूढा विनिर्ययौ।
निर्यान्तौ वीक्ष्य तौ प्रेतद्वय्यकल्लोलमिश्रितैः। लोकस्याक्रन्दतुमुलैर्भग्ना इव दिशोऽभवन्।

तनयो नयनाख्यस्य कल्प. सेल्यपुरौकसः। कुटुम्बिनो जयकाख्यः क्रमाद्रामरतामगात् ।
स्वल्पोत्पत्तिः स दिग्देशविक्रीतान्नोवणिज्यया। सम्भृतार्थ. शनैर्लुब्धो धनेशस्पर्धितां दधे।
सार्द्धं क्रोशं खनित्वा स नित्यं दीन्नारराशिभिः। पूरितायाः चितेः पृष्ठे वह्नन्त्रीहीनशापयत् ।
दीन्नारन्यसनं भृत्यैः कारयित्वा प्रतिचयं। वहवो भेदभीतेन तेन गूढं निपातिताः ।
सा भाङ्गिलं लब्धुमिच्छन् वलेऽरुणात्पलायिते। द्राचालतानिरुद्धाश्वो हतः केनापि पत्तिना ।
तदीयेनोपलब्धेन धनेन वसुधातलात्। पर्य्याप्तेनात्यजद्राजा यावदायुर्दरिद्रतां।
सस्तत्तु चाल्यमानेषु तद्दीन्नारेष्वहर्निशं। कलुषाम्भा वह्नन्मासान्वितस्ता समपद्यत ।
दानोपभोगरहिताः काले क्लेशेन भूयसा। अन्यार्थमर्थान् रचन्ति चिरं लुब्धा महाशयाः।
प्राणान् धारयते निपीय मरुतः शेते तमोन्धे बिले सम्भोगे परदत्तमिच्छति पटं नग्नत्वपाशान्तये ।
वित्तार्थ्येति कदर्थ्यतामहिरवत्यन्यस्य हेतोर्निधीन्नान्यः कोऽपि परम्परोपकृतिषु प्रौढोऽस्ति लुब्धं विना।
अन्यैश्च बहुभिर्मार्गैर्नद्यः सिन्धुमिवाविशन्। नानार्थसम्पदस्तास्ता भाग्यभाजं महीभुजं।
अर्थाभाग्योदये जन्तुं विशन्ति शतशः स्वयं। दिग्भ्योऽभ्युपेत्य सर्व्वाभ्यः सायं तरुमिवाण्डजाः।
स्रोतांसि प्रवलत्वमेत्य वसुधां मूलेषु पुष्णान्त्यधो व्योम्नोऽम्भः पतति त्यजन्ति हरितो वारि प्रणालीमुखैः।
इत्थं शुष्कसरः पयोदसमये सम्पूर्य्यते सर्व्वतो भाग्यानामुदये विशन्ति शतशो द्वारैर्न कैः सम्पदः।
जनरचणदाचिण्ये ततः पितुरिवान्वहं। कुशला कलशस्यासीत्प्रजापुण्योदयैर्मतिः।
स्वयं वणिगिवार्थानां गणनाकुशलोऽपि सः। विवेक्ता सत्पथत्यागे मुक्तहस्तः सदाभवत्।
उपस्थितौ भाविनो च पश्यन्नायव्ययौ स्वयं। अन्तिकान्नात्यजद्भूर्जखटिकादि नियोगिवत्।
तस्य स्वल्पमूल्येन रत्नादि क्रीणतः स्वयं। नाशकन्वञ्चनां कर्तुं कोऽपि विक्रयकारिणः।
त्रिवर्गं सेवमानः स विभज्य समयं सुखी। मध्याह्नादूर्ध्वमभवद्दृश्यः सर्व्वकार्य्यिणां।
तस्य स्वेषां परेषाञ्च कृत्यमन्वियतश्चरैः। अज्ञातः स्वप्रवृत्तान्तः प्रजानामभवद्यदि।
स्ववेश्मेव गृहस्थस्य ध्यायतश्चास्य मण्डलं। जनो जनपदे जातु न कश्चिद्दैन्यमस्पृशत्।
कौलीनचकितो राजा कुर्व्वन् कण्टकशोधनं। प्रकटं नात्यजद्दण्डं चौरेभ्योऽपि स जातु चित्।
न तस्यार्थः कोऽपि नष्टो मन्त्रिणो यमयोजयन्। मन्त्रिणां स पुनश्चक्रे नष्टस्यार्थस्य योजनं।
विवाहयज्ञयात्रादिमहोत्सवशताकुलः। नित्यप्रहृष्टो निर्दैन्यस्तद्राज्ये ददृशे जनैः।
तेन नीतिविदाक्रान्ताः क्ष्माभुजः चितिमन्तराः। आहाराचरणेऽप्यासंस्तदध्यचान् विना चमाः।
तन्वङ्गस्यस्यकनादींस्तोनायातान्दिगन्तरात्। व्ययितैकानुजान्मल्लप्रमुखान् गुङ्गुजानपि।
अप्रीणयदन्मृत्यान् स भव्याभिर्व्विभूतिभिः। कलाभिरस्तताद्रीभिः सोमः सुरपितृनिव।
॥ युग्मं ॥ अवाप्तपरिपाकोऽपि दौःशील्येन न भूपतिः। कुदैशिकोपदिष्टेन दुष्टाचारेण चोज्झितः।
टक्केन वुलियाख्येन कन्यकाः समुपाहृताः। क्रीडास्तस्य तुरुष्केभ्यो नानादिग्देशसम्भवाः।
स ताभिः परदारैश्च लोभरूपादुपाहृतैः। अवरोधपुरस्त्रीणां द्वास्थतामढौकयत्।

न यत्प्रभुः प्रियं भृत्यं गमनात्स न्यवर्त्तयत्। उपालेभे समन्युश्च न यद्भृत्यः प्रियं प्रभुं।
सहोत्थितेन कतिचित्पदानि सह भूभुजा। चिरं कृत्वा कथां नोचैर्हसन् विल्लो विनिर्ययौ।
जिन्दुराजं हलधरो मुमूर्षुर्दूषयन् यथा। तथा विल्लजयानन्दः स व्यवरोपयत्पदात्।
तल्लक्ष्मीमात्रशेषां द्मां कृत्वा गच्छन्विधीयतां। कृतार्थो विल्ल इत्युक्तिं नाग्रहीन्मन्त्रिणां नृपः।
निवर्त्तयिष्यति स्मास्मन्नियतं गमनादमुं। इत्याशयान्वगाद्विल्लं राजवर्त्मञ्जनोऽखिलः।
आस्कन्दं शङ्कमानोऽस्याद्विल्लाद्राजा बलोर्जितात्। क्षणसन्देऽपि चकितो निर्निद्रः पञ्च यामिनीः।
तस्मिन् शूरपुरायाते निवृत्तेष्वनुगन्तृषु। निवृत्तशङ्कस्तां शङ्कां प्रादुश्चक्रे स मन्त्रिणां।
ते तदाकर्ण्य यं मन्त्रं विल्लार्थहरणेऽब्रुवन्। तस्याविधाने भूभर्तुरमन्यन्त नयज्ञतां।
विल्लादयस्तु निर्व्रीडा यं यं देशमशिश्रयन्। तत्र तत्रैव पूज्यत्वं रत्नानीव प्रपेदिरे।
विल्लोऽधिकं प्रवृद्धोऽपि दैवतस्येव भक्तिमान्। पद्मां कलशदेवस्य सत्यंकारः सदाभवत्।
एवं निर्व्वास्य विल्लादीनचिरावाप्तवैभवः। चिप्रं सूर्य्यमतीशापाज्जयानन्दः क्षयं ययौ।
राज्ञो विरोधकृदकुं शापस्याथभिचारतां। प्रमयञ्जिन्दुराजोऽपि तस्मिन्नेव क्षणे ययौ।
तेऽपि विल्लादयः क्षिप्रमचिरावाप्तसम्पदः। प्रापुः शापोचितं सर्व्वे प्रमयं गौडमण्डले।
आकस्मिकेऽथ प्रमये विल्लः प्रमयमाययौ। सुदीर्घबन्धनक्लेशं प्रापुस्तदनुजा अपि।
पलायितेषु कारायास्तेषु व्याघ्रेण भाजकः। हतस्तदनुजाः शेषा भुक्तक्लेशाः क्षयं ययुः।
छिन्नास्तद्वैधकाराणां नानयन्मदनादयः। अदीर्घेणैव कालेन दुरन्तैर्वैभवैर्थनैः।
जयानन्दसहायोऽथ तत्पुत्रान् परिपालयन्। सर्व्वाधिकारी भूपेन वामनाख्यो व्यधीयत।
यस्य तास्ताव्यवहृतीर्नीतिज्ञस्याद्भुतावहाः। वर्णयन्ति वयोवृद्धा गोष्ठीष्वद्यापि धीमतां।
ग्रामानवन्तिस्वाम्यादिभोग्यानाहृत्य लुब्धधीः। राजा कलशगञ्जाख्यं कर्म्मस्थानं विनिर्ममे।
मन्त्रिणे नोनकायाथो धनोत्पादविधेऽप्यदात्। कार्य्यव्रस्तो न पादाग्रं जनरक्षणदक्षिणः।
मन्त्रिणो राजकलशपश्यान्यत्यन्तरङ्गतां। लेभिरे च्माभुजः पार्श्वे प्रशस्तकलशादयः।
सुता स्वाच्छन्द्यवित्रासोराः सन्ध्यादिसंश्रयाः। युक्त्या निदधिरे राज्ञा निवद्धस्वाधिकारिणः।
पुनर्मदनपालेन क्रान्ते राजपुरीपतौ। साहायकाय व्यसृजत्तेनान्यं वप्पटं नृपः।
प्रतापैर्भूपतेस्तेन भृत्यांशेनापि निर्ज्जितः। बद्धा मदनपालोऽपि कश्मीरान् सम्प्रवेशितः।
भ्राता वराहदेवस्य कन्दर्पाख्यो महीभुजा। कृतोद्धाराधिपो वीरो विदधे डामरक्षयं।
बभूव जिन्दुराजास्य शिक्षितो नयविक्रमौ। भूम्यनन्तरसामन्तमुकुटस्पृष्टशासनः।
स राजपुर्य्यादिजयी द्वारं परमकोपनः। क्षणे क्षणेऽत्यजद्राज्ञा प्रसाद्य ग्राहितः स्वयं।
मदनः क्षितिपालेन प्रापितः कम्पनेशतां। लब्धप्रकर्षान्वोपादीन् डामरानजसोऽवधीत्।
सेवावशीकृतः श्येनपालं स नगराधिपं। चक्रे त्रिजर्यसिंहाख्यं हताशेषमलिम्लुचं।
कन्दर्पोदयसिंहाधे प्रहिते लोहरे सकृत्। राजा भुवनराजस्य दूरं निस्सारणं व्यधात्।

बह्वीः कामयमानस्य योषितः प्रतिवासरं । मांसयूषादिभिर्द्रव्यैर्नास्य पुष्टिरहीयत ।
महासमयपूजासु व्यग्रः स गुरुभिः समं । महाचरुणामाहारं नीतिमुत्सृज्य चाकरोत् ।
एवं प्रवलकृत्येन पुरं तेन नवीकृते । निर्दग्धे विजयक्षेत्रे शिलावेश्म न प्रज्वलितः ।
विजयेशशिलावेश्म सौधावातपवारणं । नृपोऽम्बरशिरश्चुम्बिजाम्बूनदमयं व्यधात् ।
व्ययस्थितिं चानपायां व्यधत्त त्रिपुरेश्वरे । पिनाकिनश्च प्रासादं स स्वर्णामलसारकं ।
ततः सत्कर्मकुशलश्चकार कलशेश्वरं । निःसङ्ख्यहाटकघटीपटलाङ्कशिलाग्टहं ।
कलशेशोपरिच्छत्रं चिकीर्षोः काञ्चनाञ्चितं । तुरुष्कदेशजः शिल्पी राज्ञोऽभ्यर्णमुपाययौ ।
सहस्रैर्भूरिभिर्हेमच्छत्रसिद्धिं वदन् कलां । स च्छादयन्निजां तासे काञ्चनारोपणं विदन् ।
कानिचिद्दिवसान्यासीत्प्राप्नुवन्नृपसत्क्रियां । ततोऽपि तीक्ष्णप्रज्ञेन नोनकाख्येन मन्त्रिणा ।
अभ्यूह्य शिक्षितकलो विलक्षोऽगाद्यथागतं । तच्च च्छत्रं ययौ सिद्धिमत्यल्पैरेव काञ्चनैः ।
अनन्तेशाभिधं बाणलिङ्गमन्यास्य भूपतिः । प्रतिष्ठाविधिं व्यधात्सौ स शक्राधिकवैभवः ।
नृपे सहजपालाख्ये शान्तिं यातेऽभ्यषिच्यत । ततः संग्रामपालाख्यो राजपुर्यां तदात्मजः ।
राज्यं जिहीर्षुर्बालस्य पितृव्यस्तस्य भूपतेः । भेजे मदनपालाख्यो बलीयानुद्यमं महान् ।
तद्भयाच्छरणं प्रायान्नृपं साहायकार्थिनी । स्वसा संग्रामपालस्य जस्सराजस्य ठक्कुरः ।
कृतप्रसादो नृपतिः साहायककृते ददौ । तयोः पश्चाज्जयानन्दं शूरैर्विज्जादिभिः समं ।
तत्र विद्रावितामित्रसम्पूर्णोत्क्रान्तमण्डलः । संग्रामपालामात्यानां कार्य्यान्ते शक्यतां ययौ ।
काङ्क्नो गमनं तस्य दत्त्वा ताश्चा विभीषिकाः । ते त्रासमैच्छन्नाधातुं स वीरो न व्यकम्पत ।
मतिं राजपुरीयाणामपावेतामदादिति । शङ्कमानेन तेनाथ विज्जो मन्युरुपाहृतः ।
तैस्तत्र दत्तद्रविणैः प्रार्थितोऽथ महामतिः । रक्षापदेशात्सैन्यं स्थापयित्वा न्यवर्त्तत ।
एवं राजपुरीं तस्मिन् स्वीकृत्यान्तिकमागते । तुतोष कार्य्यमर्मज्ञः प्राज्ञः कलशभूपतिः ।
क्रमाद्राजायमानेषु विज्जादिष्वथ पस्पृशे । आमयेन जयानन्दो दैवात्प्रमयहेतुना ।
स्वास्थ्यवार्त्तोपलम्भाय भूपतिं ग्टहमागतं । वाच्यमस्ति रहः किञ्चिदित्यूचे स कथान्तरे ।
निधानेष्वथ सर्व्वेषु किञ्चिन्नैवाब्रवीद्यदा । तदा ताम्बूलतित्यचाव्याजाद्विज्जो विनिर्ययौ ।
आप्तेनान्तोऽपि निर्गच्छत्किम्प्रयासीति भूभुजा । मन्त्रिणा चैत्य स प्राज्ञो बहिरेव व्यलम्भत ।
जयानन्दोऽभ्यधाद्भूपमुक्ता राजपुरीकथां । व्यक्तं मास्त्वेव ते राज्यं विज्जे वृद्धिमुपागते ।
आदीयमानाद्विज्जेन कार्य्येभ्यो वेतनादपि । दर्शयामास गणनां सत्त्वमूल्यां महीभुजे ।
प्रातः कनुपतां राजा प्रयातः स्वगृहांस्ततः । याचितो गमनानुज्ञां विज्जेनेङ्गितवेदिना ।
निषेधन्निव दाक्षिण्यवशान्निर्बन्धकारिणः । तस्यानुज्ञां ददौ गन्तुं मान्तखोपा महीपतिः ।
सम्भादेशो गृहान् गत्वा सर्व्वोपकरणैः समं । प्रस्थाप्य सोऽपरेतो भ्रातृनामष्टुं नृपतिं ययौ ।
राजधर्मगम्भीरस्मस्मरयोः स्वामिभृत्ययोः । काचिदेव क्षणे तस्मिंश्चेष्टाभूदद्भुतावहा ।

न यत्प्रभुः प्रियं भृत्यं गमनात्स न्यवर्त्तयत् । उपालेभे समन्युश्च न यद्भृत्यः प्रियं प्रभुं ।
सहोत्थितेन कतिचित्पदानि सह भूभुजा । चिरं कृत्वा कथां नोच्चैर्हसन् विज्जो विनिर्ययौ ।
जिन्दुराजं हलधरो मुमूर्षुर्दूषयन् यथा । तथा विज्जजयानन्दः स व्यत्यारोपयत्पदात् ।
तल्लक्ष्मीमात्रशेषां क्ष्मां कृत्वा गच्छन्निधीयतां । कृतार्थो विज्ज इत्युक्तिं नाग्रहीन्मन्त्रिणां नृपः ।
निवर्त्तयिष्यति क्ष्मार्थिन्नियतं गमनादमुं । इत्याशयान्वगाद्विज्जं राजवर्ज्जं जनोऽखिलः ।
आस्कन्दं शङ्कमानोऽस्माद्विज्जाद्राजा बलोर्जितात् । क्षणस्पन्देऽपि चकितो निर्निद्रः पञ्च यामिनीः ।
तस्मिन् प्रवरपुरायाते निवृत्तेष्वनुगन्तृषु । निवृत्तशङ्कस्तां शङ्कां प्रादुश्चक्रे स मन्त्रिणां ।
ते तदाकर्ण्य यं मन्त्रं विज्जार्थहरणेऽब्रुवन् । तस्याविधाने भूभर्तुरमन्यन्त नयज्ञतां ।
विज्जादयस्तु निर्द्रोहा यं यं देशमशिश्रयन् । तत्र तत्रैव पूज्यत्वं रत्नानीव प्रपेदिरे ।
विज्जोऽधिकं सदृक्षोऽपि दैवतस्येव भक्तिमान् । पञ्चां कलशदेवस्य सत्यंकारः सदाभवत् ।
एवं निर्वास्य विज्जादीनचिरावाप्तवैभवः । क्षिप्रं सूर्य्यमतीशापाज्जयानन्दः क्षयं ययौ ।
राज्ञो विरोधकृद्वक्तुं शापस्याव्यभिचारतां । प्रमयञ्जिन्दुराजोऽपि तस्मिन्नेव क्षणे ययौ ।
तेऽपि विज्जादयः क्षिप्रमचिरावाप्तसम्पदः । प्रापुः शापोचितं सर्व्वे प्रमयं गौडमण्डले ।
आकस्मिकेऽथ प्रमये विज्जः प्रमयमाययौ । सुदीर्घबन्धनक्लेशं प्रापुस्तदनुजा अपि ।
पलायितेषु कारायास्तेषु व्याजेन पाजकः । हतस्तदनुजाः शेषा भुक्तक्लेशाः क्षयं ययुः ।
द्विवास्तद्वैधकाराणां नानश्यन्मदनादयः । अदीर्घेणैव कालेन दुरन्तैर्यैर्भविष्यते ।
जयानन्दसहायोऽथ तत्पुत्रान् परिपालयन् । सर्व्वाधिकारी भूपेन वामनाख्यो व्यधीयत ।
यस्य तास्ताव्यवहृतीर्नीतिज्ञस्याद्भुतावहाः । वर्णयन्ति वयोवृद्धा गोष्ठीष्वद्यापि धीमतां ।
ग्रामानवन्तिस्वाम्यादिभोग्यानाहृत्य लुब्धधीः । राजा कलशगञ्जाख्यं कर्म्मस्थानं विनिर्ममे ।
मन्त्रिणे नोनकायाधो धनोत्पादविधेऽप्यदात् । कौर्य्यभक्तो न पादाग्रं जनरञ्जणदक्षिणः ।
मन्त्रिणो राजकलशापथ्यान्यत्यन्तरङ्गतां । लेभिरे क्ष्माभुजः पार्श्वे प्रशस्तकलशादयः ।
सुता स्वाच्छन्द्यविश्वासैाराः सन्ध्यादिसंश्रयाः । युक्त्या निदधिरे राज्ञा निवद्धस्याधिकारिणः ।
पुनर्मदनपालेन क्रान्ते राजपुरीपतौ । साहायकाय व्यसृजत्तेनान्यं वप्पटं नृपः ।
प्रतापैर्भूपतेस्तेन भृत्यांशेनापि निर्ज्जितः । बद्धा मदनपालोऽपि कश्मीरान् सम्प्रवेशितः ।
भ्राता वराहदेवस्य कन्दर्पाख्यो महीभुजा । कृतोद्वाराधिपो वीरो विदधे डामरक्षयं ।
बभूव जिन्दुराजात्स शिक्षितो नयविक्रमौ । भूम्यनन्तरसामन्तमुकुटस्पृष्टशासनः ।
स राजपुर्य्यादिजयी द्वारं परमकोपनः । क्षणे क्षणेऽत्यजद्राज्ञा प्रसाद्य ग्राहितः स्वयं ।
मदनः क्षितिपालेन प्रापितः कम्पनेशतां । लब्धप्रकर्षान्नोपादीन् डामरान्वङ्गशोऽवधीत् ।
सेवावशीकृतः श्येनपालं स नगराधिपं । चक्रे विजयसिंहाख्यं हताशेषमलिम्लुचं ।
कन्दर्पोदयसिंहाद्यैः प्रहिते लोहरे सकृत् । राजा भुवनराजस्य दूरं निस्सारणं व्यधात् ।

कीर्त्तिराजस्य तनयां स च नीलपुरप्रभोः। लब्ध्वा भुवनमत्याख्यां रिपोश्छिद्रामयोऽभवत्।
कार्य्यप्रतिग्रहे कर्त्तुं प्रवृत्तिं याचितोऽभवत्। दत्वा विजयसिंहाद्यो नृपेण नगरेशतां।
गुङ्गात्मजः स मल्लोऽथ तेन द्वारपतिः कृतः। राज्ञां मौलिमणिस्थाने स्वप्रतापमरोपयत्। ४८५
॥ युग्मं ॥ शौर्य्यं निष्परिवारस्य पार्थस्योत्तरगोग्रहे। उरसा सम्प्रवेशे वा द्रुतं मल्लस्य मानिनः।
पञ्चाशैस्तुरगैर्यस्य कृत्स्ना तोला व्यपाहरत्। राज्यं वाजिप्रजैस्सार्द्धमभयाख्यस्य भूभुजः।
एवं वशीकृतभुवो भूपतेर्नयवेदिनः। सममेवाष्टभूपालास्त्रिषष्टेऽब्देऽविशन् पुरं।
कीर्त्तिर्न्यर्व्वपुराधीशश्चाम्पेयोभूद्दासटः। तुक्कात्मजस्तु कलशो वल्लापुरनरेश्वरः।
राजा संग्रामपालाख्यः स च राजपुरीपतिः। उत्कर्षोलोहरोर्व्वीभृद्दार्व्वेशो मुङ्गजो नृपः। ४९०
गाम्भीरसीह. कान्देशः काष्ठवाटधराधिपः। श्रीमानुत्तमराजोऽपि राजानमुपतस्थिरे।
॥ तिलकं ॥ राजलोक प्रवृद्धोऽपि घने जनपदेऽभवत्। दुर्लक्ष्यो वार्षिकसरित्पूरो वारिनिधाविव।
तस्मिन् क्षणे शिलीभूतवितस्तासलिले नृपे.। शीतक्षणेऽपि सङ्कीर्णं सुखं तैरन्वभूयत।
मनसापि हि भूपाला यत्ते किञ्चिदचिन्तयन्। प्राप्तमेव पुरे पश्य वामनेन तदाहृतं।
कौशलं मन्त्रिणस्तस्य रराजेतरदुर्लभं। निमित्तं तदसम्भ्रान्तो नित्यवद्यो न्यवाहयत्। ४९५
पार्थिवेष्वथ यातेषु मल्ले कार्य्यपराङ्मुखे। क्षितिपालेन कन्दर्पो द्वारं स्वीकारितः पुनः।
अभिमानधनो मन्त्री कृतारम्भिर्निजैर्धनैः। दुर्गं स स्वापिकं नाम युक्त्या दुर्ग्रहमग्रहीत्।
स प्रविष्टोऽपि नगरं खिन्नः केनापि हेतुना। पार्थिवाभ्यर्थ्यमानोऽपि कार्य्यं नैवाग्रहीद्यदा।
तदा प्रशस्तकलशं नित्यं दूत्यं समाचरन्। तदुक्तिकोक्तिसन्तप्तः संस्पृशन्नभिमानितां।
निर्जग्रियातिभूयस्या भूरीन् सङ्गृह्य शिल्पिणः। तत्पदे रत्नकलशं स्वभ्रातरमकारयत्। ५००
सोऽर्थैः क्रीतमयोऽप्यासीन्न कन्दर्पः समः क्वचित्। किञ्चित्रोल्लिखितः सिंहः सत्यसिंहक्रियां स्पृशेत्।
ततः क्रमेण भूभर्त्ता म्त्यरत्नं कथञ्चन। राजस्थानाधिकारं स नगरे याचितः पुनः।
अतिताडनतश्चौरे विपन्नेऽथ कृपाकुलः। त्यक्त्वा तमप्यधीकारं विषयाजाङ्गवीमगात्।
पटान्तकृतसंरोधस्ताडयित्वा करं प्रभोः। कोपाद्देशान्तरं यातस्तं प्रत्यास्ते स्म मन्युमान्।
अत्यन्तखेदितोऽप्यासीदानीतस्यान्तिकं पुनः। दर्पं हर्त्तुं नृपस्तस्य सन्नद्धो नतु जीवितं। ५०५
इत्थं पुरुषसिंहानां प्रौढदार्ढ्यं विशोढवान्। आरोहमवरोहञ्च सन्तरज्ञः क्षमापतिः।
उपाङ्गगीतव्यसनं नर्त्तकीसङ्ग्रहादरः। देशान्तरोचितं राज्ञा तेनैवेह प्रवर्त्तितं।
ततो जयवनोपान्ते निरन्तरमहागृहं। स्वनामाङ्कं पुरं कर्त्तुं प्रावर्त्तत विशाम्पतिः।
मठाग्रहारप्रासादमहाम्टहपरम्पराः। स्नतोयोपवनाश्चात्र ययुः सिद्धिं सहस्रधा।
अत्रान्तरे राजसूनुर्हर्ष. सोत्कर्षपौरुषः। गुणैर्लेभे प्रकाशत्वमन्यभूपालदुर्लभैः। ५१०
सोऽशेषदेशभाषाज्ञः सर्व्वभाषासु सत्कविः। कृत्स्नविद्यानिधिः प्राप ख्यातिं देशान्तरेष्वपि।
लुब्धेन पित्रा सन्त्यक्ता जना नानादिगागता.। गुणभोग्यैस्त्वलस्तेन गृहीताः कृतवेतनाः।

अपर्य्याप्ते पिहन्ते वेतने व्ययशालिनः । एकाहान्तरितं तस्य भोजनं त्यागिनोऽभवत् ।
पितरं गायन इव व्यक्तं गीतैः स रञ्जयन् । भर्त्तव्यभरणं चक्रे तद्दत्तैः पारितोषिकैः ।
उद्गायति पुरस्तस्मिन् कदाचिदथ पार्थिवः । सभ्येषु प्रीयमाणेषु शौचायोत्थाय निर्ययौ ।
तेन प्रसङ्गभङ्गेन जाततेजोवधः सुधीः । क्षुभ्यन्नैलज्ज्यकोपाभ्यां कुमारः क्षितिमैक्षत ।
प्रभुर्व्वीतक्षान्तिः सुहृदतिशठः स्त्री परुषवाक् सुतो गर्व्वान्नद्धः परिजनउदात्तप्रतिवचाः ।
इयान् सोढुं शक्यो ननु हृदयदाही परिकरो ननु श्रोतावज्ञालुलितनयनान्तं परिभवन् ।
पितुरेव तदा भृत्यो विश्वावद्धाभिधो विटः । शाधि राज्यं निहत्येमं नर्म्मणेत्युवाच तं ।
अधिक्षिपन्स तं रोषान्नानेनोक्तमसांप्रतं । इत्यासन्नेन हसता धम्मटेनाप्यकथ्यत ।
अग्रे भोगेच्छवश्छन्नाः कुमारानन्नुगान् पितुः । स्वेहं प्रदर्श्य स्वीकुर्य्युर्वेश्याः कामिसखीरिव ।
पुनः सभां सम्प्रविष्टस्तं पिता पर्य्यतोषयत् । प्रीतिदायैस्ततस्तैस्तैः साधुवादैश्च मानिनां ।
अन्येद्युस्तु पितुः पार्श्वात्स भुक्त्वा स्वगृहान् गतः । अभ्येत्य विश्वावद्धेन तदेव जगदे रहः ।
उपपन्नं तत्तदुक्त्वा तेनाभीक्ष्णं निषेधता । निर्व्वध्नन्नपि हस्तेन सोऽथ कोपादताड्यत ।
उग्राभिघातं रुधिरं वमन्तं घ्राणवर्त्मना । तं वीक्ष्य सोऽभिजातोऽभूत्सदाक्षिप्तो नृपात्मजः ।
भृत्यैः प्रक्षालयन्नस्रं तस्येदृक् पाप्मनो भवेत् । उक्तेनापीति कथयन् स्मित्वा वासांस्यदापयत् ।
अनिच्छोरपि तस्येच्छा दानात्तेनाप्यमोच्यत । दुःशीलेनान्यकामिन्याः स्मितमात्रादिव स्पृहा ।
असकृल्लुतयत्नः स ततः कालेन भूयसा । तं प्रैरयत्तत्र कृत्ये मध्ये स्वीकृत्य धम्मटं ।
स रोहद्द्रोहसङ्कल्पजन्मना पाप्मना श्रितः । संमन्त्र्य पितरं हन्तुं तीक्ष्णान् प्रायुङ्क्त सर्व्वतः ।
प्रश्वत्स गोचरीभूतस्तेषां स्वेहलवस्पृशां । न घातितः स्वसुना च वर्ज्जिता नच तत्कथा ।
आप्तलं तीक्ष्णवर्गेऽथ प्रतिभेदभयाद्गते । तां विश्वावद्ध एवाशु वार्त्तां राज्ञे न्यवेदयत् ।
बुद्धवान्राजपुत्रस्तत्तस्मिन्नहनि जातभीः । भोक्तुं नागात्पितुः पार्श्वमपि दूतैः कृतार्थनः ।
सोऽपि तस्मिन्ननायाते तत्रार्थे शान्तसंशयः । दिने तत्र मनस्तापान्नाभुङ्क्त सपरिच्छदः ।
सभ्राद्वकस्य प्राप्तस्य प्रातर्दुःखं न्यवेदयत् । सुचिरं यक्ककनस्याङ्के शिरो विन्यस्य सोऽरुदत् ।
उक्त्वा च दम्मटोदन्तं बद्धा तस्य समर्पणं । विधेहीत्यभ्यधान्नापि तं भङ्गीभणितिक्रमैः ।
न कृताधिगमावावां कृत्यस्यास्येत्युदीर्य्य तं । अभाषेतां भ्रातुरर्थे पुनस्तन्वङ्गनन्दनौ ।
त्वत्प्रसादबलाद्राजन्नापन्नत्राणदीक्षितौ । यावावां तत्प्रवेशार्थं व्यक्तद्वारं निशास्वपि ।
कथं नु पृथिवीपाल प्राप्ते प्राणात्ययक्षणे । निर्दोषो वा सदोषो वा ताभ्यां सन्त्यज्यतेऽनुजः ।
॥ युगलकं ॥ स्वामिद्रोहापवादश्च भवेत्तद्रक्षणाद्ध्रुवं । देशत्यागं तदुत्सृज्य शरणं नान्यदावयोः ।
इत्यादि सभाव्य तयोः पादन्यस्तोत्तमाङ्गयोः । हृदि त्वागमनानुज्ञां कथञ्चित्पार्थिवो ददौ ।
पथिकस्येदमुं हन्यान्मध्योक्षत्येति दम्मटं । तौ विनिर्जग्मतुर्देशात्ततः ससलवाहनौ ।
तन्वङ्गजेषु यातेषु निविक्तीकृतमन्दिरः । सुतमानीय नृपतिः सान्त्वयन्निदमब्रवीत् ।

आसंसारं जगत्यस्मिन् सर्व्वतः ख्यातकीर्त्तिना । जनकेनैव जन्यस्य प्रसिद्धिरुपाद्यते जनैः ।
पुत्त्रप्रीतांशुनेवात्त्रिं दिक्द्वीपख्यातकीर्त्तिना । भवता तु सुपुत्त्रेण मास्मानात्यखिलोजनः ।
स त्वं गुणवतामग्र्यो निरर्गलयशाभवन् । असाधुसेव्यमध्वानं वद कस्मान्निसेवसे ।
पैतामहं निजस्वार्थं यत्न तुभ्यं समार्पयं । तत्र हेतुमनाकर्ण्य नास्थयां कर्त्तुमर्हसि ।
रिक्तः स्वेभ्यः परेभ्यश्च प्राप्नोत्यभिभवं नृप । इति निर्धाय हि मया क्रियते कोशरक्षणं ।
पुरप्रतिष्ठां निष्पाद्य चिप्रा राज्यधुरं त्वयि । वाराणस्यां गमिष्यामि नन्दिक्षेत्रेऽथ वा पुनः ।
तद्राज्यकोशयोः स्वामी बुभूषुर्न चिराद्भवान् । अतितात्पर्य्यतः कस्मादनार्य्याचितमीहसे ।
सम्भाव्यते त्वयि न तद्यन्ममावेदितं खलैः । यथार्थकथनात्तस्मात्कौलीनं विनिवार्य्यतां ।
विशुद्धये करोत्येष स्वकृतस्याप्रतिश्रवं । खेदादितीच्छंस्तद्राजा साभिप्रायं वचोऽभ्यधात् ।
अपलापवचोमात्रं निनीषुस्तस्य हेतुतां । जनप्रत्यायने सोऽभूद्यस्मात्त्वान्तिसमुत्सुकः ।
हर्षस्तु साधुवादैस्तत्पितुः संपूज्य भाषितं । वच्याम्याप्तमुखे तत्वमित्युक्त्वा निर्ययौ बहिः ।
सामान्यप्रेरणादेषा चिकीर्षाभूदिति ब्रुवन् । स पितृप्रहितं दूतं भीतः सावसथं ययौ ।
दूतं स्नानाननं वीच्य पाणिभ्यां ताडयञ्छिरः । हा पुत्त्रेति वदन्राजा तस्यास्क्रन्दमदापयत् ।
हतेऽस्मिन् स्वशिरश्छिन्द्यामिति प्रोक्तवतः प्रभोः । निदेशाद्वेष्टयित्वैव तस्थुस्तद्वेश्म शस्त्रिणः ।
तीक्ष्णास्तु पिहितद्वाराः परिवार्य्य नृपात्मजं । ऊचुः सुपरुषां वाचमेवं निश्चितमृत्यवः ।
अस्मान् घृणी प्रमादी च विरुद्धं च्छद्म कारयन् । घातयित्वा दुराचार क्व जीवन् स्थातुमिच्छसि ।
रक्षिष्यति सुतं स त्वा स पिता रक्षितस्त्वया । ज्ञातेयं युवयोरस्ति वयमेव हताः पुनः ।
युध्यस्व मध्यगोऽस्माकं त्वां निहन्मोऽन्यथा वयं । एवं सर्व्वप्रकारं ते व्यक्तं नास्त्यत्र जीवितं ।
तां वार्त्तां भूपतेः श्रुत्वा व्याकुलस्यायतः स्थितः । हर्षान्तिकं दण्डकाख्यः प्रायान्निजमहत्तरः ।
तीक्ष्णैर्निजतया दत्तप्रवेशः स नृपात्मजं । प्रहृत्योवाच मतिमानेवं सर्व्वान् विमोहयन् ।
क्षत्रियापुत्त्र जीवित्वा कल्पानल्पेतरानपि । कारणैरपि गन्तव्यं नियमान्नियतेर्व्वशं ।
तदेतस्मिन् समासन्ने मरणे व्यभिचारिणि । यदर्थं रत्नवत्ने शस्त्रं समानः पाल्यतां त्वया ।
कृतश्रुतख्यातयशा युवा सुक्षत्त्रियो भवान् । तदाहवविलम्बेन कार्य्यं किमिव पश्यसि ।
एतेषु सुसहायेषु मयि चावसरेऽधुना । विपत्तिर्व्विजयो वापि प्रतापिंस्तव शोभते ।
उत्तिष्ठ नखकेशादियोजनं कारय द्रुतं । वीरपट्टं बधानापि स्वःस्त्रीपरिणयस्रजं ।
इत्युक्त्वा क्षुरकर्म्मार्थं राजपुत्त्रं सनापितं । प्रावेशयत्पूज्यमानस्तीक्ष्णैराभ्यन्तरं गृहं ।
न्यस्तासिधेनुर्द्दर्पेण दत्तझम्पः क्षणात्स्वयं । पश्चात्प्रविश्य तद्वेश्म चक्रे सुनिहितार्गलं ।
ततः स राजस्थानीयं तमारादभ्यबोधत । रक्षितो राजपुत्त्रोऽयं क्रियतां खोचितं त्वया ।
भूतपक्षादिभवभोषधिभिर्व्विरोधिजातं बलैः प्रहरणप्रभवं तनुत्रैः ।
निर्व्वाप्यते प्रतिभयं पृथिवीपतीनां सार्व्वत्रिकन्तु रभसाहुवि बुद्धिवृद्धैः ।

नदन्तस्तुमुलं योधास्ततो राजसुतास्पदे । आरोढुमाययुर्व्वप्रहर्म्यादि प्रविविक्षवः ।
तीक्ष्णाद्दृढद्वारगृहस्थितं त्यक्त्वा नृपात्मजं । यावन्निर्गन्तुमिच्छन्ति हन्यमाना युयुत्सवः ।
द्विवाः प्रसङ्गसान्निध्यान्मध्यपातं समाश्रिताः । तावद्विनिर्ययुर्व्वीरा निर्द्रोहा अभिमानिनः ।
ते निर्याताः सूर्य्यमतीगौरीशाश्रयिणो गृहात् । सद्यश्चित्रान्तिकं प्रापुर्घ्नन्तो युधि विरोधिनः ।
रक्ष्यमाणोऽपि भूभर्तुर्गिरा ज्ञातेयशालिनः । राजज्ञातिहतस्तेषु प्रथमं सहजाभिधः । ६७५
द्विजस्तिव्याभिधो वीरः पण्डितः शौर्य्यमण्डितः । रामदेवस्य कोशी च कर्णाटोऽरिभटैर्हतः ।
केचित्त्यजन्तः शस्त्राणि स्वं घ्नन्तः केऽपि च स्वयं । लेभिरे बधबन्धादि पापाः कापुरुषोचितं ।
सितपष्ठ्यां सहस्रस्य चतुष्षष्टे स वत्सरे । वैरं नीत्वा पितापुत्रौ विप्लवः कारितो विटैः ।
हठत्यागासक्तिः प्रियप्रियुवतिसम्प्रेरणवचः खलासङ्गः पूर्व्वप्रणयपरिहारो जनयितुः ।
अमात्येन भ्रात्रा सममपरमाचाय कलहः कुमाराणां बुद्धिं पितरि विपरीतां प्रतनुते ।
एवं स खलसङ्गत्या कुमारो लब्धलाघवः । बन्धं कारागृहे प्रापदसुखानि सुखोचितः । ६८०
राज्ञी भुवनमत्यस्मिन् बद्धे माध्यस्थसंविदि । स्थापिता मानिनी कण्ठच्छेदं कृत्वा जहावसून् ।
रक्षिणो मन्त्रिणामाप्तांस्तस्य विन्यस्य भूपतिः । प्राहिणोद्भुवि तान् भोगान् सुतस्नेहाद्दिने दिने ।
चक्रिकायामयक्तोऽयमिति सञ्चिन्त्य भूभुजा । भृत्यः प्रयागनामास्य निजः पार्श्वान्न वारितः ।
नोनको हर्षमुद्दिश्य स्वैनान्यैश्च महीभुजं । जीवितं लोचने वास्य छ्रियेतामित्यभाषत ।
नृपः स भीलवैकल्ये पश्चुतुल्ये ह्रियं त्यजन् । रिपोरिव तनूजस्य चकमे कतिचित्प्रियाः । ६८५
तासु स्वश्रुरवात्सल्यमवाप्य सुगलाभिधा । बभूव तुक्कभूभर्त्तनभृतृर्बधार्थिनी ।
सम्मन्त्र्य नोनकः सा च द्वौ सूदावग्रभान्तरे । रसं प्रदातुं हर्षस्य पापं प्रैरयतां ततः ।
अन्यसूदमुखाद्दातौ प्रयागस्तामवाप्तवान् । प्रभुं तद्दाप्यमानान्नपरिहारमकारयत् ।
तेनान्नेन परीक्षार्थं दापितेनापजीवितौ । हर्षः श्वानौ निशम्याभून्निराशो निजजीविते ।
प्रयुक्तिं गूढदण्डस्य पितुरेव स तां विदन् । ततः सर्व्वाणि भोज्यानि स्पृष्ट्वैवाज्झीद्दिने दिने । ६९०
प्रयागोपहृतेनासीत्परं वा स्वेन सर्व्वदा । भोज्येन येन केनापि कुर्व्वञ्जीवितधारणं ।
अवस्थाभोजनं श्रुत्वा राजा सूदैर्निवेदितं । ततः प्रयागमानीय तत्र पप्रच्छ कारणं ।
प्रयोजकौ च सूदौ च सोपलभ्य न्यवेदयत् । रसार्पणकथां कृत्स्नां तज्ज्ञानं च स्वयं प्रभोः ।
अथान्येष्वपि सूदेषु पित्रा दत्तेषु शङ्कितः । राजसूनुर्न बुभुजे प्रयागोपहृतं विना ।
स सर्व्वेषु विरुद्धेषु यद्यत्तत्रात्यवाहयत् । मेने तत्तद्दिनं लब्धं शेषेष्वास्थापराङ्मुखः । ६९५
अत्रान्तरे समुदभूदकस्मान्नाशसूचकः । अदृष्टपूर्व्वो भूभर्तुः सदाचारविपर्य्ययः ।
उत्पाट्य तामस्वाम्याख्यं पूर्व्वं ताम्रमयं रविं । स रीतिप्रतिमाः स्वैरं विहारेभ्योऽप्यपाहरत् ।
धनानि निरपत्यानामाहर्त्तुं व्यवसायिना । न्यवार्य्यतार्य्यमर्य्यादा कौर्थ्याक्रान्तेन भूभुजा ।
ततोऽभिशापसन्तापव्यञ्जकेनाभ्यभवत् । अतिसम्भोगजातेन धातुचैक्ष्येन सोऽर्दितः ।

कुम्भप्रतिष्ठासम्भारं चिकीर्षोर्हरमन्दिरे। तस्यापतन्महाकालकुम्भनामापुटादस्रक्।
आकस्मिकं दुर्निमित्तं तत्प्रतीकारसम्विदा। न मनागप्यगाच्छान्तिं प्रवृद्धिं प्रत्युतायया।
अस्तुस्तुत्यनुबन्धेन तेन ग्लपितसौष्ठवः। शनैः शय्याप्रणयितामन्तः सम्प्रत्यपद्यत।
बदमांसकृतवैरस्यमग्निमान्द्याद्युपद्रवैः। कलाशेषेण शशिना तदपुः साम्यमाययौ।
राज्यं स दित्सुर्हर्षाय दृष्ट्वामात्यान् पराङ्मुखान्। ततोऽभिषेकभाक्त्कर्षमानिन्ये लोहराचलात्
उच्चावचास्तेन सर्व्वं संविभक्ता मुमूर्षुणा। परमोर्थां विधेयेन न शुद्धान्तवधूजनः।
कृत्वा धनार्पणं कुर्य्यां देशादस्य प्रवासनं। इत्युक्त्वा हर्षमानेतुं तेनाप्रार्थ्यन्त मन्त्रिणः।
ते तु गोप्तृन्निवार्य्याचांष्ठकुरांल्लोहराश्रितान्। विन्यस्य रथिभावे तमुत्कर्षाय न्यवेदयन्।
स नाट्यमण्डपात्तेन निष्कृष्टः क्षामविग्रहः। निवेशितस्तुतु स्तम्भे बद्धा बान्धववर्ज्जितः।
अथोज्जिगमिषून् प्राणान् निःशामर्थ्योऽविदन्नृपः। मुमूर्षुरभवत्तीर्थप्रस्थानाय कृतत्वरः।
स जानन्दैवतक्रोधं तामस्वामिविपाटनात्। इयेष शरणं कर्तुं मार्तण्डं प्राणलब्धये॥
सन्त्यज्य विजयक्षेत्रमतएवापवर्गदं। महीश्वरोऽपि प्रययौ तत्र चाषवशंवदः।
अधीकारमाप्य तृणमिव विदन्विश्वमखिलं नियोगी जातार्त्तिर्नमति स्वहृदासीरपि रुदन्।
नदन्मूर्खो ज्ञानी बहुदुरुपदेशाधिगमतः करोति प्राणान्ते शिशुरिव च किं किं न विगुणं।
तादृश्या कृपणप्रायसेव्यया क्लैव्यसम्विदा। गुरूपदेशाहङ्कारस्तस्य हास्यत्वमाययौ।
शुक्लायां मार्गशीर्षस्य तृतीयस्यां निशामुखे। तत्पादेवाश्रितो युग्मं भूभृन्मर्तुं विनिर्ययौ।
स भेरीतूर्य्यनिर्घोषैर्जनाक्रन्दं तिरोदधत्। सामात्यान्तःपुरो नौभिः प्रतस्थे जलवर्त्मना।
यामशेषे दिनेऽन्यस्मिन् प्राप्तस्य चरणान्तिके। मार्तण्डस्य स्वजीवार्थे सौवर्णीं प्रतिमां व्यधात्
भृत्यैरगणिताज्ञस्य दिदृक्षोर्ज्येष्ठमात्मजं। औत्सुक्येनारतिस्तस्य व्यथितस्याधिकाभवत्।
बहिर्हर्षकृतं गीतं गायनानां स गायतां। विवृतद्वारविवरः शृण्वन् नि स्म विनिःश्वसन्।
प्राणावसानसमये परिसङ्कुचन्ती स्वप्नप्रसङ्ग इव धावनशक्तिराशा।
प्राचुर्य्यदा खलु रुजो मरणोद्भवाया मर्म्मव्यथां प्रथयते पृथिवीपतीनां।
प्रजाज्येष्ठं तनूजस्य संविभक्तुं कृतार्थनः। उत्कर्षं ग्राहयन् शिक्षां बद्धशिक्षोऽभवत्ततः।
स्वयं वदतो हर्ष इति वाचं पुनःपुनः। निःक्लान्तं नोनको भावं तस्यादर्शमढौकयत्।
स तन्निवार्य्य विहमन्दष्टोष्ठः कम्पयन् शिरः। जपङ्क्तिमपि माघेऽब्दे बद्धवागभवद्दिने।
आसन्नप्राणनिर्याणः शय्यायाश्च मन्त्रिणः। ततः स्वन्तैरसमूढैर्मार्तण्डायमनाययन्।
वर्षानेकान्सपक्षान् भुक्तवान् स मितेऽहनि। मार्गस्य पक्षषष्ठेऽब्दे पथ्यां निष्ठामयासदत्।
तत्र सम्मनिकामुख्या देव्यः परिणयाश्रमा। अवद्धापि जयमत्यभिधाना तमन्वगुः।
प्रमादवित्तया तत्र पुनः कय्याभिधानया। अवरुद्धिकया कान्ता स्त्रीजातिरपविचिता।
हर्षावरोधप्राधान्यमदात् नामरचदि। मामार्धश्रामभर्तुस्तदनुकाभिजमेद्वया।

## ॥ सप्तमस्तरङ्गः ॥

संश्रित्य विजयक्षेत्रं क्रमाद्ग्रामनियोगिनः । भेजे यत्स्ववरुद्धात्मतो दुःखाकरोति नः ।
भूपालभोग्यं स्ववपुः मा भोगाभ्यासभासुरं । निनाय ग्राम्यभोगित्वं धिक् नारीणां चचेतसः ।
उत्कर्षस्याभिषेकाय व्यग्रेष्वखिलमन्त्रिषु । अन्येद्युरिमकरोद्राज्ञः क्षतज्ञो वामनः परं ।
घोषोऽभिषेकतूर्य्याणामेकोगीनमङ्गलः । माक्रन्दाः मेतत्तूर्य्याणां नादोऽन्यत्र समुच्चयौ ।
जातः पद्मश्रियो देव्याः पुत्त्रः कलशभूभुजा । ततो विजयमल्लाख्यो भ्रातुर्वैमत्यमादधे ।
यददाद्धर्षदेवस्य पिता प्रत्यहवेतनं । प्रतिशुश्राव तस्मै स तदेवोत्कर्षभूपतिः ।
आश्वासाय च मध्यस्थान्ददौ सामन्तमन्त्रिणः । कथ्यात्मजस्य चक्रे च जयराजस्य वेतनं ।
अन्विष्यन्ति रुदत्यएव तरला गत्यन्तरं योषितो योगक्षेमकथाश्चितान्तिकगता एवात्मजाः कुर्वते ।
अन्येषां गतयोऽवसानसमये चर्चां विचार्य्येदृशीं स्त्रीपुत्त्रादिकृते कुकर्मभिरहो संश्चिन्वतेऽर्थं जडाः ।
प्रविवेश तत श्रीमान्नगरं नृपतिर्नवः । ननु हर्षादयाकाङ्क्षि हृदयं नगरौकसां ।
तद्राज्यलाभदिवसो जनस्याभोगदूषितः । सन्नपि प्रत्यभान्नैव सरोगार्त्तरिवोत्सवः ।
हर्षदेवस्तु पितरि प्रयाते मर्त्तुमातुरे । नववद्धयतुःस्तम्भे न तस्मिन्नह्नि भुक्तवान् ।
सार्द्धमेष्टमिवाध्वन्यमन्यस्मिन्नह्नि ठक्कुराः । ते शोकमूकं सम्प्रार्थ्य कथञ्चित्तमभोजयन् ।
राज्यं दातुं निजे देशे चक्रुर्यास्य मतिश्रवं । राज्यदयं नायमर्हत्येकएवेति वादिनः ।
एवं मिलितचित्तस्तैर्विपत्तिं श्रुतवान् पितुः । क्रतोपवमाः सोऽन्येद्युः शुश्रावोत्कर्षमागतं ।
वाध्यैः पित्रे प्रयच्छन्तं निर्व्वाय सलिलाञ्जलीन् । तं दूतैरनुजो राजा स्नातुं प्रार्थयताय सः ।
तस्य स्नानचये राज्ञि सज्ने राज्याभिषेचने । घोषोऽभिषेकतूर्य्याणामुदभूज्जयध्वनिः ।
स तेन सुनिमित्तेन प्राप्तां मेने निमित्तवित् । विद्युद्योतेन जीमूतगर्जामिव नृपश्रियं ।
ततः प्रभृत्युन्मुखता सुनिमित्तैरगृह्यत । तस्यात्यासन्नराज्यस्य स्थैर्यैरिव दिने दिने ।
स भोजनं कारयितुं दूतान् भ्रात्रा विसर्ज्जितान् । देशान्निर्व्वासयतु मां राज्यात्मन्यज्य वन्धनात ।
स्नातुमप्रत्यवाय्यत्वा विदधौ कोशपानिहं । प्रियेऽन्यदा निरशनं सन्दिश्येति व्यसर्ज्जयत् ।
स तन्मिथ्या प्रतिश्रुत्य तं दूतैः प्रहितैस्तत । कृतकोशं सान्त्वयित्वा राजा भोज्यमभोजयत् ।
नित्यञ्च श्वो विधास्तितदर्थमान इति ब्रुवन् । कालापहारं कुर्व्वाणः शङ्कां तस्योदपादयत् ।
विश्वासार्थं स्वताडङ्कपाणिकृत्वा प्रयागकं । पार्श्वं विजयमल्लस्य सोऽथ गूढं व्यसर्जयत् ।
तदेवोक्त्वा तमूचे स त्वां ब्रूते दुःखितोऽग्रजः । कुमारे त्वयि राज्येऽस्मिन् शुच्यामो वन्धने वयं ।
सङ्क्रान्तदुःखः सच्चिन्त्य चिरेणापि तमब्रवीत् । कार्य्यं कुर्यात्कथमिदं मद्विरा नीतिमाकृपः ।
तथाप्यस्मिन् यथाशक्ति यतिष्ये त्वद्विमोचणे । त्वया तु सावधानेन रक्षणीयं स्वजीवितं ।
तं पार्श्वं हर्षदेवस्य सन्दिश्येति व्यसर्जयत । उपायांश्चिन्तयन्नासीत्तस्य कार्य्यस्य सिद्धये ।
उत्कर्ष प्राप्तराज्यस्तु दैवतैरिव मोहितः । नादधे किञ्चिदारम्भं व्यवस्थापयनं चमं ।
समर्पिताधिकारोऽपि कन्दर्पादीन् स मन्त्रिणः । राज्यकृत्यं न पप्रच्छ विदधे स्वं च न स्वयं ।

संश्रित्य विजयक्षेत्रं क्रमाद्ग्रामनियोगिनः। भेजे यत्त्ववरुद्धात्मतो दुःखाकरोति नः।
भूपालभोग्यं स्ववपुः सा भोगाभ्यासभासुरं। निनाय ग्राम्यभोगित्वं धिक् नारीर्नीचचेतसः।
उत्कर्षस्याभिषेकाय व्यग्रेष्वखिलमन्त्रिषु। अन्त्येष्टिमकरोद्राज्ञः कृतघ्नो वामनः परं।
घोषोऽभिषेकतूर्य्याणामेकोगीतमङ्गलः। साक्रन्दाः प्रेततूर्य्याणां नादोऽन्यत्र समुच्चयौ।
जातः पद्मश्रियो देव्याः पुत्त्रः कलशभूभुजा। ततो विजयमल्लाख्यो भ्रातुर्वैमत्यमादधे।
यद्ददाद्धर्षदेवस्य पिता प्रत्यहवेतनं। प्रतिशुश्राव तस्मै स तदेवोत्कर्षभूपतिः।
आश्वासाय च मध्यस्थान्ददौ सामन्तमन्त्रिणः। कथ्यात्मजस्य चक्रे च जयराजस्य वेतनं।
अन्विष्यन्ति रुदत्यएव तरला गत्यन्तरं योषितो योगक्षेमकृयाश्चितान्तिकगता एवात्मजा ते।
अन्येषां शतशोऽवसानसमये चर्चां विचार्य्येदृशीं स्त्रीपुत्त्रादिकृते कुकर्मभिरहो सञ्चिन्वतेऽर्थं जडाः।
प्रविवेश ततः श्रीमान्नगरं नृपतिर्नवः। नतु हर्षाद्दयाकाङ्क्षि हृदयं नगरौकसां।
तद्राज्यलाभदिवसो जनस्याभोगदूषितः। सन्नपि प्रत्यभान्नैव सरोगार्त्तरिवोत्सवः।
हर्षदेवस्तु पितरि प्रयाते मर्त्तुमातुरे। नववद्धचतुःस्तम्भे न तस्मिन्नह्नि भुक्तवान्।
सार्थभ्रष्टमिवाध्वन्यमन्यस्मिन्नह्नि ठकुराः। ते शोकमूकं सम्प्रार्थ्य कथञ्चित्तमभोजयन्।
राज्यं दातुं निजे देशे चक्रुस्तस्य प्रतिश्रवं। राज्यद्वयं नायमर्हत्येकएवेति वादिनः।
एवं मिलितचित्तैस्तैर्व्विपत्तिं श्रुतवान् पितुः। कृतोपवासः सोऽन्येद्युः शुश्रावोत्कर्षमागतं।
वार्ष्ये. पित्रे प्रयच्छन्तं निर्व्वाय सलिलाञ्जलीन्। तं दूतैरनुजो राजा स्नातुं प्रार्थयताय सः।
तस्य स्नानक्षये राज्ञि मग्ने राज्याभिषेचने। घोषोऽभिषेकतूर्य्याणामुदभूज्जयध्वनिः।
स तेन सुनिमित्तेन प्राप्तां मेने निमित्तवित्। विद्युद्योतेन जीमूतगर्ज्जामिव नृपश्रियं।
ततः प्रभृत्युन्मुखता सुनिमित्तैरगृह्यत। तस्यात्याप्तनराज्यश्च भृत्यैरिव दिने दिने।
स भोजनं कारयितुं दूतान् भ्रात्रा विसर्ज्जितान्। देशान्निर्व्वासयतु मां राज्यात्सन्त्यज्य वन्धनात्।
स्नातुमप्रत्ययान्वित्या विदध्यां कोशसंविदं। प्रियेऽन्यथा निग्रमनं सन्दिश्यैति व्यसर्ज्जयत्।
स तत्प्रिया प्रतिश्रुत्य सं दूतैः प्रहितैस्ततः। कृतकोशं सान्त्वयित्वा राजा भोज्यमभोजयत्।
नित्यञ्च श्वो विधास्येतदर्थमान इति ब्रुवन्। कालापहारं कुर्व्वाणः शङ्कां तस्योदपादयत्।
विश्वासार्यं स्वताडङ्कपाणिङ्कृत्वा प्रयागकं। पार्श्वं विजयमल्लस्य सोऽथ गूढं व्यसर्ज्जयत्।
तदेवोक्ता तमूचे स त्वां ब्रूते दुःस्थितोऽग्रजः। कुमारे त्वयि राज्येऽस्मिन् शुच्यामो वन्धने वयं।
सङ्क्रान्तदुःखः सञ्चिन्त्य चिरेणापि तमब्रवीत्। कार्य्यं कुर्य्यात्कथमिदं मद्गिरा नीतिमान्नृपः।
तथाप्यस्मिन् यथाशक्ति यतिष्ये त्वद्विमोक्षणे। त्वया तु सावधानेन रक्षणीयं स्वजीवितं।
तं पार्श्वं हर्षदेवस्य सन्दिश्येति व्यसर्जयत। उपायांश्चिन्तयन्नासीत्तस्य कार्य्यस्य सिद्धये।
उत्कर्षः प्राप्तराज्यस्तु दैवतैरिव मोहितः। नादधे किञ्चिदारम्भं व्यवसायपराङ्मुखः।
समर्पिताधिकारोऽपि कन्दर्पादीन् स मन्त्रिणः। राज्यकृत्यं न पप्रच्छ विदधे सं च न स्वयं।

परिमातुं परीमाणं कोशसञ्चयवीक्षणे । परं क्षमापतेस्तस्य दिनकृत्यमभायत ।
कर्मान्ता निर्व्ययेणास्य चिन्त्यमानस्य येन वा । सुदीर्घदर्शी सोकोऽभूत्तेन मुख्यव्ययनियोगी ।
सा तस्य लुब्धताख्यातिः समुद्रान्नप्रदायिनः । भूभर्तुः पिष्टपक्त्रीभिः स्वैरिणीभिः प्रवर्धिता ।
स श्रोत्रिय इवोत्कम्पी व्यवहारमिताशयः । महाहृदयभोग्यानां प्रजाना नाभवत्प्रियः ।
ततो नियमिनां वृत्तिं तस्मात्सम्वादनाप्नुवान् । कुर्वन् विजयमल्लोऽभूद्देशान् गन्तुं कृतोद्यमः ।
स्वं रक्षितुं स मध्यस्थाननुव्रज्याकृतेऽखिलान् । प्रार्थयामास तेनापि सञ्जातस्तमनुव्रजः ।
लवणोत्से निशामेकां पुरान्निर्गत्य तस्थुषः । मध्यस्थसैन्यास्तस्यैव योधाः पक्षमशिश्रयन् ।
हर्षे बद्धे त्वयि गते कृतकृत्यो भवेन्नृपः । तत्तं निष्कृष्य कारायाः गमनं तव साम्प्रतं ।
इति तैः प्रेर्यमाणः स राजसूनुरुदायुधैः । विनिवृत्याकरोद्यात्रां प्रत्यूषे नगरोन्मुखः ।
श्रुत्वा चिकीर्षितं तस्य व्यावृत्तस्य तथाविधं । सहायाः समपद्यन्त कतिचित् डामरा अपि ।
अकरोन्मधुरावर्त्ती हयसेनापतिः सुतं । राजसूनुर्यियासुर्थं मध्यस्थाननुयात्रिकं ।
नागाह्वयो द्रोहहीनो राजपक्षमसन्त्यजन् । कैश्चित्सह हयारोहैः सपक्षपुरवर्त्मना ।
आगच्छन्नन्तिकं राज्ञो दुर्निमित्तहतत्वरः । न यावन्नगरं प्राप क्षिप्रकारी नृपात्मजः ।
शकुनैराहितोत्साहः शालायोद्दीपिताग्निभिः । सैन्यैर्गृहान्दहंस्तावद्राजधानीमवेष्टयत् ।
॥ चतुर्भिः कुलकं ॥ समयाय विनिर्यातं त्यक्तोत्कर्षं महीभुजं । तत्पक्षं जयराजोऽपि राजसूनुरशिश्रयत् ।
हस्तस्थितौ राजपुत्रौ तस्याचिन्तयतां गतिं । नवौ कवी व्यवहृतिं सिद्धवाचः कवेरिव ।
हर्षदेवे परित्यक्ते यास्याम इति वादिनः । स हस्तिमहिषादीनां शालाः सैन्यैरदाहयत् ।
त्यागप्रलयजीमूतो हर्षदेवोऽभिषिच्यतां । लुब्धः खर्वो वणिक्प्रायो राज्यादेष निवार्य्यतां ।
एवं वदन्तः सन्तोऽपि हर्षमेत्य पुरौकसः । पुष्पैः प्राच्छादयन् बद्धं तमोरिविवरार्पितैः ।
उत्पिञ्जे तत्र सञ्जाते भग्नसैन्यस्य भूपतेः । सम्प्रेष्य ठक्कुरान् हर्षस्तटस्थं तद्बलं व्यधात् ।
इत्थं बद्धोऽपि तत्कृत्वा वैरिकानविरोधिनः । सन्देहवेपमानाङ्गस्ततस्तानेवमब्रवीत् ।
वर्तेऽद्य सङ्कटे दुष्टे तन्मां मुञ्चत बन्धनात् । न चेदाप्स्ये महीपालादनिष्टं नियमाद्भवेत् ।
इत्युच्यमानास्ते यावद्विमृशन्ति स्म तन्मुखः । पादप्रहारान्यपतंस्तावद्द्वारगृहाद्बहिः ।
उच्चचार स किं द्रोहः प्रक्रान्तोऽयं दुराशयैः । रे ठक्कुरा विवृणुत द्वारमित्युच्चकैश्च ।
ठक्कुरेष्वथ भीतेषु धैर्य्यादगणयन् भयं । अकारयद्धर्षदेव एव द्वारमपावृतं ।
नेत्रमात्रस्थितप्राणो ददर्श विशतस्ततः । लोहरान् शस्त्रिणो हन्तुं प्राप्तान् षोडशवारिकान् ।
ते हि क्ष्माभृता ज्ञिते हर्षशीर्षं सर्व्वमिदं क्षणात् । शाम्येदिह भयं मन्त्रं नानकस्येति जल्पतः ।
उत्कम्पणाभरुच्छुत्वा तं निहन्तुं विसर्जिताः । विसृज्य चोक्ता गच्छन्तः कार्य्यशेषं विमुञ्चता ।
कदाचित्तेन इत्थं स्यादहतेनेति तत्क्षणं । निवार्य्य ठक्कुराश्चत्वो हन्तव्यस्य यदोर्मिकां ।
इमां दद्यामभिज्ञानं यदा चेयं विसृज्यते । तदात्तबन्धनात्त्याज्य इत्युदीर्य्याङ्गुलीयकं ।

पाणौ दर्शयता चोक्ता विलम्बालम्बनं यतः। निवार्य्य ठक्कुरास्तस्मिन् चिरं न प्राहरंस्ततः।
॥ कुलकं ॥ स तु प्रत्येकमाहूय नामग्रहणपूर्व्वकं। अजिग्रहत्तांस्ताम्बूलमप्युपावेशयत्पुरः।
जक्रुस्ते कृतसत्कारास्ताम्बूलग्रहणक्षणे। ह्रीताः करायाच्छस्त्राणि प्रजिहीर्षाञ्च मानसात्।
धत्ते श्रियं सृजति कीर्तिमघं लुनीते मित्त्रत्वमानयति हन्त विरोधिनोऽपि। ७९०
यात्यध्वभिः प्रतिपदं सुमनोऽनुकूलैर्गौः कामधुक्किमिव नापहरत्यनर्थं।
राजपुत्त्रः स तानूचे किं ह्रीता इव तिष्ठथ। निर्दोषाः सर्व्वथा श्रेयाः स्वाम्यादेशानुपालने।
विलम्बरतां तथाप्यत्र द्रष्टव्यं महदद्भुतं। यथोदेत्यवस्थानामन्यथात्वं क्षणे क्षणे।
द्विपद्वीपिक्रव्याद्‌उरगतुरगादिभ्रमकृतो यथाभ्यां भिद्यन्ते दिवि किल तरवाम्बुदलवाः।
तथा सौम्यक्रूरक्रमविकृतिभाजस्तनुभृतां क्षणानां नानात्वान्ननु हृदि विकारोर्मयइमाः।
क्षणानुवृत्तिं कुर्व्वाणास्तद्यथात्र स्थिता वयं। तथा सन्तु भवन्तोऽपि कार्य्यान्तरदिदृक्षवः।
अपि चैवंविधा एव विलम्बन्तो रसान्तरं। आसन्नराज्यप्राप्तीनां राज्ञां स्युः प्राणसंशयाः। ७९५
ग्रीष्मस्योष्मा भजति घनतां नूनमासन्नवृष्टेर्नैशं गाढीभवति तिमिरं सन्निकृष्टप्रभातं।
जन्तोरेवं प्रसभविभवस्फारमसम्प्रचारान्निष्क्रामन्ती वियदुपचितोपद्रवोद्रेकमेति।
प्राणचारेण शकुनं निश्चित्येति वदन्स्तां। आचचक्षे शुभोदर्काः स्वोदन्तसदृशीः कथाः।
कालं चेत्तुमुपन्यस्तस्फुटव्यक्तीभवद्रसां। तेभ्यश्च कथयामास हरिश्चन्द्राश्रयां कथां।
तद्रञ्जने स्वरचायां वाह्यवार्तागवेषणे। व्यापृतत्वं गभीरस्य न तस्य समलक्ष्यत।
अत्रान्तरे तमुद्दिश्य मते जाते नवे नवे। राजश्रियश्च काल्यश्च शतशोऽभ्यहनागतं। ८००
उत्कर्षो भूमिपस्तस्य परित्यागं ह्यमन्यत। आदिदेशानुगांस्तांस्तान्भूरिशश्च प्रमापणे।
अभिज्ञानोर्म्मिकादानवधादेशे तु नास्मरत्। तेनोक्तिं तस्य दूतामामन्वतिष्ठन्त रक्षिणः।
स तान् वन्ध्याश्रमान्वीक्ष्य स्त्वाभिज्ञानसंविदं। सत्वात्मजं राजपुत्त्रं शूराख्यं व्यसृजत्ततः।
अभिज्ञानं वितरतस्तत्करे तस्य मुद्रितः। दैवयोगात्क्षणे तस्मिन्नूर्म्मिकाव्यत्ययोऽभवत्।
यः पातार्थमुपार्ज्जितोऽन्यगिरिसत्त्वेनैव सिन्धुप्रभुर्दृष्टः सेवधराधरः स्वशिरसः पातं वरेणान्वभूत्।
दिव्या सैव गदा सुतायुधनृपं हन्त्वावधीदाहवे यत्त्राणाय विगण्यते विधिवशात्तेनैव नाशो भवेत्। ८०५
तथाचैकस्य विस्तृत्या व्यत्ययेन परस्य च। अभिज्ञानस्य स नृपो नाशं प्रत्युत लब्धवान्।
आभिजन्येन हर्षस्य ते क्षणादेव रक्षिणः। प्रपेदिरे हितैषित्वमुत्कर्षाज्ञाविरोधिनः।
द्वारमाक्रान्तमुत्क्रोधो वधायायमुपागतः। इति निर्धाय ते शूरं हन्तुमैच्छन्नुदायुधाः।
उद्घाटितारिपुटा दृष्ट्वा तस्योर्म्मिकां करे। तेनैव साकं नृत्यन्तो हर्षं समुपतस्थिरे।
पादन्यस्तोत्तमाङ्गैस्तैर्निर्गच्छन् प्रार्थितस्ततः। अविश्वसन्राजसूनुः क्षणमासीत्स चिन्तयन्। ८१०
तस्मिन् क्षणे हर्षदेवं हतं ज्ञात्वा रणे स्थितः। क्रुध्यन्विजयमल्लोऽभूदधिकोद्रिक्तपौरुषः।
तन्द्रद्युमुद्यतं राजधानीं जीवति तेऽनुजः। अभिधायेति रुरुधुः कथंचित्पार्थिवानुगाः।

प्रत्ययार्थं ततस्तस्य राज्ञा हर्षवधूर्द्रुतं। गृहीतभर्तृताडङ्का सुगला प्रेष्यतान्तिकं।
तां विलोक्यैव विरते वह्निदाहान्नृपात्मजे। राजाभयप्रतीकारं हर्षत्यागादमन्यत।
गलामात्याः स्वयं नोनप्रशस्तकलशादयः। हर्षं निर्निगडं कृत्वा कारागारात्ततोऽत्यजन्।
मन्त्रः स तेषां शोकेन वक्त्रात्कृतगतागतः। अन्यत्क्षणे श्वास इव प्रससार बहिश्चरन्।
हर्षः प्रच्छाद्यमानस्तु पौराणां पुष्पवृष्टिभिः। हयमारुह्य सामात्यो रणस्थं नृपमासदत्।
अभिनन्द्यानुजो राजा तमूचे भ्रातरं रणात्। निवार्थ्यागम्यतां कुर्मः प्राप्तकालं ततो वयं।
तथेति प्रस्थिते तस्मिंस्त्यक्त्वा तत्र रणाजिरं। प्राविशन्मन्त्रिभिः सार्द्धं कोशं हेमादिवेश्मयं।
उत्तीर्णं महतः कृच्छ्राद्धर्षदेवमुपस्थितं। दृष्ट्वा विजयमल्लोऽभूत्प्रहर्षान्निष्क्रियः क्षणं।
ततो ववन्दे तत्पादौ स चोत्क्राम्यालिलिङ्ग तं। तास्ताः कथास्तयोरासन्नुपकर्त्रुपकार्ययोः।
व्यापादयैनमेवाद्य हर्षोत्कर्षं ततो नृपः। निष्कण्टकोऽसि भवितेत्याप्तस्योपांशु जल्पतः।
ततो विजयमल्लेन नाद्रोहेणादृतं वचः। ज्ञातेङ्गितज्ञो हर्षस्तत्तस्थु चकितः क्षणं।
॥ युग्मं ॥ स्वदेहमात्मिपीभूतं स भ्रात्रोः श्येनयोरिव। निष्पत्रपत्रप्रतिमो ररक्षावेगतश्चरन्।
आसन्नाभ्रजलस्य दाववितमे विशुद्धयं शाखिनो नक्राक्रान्तकुलस्य मज्जनमयी शङ्का भवेद्वारिधौ।
भोक्तव्यस्य विधिः शुभस्य रभसात्स्वादुफलनिष्पत्तये जन्तोः सन्तनुते निराकृतभियो भीत्यन्तरोत्पादनं।
तं हयभ्रमणव्याजाद्रक्षितुं निजजीवितं। ज्ञातवार्त्ता निजाः केचित्पत्तयः पर्यवारयन्।
सार्कं विजयमल्लेन ततः संमन्त्र्य स क्षणात्। चचाल विश्वासायमाख्यातुं तं महीभुजे।
अयं तदेमनः प्राप्तं विनिर्धान्तं नृपात्मजात्। ततो विजयसिंहस्तं सम्प्रवेशाद्यवारयत्।
ऊचे च मरणात्तीर्णं मर्तुं विशसि किं पुनः। निष्प्रज्ञ गत्वोपविश त्यक्तशङ्कं नृपासने।
एवमुक्तवतस्तस्य भृत्यैः कोशादुपाहृते। सिंहासने हर्षदेवस्तत्क्षणमुपाविशत्।
वेशात्यक्षादितामन्तमातिकृत्यात्तदन्तिके। उपाविशच्च सुगला महादेवीत्वसिद्धये।
तस्याभिषेकशब्देन समघस्यन्त सर्वतः। रक्षितेनाम्बुवाहस्य पातकादिव मन्त्रिणः।
तदातीन्द्रवणेनागतमुत्स्वर्थं मन्दिरात्ततः। धूर्तो विजयसिंहोऽपि क्षुद्रान्यमनयद्गृहं।
आस्थानमस्य भूभर्तुरयेण समितानुगः। नष्टश्रीर्दद्रूमे गच्छन् स्थिराः कस्य विभूतयः।
तस्य सेमप्रतिष्ठस्य बहिर्विंन्यस्य रक्षिणः। राज्ञो विजयसिंहस्तत्कृतं कार्यं न्यवेदयत्।
कारायां संघृतावाजपार्श्वमानीय ठक्कुरान्। तयोन्योऽपि स्थितेऽत्याचीद्वयं विजयमल्लतः।
सोऽप्यपनं प्रासराज्यं श्रुत्वा तत्सविधं व्रजन्। निन्ये समान्य तद्भृतैः स्वामेव वसतिं क्षणात्।
तयोन्यं स्वामिकं प्राप्तमय सोऽस्य चमापतिः। आनिनाय तमभ्यर्णं क्षणमात्रेण नीतिवित्।
गर्धं प्राणाय राज्यस्य मया दत्तमिति ध्रुवम्। स प्रायश्चित्तमकरोत् क्रमशाफल्यदायिनं।
तस्य देवानुवृत्तेन नीत्यैव ध्रुवयुतया। तत्कालमेव तद्राज्यशय्यायां समुपाविशत्।
वारान्महानाः संतोसाध्येव वासांसि धारयन्। सिंहासनेन शुशुभे सोधाभिध्यायेन नृपः।

तादृक्प्राहसंरम्भपरिश्रान्तो दिनात्यये। कृतारोहोऽथ शय्यायां त्यक्तभार इवापतत्।
पश्यन्निवसतामेव सर्व्वतो विशरारुतां। न स निद्रासुखं तत्र मीलिताक्षोऽपि लब्धवान्।
उत्कर्षो युधि वद्धस्य मन्त्रं पृच्छन् स्वमन्त्रिणः। आक्षिप्यान्यद्वचो रूक्षं नोनकेनेत्यकथ्यत।
प्रातः प्रोक्तोऽसि यन्मन्त्रं तन्नाकार्षीर्महीपते। पतितामनयाद्स्माद्भाविनीं शृणु संविदं।
अध्याक्षिपो बन्धनस्थं त्वं तमुच्छिष्टभोजिनां। श्वः श्वमांसार्पिणां हस्ते स तु त्वामर्पयिष्यति।
शरणं मरणादन्यत्तस्मादस्मिन् क्षणेऽस्ति किं। त्यक्ताहवानामस्माकं तदश्यप्राप्यतां गतं।
अविस्त्रादफलास्वादकालेऽत्यन्तमरुन्तुदं। यद्दोपालम्भपाण्डित्यं न विपक्षेषु शोभते।
त्वयापायमनालोच्य य उपायः प्रवर्त्तितः। सर्व्वमेकपदे तेन मुहूर्त्तेनैव हारितं।
संस्थाप्यमानो दुर्नीत्या सूच्येव जरठः पटः। प्रत्युतोपद्रवोऽल्पोऽपि शतद्वारः प्रजायते।
एवं श्रुत्वा स तन्मध्यान्निर्गत्याभ्यन्तरं गृहं। अवरुद्धिकया सार्द्धं विवेश सहजाख्यया।
तत्र सन्ध्यासमाधिस्थस्तिष्ठामीत्यभिधाय तां। क्षणं तिरस्करिण्यन्तरेकार्थ्येवाकरोत्स्थितिं।
निःशस्त्रेण गले क्षिप्त्वा पटच्छेदनकर्तरीं। नाडीः प्राणहरास्तेन छिन्नाः खिन्नात्मना ततः।
फणत्कारेण कर्त्तर्या च्युता या भुवि शङ्किता। अपश्यत्सहजा रक्तं च्योतज्जवनिकान्तरात्।
सोऽथ लम्बशिरोनिर्यत्सान्द्रास्रग्ददृशे तया। वज्रावभग्नशृङ्गान्तःस्योतद्धातुरिवाचलः।
तस्यास्तदानीमौचित्यं निर्व्यूढं येन योषितां। भर्तृप्रसादमात्राणामप्याप्युच्चैस्तरां गिरः।
व्रजति रजनी त्यक्त्वा क्वापि क्षये क्षणदाकरम्परमुपगतस्यास्तं सन्ध्या रवेरनुगच्छति।
इति परिणतौ प्रेमण्युच्चावचे परिचिन्तिते क्वचन नियमान्निन्द्या वन्द्या नवा सुधियां स्त्रियः।
कुलाचारपतिप्रेमसादृश्येऽप्यभवत्तदा। कथ्यासहजयोर्यस्मान्निन्द्या वन्द्या च पद्धतिः।
॥ युग्मं ॥ सापि हि ध्रुपदो वेश्म नर्तकी नाट्यमण्डपे। दृष्ट्वा तेनावरुद्धात्वं निन्ये राजवधूः पुरा।
कान्तास्तगैरिकास्यन्दकृतसान्द्राङ्गरागया। प्रेम्णोहेम द्रवीज्ज्वलं प्रविश्याग्निं तयार्पितं।
हर्षदेवस्यापि पूर्व्वं वेश्यात्वे साभवत्प्रिया। अतस्तेनार्थ्यमानापि मरणान्न न्यवर्तत।
चतुर्व्विंशाब्ददेशीयो दिनद्वाविंशतौ नृपः। हतस्तिष्ठन्निशामेकां प्रातः सोऽक्रियताग्निसात्।
तस्यावरोधवेलाद्या लोहराद्रिस्थिता अपि। क्षमानुवर्त्मना काश्चित्पदवीं द्रुतमन्वयुः।
शस्त्रं सन्त्याज्यमानेषु तन्मन्त्रिषु नृपानुगैः। मुमूर्षुर्नोनकः शस्त्रं न तत्याज क्षणं तदा।
विनाशान्मन्त्रदोषाद्राज्ञः कोऽन्यः स्याद्द्विनैरसौ। मोक्षत्यस्मांस्ततः प्राणान्नोपेक्षिष्टाविचारयन्।
स्वयूथ्य एवेति वचः प्रशस्तकलशो वदन्। तदा सन्त्याजयामास स्वयं तस्य समर्पितं।
॥ तिलकं ॥ नोनसिद्धारभट्टारप्रशस्तकलशादयः। बद्ध्वाथ हर्षदेवेन कारागारं प्रवेशिताः।
इत्येवमेकेनैवाह्ना तादृग्राजविपर्य्ययः। कृतश्च हर्षदेवेन दैवेनेव महाद्भुतः।
ययाकथञ्चिद्विक्रान्ता बहवः पृथिवीभृतः। प्रतीतिविषमो मार्गः कष्टमापतितोऽधुना।
सर्व्वास्वाद्दादकवैचित्र्यं सर्व्वानुल्लासदूतिका। सर्व्वव्यवस्थाजननी सर्व्वनीतिमपोहत्।

उद्रिक्तशासनस्फूर्त्तिरुद्रिक्ताज्ञाचयच्छितिः। उद्रिक्तत्यागसम्पत्तिरुद्रिक्तहरणग्रहा।
कारुण्योत्सेकसुभगा हिंसोत्सेकभयङ्करी। सत्कर्मोत्सेकललिता पापोत्सेककलङ्किता।
स्पृहणीया च वर्ज्या च वन्द्या निन्द्या च सर्व्वतः। निरीक्ष्या चोपहास्या च काम्या गोप्या च धीमतां।
श्लाघ्या चापकीर्त्त्या च स्मार्य्या त्याज्या च मानसात्। हर्षराजाश्रया चर्य्याक्रिया व्यावर्णयिष्यते।
॥ कुलकं ॥ नूनं स तैजसैरेव ससृजे परमाणुभिः। कुतोऽन्यथाभूत्प्रसवे दुष्प्रेक्ष्यो महतामपि।
न मर्त्त्येषु न देवेषु तद्वेषो दृश्यते क्वचित्। दानवेन्द्रेषु स प्रांशुः परमुत्प्रेक्ष्यते यदि।
प्रतिमार्कपरीमाणज्वलत्कुण्डलमण्डितः। उत्तुङ्गमुकुटानद्धविकटोष्णीषमण्डलः।
प्रसन्नसिंहविप्रेक्षी नीचश्मश्रुच्छटाञ्चितः। वृषस्कन्धो महाबाहुः श्यामलोहितविग्रहः।
व्यूढवक्षाः क्षाममध्यो मेघघोषगभीरवाक्। सोऽमानुषाणामपि यत्प्रतिभाभङ्गकार्य्यभूत्।
॥ तिलकं ॥ सिंहद्वारे महाघण्टाश्चतुर्दिक्कमबन्धयत्। ज्ञातुं विज्ञप्तिकामान् स प्राप्तांस्तद्ध्वाससंज्ञया।
आर्त्तानां वाचमाकर्ण्य तेषां तृष्णानिवारणं। प्रावृषेण्यः पयोवाहश्चातकानामिवाकरोत्।
अचित्रवस्त्रो निर्हेमभूषणोऽल्पपरिच्छदः। ददृशे विगतोत्तापे न कश्चिद्राजमन्दिरे।
सिंहद्वारे नरपतेर्नानाजनसमाश्रिते। सर्व्वदेशश्रियोऽश्रान्तमासन्नाश्लोकतादिव।
अपेतसंख्याः सौवर्णशृङ्खलाकटकाञ्चिताः। भ्रेमुर्मन्त्रिप्रतीहारमुख्याः क्ष्मापतिमन्दिरे।
एवं स्फूर्जन्स नृपतिर्नवसाम्राज्यसुन्दरः। अभूद्विजयमल्लस्य गुरोरिव मते स्थितः।
आदीयमानवचसः कृतज्ञेन महीभुजा। तस्याभूत्पार्थिवस्येव सेवकैः सङ्कटा सभा।
स्वसेवकाननादृत्य रक्षन् संस्थाव्यतिक्रमं। पित्र्येभ्य एव मन्त्रिभ्यः सोऽधिकारान् समार्पयत्।
द्वारे चकार कन्दर्पं मदनं चापि कम्पने। अन्यान्विजयसिंहादीन् कर्त्तव्ये च निजे निजे।
तेन प्रशस्तकलशप्रमुखाः शान्तमन्युना। वन्धात्समुन्मुच्य कार्य्येषु निजेष्वेव नियोजिताः।
स्मृतापकारान् स बहूनमात्यो सेनकः परं। धात्रेयेण समं भ्रात्रा कोपाच्छूले विपादितः।
काले काले तु कार्य्येषु सङ्कटेषु महामतिं। संस्मरन् स्वामिभक्तं तं पश्चात्तापेन पस्पृशे।
योग्यः कृतापकारोऽपि कदाचिदुपयुज्यते। विहितागारदाहोऽग्निः शरणेऽभ्याज्यसिद्धये।
सन्दर्शये स्वभार्य्यायाः कर्णनासावकर्त्तनं। विश्वाभट्टे राजभृत्यैः शूलेनैव विपादितः।
उदये संविभेजे स भृत्यान् काराविनिर्गतान्। अधो प्रफुल्लः शाखीव भृङ्गान्भूविवरोत्थितान्।
राज्ञः क्षेमस्य यः पौत्रो वज्रजः स महीभुजा। सर्व्वामात्यप्रधानत्वं निन्ये सुन्नः सहानुजः।
राज्ञो यात्रादिसमये प्रेक्षकाणां पदे पदे। एक एवाभवन्मन्त्री महीपालभ्रमप्रदः।
सर्व्वप्रतीहारघटामूर्धानमधिरोपितः। यायराजोऽनुजस्तस्य जीवितादधिकोऽभवत्।
जाह्नवीयाचया भ्राचोरान्नृसंस्यादिचक्षणः। धम्मटः सोऽपि तान्वङ्गैर्भ्रातृपुत्रैः सहाययौ।
संमान्य तं नरपतिः स्वकृते हारितायजं। सभ्रातृपुत्रमद्राक्षीत्स्वाविशेषेण सर्व्वदा।
विभज्य भुञ्जतो राज्यं तस्यैवं प्रेरितः खलैः। प्रमादिजयमल्लोऽथ दुद्रुषुर्व्विकृतिं दधे।

राज्यं मादाः किमन्यस्मै जितेत्युक्तः स दुर्जनैः । तल्लिप्सुर्मन्त्रयामास वधं प्रथमजन्मनः ।
विजने मन्दिरे हन्यामिति सम्मन्त्र्य भूपतिः । यागं विधायव्याजेन तेनागन्तुं निमन्त्रितः ।
मन्त्रे श्रुतिङ्गते राज्ञः सोऽप्यास्कन्दविशङ्कितः । आदिदेश स्वसैन्यानां द्रुतं सन्नहनोद्यमं ।
सन्नद्धे राजसैन्येऽथ द्रुतं निर्गत्य भूपतेः । हृता विजयमल्लेन मन्दुराभ्यस्तुरङ्गमाः ।
संहरंस्तुरगान्वीक्ष्य प्रहरन्नृपतेर्ब्बलं । कुर्व्वन्महाहवं वीरो निर्गन्तुं तत्वरे पुरात् । ९०५
आश्लिष्य पृष्ठं तिष्ठन्त्या जायया सहितो व्रजन् । स चकार तुरङ्गस्थः सङ्ग्राममतिमानुषं ।
धारासारैः क्षणे तस्मिन्नकालजलदोज्झितैः । विपर्य्यस्तेव पृथिवी सर्व्वतः समलक्ष्यत ।
झाङ्कारमारुतारब्धभूरिभैरीरवे रणे । आसारेण शरैश्चासीच्छाद्यमानो नृपात्मजः ।
तं चोद्यमानपृतनं यान्तं हन्तुं समुद्यताः । कर्म्माणि प्राकृतानीव न चण्डकसुता जहुः ।
भग्नसेतुं पयोवेगैर्व्वितस्तासिन्धुसङ्गमं । सत्वानिरतरद्दोर्भ्यामवतीर्य्य स वाजिनः । ९१०
सत्त्वानकरोत्पत्न्या मज्जनं रिपुसङ्कटे । सिन्धुं प्रहृष्टामुत्तीर्य्य तुरङ्गोऽपि तमन्वगात् ।
द्विषां दृग्गोचरायातः स तमारुह्य वाजिनं । दरदेशोन्मुखो वीरः प्रायाल्लहरवर्त्मना ।
कन्दर्पद्वारपतिना सर्व्वतो रुद्धपद्धतिः । गिरीनुल्लङ्घ्य चाविक्षद्गिरिगुप्तां दरत्पुरीं ।
दरदाभ्यर्चितं तत्र श्रीविद्याधरदेहिना । केचिन्निजाः परिजनाः शनकैस्तं प्रपेदिरे ।
श्रुत्वा स्वीकार्य्यमाणञ्च संरम्भं डामरादिभिः । सायुंक्त हर्षपृथ्वीभृदुपायांश्चकितोऽन्वहं । ९१५
तेषु बन्धेषु शीतन्तु सोऽतिवाह्य दरत्पुरे । डामरैः प्रहितालापाश्चैत्रे यात्रामदान्मदात् ।
उत्तीर्य्य सङ्कटांस्तिष्ठन्मार्गान्तःपटमण्डपे । अकस्मादभवन्मानी हिमानीहृतजीवितः ।
यदुल्लासाय संरम्भो धीरैर्व्विस्तार्य्यते महान् । कृत्यं हिनस्ति तद्दैवमत्यल्पेनैव वस्तुना ।

उन्मीलनं तिग्मरुचिः प्रयत्नाद्येषां सहस्रेण करैः करोति ।
उन्मूलयत्येककरेण तानि पद्मानि धाता कुपितो द्विपेन ।

द्वैराज्यशङ्कया कञ्चित्कालं संकुचितस्ततः । भूयः प्रभवतो लग्नं राज्यं हर्षमहीभुजः । ९२०
राजशब्दस्तदा सेहे न कुत्राप्यधिरोपणं । अत्युदग्रतया तस्मिंल्लघुत्वेनान्यराजसु ।
स शोभादायिनीर्भङ्गीः प्रावर्त्तयत मण्डले । निर्म्मत्सरो नरपतिः पुष्पर्त्तुरिव कानने ।
मुक्तकेशा निरुष्णीषा निष्कलाभरणाः पुरा । सन्त्यज्यैकं महीपालमभवन्निह देहिनः ।
धम्मिल्लग्रथनाद्यत्र मदनः कम्पनापतिः । जयानन्दोऽप्यमात्याग्र्याश्चिगर्धोरुकधारणात् ।
अन्वभूत्पार्थिवक्रोधमविशेषेण मण्डले । तेन राज्योचितो वेषस्तत्र राज्ञा प्रवर्त्तितः । ९२५
॥ युग्मं ॥ स केषाञ्चिदमात्यानामाकल्पोल्लासशोभिनां । निर्म्मत्सरः स्वदासीभिरारात्रिकमकारयत् ।
दाक्षिणात्याभवद्भङ्गिः प्रिया तस्य विलासिनः । कर्णाटानुगुणष्टङ्कस्ततस्तेन प्रवर्त्तितः ।
लडत्तालीदलाः स्थूलचन्दनस्थासकसुन्दराः । रेजुर्भटास्तदास्थाने श्लाघ्यदीर्घासिधेनवः ।
स्वर्णकेतकपत्राङ्कजूटलम्बोर्जितस्रजः । चटुलास्तिलकाश्लिष्टविलोलतिलकाङ्कुराः ।

अपाङ्गश्रोत्रयोर्बद्धसन्धयोऽञ्जनरेखया । निर्मारङ्गिककेशान्तबद्धहेमोपवीतकाः । ९२०
अधराम्बरपुच्छान्तैर्लम्बैश्चुम्बितभूतलाः । प्रच्छादितार्धदोर्लेखकञ्चुकाङ्कपयोधराः ।
कर्पूरोद्धूलनस्मेरा भ्रमन्थस्तरलभ्रुवः । वधुराश्रितपुम्वेशा झषाङ्कच्छलदक्षतां ।
॥ चतुर्भिः कुलकं ॥ अन्योपजीव्यतां प्रापुस्तस्यार्थित्वेन मार्गणाः । विश्वाप्यायकतां मेघाः प्रणयेनेव वारिधेः ।
प्रसादैस्त्यागिनस्तस्य राज्ञः कनकवर्षिणः । समस्ता गायकगणाः पार्थिवस्पर्धितां ययुः ।
विद्वच्चूडामणिर्भूभृत्पण्डितान्रत्नमण्डितान् । चकार युग्यतुरगच्छत्रादिप्रक्रियाभृतः । ९२५
कश्मीरेभ्यो विनिर्यान्तं राज्ये कलशभूपतेः । विद्यापतिं यङ्कर्णाटश्चक्रे पर्माडिभूपतिः ।
प्रसर्पतः करटिभिः कर्णाटकटकान्तरे । राज्ञोऽग्रे ददृशे तुङ्गं यस्यैवातपवारणं ।
त्यागिनं हर्षदेवं स श्रुत्वा सुगविबान्धवं । विल्हणो वञ्चनां मेने विभूतिं तावतीमपि ।
सौवर्णामलसाराढ्याराजधान्यो धरापतेः । सुवर्णेशाऽभ्रंलिहगृहा भेजिरे भुवनाद्भुताः ।
तदीये नन्दनवने द्रुमेभ्यो न व्यधुः स्थितिं । त्यागिना निर्ज्जितास्तेन केवलं कल्पपादपाः । ९३०
विविधाभिरप्रून्यासु विहङ्गमृगजातिभिः । तेन व्याप्तदिगाभोगं चक्रे पद्माभिधं सरः ।
सोऽज्ञासीद्यावतीर्व्विद्यास्तासां नामापि निश्चितं । वक्तुं नास्त्येव सामर्थ्यं व्यक्तं वाचस्पतेरपि ।
गीतमाकर्ण्यतेऽद्यापि तस्य वाग्गेयकारिणः । विपक्षैरपि पक्ष्माग्रलुठद्बाष्पोदबिन्दुभिः ।
स्वपतो दिनयामौ द्वौ सर्व्वकालं विलासिनः । दत्तस्थानस्य तस्यासीद्यामिनीषु प्रजागरः ।
तस्य दीपसहस्राङ्के स्थितस्यास्थानमण्डपे । विद्वद्गोष्ठीगीतनृत्यप्रस्तावेन क्षपा ययुः । ९३५
कथान्ते शुश्रुवे तत्र न पर्णचर्व्वजः परं । कान्ताधम्मिल्लशेफालीत्रुटिजन्मा च मर्मरः ।
वितानैः सपर्यादेव सान्निवसेव दीपकैः । स्वर्णदण्डैः ससर्पेव सधूमेवासिमण्डलैः ।
सान्तःपुरादिव कान्ताभिः सनयेव मन्त्रिभिः । सर्षिवल्लोव विबुधैः सगन्धर्व्वेव गायनैः ।
नित्यमङ्कितवक्षतिर्धनदस्य यमस्य च । एकं विहरणारण्यं दानस्य च भयस्य च ।
सभास्थानस्थितिस्तस्य राज्ञः शक्राधिकश्रियः । कस्य वाचस्पतेर्व्वाचा वक्तुं कार्त्स्न्येन शक्यते । ९४०
॥ चतुर्भिः कुलकं ॥ रौक्मेय राजतेश्वासीद्व्यवहारस्तदा घनः । मण्डले विरलोऽमुष्मिन्दीनारैस्ताम्रजैः पुनः ।
दण्डनायकतां प्राप्य सुन्नः सर्व्वोन्नतिं भजन् । तस्मिन् काले लब्धशोभाश्नीचो मुष्टिंपचः परं ।
निजाश्रयवने सय्यां मूलके विजयेश्वरे । आख्यान्ति यस्य सुश्लक्ष्णं निर्व्ययस्थितयो मठाः ।
क्षुधितव्याधितानाथदीनार्त्तार्त्तिनिवारणं । सुस्पष्टं प्राप पद्मस्य राज्यलक्ष्मीः कृतार्थतां ।
नन्दिक्षेत्रे व्ययीकृत्य प्रत्यब्दं सप्त वासरान् । चम्पकः सफलां चक्रे सर्व्वकालार्जितां श्रियं । ९४५
कृष्णाजिनाभयमुद्रो मुख्यैर्दानैः क्षमाभुजा । अदरिद्रीकृता विप्रा निःशेषार्त्तिच्छिदार्थिनां ।
राज्ञो वसन्तलेखाख्या महिषी प्रियाकरोत् । मठाग्रहाराग्नगरे पूर्व्वे च त्रिपुरेश्वरे ।
माहेश्वर्य्यमयो कार्षदित्यं त्यागीव सोद्यथौ । उदारव्यवहारन्तु स तद्राज्ये प्रपद्यते ।
अथ प्रवृद्धिं सम्प्राप्तः प्रमर्कैर्नवमन्त्रिणः । पूर्व्वामात्यद्विषो राज्ञो मतिमोहं प्रचक्रिरे ।

कुष्ठार्ताङ्घ्रियुगः शिखी वज्रपदं म्लायति धावन्नहिं भानुः पादसहस्रभाक् प्रतिपदं मञ्चार्थ्यतेऽनूरुणा।
वञ्चयन्ते बलिनोऽपि यदघुबलैः सामर्थ्यहीनैश्च यद्भ्राम्यन्ते परिपूर्णहृत्तय इदं दैवस्य लीलायितं। ८९०
स सर्व्वशास्त्राधिगमप्रौढः परिवृढो धियां। यन्मोहितमतिश्चक्रे वैधेयैरपि मन्त्रिभिः।
विपन्नस्य पितुर्व्वैरप्रतिकारविधित्सया। स राजधानीनामाङ्कमठादिभिरलोठयत्।
त्यागी तत्कोशसम्भारं व्ययीकुर्व्वन्नितस्ततः। लुम्भस्य चाभिधानांस्य पायसेन इति व्यधात्।
शृङ्खान्ते शृङ्खशीलानां ढौकितं मूढचेतसा। स्वर्णं पञ्चाधिकं द्रात्रा स्त्रीणां तेन शतत्रयं।
याद्दृशीसाद्दृशीस्तत्र नाडीर्व्विन्यस्यतानिशं। नागच्छन्ति परं डामजनंगमकुलाङ्गनाः। ८९५
अत्रान्तरे पूर्य्यमाणे गूढं कोटपदातिभिः। पुनर्भुवनराजोऽभूत्सहरावश्चिलुब्धधीः।
मदर्पितपुरं प्राप्तः कन्दर्पद्वारनायकं। श्रुत्वा योद्धुं विनिर्यान्तं ययौ भूयोऽप्यदृश्यतां।
तस्मिन् प्रघट्टेऽपि नृपोदृप्यद्राजपुरीपतिः। सङ्ग्रामपालः केनापि हेतुना विक्रियां ययौ।
कन्दर्पं कोटस्थ्यानां मित्राणां सङ्घचोद्यते। क्रुधद्राजपुरीं राजा व्यसृजद्दण्डनायकं।
स महद्भिः समं सैन्यैर्गच्छन्लोहरवर्त्मना। अधीरः कोटकच्छेषु सार्द्धं मासं व्यलम्बत। ९००
प्रत्यासन्नाच्छुचेर्मासात्प्रतापाच्च विरोधिनां। चलतस्तस्य यात्रायां न सङ्ख्योऽप्यराजत।
अविशेषज्ञभावेन भर्तुस्तिष्ठन्निरुद्यमः। ततो जगाम कन्दर्प एवोपालम्भमात्रतां।
कृतप्रतिज्ञोऽनाहारतया राजपुरीजये। उपालम्भार्दितः सोऽथ निःसामग्र्योऽप्यगाचलत्।
निराहारस्य वसतः कन्दर्पस्याद्रिगह्वरे। षष्ठेऽह्न्यभूद्राजपुरीयोजनेऽभ्यधिके स्थिता।
अव्याहतः सोऽरिबलाद्विपक्षस्त्राणि पातयन्। कदलीपत्रशम्भूद्रन् वनं सिंह इवाविशत्। ९०५
दण्डनायकसैन्येभ्यः परमेकस्समन्वगात्। सेनानीः कुलराजाख्यो बुद्धराजकुलोद्भवः।
तं वाह्याख्यां राजपुर्य्याहता संख्याहितं द्विषः। निहत्य शृङ्गाश्चकाङ्कं कन्दर्पं मेनिरे हतं।
मध्याह्ने स तु कन्दर्पः स्वयं सम्प्राविशद्बली। राजधानीं राजपुर्य्याविंशत्यंशैः समं भटैः।
द्विषां विंशत्सहस्राणि योधानामनिवर्त्तिनां। रुरोध राजपुर्य्येषु तत्पदातिशतत्रयं।
काश्मीरकाणां निहतं रणे तत्र शतद्वयं। चत्वारि तु शतान्युर्व्वी खशानामपर्यरत। ९१०
अग्ने रिपुबले दूरमसंख्येयैस्थिताग्निभिः। संस्कुर्व्वद्भिर्हतान्याशीत्रणोत्स्थ्योर्महानसः।
तेनैवं स्वाम्युपालम्भवेतालो रभसार्पितः। रणश्मशाने वीरेण शमितो मांसशोणितैः।
याममात्रावशेषेऽह्नि पुनरेवाय संहताः। द्विषः परिभवोत्तप्ताः कन्दर्पं योद्धुमाययुः।
ततस्तानय नाराचान्निचिक्षेप स संयुगे। लिप्तानौषधिनैतेन विद्धा ये प्राज्वलन्दिशः।
आग्नेयं वेत्त्यशावस्त्रमिति मूढा विशङ्किताः। ते दूरं प्रययुर्भीता निन्दन्तः पुनरागमं। ९१५
प्रगल्भभावः प्रतिभानमोजः प्रयोगचातुर्य्यमसम्भ्रमश्च। महाशयानामतिसङ्कटेषु धैर्योपनद्धा न धियं जहाति।
राजधानीं प्रविष्टस्य मानान्स्ताभिलाषिणि। भूयोऽप्यपश्यत्स च्छन्नां वाह्यालीं वहलैर्बलैः।
योद्धुं यियासुः शुश्राव मार्गं तं दण्डनायकं। घोरां रणाटवीं दृष्ट्वा भयात्स्थगितसैनिकं।

स्वीयैर्दृष्टैः श्रुतैः कैश्चिद्दृष्यन्त्यधिकमाहवे । परकीयैस्तमन्यन्ये कोऽन्तरं वेत्ति देहिनां । ९९०
आनीतोऽथ विनिर्गत्य तेनैव सभये व्रजन् । सर्द्धमानो यथाम्भोधौ मज्जन् हंसेन वायसः ।
रक्तप्रजय्योतसैन्यमभिन्नं वज्रकोशवत् । परराष्ट्रं विभेदेवं स्वशौर्य्येणैव कोऽपरः ।
प्रणतात्करमादाय ततो राजपुरीपतेः । मासमात्रेण कन्दर्पः पुनः स भुवमाययौ ।
प्रत्युद्गमादिसत्कारैः कृतपूजो महीभुजा । स दण्डनायकादीनां शिरःशूलावहोऽभवत् ।
परिहासपुरे पारिपाल्यं कुर्व्वन् कठोरधीः । वातगण्डाख्यया ख्यातिं निन्ये यस्तत्र पर्षदा । ९९५
प्रभूतोत्कोचसम्प्रीतसचिवप्रेरणस्पृशा । अपास्य वामनं राज्ञा पादाग्रादौ नियोजितः ।
आनन्दः स क्षणे तस्मिन्निच्छन्द्वाराधिकारितां । कन्दर्पद्वेषिणामासीन्मन्त्रिणामतिसम्मतः ।
तत्प्रेरितस्ततः पातुं लहरं विप्लुताहितं । मण्डलेश्वरतां दत्वा कन्दर्पं प्राहिणोन्नृपः ।
मन्त्रविक्रमसम्पन्नः कुभृत्यैः खेदयेत्सुभिः । युक्त्या तया राजपथैः समीपात्सोऽतिवाहितः ।
दूत्याहोयमिति प्रहाय निकटाद्देशान्तरं वाग्मिनं सूरिं बन्धुवियोगकृत्तनुवचोऽमुष्येति सन्त्यज्य च ।
शूरं राष्ट्रमसौ हरेदिति तया हित्वा विचारोज्झितो धूर्त्तप्रेरणया बुधो नृपपशुर्नायाति नाशङ्किरात् । १०००
अदर्शनात्स्ववद्धापि कन्दर्पप्रीतिराश्रयात् । राज्ञो जगाल कालेन सा मुष्टेरिव वालुका ।
उत्कर्षपुत्रावादाय चिकीर्षुर्लोहरेशतां । कन्दर्पो वर्त्तत इति क्षितिपं मन्त्रिणोऽवदन् ।
तथेति नृपतिर्गृह्णन् बन्धुं हन्तुमयाश्रु तं । ससैन्यं व्यसृजत्पट्टं टङ्कं चासिधराभिधं ।
तयोः सम्प्राप्तयोर्व्वार्त्तां तां लेख्यव्यत्ययाद्विदन् । विमुखश्शङ्कितात्मा च कन्दर्पोऽभूद्यथा मुहुः ।
केलिद्यूतक्षणे हस्तं म्ट्दूत्क्षेवकवत्पुरः । आसीदसिधरस्तस्य बन्धुमभ्युद्यतस्तदा । १००५
ततः पाणिं विनिष्कृत्य सोऽङ्गुष्ठाग्रेण तत्करं । अस्पृशन् येन निस्त्यं क्षिप्तः पचीव सोऽगमत् ।
अनन्तराजो भूभृच्च तेनात्मा च नृपाश्रितः । विगह्यते स्म खिन्नेन पट्टस्यैवमकथ्यत ।
नेयाश्रयो नरपतिः कुटुम्बं प्रहिणोतु मे । अर्पयित्वा ततः कोटं प्रयास्यामि दिगन्तरं ।
आनीय दत्तांस्तैस्तानादाय द्रोहवर्ज्जितः । स विमुक्ताधिकारोऽथ मन्त्री वाराणसीं ययौ ।
हत्वा गयायां मामन्तमेकमन्यं निवेश्य च । काश्मीरकाणां चक्रे स आट्टशुल्कनिवारणं । १०१०
स हत्वा चोरसेनान्ये ससैन्ये दुर्गमेऽध्वनि । पूर्व्वाशामध्वनीनां स व्यधान्निर्धूतकण्टकं ।
स्याधं निहत्योयमत्वं वाराणस्यां निरस्तता । पूर्व्वा दिक् भूषिता तेन मठैः सुकृतकर्मठैः ।
ते तस्मिन्प्रभासनादेव सम्भ्रान्ताः कुमन्त्रिणः । अन्योन्यासूयया जग्मुरप्यकार्य्याणि भूभुजः ।
स्वैराचारोद्दितगुरुमदाः स्वदन्तकण्डूनिशान्वै दुर्व्वारैर्व्वाकलुषमतयो यत्र दुर्मन्त्रिसर्पाः ।
प्रत्यन्योन्यं भवति गणितैर्व्वासरैरेव कश्चिन्मध्यस्थाणोरिव नरपतेस्तत्र सर्व्वाङ्गभङ्गः ।
अतिक्रामति कालेऽथ पार्थिवं हन्तुमुद्यमं । दुद्रुदुर्गातराज्येच्छस्तान्चङ्गिर्धर्मटोऽभजत् । १०१५
द्रोहापवादभागेव भवेद्राज्यमिदं पुनः । मामेव वेश्यापुत्त्रत्वादनर्होऽस्मिन्नुपेयति ।
इति सम्मन्त्र्य सुचिरं निहन्तुं पृथिवीभुजं । प्रेरितो जयराजोऽभूत्तेनापरसचेतसा ।

॥ युग्मं ॥ विलावग्रामजान् चिप्ता तीक्ष्णं द्रोहाय भूपतेः। सावरोधवधूर्द्विचा विदधे मध्यपातिनीः।
क्रमात्सिद्ध्युन्मुखे तस्मिन् कार्ये राजपुरीं नृपः। दूत्याय व्यसृजज्जातु बहुमानेन धम्मटं।
महस्नमङ्गलगृहे सुदिनापेचया स्थितिं। तं सिद्धिभङ्गचकितो जयराजः समाययौ।
तमर्थं मण्डपे गूढं तयोर्मन्त्रायमाणयोः। प्रयागानुचरः कश्चिद्भित्तिव्यवहितोऽशृणोत्।
तदावेदिततद्वार्तात्प्रयागात्तत्क्रियां ततः। बुद्ध्वा निवर्त्तयामास धम्मटं गमनान्नृपः।
कुलक्षयभयात्तिष्ठंस्तत्प्रतीकारमन्थरः। स्वमेव केवलं रचन्नासीत्स चकितोऽन्वहं।
असिद्धिं जयराजस्तु दृष्ट्वा दूतैः स्वबन्धुकौ। श्मालडामरौ वीरौ नागपाजाभिधौ व्यधात्।
स्वभृत्यैर्मदनिर्यातैर्यियासुस्तं निवेदितं। श्रुत्वा चपायां श्चितिभृद्दिक्षु चिचेप रक्षिणः।
व्याजायार्तो वदन् मज्जः प्रातस्तान्वल्गिरेव तं। चतुष्कं पूजने धूर्तो जयराजमुपानयत्।
राज्ञोदत्तार्गले धाम्नि स्थितस्य स्नानमण्डपं। सत्रासो भ्रातृपुत्रेण धम्मटेन ततोऽविशत्।
रक्षिणोऽथ वहिर्न्यस्य प्रयागः पार्थिवाज्ञया। जयराजं वधानेति नीचैर्धम्मटमभ्यधात।
धम्मटे विश्वसन् शस्त्रं जयराजस्त्यजेद्ध्रुवं। निर्देशेनामुना वेत्ति स्वमज्ञातश्च धम्मटः।
द्वयोरेकस्य वा युद्धे तयोर्मृत्यौ हितश्च न। व्यक्तीकृतैक्ययोर्वापि वधो लोकेऽप्यगर्हितः।
इति निर्ध्यायतः शश्वदविरोधेन वेधसः। प्रज्ञास्य सत्यभाद्राज्ञो मन्त्रो युक्ततमस्तया।
॥ तिलकं ॥ नाबुद्ध मां ध्रुवं राजा तान्वल्गिरिति विश्वसन्। जयराजमुपागत्य तत्रोधार्ष्ट्याद्दचोऽब्रवीत्।
अप्रसन्नस्त्वपि नृपो यद्यद्रोहोऽसि निश्चयात्। तत्त्वयाऽविशङ्ख्यमसिधेनुः समर्प्यतां।
दैवेन वा मोहितः स तद्विश्वासेन वात्यजत्। आचिप्यमाणः शस्त्रास्त्रकोविदः शस्त्रमन्यवत्।
वैक्लव्यदर्शनात्सिर्थस्ततः स परुषां गिरं। तन्वङ्गपौत्रष्टुमाख्यस्तं जगादाञ्जकात्मजः।
न त्वं निःसत्त्वकथाया जातः कलशभूभुजा। आसीज्जनयिता नूनं क्लीबो यः कश्चिदेव ते।
निष्ठायां धैर्यचर्याणां परिणाममजानता। तेनेत्युक्तः स शीताम्बुसिक्तसप्तोपमोऽभवत्।
॥ युगलकं ॥ द्रोहोदन्तं प्रच्छमानोऽधीरस्तन्मध्यपातिनं। यातनाक्लेशितोऽप्यूचे स्वमेव न तु धम्मटं।
विपन्नमन्त्रवीर्येण मोघीकृतविपाशनः। रज्ज्वा निपीड्य ग्रीवाग्रं ततो निशि विपादितः।
जयकेन प्रतीहर्त्रा शिरश्छित्त्वोज्झितं ययौ। भट्टारनड्वलातोये तद्वपुर्मत्स्यभोज्यतां।
तमेकषष्टते वर्षे हत्वा भाद्रपदे नृपः। वधं गभीरहृदयो धम्मटस्याप्यचिन्तयत्।
आदिदेशाथ तत्सिद्धौ रहः शस्त्रभृतां वरं। शूरं कलशराजाख्यं ठक्कुरं लोहराश्रयं।
प्रहिणोति यदा दूतं प्रयागस्ते तदा त्वया। सम्पाद्यमेतदित्यूचे तं चोपचितसत्क्रियं।
असिद्धिभीत्या स्वं दूतं स प्रहिण्वन् प्रयागकः। सम्यक् क्रियतामेतदित्यूचे कुपितो नृपं।
राज्ञि मन्त्रीयमाणेऽथ पश्चानीयाग्र्यमन्त्रिणः। वामनः सांगले द्वारे त्यक्तदेहोऽब्रवीद्वचः।
मन्त्रस्य मन्त्रिणश्चैते न यावन्निःसृता वहिः। तावत्क्रियेत चेदेतन्न भद्राणि दरिद्रति।
राजाज्ञया प्रयागेण ततो दूते विसर्जिते। तीक्ष्णः कलशराजाख्यस्तनयाभ्यां सहाययोः।

तस्मिन् प्रसङ्गे तान्वङ्गिः श्येनस्य ददतातपं । राजधान्यन्तरेवासीद्भित्रैरनुचरैः समं ।
पुरः कलशराजं तं दृष्ट्वा पश्चाच्च तत्सुतौ । यावत्सशङ्कमाचष्टौ तावत्कृत्यैर्निजैर्जहे ।
शक्तोऽपि धम्मटः क्रष्टुं कृपाणीमिति वादिनं । हन्तुं कलशराजन्तु यावच्छक्ते व्यधात्करं ।
तावत्तेनागतः पश्चात्तत्पुत्राभ्यां कृताहतिः । आसनादुच्चलन्नेव चिप्रं प्राणैरमुच्यत ।
मुमूर्षुणा हतस्तेन ज्यायान् कलशराजजः । चित्रमायुधवैगुण्यान्नाभीन्नणमणितोऽभवत् ।
तस्य स्वभाग्ययोगेन तेष्वेवाहःसु शस्त्रिणः । निजा कृपाणी तुत्रोट तेनाभद्रायुधोऽभवत् ।
निहत्य पातितः पृष्ठात्स तैर्व्याधैरिवाण्डजः । शुनां ग्रासाय सन्त्यक्तः श्वपाकैः पार्थिवाज्ञया ।
राज्ञा तन्वङ्गनप्तारौ स्वयं रिल्हणसल्हणौ । आगत्य प्राङ्गने त्यक्तकृपाणी परिरक्षितौ ।
दत्तास्कन्दास्तु टुक्काद्याः संरम्भेण युयुत्सवः । माययोदयसिंहेन दाम्भिकेनैत्य वञ्चिताः ।
यूयं पुत्रा ममेत्युक्तवतस्ते धार्मिकस्य यत् । प्रत्ययात्तस्य शस्त्राणि तत्यजुर्जीवितेच्छवः ।
राज्ञो विशुद्धिः क्रियतां पार्श्वमेत्येति तद्वचः । तैः समागत्य जगृहे मार्गो राजगृहान् प्रति ।
तन्वङ्गजगृहोच्छिष्टैर्बाल एव विवर्धितः । टुक्कस्ततो विहस्यैनं खड्गग्राहकोऽवदत् ।
तन्वङ्गनप्तर्यत्पूर्वं जयराजमभाषथाः । न त्वं निःसत्त्वकथ्याया इति तद्विस्मृतं तव ।
स ते तादृश एवायं वर्तते सङ्कटक्षणः । किं धैर्यावसरे मूढ वैक्लव्यमवलम्बसे ।
तस्माज्जातोऽसि नियतं मत्पित्रोच्छिष्टपुष्टिना । अहन्तु तेन वीरेण त्वत्पित्रा कीर्त्तिभागिना ।
इत्युक्त्वा मरणे गृह्णन् खड्गधाराचलज्जलं । पपात जन्ममालिन्यं मानी प्रक्षालयन्निव ।
नृपान्तिकं प्रयास्याम इति निश्चयतस्ततः । टुक्कादीन्राजपुरुषाः कारागारे निचिक्षिपुः ।
ते यौवनभरोन्मत्ता द्रुमा वासन्तिका इव । प्रत्यभासन्त कारुण्याद्रक्षणीयाः क्षमाभुजः ।
टक्कस्तु विम्बियोनाम पापः सम्प्रेक्ष्य भूभुजं । न्यजिग्रहत्तान् ग्रीवासु निशि पाशान्निवेशयन् ।
गुल्लो विजयराजस्य वुल्लागुल्लश्च तेऽनुठन् । तन्वङ्गपौत्राश्चत्वारो हता बध्यमहीतले ।
हतानामपि सौन्दर्यं तेषामद्यापि वर्ण्यते । कथान्तरे वयोवृद्धैर्बद्धाश्रुस्यन्ददुर्दिनैः ।
सततास्यस्तनाम्बूनैः स्वसैसहद्मनाङ्कुरैः । कोणंगोणाश्ममालेव सुचिरं वध्यभूरभूत् ।
इङ्गिमानीतयोराज्ञाप्युत्कर्षापत्ययोस्तयोः । ज्यायान् प्रसिध्ये डोम्बाख्यो गूढदण्डैः कुलच्छिदा ।
स्फुलिङ्गमिव सम्भाव्य तेजोविस्फूर्जितं शिशुं । जघान नयमल्लस्य तद्विजयमल्लजं ।
गोभृत् स्वगोत्रजान् हत्वा भोक्तुमेकस्य कस्यचित् । कुर्व्वन्ति दैवोपहता राज्यं निष्कण्टकं नृपाः ।
संरुद्धं मधुगोलमुषविटपव्यूहावलीगह्वरे मूढः कर्तुमकृच्छ्रहार्य्यमभितः कस्यापि भव्यात्मनः ।
दैवप्रेरणया प्रकम्पविवशः पश्यन्प्रहारैर्दृढं तद्धातृन्मधुपान्निहत्य शमयत्ययत्यपृष्योरुहः ।
ज्ञातिद्रोहमहापापमग्रधीरयं पार्थिवः । डिम्बानामप्यसम्भाव्यामभजद्विटभोग्यतां ।
वामनस्यात्मजः क्षेमस्तच्चाभवत् जनकद्विषं । प्रैरयत्कलशोत्पन्नपक्षमहेममित्रहंसे ।
तामिच्छामच्छिमत्तस्य भग्नो पुत्त्या मयागकः । धावतां श्वभ्रपातेच्छां धीरोऽयं ते वदन्ति नः ।

अनियमस्पष्टचेष्टानां भवानामिव भूभुजां। अन्तःप्रवेशकुशलो यो वेताल इवाभवत्।
नन्ना हलधरस्याथ विटो लोठधराभिधः। जगाद् निर्जने जातु राजानं रञ्जनेच्छया।
॥ युग्मं ॥ ह्रियतां ग्रामहेमादि कलेशेश्वरसंश्रयं। तत्प्रसादागमैः सेतुं वितस्तायां करोमि ते।
आलेख्यं गगने लिखामि विसिनी सूत्रैर्व्वयाम्यम्बरं स्वप्नालोकितमानयामि कनकं गृह्णामि वप्रं हिमैः।
इत्याद्युक्तमपि स्फुटं जडमतिर्जानाति सत्यं नृपो यस्त्वाहृक् त्रपया न वक्ति सगतप्रौढिः परम्वञ्चते। १०८०
निषिषेध चिकीर्षान्तु प्रयागस्यामपि प्रभोः। सदुपस्थायिकोऽपथ्याभ्यर्थनामिव रोगिणः।
अथ लोष्टधरो ह्यास्यावसरे जातु भूपतिं। बद्धस्य मोचो देहस्य क्रियतामित्यभाषत।
स्मित्वा किमेतदित्युक्तवन्तं तं स व्यजिज्ञपत्। तद्भुष्कपुरे भीमस्वामिहिरण्मयभूत्पुरा।
विरोधात्परिपत्यानां तत्कृतो भीमकेशवः। राज्ये कलशदेवस्य बद्धद्वारोऽभवच्चिरं।
तैः शान्तवैरैर्व्विदधे यदाथ विघ्नतारारिः। चौरापहृतदुर्ध्वर्णकवचो ददृशे तदा। १०८५
भूयोऽपि चक्रे तद्भीत्या कोशसामग्र्यभागिति। ततः प्रभृत्यय यावद्बद्धद्वारारिः स्फुटं।
आदीयतां तदीयस्त्कोशश्चौरभयावहः। सोऽपि बन्धादिमुक्तोऽस्तु पुष्पदीपादिभोगभाक्।
इति सम्प्रेरितस्तेन तथा चक्रे स भूपतिः। कोशन्तदा प्रपेदे च मणिस्वर्णादिनिर्भरं।
अचिन्तयच्च यद्देवस्य शून्यसुरास्पदे। कीदृक् तत्रापरेषु स्यादाढ्येषु सुरवेश्मसु।
छतप्रायः स तत्रत्यैः पारिषद्यैस्ततो नृपः। निष्क्रयं रूढभारोढिवारणेन प्रदापितः। १०९०
क्रमेण सेनानानाङ्गव्ययव्यसनशालिनः। सुराकुहरणे रूढा धी.सम्भावनया तया।
पूर्व्वराजार्पितान् कोशांस्ततः स भुवनाद्भुतान्। सर्व्वगीर्व्वाणवेश्मभ्यो लुब्धबुद्धिरपाहरत्।
हृतेषु कोशेष्वानेतुं देवानां प्रतिमा अपि। चक्रारोदयराजाख्यं देवोत्पाटननायकं।
वदनेषु सनग्नाढै. शीर्णघ्राणाङ्घ्रिपाणिभिः। मूर्तिनाशाय देवानां शक्तन्मूत्राद्यपातयत्।
स्वर्णरूप्यादिघटिता गीर्व्वाणाश्रतयोऽलुठन्। अश्वस्विन्नगण्डाश्च इव सावस्करेष्वपि। १०९५
विबुधप्रतिमाश्रुकराश्चष्टा गुल्फदामभिः। पूत्कारकुसुमच्छन्ना रथ्यनशाटकादयः।
ग्रामे पुरेऽथ नगरे प्रासादो न च कश्चन। हर्षराजतुरुष्केन न योनिप्रतिमीकृतः।
तस्य देवावशिष्टौ द्वौ परमास्तां प्रभाविणौ। नगरे श्रीरणस्वामी मार्तण्डापत्तनेष्विव।
द्वौ सद्रा प्रतिमामध्याद्बुद्धद्विमावरचतां। दानप्रसङ्गे ते जातु याचित्वा त्यागिनं नृपं।
परिहासपुरे जन्म मेदिन्यां कनकाभिध.। गायनः कुशलश्रीश्च श्रमणो नगरान्तरे। ११००
अधिगतवतां लोके विश्वाद्भुतामपि सम्पदं न खलु विरतिर्दुष्कर्मभ्यो धनार्जनकाङ्क्षिणां।
किमपि कमलावाप्ते पद्माकरोद्धृतिपातकं भजति कमला लीलावामा भवन्नपि हि द्विजः।
पैतामहेन पित्र्येण तथा राज्यचिरार्पया। लोहरादाहृतार्थेन कोशेनोत्कर्षवानपि।
युक्तोऽपि पूर्व्वराजार्थैः दिवौकोभ्यो जहार यः। ऐश्वर्यार्जनं हा धिक् [illegible]।
॥ युग्मं ॥ तदाज्ञामात्रमादाय सचिवैरथ पापिभिः। ते ते [illegible]।

कालानुवृत्तिपरतां धिग्धिग्राजोपजीविनां । यत्र मन्त्री वयस्यः सन्सदाचारोऽपि गौरकः ।
सर्व्वदेवस्थद्ग्रामसर्व्वस्वापद्धतिव्रतं । स्वीचकाराज्ञया भर्तुरर्थनायकतामपि ।
॥ युग्मं ॥ पार्षदः समरस्वामिदेवागारे च देलकः । आप्तोविजयमल्लस्य यो राज्ञो दृश्यतां ययौ ।
द्विगुणोत्पत्तिदानेन सोऽर्थनायकतां गतः । लब्धावकाशो राजाग्रे क्रमेणासीन्महत्तमः ।
किमन्यद्धूरता तेन सर्व्वार्थान् सर्व्वनायकैः । व्यधीयत धनावाप्त्यै पुरीशस्यापि नायकः ।
श्रीगर्भपदपर्य्यायच्छन्नजाड्यप्रभावतः । तयार्जितस्य कोशस्य सोऽनुरूपव्ययोऽभवत् ।

मृगीदृशां दुर्लभतां हयानां श्वासान्विटानां कुवच सहलं ।
वैतालिकानाञ्च विकत्थनलं क्रेतुं क्षितीशाः क्षपयन्ति लक्ष्मीं ।
कोपप्रसादैर्दयिताजनस्य हयादिवृत्तान्तगवेषणेन ।
भृत्यानुवृत्त्या मृगयाकथाभीराज्ञां शिशूनामिव याति कालः ।
विलासहासासनपानदानयानाशनाद्या श्रसतीः सतीर्व्वा ।
छायेव चेष्टाः क्षितिपालवर्गः परानुकारेण करोति सर्व्वाः ।
अमानुषत्वं पुरुषाधिराजा विटस्तवैः स्वस्य विचिन्त्य सत्यं ।
तृतीयमक्ष्यभ्यधिकं भुजौ वा ममेति मत्वा न विदन्ति मृत्युं ।
निशासु येषां प्रभवन्ति दारादिमेध्यमात्या नियताधिकाराः ।
अहो भ्रमः स्वच्छ यदत्र तेऽपि विदन्ति भूपाः प्रभविष्णुभावं ।
स्वादूचितं स्वादुतयैव भुंक्ते यूत्कृत्य मुञ्चत्यपि यूत्कृतानि ।
विश्वासितच्छाग्रमुपेत्यकस्माड्भूपस्य बालस्य समानभावः ।

जाड्यमित्यादि यत्किञ्चित्क्षितिपानां कदाचितं । तत्सर्व्वं हर्षदेवस्य जाड्येन लघुतां ययौ ।
तुष्टः पटहवाद्येन ह्यातोद्यविदे ददौ । भीमनायकनाम्ने स करिणं करिणीसखं ।
स्वप्नेतेन तस्यासीद्गायनः कनकोऽथ सः । चम्पकावरजः खेदाद्गोताभ्यासकृतोद्यमः ।
प्रसादीशतमस्मै च खेदच्छेदनमिच्छता । तेन काञ्चनदीनारलक्षमचलचेतसा ।
कर्णाटभर्तुः पर्माण्डेः सुन्दरीं चन्दलाभिधां । आलेख्यलिखितां वीक्ष्य सोऽभूत्पुष्पायुधक्षतः ।
उत्तेजयन्ति सहर्षे हास्ये जडमतीस्थिटाः । सारमेयानिवाजस्रं प्रोत्साह्य प्राकृताशयाः ।
प्रविटाद्वेषिणो वीतत्रपस्यके सभान्तरे । प्रतिज्ञां चन्दलावाप्त्यै पर्माण्डेः च विलोडने ।
कृता पश्चिमपूर्व्वपारगत्यागं प्रतिज्ञया । तस्य स्तुतिमिषादेवं जहसुः कविचारणाः ।
भाषावेषविशेषतः परिगतस्तन्दाधिपात्योऽध्वगो गन्धादप्यवधारितं यदुत ते कर्पूरकोलद्रुमे ।
पद्यर्थेदिरमद्य हर्षनृपतेस्तव्यपथोपायनं नोचेत्तिष्ठतु नारिकेलकुहरे सम्प्रत्यमुञ्चिन्यतः ।
चापवाटव्यग्रप्रचराप्रवद्यधादाचन्दलालिङ्गनादाकल्याणपुरप्रवेशनविधेरापिमलादर्शनात् ।

आराजाश्रयकाननान्तवसुधापारर्द्धिकोठहलाद्देवेन प्रतिपिद्धमिद्धमहसा पोतांमसस्त्रवर्णे।
विटः प्रसादनृपतिर्मदनः कम्पनापतिः। महत्तरत्वं जयक्व तस्याश्चित्रापिनाकृतेः।
स्वालङ्कारनिर्वाहकृते ऽमुष्यास्य वेतनम्। नित्यमादत्त भूपालादायमीर्ष्याग्रमाय च।
विटत्वे निस्त्रपत्वे च मदनस्य कथाक्रमः। मौग्ध्ये पारिप्लवत्वे च नृपस्य निकषोऽभवत्।
मातेयं विद्धि कम्पाकान्तवानीतेति वादिभिः। सन्दर्श्य जरतीं नारीं मुषितः सोऽपरैर्विटैः।
दासीश्च देवता एता इत्युक्तान्यैः प्रवेशिताः। उन्नतिश्च श्रियं चौज्झत्प्रणमन् जहसे जनैः।
दास्यो मदनसंज्ञापमन्त्राद्युल्लेखकारिभिः। अध्यापिता विटैस्तस्य मतिमोहं प्रचक्रिरे।
ताभ्यः काभिरपि च्छाद्मसुरतं समयोचितं। वाञ्छन्तीभिः कृतः स्वाङ्गस्पर्शाज्ञागयाशयोज्झितः।
आयुष्कामाय भूयांसं कालं जीवितकाङ्क्षिणे। आयुर्वर्षशतान्यस्मै ता मूढमतये ददुः।
डोंबेन पिण्डसिद्ध्यर्थी केनाप्येतद्रसायनं। पिण्डसिद्धिकृदित्युक्त्वा पेयं किमपि पायितः।
किं तस्य कथितैरन्यैर्मौग्ध्यैर्यो याचितो विटैः। विद्यमानादिव धनादायुषोऽपि व्ययं व्यधात्।
बलकृपेच्छुरपरानुपायान् यानसेवत। कथयेत्कः सदाचारस्तानतोऽपि त्रपावहान्।
स एवमन्वतामिश्ने निश्चिन्तः शाश्वतीः समाः। मुग्धबुद्धिः स्वजन्येन दुर्जातश्च कुमन्त्रिभिः।
मेघवाहनमुख्यानां कृत्ये लोकोत्तरे यथा। सन्त्यद्यान्यधियः केचित्सन्देहान्दोलिताशयाः।
तथास्मिन्नपि दुष्कृत्ये वर्त्तमानेऽद्भुतावहे। भविष्यतीव कालेन नूनमप्रत्ययो जनः।
राज्ये वज्रच्छले तादृक् दुर्नीत्यापहतोऽप्यभूत्। आयुःशेषेण न वशे स रन्ध्रान्वेषिणां द्विषां।
नर्तकीः शिक्षयन्नाचावुत्थायाभिनयं स्वयं। तिष्ठन्दीपोज्ज्वले धाम्नि दूरात्केनापि शत्रुणा।
चिक्षेपुरपि नाभूद्यन्निहतो जनितोऽथ वा। फलं तस्यायुःशेषस्य प्रजानां कुकृतस्य वा।
कश्चिदेवाथ शङ्कान्ते पातदूतो महीपतेः। सर्व्वशुद्धिविधेः प्राभून्नारीचारित्रविप्लवः।
ते युवानो मदोन्मत्तास्ताः स्त्रियो यौवनोन्मदाः। नाशाय हर्षदेवस्य तस्मिन्नेवाभवन् क्षणे।
निगृहीतास्तेन रोषात्स राजा काश्चन स्त्रियः। काश्चित्त्वाकृष्य शङ्कान्ताज्जारैर्नीता दिगन्तरम्।
स्वेन दौःशील्यदोषेण सर्व्व एव विशङ्किताः। भृत्यास्तस्याशुभान्यैच्छन्नयनन्त च शान्तये।
तस्यापि शीलकैवल्यं तावत्सर्व्वत्र पप्रथे। यावत्कनकभूपालात्सञ्जातस्योपपद्यते।
शैशवे वर्धितो याभिरङ्कमारुह्य मातृभिः। सोऽङ्कमारोप्य ता एव चुम्बन्संबुभुजेऽनिशम्।
सम्भोगमभगिनीवर्गे कुर्व्वता दुर्वचो रुषा। निगृहीता च भुक्ता च नागा पुत्री पितृस्वसुः।
स तुरुष्कशताधीशाननिशं पोषयन् धनैः। निधनावधि दुर्व्वुद्धिर्व्वुभुजे ग्राम्यशूकरान्।
अथ सेवाभिसारेण कदापि कुपितो नृपः। स मन्दबुद्धिरास्कन्दमदाद्राजपुरीं प्रति।
विलोक्य सैन्यसामिग्रीमनन्यसदृशीं पथि। त्रैलोक्याक्रान्तिसामर्थ्यं पार्थिवैस्तस्य शङ्कितं।
स तु पृथ्वीं गिरिं दुर्गं दृष्ट्वा तद्ग्रहणोद्यतः। अप्रविष्टो राजपुरीं तन्मूले समुपाविशत्।
माससमभ्यधिकं तेन तस्थुषा परिपीडिताः। प्रक्षीणान्नादिसंभारा सम्भुर्दुर्गरक्षिणः।

आतुं सङ्ग्रामपालस्तानूरीचक्रे धरापतिः । कियन्तं न करभीतः कियतीर्नच संविदाः ।
उपोढदार्ढ्ये नृपतौ स तदप्रतिष्ठति । लुब्धमुत्कोचदानेन स्वीचक्रे दण्डनायकम् ।
प्रमथ्यमाने नृपतौ व्यावृत्तिं प्रेरिता रहः । प्रवासवेतनं भूरि मार्गितुं तेन प्रक्षिणः ।
तैः प्राये प्राकृतप्रायैः कृते पैशुन्यभाषितैः । राज्ञो दूरस्थकोशस्य कटकः क्षोभमाययौ ।
स तत्समर्थनां यावच्चक्रे तावद्विभीषिकाम् । तुरुष्कास्कन्दजामन्यां प्रददौ दण्डनायकः ।
अथाल्पधैर्यो नृपतिरुत्थाप्य कटकं ययौ । हस्त्याश्च कोशशामिर्यी तत्याजाध्वसु साध्वसात् ।
अपरीक्ष्याहृतोऽभृत्यः स्वामिनामतिसङ्कटे । करोति व्यसनापातमजात्याऽसिरिवाहवे ।
तेन स्वयमयोग्येन योग्यानन्यानविच्छता । कलङ्किता नरेन्द्रश्रीः क्षुद्राश्वेनेव मन्दुरा ।
ततः प्रभृति निर्व्वाणप्रतापस्य महीपतेः । प्रतापचक्रवर्त्याख्या सर्व्वतो ग्लानिमाययौ ।
ज्ञानानलेन यत्सिद्धं स्वेन भृत्यैस्तथाखिलैः । तत्कर्म्म कृतवन्तं स कन्दर्पं वक्रमन्यत ।
आनिनीषोश्च तं तस्य जडस्याकृत भूपतेः । दण्डनायक एवेच्छाच्छेदं पैशुनकर्म्मणा ।
ज्ञातद्रोहोऽथ नृपतिरवध्याद्दण्डनायकम् । प्रातिपक्ष्यानुरोधेन न क्रुधा न्यग्रहीत्पुनः ।
दुर्गे संदिग्धजीवोऽपि निवसन् पञ्चिकाय सः । लब्धस्ताम्बूलवस्त्रादि प्रहितं भृत्यसान्त्वनैः ।
आत्मनः सर्व्वनाशाय सञ्जातं दैवमोहिनः । वधार्हं प्रत्युत पुनर्निन्ये तं स्वपदं नृपः ।
तं विटाद्यादुभिर्भूयो राजानमुदतेजयन् । घोषयानाजितं सोच्चैः कर्णाद्या इव कौरवम् ।
वादी वादपराजितः प्रतिभटङ्गालीभिरत्याक्षिपन् योषिद्भ्रष्टसतीव्रता कुकलहैरुद्देजयन्ती पतिम् ।
कायस्थश्च कृताखिलार्थमहिमा कृच्छ्रे नृपं पातयन् स्वस्यासन्नपराभवस्य कुरुते भूयः समुत्तम्भनम् ।
मुक्तदेयधनोविभ्यत्तं सद्देनमहत्तमः । उर्वीपतिं दुर्व्यसने प्रेरयन् स्वार्थपण्डितः ।
मन्युमन्विष्य दरदां भवन् यैस्तु हताहतैः । दुर्गघाताभिधं दुर्गं ग्रहीतुं तमचूचुदत् ।
तद्धि हक्कनचन्द्राख्ये पुरा गोप्तरि डामरे । अनकद्वारपतिना हृतेऽनन्तनृपाज्ञया ।
प्रायोपविष्टया द्वारे तत्पत्न्यापि समर्पितम् । कलशक्ष्माभुजाक्षेपैर्वं प्राप दरन्नृपः ।
तद्वाद्द्वारदैः क्रान्तानन्तपाभेऽत्र मण्डले । राजा च नन्दिना चाथ बभूव स्रोटतोद्यमः ।
निर्ह्रादे तत्र गोप्तॄणां हृत्तये स स्रुतं हिमम् । अवग्रहेण तत्तस्मिन् क्षणे निःशेषतां ययौ ।
पारेस्तद्भ्रमाशस्य तद्ग्रहाय महत्तमः । अभीक्ष्णं प्रेरयत् क्ष्मापं स च तत्रोद्यमं व्यधात् ।
यातगण्डस्तदुद्योगे प्रतिष्ठासुं नृपाज्ञया । चम्पको द्वारकार्य्यस्यमभिसन्धातुमैहत ।
द्वारं निवार्य्य भूपेन प्रापितो मण्डलेशताम् । सर्व्वैः सहाभट्टारं उ हि द्वाराधिकारिभिः ।
विघ्नचिता च कटके तेन द्वारपतिप्तत । तीर्त्वा मधुमतीं सिन्धुं सैन्यैर्दुर्गमवेष्टयत् ।
समस्तानपि सामन्तान् प्रहिसन् सर्वतः स्वयं । एकः प्रयाणान्तरितः कोटेऽपि न्यवसन्नृपः ।
व्यर्गद्रिगण्डमेवादि दुर्गसंश्रयदुर्ग्रहैः । काश्मीरकाः सह दरत्सैनिकैः समरं व्यधुः ।
विद्धे प्राजिमहिषा मात्रामात नदे सघन् । सपुत्रो गङ्गजो मङ्गः सम्भ्रमानतिदुःसहान् ।

तत्पुत्रो देवविक्रोको राज्यप्राप्तौ तदिच्छया । मानं व्यवर्धियातां यौ वीराबुच्चलसुस्सलौ । ११८५
अत्युद्दामस्तयोर्ज्यायान् द्विपन्नपि नृपासनं । आसीद्गाव्ययमाहात्म्याद्यात्रायान्तत्र निर्गतः ।
अवग्रहेण भूपालप्रतापेन च शोषिताः । ययाकथञ्चित्तद्दुर्गं ररचुर्डाम्दा भटाः ।
अथाशेव विधेर्हर्षप्रतापपरिपन्थिनी । पपात महती वृष्टिरेकीकृतजलस्थला ।
दुर्गग्रहं हिमैः कृत्स्नं दुर्भेद्यैः पर्य्यवार्य्यत । अनुकूलेन विधिना सन्नाहैर्निहितैरिव ।
उत्थाने पातयन् कांश्चित्पतने कांश्चिदुत्क्षिपन् । वेधाः कन्दलयत्येव कन्दुकक्रीडितभ्रमं । ११९०
ततः स्नात्वा त्र्यहान् वृष्टिदुःस्थास्ते दुष्टमन्त्रिणः । चक्रिरे पूर्ववद्राज्ञः स्कन्दावारे विद्रवणं ।
ऊर्ध्वस्रोतोनुसारीव तिमिः श्वेतहतानन । ततोऽपि चक्रे व्यावृत्तिं राजा जयपराङ्मुखः ।
मुक्तापणः शीर्णकोशः त्यक्तशीकस्थितायुधः । कटकः सर्व्व एवाभूत्पलायनपरायणः ।
धावतः पथिभिस्तैस्तैस्साक्रन्दान्राजसैनिकान् । पृष्ठलग्नरिपून्दीर्घा मार्गेऽप्यविष्यतापगा ।
हैमैः रुक्मसमालेव माञ्जिष्ठेव खेटकैः । सशैवलेव खड्गौघैः सफेनेव तुरङ्गमैः । ११९५
सौवर्णैः सरथाङ्गेव राजतैर्भाजनैरपि । सफेनेव जनस्यैरासीन्मधुमती सरित् ।
नीतानाञ्च हतानाञ्च दरदैः प्रहतोदयैः । अभून्नदीहतानाञ्च सङ्ख्या काचिन्न देहिनां ।
अनाथवत्तथा भूतं सैन्यं त्रातुं कृतोद्यमः । एकस्तु सानुजो मानी नाचलन्मल्लिकोच्चलः ।
दरदत्ताम्बुधिर्धावन् स विद्याक्रमणोद्यतः । ताभ्यां वेलागिरीन्द्राभ्यामिव संस्तम्भितोऽखिलः ।
तौ रचित्वा वलं प्राप्तौ प्रसिद्धिमतुलां गतौ । पतिम्बरेव राजश्रीर्भेजे लक्ष्येण तेजसा । १२००
ततः प्रभृति लोकस्य सर्व्वस्यासीदसौ मतिः । राज्यार्हौ मानिनावेतौ क्लीवोऽयं ननु भूपतिः ।
तथा कृत्वापि यद्राज्ञे दर्शनं परिजह्रतुः । तौ प्रीतिदायविमुखौ ववन्धास्थां ततो जनः ।
अथ शान्तरिपुत्रासोन्नगरं प्राविशन्नृपः । प्रतापस्तु दिशः प्रायान्मल्लराजतनूजयोः ।
तौ रामलक्ष्मणावेताविति सर्व्वस्तदाब्रवीत् । रावणप्रतिमे राज्ञि साध्यर्थानुगुणं वचः ।
राजा तु गतलज्जस्य नित्यकृत्योपमं जडः । कर्तुं प्रारभताखिन्नः पुनर्मण्डलपीडनं । १२०५
अल्पापकारमपि पार्श्वगतं निहन्ति नीचो न दूरमसमागसमप्यरातिं ।
श्वा निर्दशत्युपलमन्तिकमापतन्तं तत्त्यागिनं ननु विदूरगमुग्रदोषः ।
ततः प्रविष्टः सम्प्रीतः सेवया दत्तकम्पनं । मदनं सोऽग्रहीत्स्थैरं ग्रंसन्तं तत्पराभवं ।
तद्द्वेषेण जिघांसुस्तमागोजग्राह सोऽपरं । तस्य देवो विसृष्टाश्चा लेखोऽलम्बलवणं ।
प्राप्तो मडवराज्यात्स क्ष्माभुजा दत्तदर्शनः । श्री लक्ष्मीधरस्यागान्मन्दिरं शक्रमन्त्रिणः ।
राजा प्रसाद्यमानोऽपि तत्कृतेऽन्येन मन्त्रिणा । समितं वीचितं सैन्यैस्तं स पुत्रमघातयत् । १२१०
कोपस्मितं नरपतेरकालकुसुमं तरोः । वेतालस्याट्टहसितं नैवमेव प्रशाम्यति ।
ये सम्प्ररूढविपुलप्रणयाभिमाना निःशङ्कमीश्वरनिषेवणमाचरन्ति ।
मन्त्रानुपज्ञरभसाद्भुजगेन्द्रसख्यं प्रख्यापयन्त्यचिरतो प्रलयं प्रयान्ति ।

कर्णजपकुले तावन्नन्दनप्रत्ययावधिः। शापः स्वयंमती देव्याः प्रसारितभुजोऽभवत्।
विक्रमाल्लोकनोत्कम्पी निचिक्षेप क्षमापतिः। बद्धा कलशराजं तं लक्ष्मीधरनिवेशने।
विरुद्धं तस्य बद्धस्य मिषापेक्षामिषान्नृपः। तेजोवधाय सविषमुद्याख्यं व्यसर्जयत्। ११६५
स्वस्या जाज्वल्यमानं तं वीक्ष्य प्रज्वलितः क्रुधा। लक्ष्मासिधेनुः कस्माच्चिन्मनस्वी सहसावधीत्।
तद्भृत्यैरधमं क्रुद्धैर्निपत्य स विपादितः। दुर्बुद्धेस्तस्य भूभर्तुरेवं मत्या विपेदिरे।
मण्डले राजदण्डेन घतेनेव परिक्षते। क्षारपातोपमान्यापि प्रादुर्दुःखपरम्परा।
अहारि काञ्चनस्थाली यैः पार्थिवगृहादपि। असत्यहस्कैर्जन्तुस्तस्करास्ताद्दृशा विमः।
प्रवर्द्धमाने मरके क्रन्दितध्वनिनिर्भरः। निर्घोषः प्रेतवाद्यानां न व्यरंसीद्दिवानिशम्। ११७०
उदीयक्रीडितग्रामे वत्सरे पञ्चसप्तते। अखण्डं सर्व्वभाण्डानां दुर्भिक्षमुदजृम्भत।
दीन्नाराणां धान्यखारिः प्राप्याभूत्पञ्चभिः शतैः। दीन्नारेणाभवल्लभ्यं मार्द्वीकस्य पलद्वयं।
ऊर्णापलस्य दीन्नारैः क्रयः षड्भिरजायत। लवणोपणहिंग्वादेरभिधाप्यास्त दुर्लभा।
शवैर्नद्योऽभवन्नम्भःसंसेकोच्छूनविग्रहैः। छन्नतोया गिरिप्रस्थैश्छिन्नदारुवनैरिव।
एतद्धनवृता राजधानी दूरान्न दृश्यते। ध्यात्वेति सर्व्वतोराजा द्रुमाणां छेदमादिशत्। ११७५
सप्रसूनफला वृक्षा गृहस्था इव पातिताः। कुटुम्बैरिव रोलम्बैरशोचन्त पदे पदे।
प्राणापहं महादण्डं तयान्तेऽपि जने नृपः। हलावरुद्धे हट्टौघे गण्डशैलमिवाक्षिपत्।
निपीड्य लोकं कायस्थैर्महादण्डयन्त्रस्वया। पुरग्रामादिषु क्वापि नाभूदृद्धमवशेषिता।
अथोत्पलकं सम्प्राप्तान्निहन्तुं सर्व्वडामरान्। स दण्डमदिशत्क्रुध्यन्नादिक्ष्मण्डलेश्वरम्।
पूर्व्वं मडवराज्योर्व्वीं लोहरान्तः स डामरान्। दत्तास्कन्दोऽवधीत्तांस्तान् कुलाये विहगानिव। ११८०
घ्नता लवन्याननुद्धकुन्तलोविकटाकृतिं। जीवन्मडवराज्यान्तस्तेन विप्रोऽपि नोज्झितः।
लावन्यबुद्ध्या शूलानि पार्थिवग्राम्य रोपितैः। भीमरूपाभवद्भूभिर्भैरवस्य महानसः।
शूले लवन्यस्यैकस्य क्रूराग्निन्यस्तेनावधूम्। ययुः सर्व्वे दिशो भीता लवन्यामण्डलेश्वरात्।
केचिद्बुभुजिरे तेषां गोमांसं म्लेच्छभूमिषु। अरघट्टघरट्टादिक्लिष्टाः केचिदवादयन्।
प्राहिणोत्प्राभृतं भूरि भैरवाय महीभुजे। लवन्यमुण्डमालाभिरखण्डामण्डलेश्वरः। ११८५
तोरणावनयोराजद्वारेऽदृश्यन्त सर्व्वतः। डामराणां करोटीभिर्घण्टीभिरिव निर्भराः।
द्वारे कल्पवल्लादि सम्ममानं नृपोत्कृषः। नेता डामरमुण्डस्य यः कोऽपि स किलासदत्।
मौक्तुं डामरमुण्डानि व्याप्ता विस्तीर्णतोरणाः। विदधुर्गृहकहाया राजद्वारोपसेवनं।
यत्र यत्रास्तभूपालास्तत्र तत्र यधुर्भ्रमाः। लवन्यमुण्डैश्चण्डैर्व्विस्तोऽशीतोरणाश्रमः।
गन्धेनामर्षिता घ्राणं कर्णौ भीभिः शिवारुतैः। अखिद्यत शवाकीर्णे श्मशानइव मण्डले। ११९०
अभैरवप्रसादाज्ञालोकपुण्यावधि व्यधात्। एकस्येणी मण्डलेशो डामरैः शूलकीलितैः।
एवं मडवराज्यं च कृत्वा निर्नष्टडामरम्। अधावत्क्रमराज्योर्व्वीं कर्त्तुं तामेव पद्धतिम्।

अवश्यं न भविष्याम इति निश्चित्य डामराः। चक्रिरे क्रमराज्यस्था लौलाहे सैन्यविग्रहं।
तैः सर्वैर्दत्तसङ्ग्रामैः कुर्व्वद्भिः कदनं महत्। आस्ते स्म तत्र सुचिरं निरुद्धो मण्डलेश्वरः।
किमन्यद्राचसः कश्चित्सुरतीर्थर्षिपूजितं। निहन्तुं मण्डलमिदं हर्षव्याजादवातरत्। १२५५
उल्लासो रात्रिषु दिने स्वापः क्रौर्य्यमुदग्रता। अत्राह्मयत्नं कर्त्तव्ये दक्षिणे शोचिते रतिः।
इत्यादयस्तस्य केचिद्धर्म्मानक्षत्ररोचिताः। तथापि तत्कालभवैः प्रियाः प्राज्ञैः प्रकीर्त्तिताः।
अत्रान्तरे मल्लसूनुः कनीयान् यौवनोन्मदः। लक्ष्मीधरस्य गेहिन्याहृदयाह्लादकोऽभवत्।
सा हि राजसुते तस्मिन्संसक्ता प्रातिवेश्मिके। नारज्यत निजे पत्यौ वानरप्रतिमाकृतौ।
ज्ञातीनगण्यान्हत्वान्यान्कस्माद्राज्यार्हचचरौ। नावधोरुद्धतावेतौ राजन्सुचलसुस्सलौ।
इति लक्ष्मीधरेणेर्ष्यारोषादुक्तोऽपि भूपतिः। नच क्रोधानुतापार्त्तिं पूर्व्वज्ञातिवधाद्गतः। १२६०
स्वयमन्यमुखेनापि स तेनोक्तस्ततोऽसहत्। तेषां घाते तदौद्धत्यं ध्यात्वा साध्वसमादधे।
ज्ञातिप्रीत्यनुवृत्त्यादि तेन विस्मरता ततः। सम्मन्त्र्य मन्त्रिभिः सार्धं दध्रे तद्वधनिश्चयः।
आसन्नवारवनिता यक्कनाख्या तु तं व्यधात्। भूभर्तुर्दुरभिप्रायं तयोः कर्णपथातिथिं।
सख्या दर्शनपालेन तत्रार्थे च्छिन्नसंशयौ। निरगातां निशीथिन्यां द्वित्रैस्तावनुगैः समं। १२६५
षट्सप्ततेऽब्दे नगरान्मार्गशीर्षेऽथ निर्गतौ। तत्रासवसतेः प्राप्तौ डामरस्योपवेशनं।
प्रशस्तराजो दुग्धस्तु भिम्बराजं निजानुजं। सोऽभिसन्धाय तौ निन्ये लवन्या मण्डलान्तरं।
ततो राजपरीं ज्यायान् प्रायात्कल्हस्य भूपतेः। कनीयान् प्रययौ पार्श्वं कलिञ्जरधरेशितुः।
तयोर्निर्गतयोराज्यं न कश्चिच्छुद्धधीयत। निमित्तज्ञेन राज्ञैव दुर्निमित्तैस्त्वशङ्क्यत।
लक्ष्मीधरमुखेनैव प्रार्थनां हन्तुमुच्चलं। चक्रे सङ्ग्रामपालस्य सोऽङ्गीकृत्य धनं ततः। १२७०
स लन्तिकागतस्येपन्मलस्तेनोः कृतादरः। तया विशङ्कया शत्रोरासीदधिकगौरवः।
आसन्नाभ्युदयं शत्रुं दैवेनैव विधिचोदितः। शङ्काविष्करणाल्लोके नयेत्सम्भावनाभुवं।
राजपुर्य्याः प्रकृत्यैव काश्मीरानर्थकाङ्क्षिताः। प्रभविष्णौ रिपौ प्राप्ते चक्रिकायां किमुच्यते।
कांश्चिन्निकृतिकप्रायान् पार्श्वयातानथोच्चलः। गमागमान् कृतोद्योगो डामराणामकारयत्।
डामरास्तु महोत्साहास्तमानेतुं व्यसर्जयन्। राज्ञा विप्रकृता दूतान्वितीर्णोपायनान्बहून्। १२७५
तं सूर्यवर्मचन्द्रस्य तनयो जनकाभिधः। चकारोपचितोत्साहं मायादूतैर्विसर्जितैः।
वीक्ष्य डामरदूतांस्तान् जहता राजतोभयं। व्यक्तं सङ्ग्रामपालेन निन्ये साहाय्यमुच्चलः।
स कार्य्यगौरवात्प्रक्षो मूर्ध्नि कर्पूरचूर्णनं। कृत्वा तमविनाशाय यावद्विसृष्टुमैहत।
तावत्कलशराजाख्यस्तद्देशे मुख्यठक्कुरः। हर्षदेवार्पितोत्कोचस्तमेत्य विजनेऽब्रवीत्।
राज्ञः प्रसादनं त्यक्त्वा तवोच्चल हितैषिणः। कामधेनुं विनिर्धूय छागक्रुष्टग्रहे ग्रहः।
कोऽयं काश्मीरभूपानां कास्य शक्तिस्तपस्विनः। आराधनेन तद्राज्ञो विधेहि स्वमसाध्वसं। १२८०
अयं राजगिरौ दुर्गे स्थापितो पार्थिवस्ततः। स्वात्मनोपितरर्थेव चासान्मित्रञ्च सर्व्वदा।

तेनेति प्रभुराख्यातः खशानां शमिताशयः । तद्गीतः स्वार्थमुध्वस्य तथेति प्रत्यपद्यत ।
तमभ्यधाच्च नो बन्धुं शक्तोऽहममुमुद्यतं ।त्वयैव वध्यतामेष क्षिपतः प्रेषितोऽन्तिकं ।
इत्युक्त्वा तं स्ववसतिं विसृज्यावदद्‌ुत्पलं । प्रातः कलशराजस्य त्वया गन्तव्यमन्तिकं ।
इह प्रधानामात्योऽसौ तेन ते स्यादनत्ययः । ततो विपक्षोच्छित्त्यै त्वां प्रतिमोक्ष्यामि मानुगं ।
अथ तद्वसतिं गन्तुं चलितोऽन्येद्युरुत्पलः । प्राक् दुर्निमित्तैस्तत्कायमात्रैरथ विरोधितः ।
मन्त्रे भिन्ने निवृत्तं तं श्रुत्वा खशनृपान्तिकं । कुप्यन् कलशराजोऽथ सन्नसैन्यैः समाययौ ।
तमास्कन्दाय सम्प्राप्तं जानन् शस्त्रभृतां वरः । रैच्छद्रणाय निर्गन्तुं निजभृत्यैस्तुष्टोत्पलः ।
चोभे सम्प्रस्तुते तं स सान्त्वयित्वा खशाधिपः । तिष्ठन् कलशराजेन सहानिन्ये निजां सभां ।
निषेधाधायिनो भृत्यान्स विधूयौजसां निधिः । सज्जं खशसमाजं तं कोपकम्प्राधरोऽविशत् ।
द्रष्टुं तन्नाशकत्कश्चित्कल्पान्तात्किमिवोल्वणं । क्रुद्धं कलशराजोऽत्र राजा वा तेजसां निधिं ।
स विविक्तीकृतो धाम्नि खशाधीशं समन्त्रिणं । सान्त्वयन्तं महातेजाः कोपरूक्षाक्षरोऽब्रवीत् ।
पूर्वं दार्वाभिसारेऽभूद्भारद्वाजो नरो नृपः । नरवाहननामास्य सूनुः फुल्लमजीजनत् ।
स साथवाहनं तस्माच्चन्दनोऽभूत्सुतासुतौ । गोपालसिंहराजाख्यौ चन्दुराजोऽप्यवाप्तवान् ।
वङ्कात्मजः सिंहराजो दिद्दाख्यां तनयान्ददौ । क्ष्माभुजे क्षेमगुप्ताय सा वीरा भ्रातृनन्दनं ।
राज्ये सङ्ग्रामराजाख्यं व्यधादुदयराजजं । भ्रातापि कान्तिराजोऽस्या जस्सराजमजीजनत् ।
पितानन्तस्य सङ्ग्रामो जस्सस्तन्वङ्गगुङ्गयोः । अनन्तः कलशक्ष्माभृद्गुङ्गान्मल्लोऽप्यजायत ।
कलशाद्धर्षदेवाद्या जाता मल्लात्तथा वयं । कोऽयमित्यादि तन्मन्दैः क्रमेऽस्मिन् कथ्यते कथं ।
पृथिव्यां वीरभोज्यायां क्रमो वा क्वोपजायते । वीरस्य च सहायोऽस्तु कः स्वबाहुद्वयात्परः ।
दिष्ट्या तदनुकम्प्यानां मूर्ध्नि हस्तमिवास्पृशन् । काश्मीरकाणां भूपानां नाभूवं कुलपांसनः ।
तस्माद्द्रक्ष्यथ मे शक्तिमित्युक्त्वा निर्गतस्ततः । विजयाय स पत्तीनां शतेनानुगतोऽचलत् ।
निहतं शशमादाय तस्याग्रे कश्चिदाययौ । स तेन सुनिमित्तेन प्राप्तां मेने रिपुश्रियं ।
अरघट्टघरट्टादि क्षोणीमुत्सृज्य निर्गतः । डामरावट्टदेवाद्यास्तं यान्तमुपतस्थिरे ।
कटकस्यास्य संग्रामपालस्यायातमन्तिकात् । तद्द्वेष्या राजपुर्यन्तः खिन्नं निन्युः प्रसन्नतां ।
भुक्त्वा तद्वसतेर्गच्छन् स्वावासं स दिनात्यये । सैन्यैः कलशराजस्य दत्तास्कन्दोऽभवद्बहिः ।
राष्ट्रीभिर्निर्गमात्तस्मिन्द्वारं सम्बध्य वारिते । तदीयाः सैनिका युद्धे लोष्टावट्टादयो हताः ।
मध्यं प्रविश्य शमिते प्रधानैस्तत्र संयुगे । सोऽल्पसैन्योऽपि सम्वृत्तः सुतरामल्पसैनिकः ।
चैत्रस्य पौर्णमास्यन्तः क्लेशक्रममप्यनुभूतवान् । वैशाखासितपञ्चम्यां यात्रामत्रस्तधीर्व्यधात् ।
विसृज्य वट्टदेवादीन्विश्वासाय स्ववर्त्मभिः । आललम्ब प्रवेशेच्छां क्रमराज्याध्वना स्वयं ।
यं राजोरयसीहान्ते कपिलं क्षेमजात्मजं । अस्थापयल्लोहरोर्व्यां स विशन्तं मुमोच तं ।
स्वयमप्यसमप्राणो खड्गचर्मधरोऽव्रजन् । पलायने पूर्वमिथ्यात्पर्णोत्से तद्भटान् व्यधात् ।

वद्धा नि.शङ्कमासीनं द्वारेशं सुज्जकाभिधं । कश्मीरानामिषाकाङ्क्षी चिप्रं श्येन इवापतत् ।
तं डामराश्च कतिचित् खाशिकाश्चाद्रिसंश्रयाः । राजद्विषः प्राप्तमात्रं सर्व्वतः पर्य्यवारयन् ।
तमाकाशादिव स्रस्तं भुवोगर्भादिवोत्थितं । निशम्यातर्कितं प्राप्तं चकम्पे हर्षभूपतिः । १२१५
माभूद्भी वद्धमूलः क्रमराज्यान्तरस्थितिं । मावधीन्मण्डलेशञ्च ध्यायन्नित्याकुलोऽथ सः ।
विलम्बमाने सन्नद्धसैनिके दण्डनायके । त्वरितं प्राहिणोत् पट्टं वितीर्णमल्लनायकं ।
दैवोपहतवीर्य्यो वा क्रान्तो वा द्रोहचिन्तया । अभ्यमित्रीणतां त्यक्त्वा स तु मार्गे व्यलम्बत ।
अन्यांश्च यान्यांस्तिलकराजादीन् व्यसृजन्नृपः । ते ते पट्टं समासाद्य नाकुर्व्वन्नग्रनिर्गमं ।
दण्डनायकमुख्येऽपि लोके राज्ञा विसर्जिते । याते विमूढतां प्राप वद्धमूलमुच्चलः । १२२०
वराहमूलं प्रविशन्नागतां द्विषताम्बलात् । अश्वां सुलक्षणोपेतां राजलक्ष्मीमिवासदत् ।
महावराहमौलिस्रक्तस्य मूर्ध्नि पपात च । तदंशस्थितया पृथ्व्या वरणार्थमिवार्पिता ।
काकाचक्रैधकुलजैर्य्योधैस्संरुद्धपद्धतिः । स ऊष्कपुरमुत्सृज्य क्रमराज्योन्मुखो ययौ ।
अत्रान्तरे तमायान्तमाकर्ण्यैवान्तिकमागतैः । विद्रवोन्मुखतां निन्ये डामरैर्मण्डलेश्वरः ।
तैर्हि प्रागेव भङ्गं स नीतो हत्वा महाभटान् । यशोराजमुखान्शूरान् ययौ मन्दप्रतापतां । १२२५
शनैरपसरन् सोऽथ तारमूलकमासदत् । उच्चलाधिष्ठितास्तेऽपि विद्विषन्तस्तमन्वयुः ।
समेता ननु सैन्येन तेन तत्र चिरं धृतः । उच्चलप्रलयाम्भस्य पौरस्त्यानिलविभ्रमः ।
सैन्ययोरुभयोस्तत्र जयश्रीकरिणीकृते । बभूव तुल्यसंघर्षस्पर्द्धयोरिव दन्तिनोः ।
आनन्दनामाप्युत्पिञ्जोत्थानमुच्चलमातुलः । चक्रे मडवराज्येऽथ निविडीकृतडामरः ।
तद्दिने डामरौघादिग्देशेभ्यः सहस्रशः । उन्ममज्जुर्हिमापाये रन्ध्रेभ्य इव पन्नगाः । १२३०
तत्क्षणं क्षीणभाग्यस्य यथा द्वारपतिस्तथा । कार्य्यस्थः कम्पने राज्ञः सहलो भूमहत्तमः ।
आनन्देन कृतास्कन्दो वक्रमो विहिताहवः । औज्झीत् मडवराज्यं स नयत्तद्दक्कभर्त्तदा ।
अथाद्भुतप्रतापेन वेष्टयित्वा महाचमूं । उच्चलेनाहवे वद्धस्ससैन्यो मण्डलेश्वरः ।
न विद्मः किं तदा हन्त योधानां यत्किलाविदन् । ते सखड्गाः ससन्नाहा वद्धा वयमिति स्फुटं ।
तथा वद्धोऽपि निर्द्वैधो स भयः प्रभवे हितम् । स्वामिभक्तिर्विपर्य्येति पर्य्यन्तेऽपि न मानिनां । १२३५
तूर्णं पुरप्रवेशाय सोऽथ प्रेरयदुच्चलं । विश्वास्य नेदृगन्योऽस्ति क्षण इत्यसकृद्ब्रुवन् ।
विशतस्तस्य चानेकैः पुरग्रामाद्यलुण्ठयत् । कर्म्मणानेन कौलीनमस्यास्त्विति विचिन्तयन् ।
परिहासपुरे तेन सततः सम्प्रवेशितः । अभ्राम्बुविषमाद्यस्मान्निर्गमोऽत्यन्तदुर्गमः ।
तत्रोच्चलं चतुःशाले स्वञ्च दग्धुमचूचुदत् । निजान् स निशि ते तत्तु न चक्रुस्तद्धितैषिणः । १२४०
यथा चित्तं तथास्य स्यात्कायस्थेत्साहसक्षमः । तदात्मनिरपेक्षस्य किं न सिद्धेन्मनीषितं ।
क्लीवश्छन्नवपुस्त्वचा सह वसत्यस्थ्नेयया कच्छपो निर्व्वर्मा रणकर्म्मसाहसमहोत्साहस्य सिंहः सदा ।
धिक् प्रादुष्कृतपक्षपातरभसो नीचेषु मुग्धो विधिर्व्वीराणां कुरुते शरीरमभितो वैकल्यशल्याहतं ।

सन्दिदेशाथ स क्ष्मापमाकर्ण्यायं मयागतः। शृगाल इव ते क्षिप्रः क्षिप्रं निर्गत्य वध्यतां।
ततः समस्तसामन्तसैन्यसन्ततिसंयुतः। अद्य मृत्युर्जयो वेति निश्चित्य निरगान्नृपः।
स प्राणसंशये सर्वायासप्रशममादिशत्। पटहोद्घोषणेनासीत्परैरनुगतोऽखिलैः।
प्राप्तं भरतसेतुस्थं प्रान्तः सैन्यं विरोधिनं। आजानेयराजभृत्याः क्षणान्मार्गमलङ्घयन्।
क्षुभितेऽत्राविवायाते राजसैन्ये द्विपद्दलं। मण्डलेश्वरएवान्तः प्रविष्टो निरनाशयत्।
अथोच्चलबले भग्ने विदुद्रुः केऽपि जाङ्घिकाः। आन्ता राजविहारञ्च प्राविशन्केऽपि डामराः।
तिक्कसेनाभिधं दृष्ट्वा प्रविष्टं डामरं परे। उच्चलोऽयाविति भ्रान्त्या विहारं तमदाहयन्।
सोमपालाभिधेनारिहयारोहान्तरे चिरं। कुर्वन्दर्शनपालस्य पितृव्येन महाहवं।
यत्नाज्जनकचन्द्राद्यैर्मानी व्यावर्तितो रणात्। परिहासपुरात्प्रायान्मृत्युञ्जयादिवोच्चलः।
वितस्तां गौरिकावालग्रामात्तीर्त्वा हयान्वितः। स डामरैः सह पुनः प्रययौ तारमूलकं।
जयेन तावन्मात्रेण कितवोऽल्पइवोन्मदः। राजा प्रशंसन्नानन्दं राजधानीं न्यवर्तत।
जीवन्तमथ रिपुं श्रुत्वा न पश्चादलगत्स यत्। आश्वसन्नुच्छ्वसितास्तेन भङ्गभाजोऽपि डामराः।
यातान्पलाय्य तान्ज्येष्ठामूलीये मासि सर्वतः। भूयोऽपि सङ्घटयितुं स्थिरधीरैच्छदुच्चलः।
स्वदेशोत्सवसहायस्य परायत्तस्य मानिनः। दुर्भिक्षान्तर्महोद्योगः स तस्य विषमोऽभवत्।
तन्मध्येऽतिदरिद्रोऽपि सम्प्राप्तं स ररक्ष यत्। तमुत्पाट्यानयद्राजा श्रीपरिहासकेशवं।
तस्मिन्विघटिते पांसुः कपोतच्छदधूसरः। रोदसीच्छादनं हर्षश्रीविच्छेदावधि व्यधात्।
प्रागन्धकारदेशेऽस्मिन्दिवसेऽपि व्यजृम्भत। क्षपिकादिवसालोक इति यत्प्रथये जने।
निवेशिते परिहासकेशवे प्रशशाम तत्। तस्मिन्नुन्मूलिते भूयः सार्द्धं मासमजृम्भत।
किञ्चिदुच्छ्वसिते राज्ञि मन्दोद्रिक्ततया रिपोः। दिशा शूरपुरस्याथ सुस्सलः प्रत्यदृश्यत।
अवनाहे सचिवः वसन्तपालप्रमुखैः पितुः। सन्देशैः प्रेषितोऽन्विष्टमोदासीन्यादपाहृतः।
दत्तान्कल्पचितीशेन कांश्चिदादाय वाजिनः। चिरेण राजदायित्वमोऽज्ञोक्तेन व्यलभ्यत।
आरम्भादुदयान्तश्च तिष्ठन्वैरेऽपि निष्ठुरे। साम प्रयुयुजे मोहावहमायानिधी रिपोः।
जित्वा माणिक्यनामानं तेन सेनापतिं रणे। प्रापि शूरपुराद्रङ्गाज्जयश्रीः श्रीश्च भूयसी।
तस्याभ्युदयपात्रस्य तया सम्प्राप्तया श्रिया। आरम्भविस्मयः क्रत्स्नः स विभूत्यद्भुतोऽभवत्।
मण्डलेश्वरपट्टादीनविचिन्त्योच्चलात्मजः। प्राहिणोन्नृपतिर्योद्धुं सुस्सलं चिप्रकारिणं।
तेन शूरपुरे भग्नास्तद्योधाः शौर्यशालिना। भूयांसः प्रलयम्प्रापुर्मग्ना वैतरणीजले।
तत्र दर्शनपालस्य स्वामिद्रोहहतो वपुः। विक्रामतोन संस्पृष्टं खिन्नयेव जयश्रिया।
राजसैन्यं तदन्येद्युर्हतप्रायं पलायितं। लोकपुण्ये निवसतः संहेलस्यान्तिकं ययौ।
सुप्रसन्नापातकल्पान्तं विमृश्यापि सहेलकः। तैस्तैर्भग्नैर्बलैः सार्धं नगरं प्राविशत्ततः।
एवमेव पनृपते। सुस्सलेन विसृष्टिते। अवाप तारमूलस्थः प्रतिष्ठां पुनरुच्चलः।

विध्यद्भिस्तुरगानीकान् पत्तिप्रायैः स डामरैः । आनिन्ये शैलदुर्गेण भूयो लहरवर्त्मना ।
राजाप्युदयराजाख्यं कृत्वा द्वारपतिं पुनः । प्राहिणोदुच्चलं जेतुं लहरं मण्डलेश्वरम् ।
ततः पद्मपुरं प्राप्ते मातुले मल्लजन्मनोः । न कोऽपि कम्पनं भूपान्मन्त्री चाम्पातुरोऽग्रहीत् । ११७५
कोमेऽस्तीति शिनिश्वस्य वदतोऽथ महीपतेः । अधिकारध्वजं हस्ताच्चन्द्रराजः समाददे ।
अनाशोः शयने मृत्युर्थेषां तेषां सवंशजः । श्रीजिन्दुराजमुख्यानामौचित्यं प्रत्यपद्यत ।
स द्रौणिरिव निर्दिष्टे काले सेनापतिः कृतः । निर्गत्य तत्पद्मपुरादरिसैन्यं न्यवारयत् ।
विपक्षः कम्पनेशः स तेन स्मां क्रमता शनैः । नवम्यां शुक्लनभसो हतोऽवन्तिपुरान्तरे ।
स हि गोवर्द्धनधरोपान्ते कुर्व्वन्निराहवं । स्वसैन्यैर्भर्जितो गोनं शृङ्खलन् परिमितानुगः । ११८०
प्रविश्यारिहयारोहैर्वितस्तातीरवर्त्मना । प्राप्तोऽकस्माद्वधं लेभे प्रमत्तानां शुभं कुतः ।
प्रहितं चन्द्रराजेन क्ष्मापतिर्वीक्ष्य तच्छिरः । भूयोजयाशामकरोदानुकूल्यं विदन्विधेः ।
वैमुख्येन व्रजन् कुर्य्यात्साम्मुख्यैरन्तरा विधिः । प्रत्यागमभ्रमं सिंह इव व्यावृत्य वीक्षितैः ।
अथ लब्धबलश्चन्द्रराजोमन्दोद्यमोऽविशत् । विजयक्षेत्रमाकर्षन् कटकं दशधाष्टधा ।
तुलाधर इव स्रष्टा साम्यभङ्गं न चक्षमे । तदा द्वयोः कटकयोस्तुलायाः पुटयोरिव । ११८५
प्राप्ते यतस्तृतीयेऽस्मिन्दिवसे मण्डलेशितुः । अकालवृष्टिविश्रं लहरे व्यद्रवद्बलम् ।
शीतवातहता योधा मग्नाः केदारकर्दमे । तुरगासिनतुवादि द्राक्तिर्थ्यञ्च इवामुचन् ।
उच्चलेन ततोरक्ष्यमाणमप्यार्द्रचेतसा । प्राप्तं जनकचन्द्राद्या निजघ्नुर्मण्डलेश्वरं ।
हर्षभूभृद्भृत्यवर्गे द्रोहशङ्काङ्किते परं । कलेवरव्ययात्कीर्तिः क्रीता तेनैव मन्त्रिणा ।
ध्रुवं संस्पर्धतो वन्द्या देवशर्मादयोऽस्य ते । न चेत्कोऽपि विपर्य्यासे दोषमुद्भावयेज्जनः । ११९०
लवन्योन्मूलनारातिव्यूहव्यामोहनादयः । विध्यधीने फले ध्याते स्तुत्याः कस्य न तत्क्रियाः ।
किं पातालतमो न हन्ति हिमगुः किं नो विषं भीतये पानीयं गिलतः किमान्तरशिखिध्वस्तेन धान्वन्तरिः ।
सर्व्वैकपदे प्रयात्यफलतां वाच्यो जडो नाम्बुधिः सिद्धिर्दैवविधेयतां विमृषतां स्तुत्यैव वस्तुज्ञता ।
स्वामिकृत्योचमस्तुत्यमूर्त्तिषु स्त्रीषु पूज्यतां । राज्ञा तज्जननी स्वस्य नमस्यन्त्यविशङ्किता ।
साहसे साहितनये यत्र तत्र महीभुजा । प्रहीयमाणे तं स्नेहमोहिताह्वमभूभुजं । ११९५
अनन्यसन्ततेरेकं सुतमेतं प्रभोर्मम । मा नियुंक्ष्या यत्र तत्र कार्य्ये सन्देहितासुनि ।
स तामकथयन्मातर्यया तेऽनन्यसन्ततेः । तथा मेऽनन्यभृत्यस्य स्वयमेकोऽवलम्बनं ।
स्वसम्भवित्यतोभर्त्तुर्भक्तिसम्भावनामधा । प्राप्तप्रतिष्ठानिष्ठायां मेने मानव्रती सती ।
उच्चलस्य क्षणे तस्मिन्हिरण्यपुरमीयुषः । राज्याभिषेकं सम्भूय तत्रत्या ब्राह्मणा ददुः ।
नृपमत्यन्तविश्रब्धं प्रसङ्गे तत्र मन्त्रिणः । भूयांसः सन्ति तैः सार्द्धं व्रज तत्रोदराज्यं ।
प्रजा एव ततः शान्तोत्कण्ठाः नवनृपं प्रति । त्वामानेष्यन्ति नचिराद्दिनैस्त्वां स्वयमेष्यसि । १२००
सोऽभ्यधादवरोधस्त्रीकोशसिंहासनाद्यहं । असामान्यं परित्यज्य गन्तुं सपदि नोत्सहे ।

पुनस्तेऽकथयन्नाशो यान्तोऽप्यारुह्य वाजिनः। पृष्ठे विन्यस्य नेष्यन्ति कोशागारपुरयोपिनः।
श्वपाकीकामुकोऽप्यासीदस्मिंस्तदपरोऽपि चेत्। सिंहासनं समारोहेत्काभिमानक्षतिस्ततः।
आस्तामेतत्परं ब्रूथ मन्त्रमित्यथ चोदिताः। ते पार्थिवेन भूयोऽपि ससंरम्भं बभाषिरे।
क्षत्रधर्मं पुरस्कृत्य शासतां क्ष्मां क्षमाभुजां। को सैन्यस्यावकाशः स्यादाशीर्येषां रणे वधः।
अनुयोगश्च लज्जा च भयं द्वैधश्च मन्त्रिणां। भूभुजां व्यसनोल्लासे शत्रवो ननु शोचिणः।
कार्य्यं न पश्येदलसः स्वयं यो भृत्येषु विन्यस्तसमस्तकृत्यः। यष्ट्याश्रयस्येव विनष्टदृष्टेः पदे पदे तस्य किलोपघातः।
लब्धोऽदमस्य स्वयमात्तशस्त्रः स्वल्पस्य शत्रोः कलयन्नवज्ञां। एवं किलादीर्घमतिर्ददाति स्वयं प्रवृद्धिं त्रपया विमुग्धः।
कालेन याति क्रिमितां महेन्द्रो महेन्द्रभावं क्रिमिरप्युपैति। अयं प्रयोधानयमप्रतिष्ठ इत्येष निष्ठानुचितोऽभिमानः।
पराभवाधायि भयं जिगीषोस्सर्व्वाङ्गवैकल्यवशता हि तेन। येनाभियुक्तः स समस्तसम्पत्पूर्णोऽपि वैकल्यहतत्वमेति।
लब्धस्थितिः स्फीतविभूतिपात्रं दीनोऽभियोक्ता परपिण्डवृत्तिः। आद्ये कथं नाम पराभवः स्याद्द्वयं भवेच्चेद न तत्प्रभावः।
अमात्यवैमत्यवशेन निष्ठा दृष्टा न कार्य्यस्य तनीयसोऽपि। वैशाखरज्जोरिव कर्षकाभ्यां पर्य्याययोगेन क्षते विकर्षे।
समग्रशक्तेरेकेनाप्याशाक्रान्तस्य भूपतेः। वैरी सर्व्वाङ्गहीनोऽपि राज्यमायुश्च कर्षति।
यत्र द्विपस्तत्र याहि क्रान्तां क्रान्ताश्च मेदिनीं। पातार्थी न चिरादेवं पुनर्जयमवाप्स्यसि।
विधुरेऽपि विधौ शूरसहस्रपरिवारितैः। पतद्भिराहवे भूपैः ख्यात्याभिख्योपलभ्यते।
नृत्यच्छिन्नशिरोधरोद्धुरनटोज्ज्वालावुवीणागुणक्वाणिन्युरु यच्छिवौ मुखशिखिज्वालाप्रदीपाङ्कुरे।
धन्यः कोऽप्युपलभ्य वीरशयने शान्ताभिमानज्वरो श्लाघश्लाघ्यशरीरता सफलितस्निग्धाशिषः शेरते।
उदात्तमित्यं तत्कृत्यं सञ्चिन्त्य कितवा इव। राज्ये भजन्ते दीव्यन्तः क्षत्रियास्त्रासहीनतां।
मन्त्रान्तरानुयोगार्थं तदप्युत्सृज्य मन्त्रितं। पुरुषं प्राप्तकालञ्च ते निःश्वस्य तमब्रुवन्।
उत्कर्षवद्दुःस्थ्यतामपि शक्तोषि सङ्कटे। अन्यथानुचितं किञ्चित्प्रास्यसि हितचिन्तितं।
स तानुवाच स्वं हन्तुं न शक्तोऽहं ततो मयि। भवद्भिरेव विषमे प्रहर्त्तव्यमुपस्थिते।
गिरं कापुरुषस्येव क्लैव्यग्रस्तस्य तां प्रभोः। सवाष्पास्तेऽनुशोचन्तः पुनरेवं बभाषिरे।
प्रतीकाराय नः शक्तिर्न देहे दैवहतौजसां। प्रत्युतैवंविधे कृत्ये प्रसरेयुः कराः कथम्।
पश्यन् पुरुषरूपान् स नूनं भूभृत्पुपोष तान्। दुःखेनादाय नस्तस्य ये तादृग्दैन्यमीयुषः।
युगान्तानपि जीवित्वा कायः सापाय एव वः। तत्त्यागमात्रसाध्येऽर्थे धिग्दैन्यमनुजीविनां।
यावितोऽपि विशन्त्यग्निं धं ध्यात्वा विशतिं प्रशेत्। भर्त्तृस्नेहं स पुंसोऽपि यस्य कोऽन्यस्ततोऽधमः।
शैलूषस्येव ये शोकभयदैन्यादिविक्रियाः। भर्त्तुः पश्यन्ति तैरेषा भूरस्तीर्यांप्यपावनी।
पुष्टा मत्समयोऽभ्यधूः परगृहस्थ्यायसम्भः सुपदुग्धा गौरगनाद्यनावविवशा हम्भारवोद्गारिणी।
निष्पन्नो पितरावदूरमरणौ स्वामी द्विषन्निर्जितो दृष्टो येन परं स तस्य निरये भोक्तव्यमस्त्यप्रियं।
भूयोऽपि सानुपपन्नान् स तान्भूपतिरब्रवीत्। तदाप्तकृत्योऽप्याविश्य भूतैरिव त्रिभोऽहितः।
एकस्मिन्प्रदिने काले भुक्तं राज्यं यथा मया। जाने विशालोत्कतया तथान्यो नोपभोक्ष्यते।

यमः कुवेरश्चोष्टाथे राज्ञां तिष्ठत इत्यसौ। मदेकशरणैवाभूत्ख्यातिरस्मिन् कलौ युगे।
रुद्रोपेन्द्रमहेन्द्राद्याः प्रयातारो यदध्वना। उपस्थितायां नियतौ तस्य मर्त्यस्य काः शुचः।
किन्तु दूये यदेषा भूर्भुला कुलवधूरिव। महीपाद्बृहचेटीव प्राप्ता प्रसभभोग्यतां।
इतः प्रभृति यः कश्चिद्राज्यस्यास्य गतौजसः। चक्रिकामात्रसाध्यत्वं जानन्नाशां करिष्यति।
अलौकिके कृते यद्यत्तदीच्य फलवन्ध्यतां। प्राशोदयैरल्पसत्त्वैर्दर्पान्नूनं हसिष्यते।
कार्य्यारम्भः फलोल्लासमालोक्य प्रायशो जनैः। अनानुगुण्यगणनां कुर्वाणैर्न विगर्ह्यते।
पश्चात्तकोरिरवलम्बनभूम्नेनंच दुग्धेन यस्य मरणन्विधि कैरिवेत्थं।
पारङ्गते मथनकर्म्मणि मन्दराद्रेर्दोषोऽर्प्यते विगुणहेतुपरीक्षणेन।
शास्त्रसन्दर्भवित्त्वेऽपि श्रीगर्भलमदर्शयं। जनोपजीवनार्थं यत्तज्ज्ञातं जाद्यसिद्धये।
उच्चलेनापि सत्कृत्य हस्ताश्लेषाच्छ्रयचेतसा। दर्शितश्यामदशनं करिष्यन्ते विडम्बनाः।
ततोऽवमानान्न त्रासात्सम्प्राप्तोऽद्यविहस्ततां। स मन्यनेच्छुर्भ्रान्कामि मृत्युमीदृशमप्यहं।
स्वैरेव महतो नोचेत्कस्तस्मादसुधां हरेत्। सर्वा रचितुमिच्छामि ख्यातिमेतेन हेतुना।
मुक्ता पीडा पुरा राजा ज्वलिता मूर्ध्नि भूभुजां। कार्पण्यप्रलयं प्राप लब्धरन्ध्रो विरोधिभिः।
स ह्युत्तरापथे नानापथस्थगितसैनिकः। मितानुगो हितैरुद्धमार्गोऽभूद्दुर्गमेऽध्वनि।
तं शम्भो नाम सामग्र्यवैरल्पविवशं नृपः। बद्धुं प्रतिज्ञामकरोदाजिलचैर्हतोऽष्टभिः।
स सामप्रमुखोपायापायध्यानावसन्नधीः। भवस्वाम्यभिधं कृत्यमपृच्छन्मुख्यमन्त्रिणं।
असाध्योसोऽपि निर्ध्याय विनिपातप्रतिक्रियां। न्याये निश्चित्य नैपत्यं कर्त्तव्ये प्रत्युवाच तम्।
उपाययुक्तिमत्युक्ते कृत्ये कोर्त्यभिमानिनां। निःसम्भ्रमेव प्रतिभा लोभेनाक्षोभिते हृदि।
कृत्यं कृत्यविदो लब्धप्रसिद्धिपरिरक्षणं। साम्राज्योपार्जनमुखो व्यापारस्तानुपङ्क्तिकः।
गच्छन् शरीरविच्छेदादपि भस्मावशेषतां। कर्पूरः सौरभेणेव जन्तुः ख्यात्यानुमीयते।
शान्तयोर्जीवितस्थानं द्वयमत्यद्भुतं द्वयोः। अनङ्गस्याङ्गनापाङ्गः स्तोत्रजिह्वा यशस्विनः।
ख्यातिर्धरक्षणं नाम जन्तोः कल्पान्तरस्थितिः। वर्त्तने कीर्त्तिकायस्य सम्पूर्णाः परमाणवः।
धीरैर्व्विधस्य निर्ध्यायो विरोधिष्ववधानवान्। यस्तेषामुन्नतिधनध्वंसाय यततेऽन्वहं।
तुङ्गावपातनहठव्यसनो विधाता स्वोत्पत्तिपद्मकुलजेऽपि सरोजषण्डे।
सङ्कोचिनि द्विजपतावपि शुद्धिबन्ध्ये मातङ्गहस्तपतनैः कुरुतेऽवमानं।
ये हठापातिनो धातुरियं ख्यातिनिपातने। रक्षितुं समुपेक्षन्ते तैः किं नाम न रक्षितं।
जाति. क्ष्माभृति वंशजाश्रयतया ख्यातिप्रतिष्ठामिमामुद्दीप्यानलमुज्झितस्ववपुषः कोऽप्यत्र वेत्ताङ्कुरः।
त्रातुं हन्त विशन्ति येन विधिना कुट्टैन पृथ्वीभृता द्वारि द्वाःस्थकरैर्गतागतखलीकाराणि सम्प्रार्थिताः।
भोगान्निर्व्वाणभूयिष्ठान्निष्ठान् प्राप्तानवेत्य तत्। प्रतिष्ठाधैष्ठवत्राणे संरोद्धुं देव साम्प्रतं।
दण्डकालसकाख्यस्य तद्रोगस्याशुकारिणः। पार्थिवाकस्मिकोत्पातं मिपादन्यः प्रकाशतां।

श्रावकास्यथ कर्त्तव्यं व्यापत्प्रचपणक्षमं । उक्तेति स महामात्यो निर्गत्य स्वगृहानगात् ।
दण्डकालयकं दण्डधरोऽथज्वलिषात्ततः । अधीर इव चक्रन्द लुठन्निष्यन्दलोचनः ।
खेदसम्बाहनखेदवमनाद्यैरुपक्रमैः । निःशैथिल्यव्ययं तेन मुमूर्षुं तं जनोऽवदत् ।
ततो निश्चितमृत्युर्वं पत्युः कथयता क्षतः । वह्निप्रवेशोऽमात्येन क्षतज्वलनिवेदकः । १८६०
कर्त्तव्यमेवं दाचिण्यादनाचचाणमग्रतः । युक्तोक्तानिष्ठुराचारसत्त्वस्तुष्टाव तं नृपः ।
अप्रौढः सोढुमुद्दामां व्यथामस्मीति वादिना । राज्ञाप्यनलसाद्देहं ततश्चक्रेऽभिमानिना ।
तेन प्राणानुपेक्ष्यैवमन्यख्यातिर्मनस्विना । ऊर्ध्वाधिरोहे सोपानं क्षतं न निजकीर्तनात् ।
एवं दैवोपनीतानामख्यातीनां चिकीर्षितं । खधियामात्यबुद्ध्या वा पारमेति मनस्विनां ।
इत्युक्ता विरतो वंशबीजरक्षार्थमात्मजः । भोजो विसृज्यतां कोटमेवमूचेऽथ मन्त्रिभिः । १८६५
तं राजपुत्रं प्रस्थानमङ्गलान्ते विनिर्गतं । पुनर्व्यावर्त्तयामास दण्डनायकमोहितः ।
सा धीः स साहसारम्भस्तदवैक्लव्यमापदि । नष्टमेकपदे तस्य नाशकाले ह्युपस्थिते ।
लक्ष्मीस्तडिल्लताकीर्तिर्बलाकाशौर्यगर्जितं । प्रतापशक्रचापश्च भागधेयाम्बुदानुगं ।
धीशौर्यादिगुणेन भाग्यसमये प्रागेव एको नृपः शक्रस्याक्रमणं क्रियेत न कुतोऽनेनेति सम्भाव्यते ।
भाग्ये पङ्कजजन्मवत्स ततो गच्छत्यभाग्योदये दत्तोऽनेन पदक्रमो भुवि कथं नामेति सञ्चिन्त्यते ।
विरोधिप्रतिबोधाय तन्निधैर्यं विवर्ज्जितं । नगरस्थमपि घ्नापत्प्रवासधनमादधे । १८७०
दायादाश्रयणं राजभृत्याः सर्व्वेऽपि चक्रिरे । ये केचित्त्ववसन् गेहे तदैवैव केवलं ।
पराश्रयपरं दिवा न मद्भ्यमपि यधुः । किं वा स्तुतैस्तैर्थ्यं स्त्रीवदमुञ्चदचिरादसून् ।
यो काणश्रावती नर्तक्यन्वये कापि नर्तकी । पुत्रीचक्रे कापि जातां जयमत्यभिधाय सा ।
गत्वा स्फीतकौमारा तरुणुक्षरागिणी । धनलुब्धावरुद्धालमभजत्पाण्डुवेश्मितुः ।
तस्मिन्मृते तदेवाप्तापत्रपोषसमाययौ । तयैव दैवयोगेन पट्टदेव्या भविष्यते । १८७५
भावहृत्कपयशसमुपत्राश्रयिणीं यधुः । भूपालदर्शनेऽप्यसभीतयो राजसेवकाः ।
क्षेमनन्दीरतेः सर्व्वैः शिवाधायी पुरस्कृतः । नोभावमानायुद्दीप्य योधशृङ्गा हरन् युधि ।
कन्दमनापतावासो मर्मास्त्रा सर्वभेदकृत् । आहारादिषणे कर्त्ता प्रक्रियार्थनया कृतेः ।
अतीव मधुदानादिमाहात्म्याख्यानकोविदः । एकस्कोऽकरोद्योधः स्वतनानां विसूचणं ।
योनिदाधातृकरमार्थक्षमपार्श्वगत्वतः । मसभातोपकोपेन स राज्ञास्कन्द घातितः । १८८०
मातुलस्यात्मजा महापापपाशस्य गेहिनी । यस्या सम स्ववशनीरा दीप्य दहने गता ।
भोगमत्तानिनिदमाहवयेशध्वान्तरोपमः । करोत्यभ्यन्तरान् भिन्नाःमन्त्रः परमदाम्भिकः ।
तदैव पुत्राश्चिन्त्य संघटनां निर्भयं रिपुः । माहिपुत्रीभिर्विशूचे तणिम्नसमरे नृपः ।
स्वयं मारामात्यान्दं हारि जिनवता पुरः । तस्य मायाविनो वाञ्छापूर्व्यं गमन निर्ययो ।
यदि दैवाद्धर्मात्मा पुत्रार्थं प्रार्थितोऽपि सन् । मुनिमनः सदाचारानुरोधाप्राप्यसम्भूवं । १८८५

विश्वासाय परं राज्ञो भ्रातॄन् राज्ञोर्भविष्यतोः । द्वैमातुरान् सल्हणादीनीर्ष्ये दत्वावबद्ध हे ।
आवेदुषे मुनिद्ग्रामाजन्मप्रोणितागये । तदा स तस्मै चुक्रोध प्रत्यासन्नवधो नृपः ।
स सुराभ्यर्चनं कुर्व्वन्नाहूतः परिपन्थिभिः । रेजे तेनैव वेषेण समराय विनिर्गतः ।
उपवीत्यचसूत्राङ्कपाणिदर्भोज्ज्वलाङ्गुलिः । भस्मश्मेरललाटाङ्को जामदग्न्य इवापरः ।
स्नानार्द्रधवलश्यामलोलधम्मिल्ललीलया । देहत्यागे प्रयागाम्बु धारयन्निव मूर्द्धनि । १४९०
उष्णीषी वीरपट्टेन खेटकेनोष्णवारणी । सोऽसिधारातीर्थपान्थो दण्डी खड्गेन दिद्युते ।
भोगे पुरस्कृताः केचित्तङ्गत्याः पूर्व्वनिर्गताः । अमर्थनारीभोगेऽपि तस्यासन्नयभागिनः ।
द्वौ रयावद्दविजयौ द्विजौ पौरोगवास्तथा । कोष्टकः सज्जकाख्यश्च योधा युद्धे हता बभुः ।
हतोऽप्युदयराजाख्यः हतायुः शेषसत्तया । प्राणैर्नियोगभागाजौ नाज्जकोऽपि व्ययुज्यत ।
विरोधियोधैर्नीरन्ध्रं द्वारमालोक्य सर्व्वतः । त्यक्तकार्य्यो ददौ झम्पां स तेषामेव मूर्द्धनि । १४९५
शैवलेष्विव खड्गेषु खेटकेष्वम्बुजेष्विव । जरसा धवलोभ्राम्यन्राजहंस इवावभौ ।
क्षणाच्च ददृशे शातशरशंकुशताचितः । प्रवीरो वीरशयने सुप्तो भीष्म इवापरः ।
शाप्यङ्गतायुषो राज्ञः किं नाभूत्तस्य तादृशः । चिच्छेद यः शिरः पृष्ठे हयस्य भ्रमयन् स्वयात् ।
राज्ञी कुसुमलेखाख्या मल्लस्यालापवल्लभा । स्नेहस्वजुष्टां वीतिहोत्रे गात्राणि सम्भृते ।
राजावकल्पयोः पत्न्यौ वाले सल्हणरल्हयोः । स्नुषे मल्लस्याग्रपत्नी सहजा चाग्निमाहृते । १५००
सर्व्वोपभोगभागिन्यस्तदन्तःपुरयोषितां । परिवाराङ्गना वह्नौ षट् चात्रैव विपेदिरे ।
महाग्रहाग्नितापेन शोकोष्णीय जलाम्बुभिः । तन्नाभसौ विनस्तायास्तीरे वामे वभूव तत् ।
प्रवर्द्धिताया: स्तन्येन द्रष्टुमक्षमया पयः । दाह्यमानं निवापेषु पुत्र्याशान्त्याख्यया समं ।
धात्र्या परस्मिन् वितस्तिसीरे स्वान्तःपुरे स्थिता । माता भविष्यतो राज्ञो नन्दानिन्द्यकुलोद्भवा ।
महानसाग्निधूमेन संलक्ष्या वीक्ष्य पुत्रयोः । सोत्कण्ठकण्टकौ बाधादुदग्दक्षिणदिक्स्थयोः । १५०५
क्रियता दिवसैरेव पुत्रौ शत्रोः पितृद्विषः । जामदग्न्यार्पितं वंशं शप्तेति नृपतिं सतो ।
अनिपषेव दीप्ताग्नौ गृहे स्वं निरदाहयत् । प्रनृत्यन्तीभिरार्त्तीभिरिव ज्वालाभिरावृता ।
वधं दर्शनपालस्तु नृपे प्राप्ते प्रतिचरं । अत्यद्भुतैरन्तरायैरायुःशेषेण रक्षितः ।
वर्षमात्रावशेषायुर्यद्वा द्रोहेण रक्षितः । सोऽवमानस्य पूयस्य रोगजस्य च भुक्तये ।
कृष्णभाद्रनवम्यां तं वधं श्रुतवतः पितुः । मल्लात्मजन्मनोः शोकः कोपेन निरधीयत । १५१०
आवर्त्तिपुरकग्रामान् प्रज्वलन् क्रोधवह्निना । अधावदिजयक्षेत्रं सोऽन्येद्युरथ सुस्सलः ।
योद्धुमस्यापतन्तं चन्द्रराजोऽथ निर्गतः । पट्टदर्शनपालाद्यैः ससैन्यैः पर्य्यवर्ज्यत ।
निजैरुपेक्षितश्चक्रे स चिरं तत्र दुष्करं । स्वल्पसैन्योऽपि सङ्ग्रामं भूरिसैन्येन शत्रुणा ।
अचोटमल्लः समरे तत्र मल्लश्च चाचरिः । स्वर्गतां राजगृह्यौ द्वौ स्वर्गस्त्रीभोगभागितां ।
रजोऽन्धकारे चन्द्रेन्दुद्योतिन्याविङ्गितौ हतः । चन्द्रराजः सुरस्त्रीभिरिन्दुराजोऽस्य चानुगः । १५१५

तस्मिन्नपि हते वीरे चक्रे हर्षमहीभुजः। आधारविन्दिनीमूलकन्दनिर्दलनं विधिः।
पट्टादयः प्रविश्याथ विटवेशाङ्गनं भयात्। प्रविष्टे सुस्सले देशं द्वारं दत्तार्गलं व्यधुः।
आस्थानीयः परं पद्मनामा युद्धाहतो बहिः। लक्ष्मीधरो मर्तुमिच्छुर्व्वेड्डा नीतः स डामरैः।
विजयेश्वरगञ्जाग्रसौधारूढोऽथ सुस्सलः। अधो ददर्श तान् सर्व्वान् पशूनिव भयाकुलान्।
धूर्त्तः स दत्तमध्यस्थो हस्तानानीतवान् पुनः। पट्टदर्शनपालौ द्वौ तेषां पूर्व्वं निजान्तिकं।
निःश्रेण्यभावादारोढुमक्षमौ सुस्सलानुगैः। तौ मृताविव निर्व्वद्धपाणी रज्ज्वाधिरोपितौ।
तयोर्व्विदेशगमनं व्रीडादर्थायमानयोः। प्रतिश्रुत्याकरोद्धीमान् सुस्सलोऽस्थानिमार्ज्जनं।
क्षिरधोत्तया भ्रष्टमांसादिभोगैस्तस्थायतस्तयोः। तस्मिन्नेवाह्नि मन्दलम्विदेशौत्सुक्यमाययौ।
केनाप्यधिष्ठितश्चक्रे परेद्युर्यत्स सुस्सलः। जाने विश्वसृजोऽप्यङ्गं रोमाञ्चयति तत्स्मृतिः।
प्रासटो नृपतिर्हर्षभर्तुर्म्मातुलात्मजः। उमाधरमुखाश्चान्ये राजानो यत्र च त्रयः।
राजपुत्रहयारोहतन्त्रिसामन्तसन्ततेः। न यत्र गणनाः काश्चित्सैन्येष्वष्टादशस्वभूत्।
विजयेशाङ्गनस्थानां द्वारमुत्पाट्य सोऽविशत्। एकाक्येवान्तरं तेषां साक्षिराक्षेपरूक्षवाक्।
स तत्र साचिव्यं कृत्वा क्षमावान्विजयेश्वरं। प्रतिश्रुत्याभयं तेभ्यः प्रणतेभ्यो विनिर्ययौ।
पुनः सौधाग्रमारूढस्तान् सर्व्वानर्पितायुधान्। रज्जुबद्धकरान् भृत्यैरानिनाय ततोऽन्तिकं।
स्वर्णकुप्यत्वक्श्रेणिपूर्णायुधपरिष्कृता। कीर्णपुष्पोपकारेव सुस्सलास्थानभूरभूत्।
विन्यस्य पशुपालानां पशूनिव स तान् करे। संरचितं डामराणां व्यूहं तत्राकरोत् स्थितिं।
ततः सुवर्णसानूरग्रामं संप्राप्य बन्धनात्। पट्टदर्शनपालौ द्वावौज्झीद्देशान्तरोन्मुखौ।
पट्टः शूरपुरं प्राप्तो भार्य्यया गतया गृहान्। संहृष्यमाणोऽप्यस्मार्षीदल्पसत्त्वो दिगन्तरं।
यावन्मात्रायोचितौ सा विदेशोन्मुख्यलक्षणा। द्रोग्घुर्दर्शनपालस्य पट्टमैत्र्या विलक्षिता।
अहंपूर्व्विकया राज्यं जिघृक्षुरथ सुस्सलः। नगरासादनादैच्छदभिसन्धातुमग्रजं।
समानप्रियवयसोः सर्व्वदोद्दामयोरभूत्। यस्माज्ज्येष्ठं कनिष्ठत्वं प्रक्रियारक्षितं तयोः।
दिनेष्वहस्सु यातेषु क्रामंस्तान्तो भुवं बली। उदतिष्ठद्राजधान्याः सविधादेव सुस्सलः।
निर्दग्धुं कलशाख्यं तत्प्रस्तुतं भूपतेः सुत। बुप्पापराभिधो भोजदेवो योद्धुं विनिर्ययौ।
भ्रातरच्छद्मनानेन कुमाराणां प्रदुष्टतां। योऽभाव्यर्थबलात्पित्रा हतोजा विदधे सदा।
हतो गत्यन्तराभावात्तदासीन्नु निरङ्कुशः। केषु केषु न युद्धेषु योधानामग्रणीरभूत्।
अपितामहतुल्यः स स्वापेक्षयेव यद्धितः। कुर्य्यादुत्साहसंपन्नो निर्दायादाम किं द्विषः।
नामोऽनिविश्राम कश्चित्प्रयोगस्तु विक्षीयते। अस्त्रविस्रम्भते सर्व्वा त्रिपथस्तु दुर्लभः।
स राजगुरुद्दामविक्रमश्च रिपोरभूत्। अत्युद्दामोऽधिकं जातस्तिमेरिव तिमिङ्गिलः।
स्वप्रभावं विनाऽपि प्रयत्नं विगर्हणां नार्हति तत्प्रसूतिः।
हस्ती भवेच्छिलष्टमुच्यते किं तेनैव दत्तः कुसुमाधिवासः।

देवेश्वरात्मजः पित्र्यः पार्थिवेनाधिगौरवं । वर्द्धितोऽथभजत् पापः प्रतिपक्षसमाश्रयं ।
ततस्तदात्मजो मल्लः प्रस्थिते सुस्सलाहवे । नृपेणार्थ्यायमानश्च खेदात्तावच्छदोचितः ।
शाम्यस्यद्यान्तरं राजन्नमेत्युक्त्वा विनिर्गतः । खड्गधाराजलैर्मानी म्लानिमक्षालयद्रणे ।
सर्व्वनाशादभूद्दुःखं तथा न हृदि भूपतेः । तदन्तरापरिज्ञानात्क्षतञ्चस्य यथाधिकं ।
विभवैर्नित्यसंमूढा जानते ह्यन्तरं नृपाः । सदा शक्या यदा तेषां प्रतापैरेव सत्क्रिया ।
भोजेन निर्जितानीको विद्रुतस्सुस्सलो रणात् । लवणोत्सप्रत्याख्यागाद्दुर्दर्शितगतागतः ।
प्रत्यावृत्तस्ततो भोजस्तीव्रातपकदर्थितः । उद्यानान्तस्तनुं तल्पे पित्रा सह मुञ्जर्जहौ ।
अथोत्तरेणोदतिष्ठन्नादः पारान्नृपौकसः । ज्यायान्मल्लात्मजः प्राप्तः सेतुराच्छिद्यतामिति ।
सुस्सलेन हृतं राज्यं नाद्यायासि द्रुतं यदि । स दण्डनायकेनाभूत्सन्दिष्टइति पापिना ।
अतो जवेन चाविक्षत्प्रथमश्चावधीन्मृधे । नरेन्द्रेश्वरदेवाख्यवर्त्तिनं देवनायकं ।
अथोज्जगाम स्वामस्यः सह व्यूहेन सादिनां । नगराधिकृतो नागस्तस्याग्राङ्कूरिसैनिकः ।
यत्रास्थां पार्थिवोऽबध्नात् प्रधानपृतनान्विते । बभार नोपलाशङ्कां सुस्सलाहवनिर्गतः ।
अल्पसैन्यो मल्लसूनुर्यावत्तस्मादशङ्कत । अपनीतशिरस्त्राणस्तावत्स तमवन्दत ।
मण्डलेश्वरवत्तंसप्रियं शत्रोरविश्वसन् । ढुम्बे स्वबेस्म याहीति स च पापस्तथाकरोत् ।
तस्य द्रोहफलं दृष्टमेतस्मिन्नेव जन्मनि । मण्डले यदनन्यस्मिन्निचिरं जीवितं जहौ ।
ततो राजा सरित्तीरं प्राप्त. प्रैक्षत डामरान् । सैलये श्यामविकृतान्दावदग्धान् द्रुमानिव ।
वलक्षवारवाणस्य तेषां मध्ये वपुर्बभौ । परं जनकचन्द्रस्य शुक्रस्येव तमोन्तरे ।
महासेतुः स घटितो राज्ञा नौभिः स्वसिद्धये । पर्य्यंवस्यन् विधिवशाच्छत्रूणां सिद्धये पुनः ।
अथारुरुक्षुरादाय वह्निं हर्म्यचतुष्किकां । शतदारे मर्तुकामा देव्याः शाहिसुतादिकाः ।
लोके विरक्तः सैलये दायादैस्सह सङ्गरं । ददर्शाश्वयुजीनाम्निमिव निर्व्विक्रियः प्रभोः ।
विजये सावेशपोऽसौ वह्निदानोद्यताः प्रियाः । अनिशं वारयन्राजा सैलये रणमग्रहीत् ।
अथ विन्यस्तवर्म्माणं राजसेनागजं शरैः । सैतोजनकचन्द्राद्याः प्रमुखस्यमताडयन् ।
स विद्धोमर्मसु शरैः पुत्कारोद्गारकृद्गजः । स्वचमूमेव चरणैरम्टद्गादिमुखीकृतः ।
विधिनेव विरुद्धेन सिन्धुरेण कदर्थिता । भ्रश्यत्पत्तिहयारोहा समपद्यत वाहिनी ।
सेतुं तीर्णस्ततो वैरिसैनिकैर्व्विमुखीकृत. । शतद्वाराङ्गनं यस्तः साश्वारोहोऽविशन्नृपः ।
तदा तु वेशरहितो रक्षोऽपि ददृशे न यः । भुञ्जानस्यापि यस्यास्य मुद्रा नैव व्यभाव्यत ।
सभयद्विगुणार्काशुस्वेदप्रस्विन्नविग्रहः । पुन. पुनः चिप्यमाणस्स्तवर्म्मांसयोर्निजैः ।
अनवस्थितपार्ष्ण्यन्ताघातप्रचलितं हयं । निरोद्धुमक्षमः कर्षन्नष्टवल्गाग्रहं करं ।
खल्वाटशीर्षपर्य्यन्तलम्बिनो कुन्तलच्छटा । प्रापयन् श्रवणोपान्तं करेण गलितासिना ।
लडत्प्रलंबनिर्भूपश्चोचपालितलाच्छलात् । कालाहिनेव मूर्तेन वेष्टितोकुम्भकन्दरः ।

निस्ताम्बूलतयोच्छुष्कौ जतुपीतौ विवासकृत् । ओष्ठावुल्लिखन्नश्रेण विक्लवो जिह्वया लिहन् ।
कनीनिकासञ्चारेणुश्यामधूसरमाननं । उत्तानीकृत्य पृष्ठस्थाः पश्यन्दीनमनाः प्रियाः ।
परिभ्रमन्नङ्गनान्तः स्वस्तः स ददृशे जनैः । वह्निदानोद्यतांस्ताश्च वारयन् करसंज्ञया ।
मल्लराजस्य वेश्माभूद्राजधान्यन्तिकेऽपि यत् । तीर्त्वा जनकचन्द्रेण तत्र वह्निरदीयत ।
राजधान्युन्मुखं दृष्ट्वा ज्वलन्तं वह्निमागतं । भेजे पलायनं भोजो राज्यं निश्चित्य हारितं ।
सप्तपूलैर्व्विद्विषां भीमैर्नडैरिव तिरोहितं । द्वारं भित्त्वा तुरङ्गस्थः प्राङ्गणान्निर्ययौ वहिः ।
पञ्चषैः सादिभिः सार्द्धं लोहरोन्मुख्यमाश्रितः । प्रतस्थे सेतुमुत्तीर्य्य सिंहराजमठाग्रगं ।
या तस्य दृक्पथात्सूनोः सास्रुरालोकयन्दिशं । राजाश्ववारैः सहितो वेश्मनां वहिरभ्रमीत् ।
अत्रान्तरे मर्तुकामास्त्रातुं काश्चिन्नृपाङ्गनाः । अश्मभिस्तत्परिजनैरभज्यन्त चतुष्किकाः ।
शाहिपुत्र्यस्तदा ज्ञात्वा अत्रवः पतिता इति । मत्वा चतुष्किकाशृङ्गे ततोऽग्निमुददीपयन् ।
वास्तव्या डामराश्चाथ घ्नन्तोऽन्योन्यमुदायुधाः । ज्वलतः क्ष्मापतिगृहाद्भाण्डागारान्यलुण्ठयन् ।
केचित्तत्र वधं प्रापुर्व्विपदं केच नात्यजन् । अदृष्टवस्तुसम्प्राप्तिः केषाञ्चिद्धास्यदाभवत् ।
सितेयं शर्करेत्येकः कर्पूरं वदनेऽक्षिपत् । ततः सरिति नङ्घाण्डं निर्दग्धवदनोव्यधात् ।
पामरैः स्वर्णचित्राणि कैश्चित्स्वर्णग्रहेच्छया । विनिर्दग्धानि वासांसि विचित्रं भस्म सादरात् ।
अविद्धमौक्तिकस्तोमसिततण्डुलविभ्रमात् । क्वचित्पामरनारीभिर्घरट्टेषु विचूर्णितः ।
वरत्यदृश्ये देशेऽस्मिन् खलीकारेण तादृशा । एवं विडम्बिता लक्ष्मीर्न पुनः क्वापि दृश्यते ।
विद्याधरीरिवोदात्तनेपथ्याः क्ष्मापतिसुन्दरीः । हरन्तो डामराः क्रूरा दृश्यन्ते स्म पदे पदे ।
वसन्तलेखाप्रमुखाः सस्नुषास्तत्र चक्रिरे । निर्यातश्रेषाः स्वान्देहांश्चाग्नेः सद्याद्गाग्निसात् ।
रत्नानां दह्यमानानामश्रूयत चटत्कृतिः । गाढोश्मकर्य्यमानाभ्रसिन्धुघोषप्रतीतिकृत् ।
श्रीपद्मश्रीप्रपापार्श्वस्थितस्तद्वीक्ष्य पार्थिवः । आर्यां श्लोकमिमं शोकात्प्रलापाठीत्पुनःपुनः ।
प्रजापीडनसन्तापात्समुद्भूतो कृताशनः । राज्ञः कुलं श्रियं प्राणान्नादग्ध्वा विनिवर्त्तते ।
दग्धाय राजधानीत्यमुच्चलोडामरान्वितः । अत्यक्रमैन्यं वीत्त्वारिं पारमवातरत्पुनः ।
ततो युद्धा मर्तुमिच्छन्निन्ये राजा कुलात्मतां । उच्चावचैर्मतिद्वैधैः पदातीनां क्षणे क्षणे ।
गच्छन्ननन्तपालादिराजपुत्त्रधिया मृधं । दण्डनायकवाक्येन न्यषिध्यत पदे पदे ।
पुत्रस्य लोहरं वापि यातीत्यूचे च चम्पकः । प्रयागस्योत्तरः पत्तः प्रत्यभान्नाग्रिमः पुनः ।
वार्त्तामपुत्त्रा पुत्त्रस्य नृपतिर्व्याकुलीभवन् । पदवीं भोजदेवस्य यातीत्याह स्म चम्पकं ।
प्रयागमाथानुपरो राजन् संपरत्येव क्षणात् । तस्मान्मामपि मा त्याक्षीरित्यूचे तं स निःश्वसन् ।
सोऽन्नवीत्पश्य प्रभावे निर्द्रोहोऽस्मीति कथ्यते । त्वयाप्यस्मिन् क्षणे कस्मात्तस्मादुपहन्यते वचः ।
विना पुत्त्रं न पश्यामि सोर्केऽपि दिवसे दिशः । त्वं तस्मिन्नु हृसम्बद्धे न मन्युं कर्तुमर्हसि ।
यद्यानिमित्तं कलहयोऽप्येव दिवसेष्वभूत् । मन्त्रिणा राजपुत्त्रेण तेन तस्याभिमानिना ।

गिरा प्रभोरुपालब्धस्तदा गूरणगर्भया । स लज्जानम्रवदनो राजपुत्रानुसार्य्यगात् । १९०५
पश्चाद्गताश्ववारैः स भ्रातृभृत्यादिभिः समं । उत्तीर्णः सरितः पारमात्मना पञ्चमोऽभवत् ।
भ्रातृदारेऽश्ववारे च शेषा राजात्मजे पथि । हताश्वे पतिते सोऽभूद्धनकेनान्वितोभ्रमन् ।
अनाप्नुवन्राजसूनोर्व्वार्त्तां वा वर्त्मनाप्यटन् । गलितेऽहनि सम्प्राप वितस्तासिन्धुसङ्गमं ।
एवमाप्तान् परान् पुत्रमन्वेष्टुं प्राहिणोन्नृपः । अन्येऽपि तन्मिषं लब्धा तस्य पार्श्वादवाचलन् ।
उत्कोचदायिना क्रुद्धं राजपुर्य्यादिविग्रहे । येनगया न संहता भृत्याग्निसारः कटकः कृतः । १९१०
लोहरप्रस्थितो विघ्नं राजपुत्रस्य कारितः । प्रवेशितः पुरं वैरी राजन्यन्याहवाकुले ।
सर्व्वस्वध्वंसिना येन सएव नृपतेरभूत् । तदाप्युचितकर्त्तव्ये निषण्णाद्दण्डनायकः ।
राज्ञः कृत्स्नावसन्नस्य शृण्वतोषङ्कमन्वितं । नैकत्र रूढिकर्त्तव्ये काप्यधीरधियोऽभवन् ।
सर्व्वैर्यथा निखिलरन्ध्रमुखेन वंशः संपूरितो न खलु शब्दमपाकरोति ।
तैस्तैस्तथा वहुपथप्रथयेन मन्त्रः सङ्कल्पितः किल न निश्चयमभ्युपैति ।
भाग्यक्षयस्यैतदेव लक्षणं प्राकृतोऽपि यत् । अपृष्टः कथयेद्धार्ष्ट्यान्मन्त्रं स्वहृदयोचितं ।
त्रैलोक्यनाम्ना स्ततेन शंसता दण्डनायकं । निरोध्य वल्गामित्यूचे भूयः क्ष्माभृद्गणोन्मुखः । १९१५
एकाङ्गैः साश्ववारैः प्राक् जिगाय तत्पितामहः । तद्गच्छामोऽक्षपटलोपान्तात्तत्संग्रहेच्छया ।
पदातिप्रायसैन्यांस्तान्निहन्मः संहतान्रिपून् । पश्चान्निपत्य तैः सार्कं श्येनादव विहङ्गमान् ।
ततश्चिक्षिपावेव राज्ञि तत्कटको दिश । सद्यस्त्यमुहतो रङ्गमेचित्रोकद्वागमत् ।
पारेवितस्तं प्राग्भ्यः पाथेयायात्मजन्मनः । सम्प्य राजजन्मभ्यो रत्नग्रैवेयकाद्यदात् ।
आरामिकैस्तैः सम्प्राप्ते राजचिह्ने चणादिव । तेजःस्फारोर्जितो राजा गतश्रीर्ददृशे जनैः । १९२०
पदे पदे भ्रश्यमानः सैन्योऽक्षपटलादिषु । स्थानेषु चाभ्रमीत्कश्चिन्न च तस्य पदान्तिकं ।
संश्रयार्थ्यय वभ्राम सायं वेश्मानि मन्त्रिणां । प्रवेशं प्रददौ चास्य न कोऽपि द्वारि तस्थुषः ।
प्रायोपवेशकुशलाः शक्तास्त्वन्तेन कुर्वचित् । मिथ्यासम्भावनाभूमिर्भूपानो ब्रह्मवन्धवः ।
ये केऽपि देशे सन्त्यस्मिंस्तद्गेहेष्वास्थया भ्रमन् । प्रविविक्षुर्गृहान् प्राप कपिलाख्यस्य मन्त्रिणः ।
तस्मिंल्लोहरकोट्टस्थे तत्पत्न्या स्थातुमर्थितः । नैभिश्च कोष्टं गन्तुं न प्राविशद्दैवमोहितः । १९२५
आर्तस्य तस्य तत्पुत्रैः पितृवद्द्रोहकारिभिः । क्षणिकैरुत्तमर्णस्य स्वं निःस्वैरिव गोपितः ।
सदोषोऽस्मीति सोऽज्ञासीत् स्वयं शृण्वन्विगर्हणं । तदेव गोपिताशेषकृत्यो दुर्मन्त्रिभिः पुरा ।
गृहीतसर्व्वनैराश्यः पार्श्वस्थेष्वप्यविश्वसन् । अभूत्प्रद्युम्नमुत्तीर्णो नितरां विरलानुगः ।
प्रख्यापयन्तः सद्भूतिं षट्त्रिंशतिकुलेषु ये । तेजस्विनो भास्वतोऽपि सहन्ते नोच्चकैः स्थितिं ।
तेऽप्यन्तेऽनन्तपालाद्या राजपुत्रास्तमत्यजन् । सार्द्रतां दधति ध्वान्ते स्थगिताश्वाः पदे पदे । १९३०
वाहनाज्जोहिलकण्ठोपान्तं प्राप्यावतीर्णवान् । सदण्डनायकेनापि तत्यजे सोऽनुजन्मना ।
इहास्मच्छ्वशुरावासस्तत्र वस्तुमिदं निजं । वीक्ष्यते स्थानमेष्यामीत्युक्त्वा व्याजेन सोऽचलत् ।

यियासोरनुजं तस्य पाथेयार्थं प्रयागकः। ययाचेऽङ्गदमस्मै स प्रादात्सक्तून्न तत् पुनः ।
एकांशुकावशेषश्रीस्ततो वा शेषजीवितः । प्रयागशेषानुचरो नृपतिः समपद्यत।
छद्मचम्पकभृत्यस्य जेलकाख्यस्य तत्क्षणं। मुक्तो नामान्तिकं प्राप्तो नृपतेराप्ततामगात् । १६३५
उद्दीपविहितैः खातैरग्रे दुःसञ्चरा चितिः। भ्राम्यतस्तानुवाचेति नारी काचिद्गृहान्तरात्।
ततस्तीरे वितस्ताया निषण्णेऽस्मिन् प्रयागकः । गन्तुं जयपुरं कोट्टमाजुहाव स नाविकान्।
स हि प्राक्संविदं चक्रे तत्रत्यैः सह शस्त्रिभिः। नृपं प्रेयाश्रयं नेतुं भीमादेवस्य मन्दिरं।
उच्चलाश्रयिणाप्यूचे भीमादेवेन येन सः। राज्ञोऽनुगो गमिष्यामि प्रविष्टस्योपवेशनं।
नौचरैराहृतां नावमारुरोह न भूपतिः। नाशोन्मुखः समासन्नदृष्टिपातभयाकुलः। १६४०
पर्यापतत्कालकरस्थभोगिसन्दर्शनेनेव मतिप्रदीपः।
क्षिप्रं प्रशान्त्युन्मुखतामुपैति विनाशकालेषु शरीरभाजां।
तस्मिन्द्रोहरसभिन्नेऽपि यस्य मानवतः परं। अनन्यालोकिनी दृष्टिर्भेजे कुलवधूव्रतं।
नीलाश्वीयः स विम्बाख्यो डामराभिलितो हितैः। तदापि प्रययौ राज्ञो विस्तृतिं संश्रयार्थिनः।
युगलकं॥ ततः प्रावर्त्तत त्यक्तुं वारि वारिमुचां गणः। क्षमामिव चालयितुं द्रोहस्पर्शेन दूषितां।
भूर्निशेना दृष्टिपाततमिस्रा दुःसहायिता। वैरिभीतिरिति प्राभूत्किङ्किं तस्य न दुःखदं। १६४५
इति वृत्तानुरोधेन धिक् दुष्कर्मविधायिनां। अस्मर्तव्यमपि व्यक्तं नाम ग्राहिष्यतेऽधुना।
सोमानन्दाभिधानस्य पूज्याः सिद्धस्य देवताः। सोमेश्वराभिधाः सन्ति काश्चित्पितृवनान्तरे।
तत्रान्त्यक्तांगना तुङ्गतरुप्रच्छन्नवाटिका। अभूच्छिन्नाभिधानस्य कुटी चुद्रतपस्विनः।
वारस्त्रिया सविरहभुजङ्गीति प्रसिद्धया। भिक्षाख्यया समं भेजे चेष्टितं कुट्टिनोचितं।
तस्य प्रतापगौरीश देवागारान्तिकस्थितं। कुण्डी मुक्तेन तां निन्ये ज्ञात्वा द्वास्थं सतां क्षमं। १६५०
मुक्तमालम्ब्य नृपतिस्तमालम्ब्य प्रयागकः। यान्ति स्म विद्युद्द्योतेन क्ष्मां पश्यन्तोऽन्तरान्तराः।
निरुष्णीषोऽङ्गसंसक्तस्यूतवासाः स्खलन्नृपः। सतां प्रयागमुक्ताभ्यां कथञ्चित्प्रापितः कुटीं।
तदा कुमन्त्रिनिष्कृष्टं सव्यापद्वारणक्षमं। शोचन् सस्मार कन्दर्परुद्रं दैत्यमिवोत्पलः।
प्राकारमूर्ध्ना मुक्तेन प्रविष्टेन हृतार्गलां। नृपः कुटीप्राङ्गणोर्व्यां विवेशास्थिततापसां।
विश्रान्तोऽक्षालितः पादस्तस्यामृद्दक्षिणेऽत्यजत्। मेने तेनानिमित्तेन स मृत्युं समुपस्थितं। १६५५
क्षुत्क्षामगलरुद्धार्थां निपतन्त्याङ्गने यथा। रात्रिर्भीतिमतो भीमा तस्य घोराभ्रमालिनी।
पट्टोपविष्टः पट्टाङ्कस्थण्डिलस्थो निनाय तां। दासकम्बलिकाच्छन्नगात्रोऽप्युत्तरां निशां।
विषण्णारम्भरा दुःखमासीनप्रचलायितैः। निर्निद्रस्तभवच्छ्वभ्राद्भ्रश्यन्निव समाकुलः।
कोऽहं केनाभिभूतोऽद्य क वर्त्ते कोऽनुगोऽधुना। किङ्कृत्यमिति निर्ध्याय मुहुर्मुहुरकम्पत।
इदं राज्यं प्रिया दग्धा भ्रष्टा स्मुरुत्यान्धवः। आतोऽस्म्येकाकिपाथेयोऽनुठन् भिक्षाभुजोऽङ्गने। १६६०
इत्येकैकश निर्ध्याय दुःखं नैक्षिष्ट सोऽपरं। प्रासादमानं शोचन्नमानमतुल्यं कयास्वपि।

युग्मं ॥ भोजस्तु वाजिभिर्द्विनैरवशिष्टैः समं व्रजन् । हस्तिकर्णान्तरं प्राप निर्गत्य नगरान्तरात् ।
व्रजतस्तस्य धीराशीन्नियतं पञ्चषैर्दिनैः । पुनः सम्प्राप्नुयां राज्यं यदीन्द्रोऽपि भवेद्रिपुः ।
गर्भवास इव पौरुषे स्फुरन् किन्न कर्म पुरुषश्चिकीर्षति ।
कर्म वायुरिव संस्पृशन् हठान्मूढमेव कुरुते तु तं विधिः ।
मातृभिर्दत्तपाथेयं भृत्यं नागेश्वराभिधं । प्रतीक्षमाणश्चक्रे स गञ्जवाटान्तरस्थितिं ।
शून्ये देवगृहे तत्र तिष्ठन् श्रुत्वा तमागतं । स निर्ययौ तेन तस्मिन्निःशङ्कं प्रहृतं पुनः ।
तत्र प्रादुष्कृतद्रोहे क्षत्रधर्मादविच्युतः । राजपुत्त्रः स यच्चक्रे न तत्कस्याद्भुतावहं ।
स सिंहइव संहारं कृत्वा युधि विरोधिनां । श्रस्त्राङ्गरागलिप्ताङ्गो गौरशय्यामभूषयत् ।
भ्रातास्य मातुलापत्यं विपेदे पद्मकाभिधः । खेलोलालिनवच्चैव सह्योऽसह्यपराक्रमः ।
मठं सूर्य्यमतीदेव्याः शर्व्वर्य्यामुच्चलोऽविशत् । भ्रातापप्यस्य रणश्रान्तो लवणोत्सात्समाययौ ।
हतं भोजं श्रुतवतोर्हर्षमात्रे स्थिते तयोः । मनस्युत्खातशूलेऽश्रिरेवैका पर्य्यशिष्यत ।
प्राप्तमप्राप्तवद्राज्यं तथापि प्रत्यभात्तयोः । प्रवासे विस्तृते राज्यं सुखे लभ्ये च कुत्रचित् ।
प्राह्णे कुतश्चिदानीतो मुकेनाविश्य तापसः । प्रणम्य नृपतिं चक्रे स्वकुटीं तां निरर्गलां ।
तां दंशमशकाकीर्णामास्तीर्णतृणविष्टरां । कृताम्बुसेकां मुकेन नृपतिः प्राविशत्कुटीं ।
यद्गिरा वक्षमानोऽभूच्छ्रुतया भूभुजामपि । स भूभृच्चाटुकारित्वं भीतो भिक्षाभुजोऽप्यगात् ।
भिक्षाकस्योचितोग्रास्यमनुदातुं त्रपावहं । आलापव्यवहाराभ्यां तस्य श्लाघ्यन् स विव्यथे ।
स भिक्षाकः प्रयागेण विक्रियायाधरांशुकं । निजन्दत्वा त्रिसन्ध्ये त्रिपणिं भोज्यसिद्धये ।
कदुक्तिः कटुवागग्रे परोक्षं भेदभीतिकृत् । कुतापसो दौःस्थ्यहेतुर्नृपस्यारिर्यथाप्यभूत् ।
मध्याह्ने स्कन्धविन्यस्तभोज्यभाण्डकरण्डिका । तपस्विन्याप्यथानिन्ये तेन क्षुद्रतपस्विना ।
भृत्यभिक्षाकयोः पूर्व्वं स्त्रिया श्रप्यथ पार्थिवः । स्वं वीक्ष्य गोचरीभूतं निराशो जीविते़ऽभवत् ।
तेन प्रयागोपहृते भोज्ये तदनुरोधतः । स्पृष्टमेव न भुक्तन्तु तीव्रदुःखोल्वणात्मना ।
का वार्त्तेति प्रयागेण प्राङ्गनस्थेन पृष्टया । तापस्या ग्राम्यया मुक्तो व्यक्तभोजो वधस्ततः ।
मिथ्यैतदिति तेनाद्धकथ्यमानोऽपि पार्थिवः । श्रुतिं तामङ्गशकुनं परीक्ष्यावुद्ध नान्यथा ।
नारोहति गिरं शत्रोरप्रियाख्यायिनोऽपि यत् । तस्य सम्वृत्ते दुःखं निमग्नस्य तदापदि ।
स शोचन्नात्मजं बाल्ये नीत्यै यां यन्त्रणां व्यधात् । श्राजन्मदुःखदायित्वं मेने तस्यात्मनस्तया ।
हतः स समरे वृत्त्या प्रवीरस्पृहणीयया । यद्भ्रे तेनातिवात्सल्यादङ्कशायीव घातितः ।
गात्रेषु हारान् पुत्रस्य यौवनव्यूढवक्षसि । पश्यन्नात्मनि सङ्कल्पैर्व्विक्लवः सोऽकृताशिषः ।
रक्षणीयो हतो बालो वृद्धस्त्वेवं स्वजीवितं । रक्षाम्यनुचिताचारैर्जिह्रेमीति स चिन्तयन् ।
एवं स पुत्त्रशोकेन धृतावाच्यव्ययोव्ययन् । निनाय तापसावासे द्वितीयामपि यामिनीं ।
कृतार्थनः प्रयागेण प्रयातुं भगवन्मठं । शोकहारितधीराज्ञौ न सङ्कल्पमपि व्यधात् ।

लम्बेन्दुवदनं सान्द्रावश्यायेम्भोश्रुवर्षिणी । रथाङ्गाक्रन्दिनी रात्रिः सशोकेवाथ सागमत् ।
क्षुत्पिपासापरिक्षामं प्रभुं वीक्ष्य स तापसः । प्रार्थ्यते स्म प्रयागेण प्रातर्भोज्यसिद्धये ।
उपनिन्ये विनिर्गत्य प्रविष्टस्तापसस्तयोः । सव्यंजनान्नपूर्णे द्वे पात्रे तद्दीवगात्पुरः ।
कस्यापि गृहिणो यागोत्सवादेते मया हृते । तस्मिन्नित्युक्तवत्यूचे विनिश्वस्य प्रयागकः ।
राजन् स्वामिवियोगेऽस्मिन् पश्य लोकस्य सुस्थतां । स तां जगाद विहसन् किं मूढ इव भाषसे ।
योगतो गतस्वामी तत्स्वत्या नापरः जनः । सर्व्वो निजसुखापेक्षी न कश्चित्कोऽपि शोचति ।
लोकैकचक्षुषि गते परलोकमर्के लोकः स्वपित्यखिल एव सुखं गृहेषु ।
कोऽन्यो विचिन्तयितुमर्हति विश्रमेत तिष्ठन्मया विरहमेत्य कथं क्रियेति ।
पुत्रस्य स्नेहविन्यासः पूर्व्वमाप्तक्षये श्रुते । यथैकः प्रभवेन्नायुस्तथा स्नेहोऽपि देहिनः ।
अहमेव हतं पुत्रं श्रुत्वा जीवितजीविनं । तिष्ठामि स्वस्थवद्यत्र तत्रान्यो निन्द्यतां कथं ।
इत्युक्त्वा विरते राज्ञि पुनर्गूढं प्रयागकः । प्रैरयत्तापसं भोज्यं कर्त्तुं ते भाजने त्यजन् ।
ह्यस्तनव्ययशिष्टं मे पर्याप्तं नास्ति वेतनं । यते तथापीत्युक्त्वा स सखेद इव निर्ययौ ।
गोप्यं रहस्यमणितमत्यल्पहृदयातिथि । अस्तं पारतमिव नाल्पसत्त्वैस्तु दुर्जरं ।
कुत्यो मनोरथो नाम विप्रस्य वनवासिनः । सुहृत्तपस्विनस्तस्य तां कथामुपलब्धवान् ।
राज्ञः सन्दर्श्य दायादं भवावो भूतिभाजनं । इत्युक्त्वा तेन निन्ये स दोग्धृतां क्षुद्रतापसः ।
जज्ञे भृत्येन गर्ह्येण जातः सोऽन्येन केनचित् । सदृशं यत्सदसतोर्ज्ञापकं जन्मकर्मणोः ।
दृष्ट्वा राजरं प्रवृत्तिं बुद्ध्वा ताभ्यां न्यवेदयत् । उच्चलाय समादिक्षत्कार्य्ये तत्र तमेव सः ।
केचित्तु भूरि भिक्षाढ्यभिक्षाराजोपसर्पणे । कायस्थं कारणं प्राहुस्तयोस्तापसविप्रयोः ।
वार्त्ता चेदवगीतेयं सुरङ्गेऽत्र सहुते । काले तद्भृत्यपादस्य तस्यैव द्रोहमुख्यता ।
श्वपाकस्कन्धमारूढो लब्ध्वा तास्ता विमाननाः । विपेदे यत्सकारायां युक्तं तत्तस्य कर्म्मणः ।
क्षुत्क्षामो हर्षदेवस्तु प्रयागेणार्थितोऽश्नत् । प्रत्यपे पुत्रशोकेऽपि भोजनायाकरोन्मनः ।
गृहीतभोजनं जानन् प्राप्तं प्राप्तं स तापसं । तमोरेभिर्हिरेचिष्ट नीडाक्षिश्रुरिवाण्डजः ।
अपश्यच्च कुटीं कृत्स्नां वेष्टितामेत्य धन्विभिः । शुश्राव चाङ्गनद्वाराद्दार्य्यमाणार्गलाध्वनिं ।
जातं जातं ततो द्रोहमङ्गनात्तापसाधमं । सर्वस्वं मुक्तमेदोत्याक्रयन्तं व्यलोकयत् ।
मुक्तं विसृज्य हृत्वा च द्वारमुद्घाटितारिरिः । त्यक्तभीरादधे शय्यां क्षुरिकामन्तिकस्थितां ।
एवमात्मविधे क्रूरस्याहमाहं क्रियोन्मदः । आरुरोहाथ कट्टासिधनुः कवचितो भटः ।
तं राजा मस्ट्टिकुटी कन्दायामोऽप्यपातयत् । स्थितो व्यायामकुशलो नावधोत्कूपया पुनः ।
पतितेन हतेनांधो धराकेणामुना न मे । इत्यूचे दुरवद्वारप्रस्थमत्स्थितोऽपि क्षणे ।
भीषमुत्पाद्य निपतन्नेकोऽन्योऽप्युत्पतन् भटः । भयाकुलो न्यपततां तं विलोक्योद्यतायुधं ।
घटे पूर्व्वं प्रविष्टस्य तिष्ठन् ग्रामकमिठुरः । स इवासि चामुण्डा रेजे दण्डाहतिः क्षणं ।

न सिंहनादैर्नो भेरीतूर्य्यघोषैर्नवोन्मदैः। शस्त्रशब्दैः स शुशुभे भूपस्यान्तचणे रणः।
आखोर्भाण्डप्रवेशस्य विडाला इव डामराः। परं प्रवेशितास्तस्य निःशब्दं शस्त्रिणः कुटीं।
अथान्यो नीध्रमार्गेण सम्प्रविष्टः प्रयागकं। हत्वा दोर्ष्णि च शीर्षे च राजानं समुपाद्रवत्।
राज्ञः प्रहरतः शस्त्रं वञ्चयित्वा स शस्त्रभृत्। वचसि चुरिकाघातद्वयं प्रादात्कृतत्वरः।
वर्णान्महेश्वरेत्येतान् द्विरुक्त्वा गतजीवितः। पपात निहतो भूमौ च्छिन्नमूल इव द्रुमः।
प्राप्य संप्रविशतो योग्यचौरस्य यादृशः। चक्रवर्त्त्यपि स प्राप वधं वेश्मनि तादृशं।
नान्यः सदृक् कालेऽस्मिन्दृश्यो भूतिमान्नृपः। गर्ह्यं निर्हरणत्वञ्च तस्यैवान्यस्य नोचितं।
यदेकेनैव संग्रामवैमुख्येनोन्नतात्मनः। सर्वप्रकारं सुभगं माहात्म्यं तस्य खण्डितं।
नैयबुद्धित्वमेवासीदथ तातस्य दूषणम्। सर्वक्लेशावहा दोषाः कृतघ्नास्तन्मन्त्रिणां पुनः।
द्वाचत्वारिंशतः साष्टमासा यस्य वयः समाः। स शुक्लभाद्रपञ्चम्यां हतोऽब्दे सप्तसप्तने।
राजा दुर्योधनइव स्ववंशच्छेदमिच्छता। सोऽभूज्जातकयोगेन कारितः स्वकुलचयं।
तस्यासीत् द्व्यार्कजौ जीवबुधौ शुक्रोष्णगू शशी। तनयामित्रजामित्रखेषु कर्कटजन्मनः।
चन्द्रदैत्यज्यपापेषु स्वमदात्मजगेषु यत्। आहुः सुसंहिताकाराः कौरवादीन् कुलान्तकान्।
निर्ब्रह्मण्यजनः कृत्स्नो देशेऽस्मिन् वैरिणोऽन्तिकं। दस्योरिव शिरश्छित्वा स्वामिनोऽपि निनाय तत्।
तस्योत्तमाङ्गे भूभर्तुश्छिद्यमाने ससागरा। चकम्पे भूर्निरभ्रापि द्यौर्वृष्टिं महतीं जहौ।
तन्मुण्डे लगुडारूढे यदयुक्तं जनोव्यधात्। अभूत्तेनाभिशापेन सोऽग्रे दीर्घोपसर्गभाक्।
मण्डले देवबिम्बानां यथामुष्मिन् विपाटनं। तथा नवं प्रवृत्तं भूपतेर्मुण्डखण्डनं।
नैच्छिष्ट तच्छिरः प्राप्तमौचित्यादुच्चलो नृपः। भूत्वा चिरमुदग्रस्तु कारयामास वह्निसात्।
धिक्कष्टं तस्करस्येव तादृशश्चक्रवर्त्तिनः। नोच्चलाज्ञां विना प्राप्ता शरीरेणान्तसत्क्रिया।
भृत्यत्यक्तोनष्टवंशो गौरकाख्येन केनचित्। स काष्ठागारिणा चक्रे नग्नो नाथ इवाग्निसात्।
दीर्घो हर्षनृपोदन्तः सोऽयं कोऽप्यद्भुतावहः। रामायणस्य नियतं प्रकारो भारतस्य वा।
भाग्याम्बुवाहतडितस्तरलाः श्रियस्तास्तच्चावसानविरसं प्रसभोन्नतत्वं।
तत्रापि नैष बत मोहहताशयानां शान्तिं प्रयाति विभवानुभवाभिमानः।
तावत्यप्यवरोधिकापरिकरे नैकापि चक्रन्द तं तावत्यप्यनुगेऽधुनानुसृतवान् कोप्यास्त तीर्थेन वा।
लोकस्य स्वसुखोपलिप्तमनसो वीच्येति निःस्नेहतां निर्वेदं समुपेत्य नाश्रयति धिक् स्वान्तं वनान्ते रतिं।
नादौ किञ्चिद्भवति नियतं यच्च पश्चान्न किञ्चिन्मध्ये कस्मात्स्पदि घटयन्दौस्थ्यदौस्थ्यानुरोधं।
निःशीर्षाद्विवरात्कट इव मुहुः कोऽपि जन्तुर्नटित्वा नो जानीमो भवजवनिकान्तर्हितः क्व प्रयाति।
श्रीसातवाहनकुले कृतकान्तराजवंशे त्यजन्त्युदयराजकुले प्रतिष्ठां।
प्रत्यङ्गं सुतैर्विरहितं जहतो हिमाद्रेर्दिश्ये तटे सुरगिरेरिव वासरश्रीः।

इति श्रीकाश्मीरिकमहामात्यचम्पकप्रभुसूनोः कह्लणस्य कवेः कृतौ राजतरङ्गिण्यां सप्तमस्तरङ्गः समाप्तः ॥

समाष्ट नवतावब्दां व्यहोनायां महीभुजः। यशस्कोदयराजस्य वंशे जाताः प्रकीर्त्तिताः।

राजानः ॥ ६ ॥ श्लोकाः ॥ १७२२ ॥



## ॥ अष्टमस्तरङ्गः ॥



प्रौढाः कञ्चुकिनो जरद्गवदृशः कुब्जस्तुषारद्युतिर्नित्याप्तोऽपि वहिष्कृतः परिकरस्तोऽयं समस्तोऽप्यहो।
अर्धाद्यद्दधतीकृताङ्गवता चारित्रचर्य्याविदा सा भिन्द्याद्दुरितं चराचरगुरोरन्तःपुरं पार्व्वती।
कृतकोपप्रसादोऽभूत्कञ्चित्कालं नवो नृपः। प्राक्मन्थ्यादिव पाथोधिरव्यञ्जितविषामृतः।
सोदरो डामरैरघस्य तस्याभूतां भृशोन्मदौ। मेघस्येव पुरो वातावग्रहौ स्फूर्तिहारिणौ।
यत्किञ्चनविधाय्यासीद्भ्राता यथावनोन्मदः। राज्ञो दुष्प्रक्रिया दोःस्थ्यकरी वात्सल्य शालिनः।
सोऽनिशं हि गजारूढो विकोषासिः परिभ्रमन्। आत्तसारां महीं पीतरसां रविरिवाकरोत्।
एकीभूतानमून्सर्व्वान् डामरान्निर्दहाम्यहं इत्युक्तं तेन नोर्वीभृत्स्वलिकायोववचोऽग्रहीत्।
इत्यवो मन्त्रिसामन्तान्द्रराज्येच्छुः सहोदरः। भूर्निष्कोपेत्यभूत्किं न भूपतेस्तस्य सङ्कटं।
अधिराज्याभिषेकेण सत्कृत्य भ्रातरं ततः। पातुं लोहरसंबद्धं प्राहिणोन्मण्डलान्तरं।
द्विरदायुधपत्त्यश्वकोषामात्यादि स व्रजन्। निनाय सर्व्वं वात्सल्यादनिषिद्धोऽग्रजन्मना।
आशङ्क्य कोटभर्त्येभ्यः प्रवेशं मत्यवास्थितिं। तत्कर्षजं प्रतापाख्यं सह निन्येऽग्रवस्थि तान्।
कुर्यामसुं नृपमहं प्रातिहार्यं समाचरन्। नघाः स्वभृत्यवत्तस्तु भूर्भुजो भूम्यनन्तराः।
दिनानि सप्त संरुद्धे मार्गे तदनुयायिनां। गायनः कनकोलब्धान्तरोदेशान्तरं ययौ।
वाराणस्यां विजहता निर्व्वेशात्तेन जीवितं। हर्षभूभर्तृभृत्येषु व्यक्तं निन्ये कृतज्ञतां।
ऊर्ध्वाधिरोह दाक्षिण्याद्द्स्यूनामुच्चलः पुनः। सेवास्तत्या सुधीः सेहे चन्दनो भोगिनामिव।
तथा जनकचन्द्रेण दर्पाद्यवहृतं तदा। राजान्ये डामरास्त्रासन् पया नष्टप्रभा इव। १५
अभयस्यौरसा भर्तुस्तनयायामजीजनत्। राज्ञां विभवमत्यां यं भोजो हर्षनृपात्मजः।
जातं मृतद्वित्रिपुत्रानन्तरं गुरुभिः शिशुं। आयुष्कामैस्तमावद्धाभव्यभिचाचराभिधं।
द्व्यब्दमथ्यरिसन्तानतनुलेनाभियोचितं। ररच तद्गिरा राजा राज्यास्याङ्के समार्पयत्।
तिलकं॥ तमादाय स्वयं वाधौ यावद्राज्येऽकरोन्मनः। तावद्भारेङ्गितज्ञो नीतिकौटिल्यमुच्चलः।

तुल्योत्साहाद्यसहिष्णुत्वादस्मै कुप्यत डामराः। एष एवातिसत्कारास्पदमाशुविशदाशयः।
इति सञ्चिन्त्य स द्वारदिक्षां तस्योदघोषयत्। यथाविकारं प्रययुर्भीमादेवादयोऽखिलाः।
तेषां तस्य च मात्सर्यं यदापर्य्याप्तिमाययौ। तदान्योन्याश्रिता भृत्याः पणं चक्रुर्युयुत्सवः।
दिदृक्षुः क्ष्मापतिस्तेषां सेतुपृष्ठे रणं मिथः। वार्य्यमाणोऽपि सचिवैरारुरोह चतुष्किकां।
द्वन्द्वयुद्धे प्रवृत्ते तु डामरैरुभयाश्रितैः। अथ प्रारभताकस्मात्संरम्भैर्दारुणो रणः।
सेतुत्रयाध्वना युद्धे लग्ने राज्ञि सरित्तटात्। योधा जनकचन्द्रस्य शरवर्षमवाकिरन्।
यान्तः शराः सशीत्कारास्ते स्पृष्टनृपविग्रहाः। मग्नास्तम्भेष्वदृश्यन्त कोपेनेव प्रकम्पिनः।
आकृष्य दोर्भ्यां भूपालं बलादिव ततोऽनुगाः। प्रविष्टं मण्डपद्वारं चक्रिरे निहतार्गलं।
शस्त्रज्जनकचन्द्राद्या भीमादेवादयोऽपि ते। चतुष्किकार्थं चक्रुपुस्ततोऽन्योन्यं जिघांसवः।
तुमुले तत्र शस्त्राङ्कं भीमादेवानुगोऽभिनत्। तीव्रेण जनकचन्द्रस्य कालपाशात्मजोऽर्जुनः।
स वीक्ष्य स्वं क्षतं द्रोहं प्रयुक्तं भूभुजा विदन्। पादप्रहारादिदधे क्रोधाद्द्वारि नृपौकसः।
अभग्ने तत्र संत्रासात् स्यानद्वाण्युत्तरं गतं। अधावत्कृष्टशस्त्रोऽसौ भीमादेवो जिघांसया।
स्तम्भच्छन्नस्तद्विलोक्य तद्गृहगणनापतिः। मध्यं जनकचन्द्रस्य कृपाणेन द्विधा व्यधात्।
तस्मिन् हते तदनुजौ गग्गसड्डौ प्रधावितौ। स एव करवालेनालक्षितोऽहत विच्युतौ।
अत्रभव्य तद्वज्रः सुचिरं नावतिष्ठते। उदग्रकर्मा च पुमान्निहत्यात्युन्नतं रिपुं।
स हि द्विमाद्रे तत्राब्दे हर्षोत्साहादनन्तरं। अन्यूनानतिरिक्तैर्यैस्त्रिभिः पक्षैरहन्यत।
यद्वोपकर्त्तुरप्येष द्रोहं यत्स्वामिनो व्यधात्। श्रोत्कंठ्यात्पाप्मनस्तस्य क्षिप्रमेव क्षयं ययौ।
सान्त्वस्तोषे कोपशोकावाविष्कुर्वंति वृत्तिमौ। भीमादेवः पलायिष्ट गग्गस्तु व्यसृजीन्नृपे।
प्रहिते सोदरं गग्गेऽच्छमुत्साघयितुं क्षतं। त्रस्तास्तेन व्यसृज्यन्त स्वोर्व्वीरन्येऽपि डामराः।
उपयापक्षतैः प्राप्तराज्यं दस्युभिरुज्झितं। एवं शनैरवष्टम्भं भेजे भूपतिरुच्चलः।
तेनाथ लब्धस्थैर्य्येण दिनैरेव जिगीषुणा। त्याजिताः क्रमराज्यान्तस्थयशैन्यादिडामराः।
ततो मडवराज्यं स प्रस्थितो विप्रियप्रियान्। डामरान् कालियमुखान् बद्ध्वा शूले व्यपादयन्।
हलाराजोऽपि सबलंस्तेन क्रान्तचितिः क्रमात्। बलैर्नगरएवोग्रैरवस्कन्देन घातितः।
प्राग्जन्मप्रेमसंस्कारादन्तरङ्गतयाग्रजः। तस्य पुत्र इव प्रीतिर्गग्ग एव व्यवर्द्धत।
न सेहे नाममात्रं यः कण्टकानां प्रियप्रजाः। नृपो गग्गाय चुक्रोध सापराधं न कुत्रचित्।
राज्यारम्भेऽनुयुक्तेन भीमादेवेन धीमता। उक्तं शुभावहे शिवे दे स मन्त्रवदस्मरत्।
एकया लोकवार्त्तार्थं प्राह्णप्रभृति निर्गतः। वहिरह्निश्च वाह्यालीरचारीदादिनक्षयं।
अन्यायोत्थानभीतेन श्रुत्वा नामापि वैरिणः। अर्धरात्रेऽपि यात्राभिस्तेनार्गाच्छ्यत विक्लवः।
सन्धैनानुप्रधैर्य्यस्य राज्ञां मध्ये मनस्विनः। कार्म्मणोपहतं हृत्तं न प्राभूदमलीमसं।
यत्रोपन्न सदाचारजाह्नवीजलमज्जना। कुनृपोदीरणोद्भूता गिरः पाप्मापनेष्यते।

तेनानुपर्चिताङ्गेन प्रायशो विनिवारिताः। अनूरुणेव सद्दृष्टिध्वंसिनो ध्वान्तसञ्चयाः।
प्रायोपविष्टप्रनये देहत्यागप्रतिज्ञया। निर्बद्धया प्रत्यवेक्षां धर्माध्यक्षानकारयत्।
निशम्य कृपणस्यान्तं क्रन्दितं तदनिष्टकृत्। बभूव तस्य स्वात्मापि नानिग्राह्यो महात्मनः।
कार्य्यिणो यस्य वा दोषाद्दृत्ताक्रन्दितमुच्चयौ। तस्य स्वबान्धवाक्रन्दैस्तस्मिन् क्रुद्धे शशाम तत्।
अबलानुग्रहव्यग्रे तस्मिन् राजनि सर्व्वतः। वास्तव्यावनिलस्त्वासुरवत्वास्त्वधिकारिणः।
सोऽश्वैनैकश्चरन् राजेत्यज्ञात्वा कथितं जनैः। यं यं स्वदोषमश्रौषीत्तं तं त्वरितमत्यजत्।
येन केनापि सम्प्राप्तः प्राप्त्युपायेन पार्थिवः। अमोघदर्शनः सोऽभूत्कल्पद्रुम इवार्थिनां।
स्वधावर्षी प्रियालापप्रीतिदायजनप्रियः। नायकत्वेन कांस्त्यक्तुं विस्रम्भभवनेष्वपि।
श्लाघ्यः श्रमैः प्रतिकल्पं तस्य सेवाविधायिभिः। प्राप्नन्ति चतुरान् वारान् चण्डास्वपि दर्शनं।
सेव्यमानः सदा विज्ञः क्षणेनैव फलप्रदः। कश्चैन्द्रजालिकैरुप्तः शाखीव न बभूव सः।
वास्तव्यानां निशम्यार्तिं तेन दैन्यनिवारणं। चक्रे पित्रेव पुत्राणां सत्यकेतरकर्म्मणा।
स्वसञ्चितानि स्वर्णानि विक्रीणानोऽल्पवेतनैः। दुर्भिक्षमुद्गतावेव जघान जनवत्सलः।
निवार्य्य चौर्य्याचरणात्कृपार्द्रस्तस्करानपि। कोशाध्यक्षान् स विदधच्चकारागर्हजीविकान्।
कस्तस्मिन्भाग्यः च्छेत्तव्या विपदः कस्य मण्डले। इतोऽन्विष्यन् सदैकैकं चारैश्चिन्तापरोऽभवत्।
तस्य काऽप्यर्थनैस्पृह्यं नाम कोऽपि महान् गुणः। अनुपक्तो गुणैस्तैस्तैराज्ञः पक्षविनोऽभवत्।
स स्थित्यै दण्डयन्दण्ड्यानघास्वपभयाद्धनं। तेषां नादत्त सत्कर्म्मशुद्धये तांस्त्वकारयत्।
प्रस्तुतस्यार्थिने दातुं वस्तु तस्यैकसङ्ख्यया। सहस्रसङ्ख्यया दानश्रद्धागात्पूर्णतां यदि।
श्रूयतेऽर्थी यथा मह्यं देहि देहीति गां वदन्। तथास्मै देहि देहीति वदन् दाता स शुश्रुवे।
अनुदातुं चिरकालं क्षोणसह्यं न सत्कृतं। नैत्यद्भुतादिनीतार्द्धं न तद्वृत्तमदृश्यत।
उत्सवे दैन्यविध्वंसौ रञ्जने कार्य्यसाधने। श्लाघ्यहीनमाखीत नाधो लब्धफलोऽभवत्।
उत्सवे शिवरात्र्यादौ जनतां सोऽभिचह्नैः। यद्दयोगे पयःपूरैर्महेन्द्र इव मेदिनीं।
ताम्बूलदानव्यसनं परार्ध्यात्स्वरता तथा। नाभूद्भूपनृपस्यापि तादृक् तस्यास्त यादृशी।
लोष्टमात्रावशेषेऽपि लब्धे नृपपदे व्यधात्। स दानविभ्रमांस्तान् ये धनदेनापि दुष्कराः।
निर्माणलोठनैर्धाम्नामजस्रं वाजिनां क्रयैः। काश्मीरकोऽपि चक्रे स न म्लेच्छस्करसाद्धनं।
स्वच्छन्दध्वनि योगेन प्राणविन्यासनैस्तया। बभूव सर्व्वकृत्यज्ञः सोऽन्तरात्मेव देहिनां।
भोगापार्जोचितान् विप्रा भैषज्यं व्याधिपीडिताः। वेतनं वृत्तिहीनाय तस्मात्समुपलेभिरे।
पित्र्योपरागकेत्वादि दुर्निमित्तोपमार्तिषु। गोसहस्राश्वहेमादिसम्भवैः सोऽभजद्द्विजान्।
नन्दिक्षेत्रे पुरं कृत्स्नं दग्धमुत्पातवह्निना। पूर्व्वाधिकगुणं तेन नवं राज्ये व्यधीयत।
श्रीचक्रधारयोगेशस्वयम्भूत्यानयोजनं। जीर्णोद्धृतिव्यसनिना कृतं तेन सुकर्म्मणा।
हर्षदेवेन यो निन्ये श्रीपरीहासकेशवः। परिहासपुरे तं स नवं नरपतिर्व्यधात्

भूतेशस्य यया पुरी कृतवदशुद्दा तदाज्ञावलाङ्कृयः स्वां श्रियमाससाद सहसा तद्वत्समस्तामिमां ।
त्वं कायस्थकुटुम्बिकृतमचिवप्रायाञ्च पञ्चाननोलीढामुश्वलदेवनिर्वृतिसुखस्थित्या पुरीं स्वां क्रियाः ।
शिवरगाव्युत्सवे श्लोकममुं शिवरथाभिधः । विद्वान् पठंस्तेन हठात्सम्बोध्यचो व्यधीयत ।
व्यवहारानभिज्ञोऽपि कञ्चित्कालमदीदशत् । शुचिलादार्य्यभाजः स क्रमन् कृतयुगस्थितिं ।
शीघ्रदण्डत्वमुच्चण्डतेजसस्तस्य भूपतेः । क्रूरानुद्दिश्य कायस्थान् धीमद्भिर्वक्रमन्यत ।
नहि क्षुद्रस्वकायस्थपिशाचाविष्टवैरिणां । शंसन्त्यन्तरितं दण्डं दण्डनीतिविशारदाः ।
चिरेण दण्डिताह्येते कुर्य्युर्दण्डधराद्ध्रुवं । लब्धान्तराः प्राणहरं कष्टं किञ्चित्प्रशास्यतः ।
दण्ड्यानान्दण्ड्यमानानां पुत्त्रस्त्रीमित्रबान्धवाः । राज्ञां विचारशीलेन न तेनोपद्रुताः क्वचित् ।
कर्णेजपांस्तीष्टधरप्रमुखांस्तेन दुःखदैः । कर्म्मभिः क्षिपताद्यापि पैशुन्यस्य खिलीकृताः ।
विस्मृतिं लब्धराज्यानां पूर्व्वसङ्कल्पवासनाः । प्रयान्ति प्राप्तजनुषां गर्भवासस्पृहा इव ।
प्रायाज्याधिगमात्किञ्चित्सदसद्यच्चिन्तयत् । राज्ये तत्र विसस्मार जातिस्मरइवोच्चलः ।
ददर्श शत्रोरद्रोहान् यान् द्रोग्धॄन् वा पुरानुगात् । कर्त्तव्यानुगुणं तेषां प्रतिपत्तिमदर्शयत् ।
स्मरेन्नोपपतिः पूर्व्वपतिद्रोहं कुयोषित । पूर्व्वस्वाम्यरितां चाद्य कुभृत्यस्योद्धुरो जडः ।
शेषाहिदेहान्मेदिन्या समं सञ्चापि राज्यभृत् । तस्मिन् परिणता नूनं कृत्याकृत्यविवेकरि ।
तथाह्येकस्य वणिजो व्यवहर्त्तुंय सोऽभवत् । विवादे संशयं छिन्दन्नेवं स्थेयाद्यगोचरे ।
सोद्वदारूढसद्भावे व्यापदोपयिके धनी । न्यासीचकार दीनारलक्षं कोऽपि वणिग्गृहे ।
तेनोपयुज्यमाना च व्ययेषु वणिजः करात् । कियत्यपि गृहीताभूद्नुमाचान्तरान्तरा ।
त्रिंशद्विंशत्सु यातासु समासु न्यासधारिणं । गृहीतशेषं दातुं स धनं प्रार्थयताथ तं ।
वणिक् तु कुहती तस्य न्यासग्रासाय सोद्यमः । कालापहारमकरोत्तैस्तैः कनुपधोर्म्मिपैः ।
स्रोतोभिर्व्यस्तमम्भोधौ लभ्यं मेघमुखे पयः । प्राप्तिर्भूयात्तु नास्त्येव वणिक्कास्तस्य वस्तुनः ।
तेनाद्विगधमुखः स्वल्पालापोऽस्मदाकृतिर्भवन् । न्यासपाशविवादोयो वणिक् त्वाभ्यार्दिमिष्यते ।
विवादे श्रेष्ठिना शाठ्यं स्थितैः प्राक् सत्यदर्शने । सुस्थं सुस्थं ज्ञायमानं प्राणान्तेऽपि न मुच्यते ।
निसर्गवञ्चका वेश्याः कायस्थोऽपि वरो वणिक् । गुरूपदेशेपस्कारैर्विंशिष्टाः सविषाशिषः ।
चन्दनाङ्कालिके श्वेतांशुके धूपाधिवासिनि । विश्वस्तः स्यात्किराटेया विप्रकृष्टेष्वनापदः ।
ललाटदृक्श्रवःश्रेचदन्ददद्धुत्तचन्दनः । षड्विन्दुवृश्चिक इव घ्नन्नप्राणान्तकृद्वणिक् ।
पाण्डुश्यामोऽग्निधूमार्द्रैः सुच्छाम्रो गहनोदरः । तुम्बीफलोपमः श्रेष्ठी रक्तं मांसञ्च कर्षति ।
सोऽथ निःशेषितस्पिपः क्रुद्धो निर्बन्धकारिणः । गणनापत्रिकां तस्याः सभ्रूभङ्गमदर्शयत् ।
यदादौ श्रेयस इति न्यस्तमग्रेऽयमे पदं । आतरेव्यत्यये सेतोर्म्ध्दोता पटमुधोत्वया ।
छिद्योपानत्कयामन्ये शतं चर्म्मकृतेऽर्पितं । विपादिका कृते दास्या नीतं पञ्चाशतोघृतं ।
स्फोटने भाण्डमारस्य कन्दत्याः रुपयार्पितं । कुलाल्या सङ्गमः पत्य भूर्जे तस्यं शतचयं ।

प्राग्वर्धितप्रकाशस्था भूषितो हर्षनीतया। तेन त्रिभुवनस्वामी निर्लोभो न महीभुजा।
जयापीडाहृतं हर्षोत्पाटने सुष्टमग्निना। सिंहासनं नवं चक्रे स्वराज्यककुदं नृपः।
लब्धा तदङ्काध्यारोहं भर्तुः प्रेम्णातिदुर्लभं। सामान्ययापि देवीत्वं जयमत्या न दूषितं।
सा ह्यानृशंस्यमाधुर्य्यत्यागसत्प्रियतानयैः। अल्पधा तु परित्राणमुख्यैर्भव्याभवद्गुणैः।
लब्धभूपालवाल्लभ्या नार्य्यः क्रोधात्प्रजास्वयं। राक्षस्य इव भङ्गाय लावण्यललिता अपि।
प्रियप्रजस्यायमन्यो गुणः सर्व्वगुणाग्रणीः। उग्रतन्त्रापतेरासीदर्थनैस्पृह्यमानिनः।
जिघांसवः पापकामाः परस्वादायिनश्च ताः। रक्षांस्यधिकृता नाम तेभ्यो रक्षेदिमाः प्रजाः।
तेनेतिहासिनीं नीतिं श्रद्दधानेन सर्व्वदा। येन सम्पठता श्लोकं कायस्थोद्दलनं कृतं।
यत्ते विषूचिकाशूलक्षयन्यासेभ्यः किलेतरे। ग्रन्थ्याग्रकारिणो विश्वं प्रजा रोगा नियोगिनः।
पितरं कर्कटो हन्ति मातरं हन्ति वृश्चिका। हन्ति सर्व्वन्तु कायस्थः कृतघ्नः प्राप्तसम्भवः।
गुणान् समर्थ्य स्फुरता येनैवोत्पाद्यते शठः। वेताल इव कायस्थस्तमेवाहन्ति हेलया।
विपत्त्यो नियोगी च यदेवाश्रित्य वर्द्धते। चित्रं करोति तस्यैव स्थानस्थानतिगम्यतां।
तेन ते क्ष्माभुजा मानक्षतिकार्य्यनिवारणैः। काराप्रवेशैश्च खलाः शमं नीताः पदे पदे।
कार्य्यान्निवार्य्य सङ्क्षमः सहेलस्याप्यहेतुमान्। भङ्गाहुत्रमयं वासः कारायां पर्य्यधापयत्।
सकार्य्यवेषं हास्याय सभायां वरणोचितं। अकारयद्भूतिभिश्च धावनं डोम्बयोधवत्।
स प्रांशुर्वेष्टितश्मश्रुरुष्णीषेणोत्पतन् पुनः। शूलहस्तः सजानूरूः केषामासीन्न हास्यकृत्।
स शीर्षदशनं साम्यवाद्वेश्या विटान्वितं। प्रियवेश्यं कश्चिदन्येऽनृतवंशमकारयत्।
वद्धान्यं शकटे नग्नं क्षुरलूनार्द्धमस्तकं। अकारयत्सटान्यस्तचीनपिष्टकटाङ्कितं।
ते कुम्भवादनैर्मुण्डमण्डनैश्चाङ्किताभिधाः। नियोगिनो भग्नमानाः सर्व्वतः ख्यातिमाययुः।
काव्यभ्रष्टा अन्नक्लिन्नचीरवस्त्रावगुण्ठनाः। सर्व्वार्थिनो व्यभाव्यन्त केऽप्यटन्तः प्रतिचयं।
हृत्यावृद्धासुखप्राप्यं पाण्डित्यं भूर्जवत्परे। मत्वा बाला इवाचार्य्यगृहे प्रारेभिरे श्रुतं।
केऽप्युच्चैरट्टभिक्षाकाः सादरं स्तोत्रपाठिनः। कृतानुपाठाः स्वापत्यैः प्राह्णे लोकमहासयन्।
माता स्वसा सुता भार्य्या स्वापि कैरप्यकार्य्यत। सामजं सेवनं कार्य्यप्राप्तैः सुरतसेवया।
जातकस्य प्रसङ्गेन स्वलक्षणनिरीक्षणं। कारयद्भिः शुभैरन्यैर्गणकाः परिखेदिताः।
पिशाचा इव शुष्कास्या रूक्षश्मश्रुकचाः कृशाः। बद्धाः पर्य्यभ्राम्यन्त शृङ्खलामुखराङ्घ्रयः।
नृपेण कार्य्यिणां दर्पलिङ्गनाशे विपाटिते। अन्तोर्ज्योतिःपरिज्ञानक्षमत्वं समजायत।
भारतस्तवराजादिस्तोत्रपाठमशिश्रयन्। ते दुर्गोत्तारिणो विद्याजपं चाहस्वलोचनः।
इत्थं दैवस्योदये दीर्घं मज्जन्तो नित्यदुर्जनाः। तस्मिन्राजनि कायस्था व्यलोक्यन्त पदे पदे।
भिन्नसन्धानभूय्यर्थदानभोज्यादिढौकने। नहि मोहयितुं शक्ताः प्राज्ञं तं तेन राजवत्।
तान् प्रजाकण्टकान् दुष्टान् कृतधीरक्षतानिशं। तैस्तैः शुचिभिरध्यक्षैः सविश्रामीश्वरोऽत्रमान्।

भूतेशस्य यथा पुरी कृतवदुत्सृष्टा तदाशाबलाद्भूयः स्वां श्रियमाससाद सहसा तद्वत्समस्तामिमां ।
त्वं कायस्थकुटुम्बिकृतसचिवप्रायाश्च पश्चाननीलोढामुच्चलदेवनिर्वृतिसुखस्थित्या पुरीं स्वां क्रियाः । ११०
शिवराज्युत्सवे श्लोकममुं शिवरथाभिधः । विद्वान् पठंस्तेन हठात्सर्वाध्यक्षो व्यधीयत ।
व्यवहारानभिज्ञोऽपि कञ्चित्कालमदीदशत् । शुचिलादार्य्यभाजः स क्रमन् कृतयुगस्थितिं ।
शीघ्रदण्डलमुच्चण्डतेजसस्तस्य भूपतेः । क्रूरानुद्दिश्य कायस्थान् धीमद्भिर्बकमन्यत ।
नहि क्षुद्रस्वकायस्थपिशाचाविष्टवैरिणां । शंसन्त्यन्तरितं दण्डं दण्डनीतिविशारदाः ।
चिरेण दण्डिताश्चेत्ते कुर्य्युर्दण्डधराद्ध्रुवं । लब्धान्तराः प्राणहरं कृच्छ्रं किञ्चित्प्रशास्यतः । ११५
दण्ड्यानान्दण्ड्यमानानां पुत्रस्त्रीमित्रबान्धवाः । राज्ञां विचारशीलेन न तेनोपद्रुताः क्वचित् ।
कर्णेजपांश्लिष्टधरप्रमुखांस्तेन दुःखदैः । कर्मभिः क्षिपताद्यापि पैशुन्यस्य खिलीकृताः ।
विस्मृतिं लब्धराज्यानां पूर्व्वसङ्कल्पवासनाः । प्रयान्ति प्राप्तजनुषां गर्भवासस्पृहा इव ।
प्राग्राज्याधिगमात्किञ्चित्सदसद्यद्यचिन्तयत् । राज्ये तत्र विसस्मार जातिस्मर इवोच्चलः ।
ददर्श शत्रोरद्रोहान् यान् द्रोग्धॄन् वा पुरानुगात् । कर्त्तव्यानुगुणं तेषां प्रतिपत्तिमदर्शयत् । १२०
स्मरेन्नोपपतिः पूर्व्वपतिद्रोहं कुयोषितः । पूर्व्वस्वाम्यरितां चाद्य कुम्भत्यस्योद्धुरो जडः ।
शेषाहिदेहान्मेदिन्या समं प्रज्ञापि राज्यभृत् । तस्मिन् परिणता नूनं कृत्याकृत्यविवेकरि ।
तथाह्निकस्य वणिजो व्यवहर्त्तुश्च सोऽभवत् । विवादे संशयं छिन्दन्नेत्रे स्थेयाद्यगोचरे ।
सौहृदारूढसद्भावे व्यापदौपयिके धनी । न्यासीचकार दीनारलक्षं कोऽपि वणिग्गृहे ।
तेनोपयुज्यमाना च व्ययेषु वणिजः करात् । कियत्यपि गृहीताभूदनुमासान्तरान्तरा । १२५
त्रिंशद्विंशत्सु यातासु समासु न्यासधारिणं । गृहीतशेषं दातुं स धनं प्रार्थयताथ तं ।
वणिक् तु कुकृती तस्य न्यासग्रासाय सोद्यमः । कालापहारमकरोत्तैस्तैः कलुषधीर्म्मिषैः ।
स्रोतोभिर्व्यस्तमम्भोधौ लभ्यं मेघमुखैः पयः । प्रातिभूर्य्यास्तु नास्त्येव वणिक्प्राप्तस्य वस्तुनः ।
तैलस्निग्धमुखः स्वल्पालापो मृद्वाकृतिर्भवन् । न्यासग्रासविवादोद्यो वणिक् व्याघ्राद्विशिष्यते ।
विवादे श्रेष्ठिना सार्धं स्थितैः प्राक् सभ्यदर्शनैः । सुखं सुखं ज्ञायमाने प्राणान्तेऽपि न मुच्यते । १३०
निसर्गवञ्चका वेश्याः कायस्थोऽपि वरो वणिक् । गुरूपदेशोपस्कारैर्विशिष्टाः सविपाशिषोः ।
चन्दनाङ्कालिके श्वेतांशुके धूपाधिवासिनि । विश्वस्तः स्यात्किराटेया विप्रकृष्टेष्वनापदः ।
ललाटदृक्चत्वश्चाचद्दन्दहृस्तचन्दनः । पत्रविन्दुष्टयिक इव घणाभ्राणान्तादृणिक् ।
पाण्डुश्यामोऽग्निधूमार्द्रः सुव्याप्तो गहनोदरः । तुम्बीफलोपमः श्रेष्ठी रक्तं मांसञ्च कर्षति ।
साऽथ निःशेषितमिषः क्रुद्धो निर्बन्धकारिणः । गणनापत्रिकां तस्याः सभ्रूभङ्गमदर्शयत् । १३५
यदादौ श्रेयस इति न्यस्तमश्रेयसे पदं । आतरेष्वत्यये सेतोर्दृहीता पट्टमुधोल्वया ।
छिन्नोपानत्कयानेन्भे शतं चर्मकृतेऽर्पितं । विपादिका कृते दास्या नीतं पञ्चाशतो घृतं ।
स्फोटने भाण्डसारस्य क्रन्दत्याः रूपयार्पितं । कुलाख्या वक्रमः पश्य भूर्जे लग्नं शतत्रयं ।

शिशुभ्योऽस्य विडालस्य क्रीताः पोषाय मूषिकाः। त्वया शतेन वात्सल्यात्पट्टाम्बास्यरघस्तया।
चरणोदत्तनं सर्पिः शालिचूर्णञ्च सप्तभिः। क्रीतं शतैः श्राद्धपक्षदाने च घृतमाक्षिकं। १४०
नीतं चौद्राद्रकं का सा या साया दर्भकेण ते। सोऽव्यक्तजिङ्कः किं वेत्ति वक्तुं सप्त शतं ततः।
त्वषणोत्पाटको भिक्षाचरस्ते इव याचकः। यो वारितो युद्धपट्टस्तस्मै दत्तं शतत्रयं।
आनीते भट्टपादानां मध्यं सर्व्वव्ययोपरि। शतं शतद्वयं धूपगन्धामूलपलाण्डुषु।
इत्याद्यचिन्तता युक्ता परिहार्यं व्ययानसौ। तस्यैकीकृत्य गणनां लाभेऽपि शतकैर्व्यधात्।
वर्षमासग्रहतिथिप्रत्यावृत्तिः पुनः पुनः। संसारमेव तस्यान्ते न यथौ नर्त्तिताङ्गुलेः। १४५
समूलग्रहणं पिण्डीकृत्याथ सकलान्तरं। प्रसारितोष्ठस्तन्नेत्रे मीलयन्नभ्यधान्मृदु।
शस्यमुद्धरनिक्षेपं नयोग्नासधनन्त्विदं। विस्रब्धदत्तं निर्दम्भं दीयतां सकलान्तरं।
तस्य धर्म्म्यम्वचोजानन् क्षणमुच्छ्वसितोऽभवत्। क्षुरं चौद्रोपलिप्सन्नु ध्यात्वा पश्चादतप्यत।
युक्तापकृतसर्व्वस्वं क्रौर्य्यानार्थ्यमयार्थकः। विवादे नाशकज्जेतुं नापि स्थैया विचारकाः।
स्थैयैरनिश्चितन्यायं पुरोन्यस्तं ततो नृपाः। तदित्थमिति निश्चित्य वणिजं तमभाषत। १५०
अद्यापि न्यासदीनाराः सन्ति चेत्तत्प्रदर्श्यतां। अंशः कियानपि ततस्ततो वच्मि यथोचितं।
तथाकृते तेन वीच्य दीनारान्मन्त्रिणोऽब्रवीत्। राजाभिर्भाविना राज्ञा नाम्ना टङ्कः क्रियेत किं।
न चेत्कलशभूपालकालीन्यासीकृतेष्वमी। दीनारेष्वकुतष्टङ्कामनामाङ्का अपि स्थिताः।
निश्चितेनैष लक्षेण वणिक् तस्मात् व्यवाहरत्। वणिजोद्भविणेनायमथातेनान्तरान्तरा।
तस्माद्यदा यदेतेन गृहीतं दीयतां ततः। तदा प्रभृत्ययथावल्लाभोऽस्मै वणिजोऽर्थिनः। १५५
न्यस्तनानेहसस्यैष प्रभृत्यस्मै प्रयच्छतु। लक्षादखण्डितालाभं किम्वाच्यं लौलिके धने।
अवधारयितुं शक्यं मादृशैस्तघृणैरियत्। श्रीयशस्करवद्रौप्यमीदृक्षेषु स्वयुज्यत।
विवादे सन्दिहानस्य युक्तं चान्यनुशासनं। भाव्यं दण्डपराचारैः प्रयुक्तं कुरुतेः पुनः।
अनिहार्य्येषु शस्त्रेषु महाममंगतेष्विव। सविवादेषु चोपेक्षा कालापेक्षी व्यधान्नृपः।
पक्षे पार्थिवस्येत्थं निरोधं तस्य पालनं। प्रजास्वजागरूकस्य मनोरिव मनस्विनः।
सख्यं कारणनिर्व्यपेक्षमितताहङ्कारहीना सती भावोवीतजनापवाद उचितोत्थितं समस्तप्रियं। १६१
विद्याविभवान्विता तरुणिमा पारिप्लवत्वोज्झिता राजन्विकवं कमत्र चरमे काले कलेत्यन्यथा।
स तादृशोऽपि राजेन्द्रचन्द्रपः स किलाभवत्। मात्सर्य्याविष्टवैरस्याद्दोषोल्कावर्षपोषणः।
औदार्य्यशौर्य्यधीधैर्य्यगुणतारुण्यमत्सरः। बभूव संख्यातीतानां मानप्राणहरो नृणां।
मानोद्घैतस्य भूयोऽपि वाक्पारुष्यरुपाहतैः। लाघवं प्रत्युपालम्भैः पार्थिवोऽप्यनुभावितः।
प्रशस्तानां फणीन्द्राणामिव कोपोद्भवं विना। तेजोविस्फूर्जितं ज्ञेयं नहि नाम शरीरिणां। १६५
विविधे भूतसर्गेऽस्मिन्नष कश्चित्त जिघ्ने। वपुर्नयचरित्रादि यस्य दोषैर्न दूषितं।
जातिः पङ्करुहादपुः कपिलता शीतं शिरःखण्डनं प्रभ्रश्यत् शुचिमौलता दिविगुणाचारमदुष्टं यशः।

विश्वस्तपुरिति प्रभूतविषयव्याप्तिस्पृशो दुस्सहा दोषा यत्र पुरस्तु तत्र कतमो निर्दोषतोत्सेकभूः ।
अविचार्य्येति भूपालः स चकारानुजीवनं । वंशचारित्रदेहादिदोषोद्घोषेण सन्वहं ।
अन्योन्यदोषमुत्पाद्य संख्यातीता महाभटाः । युद्धश्रद्धालुना तेन द्वन्द्वयुद्धेषु घातिताः ।
मासार्द्धदिनमाहेन्द्रमहाद्यवसरेषु सः । निनाय योधान् सन्नद्धानन्योन्यं प्रधनैर्धनं ।
स नाभूदुत्सवः कश्चित्तदा यत्र नृपाङ्गने । भूमिर्न सिक्ता रक्तेन हाहाकारो न चोद्ययौ ।
नृत्यन्त इव निर्याता गृहेभ्यो वंशशोभिनः । बांधवैर्निन्यिरे योधा लूनाङ्गाः पार्थिवाङ्गनात् ।
स्निग्धश्यामकचाश्चारुश्मश्रूनाकल्पशोभिनः । हतान् वीक्ष्य भटान् राजा मुमुदे न च विव्यथे ।
भार्य्या राजगृहं गत्वा प्रत्यायातेषु भर्त्तृषु । मेनिरे दिवसं लब्धमनास्था नित्यमन्यथा ।
भवेत्तद्यदहं कुर्य्यामित्यहंक्रियया वदन् । साचिव्यमथाहनवालैस्तैर्भृत्यैरजिग्रहत् ।
प्रवर्द्धमानांस्तानेव विदुषः कनुपाश्रयः । हृताधिकारान् विदधे वञ्चयन् विमानितान् ।
दंशकः कम्पनाधीशः सङ्ग्रहे तत्र सक्रुधि । विद्रुतो विषलाटायां निपत्य निहतः खशैः ।
तेन स्ववर्द्धितो द्वाराधीश्वरो रक्ककाभिधः । हृताधिकारो विदधे विभूतिं वीक्ष्य भूयसीं ।
माणिक्यसैन्यपतिना द्वारेऽकस्मान्निवारिते । खिन्नेन विजयक्षेत्रे चक्रे वृत्तपरिग्रहः ।
कम्पनाद्यधिकारस्थाः सवीरा तिलकादयः । काकवंशादिमन्त्रिले न तत्कोपेन भाविताः ।
भोगसेनो निरनुग. चोणवासोऽभवत्ततः । तेनातिसेवाप्रीतेन राजस्थानाधिकारभाक् ।
यस्येन्द्रद्वादशीयुद्धे मान्द्रसैन्योऽपि विद्रुतः । चुद्रवङ्गगचन्द्रोऽपि रौद्रमालोक्य विक्रमं ।
येऽपि मल्लाभिधानस्य पुत्राः सामान्यशस्त्रिणः । तान् मल्लच्छुड्डव्यड्डाससमन्त्रिणः समपादयत् ।
पुत्रौ विजयसिंहस्य तत्सैरात्यकदुर्दृशौ । तिलकौ जनकश्चास्तामसमात्यश्रेणिमध्यगौ ।
यसेलाभायराणादिमुख्या द्वारादिनायकाः । कस्तान् समर्थः सङ्ख्यातुं तङित्तरलसम्पदः ।
द्विचाः प्रशस्तकलशादयः पूर्वं तदन्तरे । प्रापुर्वालद्रुमान्तस्थजीर्णानोकहविभ्रमं ।
कन्दर्पः क्ष्माभुजा दूतैः समानीतोऽपि नाददे । तस्यासहनतां वीक्ष्य प्रार्थितोऽप्यधिकारितां ।
आम्नानाचारसंलापव्यवहारादिमण्डले । नवमेवाभवत् सर्वं तस्मिन्नभिनवे नृपे ।
लक्ष्मीः कार्म्मणचूर्णाद्ध वेश्यायाविशवर्त्तिनः । धीरानपि विधायेयं करोत्युन्मार्गवर्त्तिनः ।
सपिण्डानामपि व्यक्तशृङ्खलवीचणतत्परा । प्रसतेव नरेन्द्रश्रीर्जातिस्नेहापकारिणी ।
समस्तसम्पत्पूर्णोऽपि यस्मात् सुस्सलभूपतिः । दध्यौ भ्रातुरवस्कन्दं राज्यापहरणोद्यतः ।
अकस्मादग्रणीश्येनमिव तं शीघ्रपातिनं । स्यानं वराहवार्त्ताख्यमुपेत्यायातमग्रजः ।
चिप्रकारी विनिर्गत्य तमप्राप्तपदं ततः । निपत्य सैन्यैर्नड्वले सोऽपकारमकारयत् ।
विद्रुतस्यास्पदे तस्य नानोपकरणैस्तुतैः । ताम्बूलवेत्राकूटैश्च सामिग्री समभाव्यत ।
कृतकार्य्यः पराहत्यासावरूढोऽपि पार्थिवः । प्रत्याहन्तं तमग्रणीर्नीदन्यद्युः क्रूरविक्रमं ।
गर्गचन्द्रस्तदादेशाद्गत्वा वहुसैनिकः । चक्रे सुस्सलभूपालवलनिर्दलनं ततः ।

असह्यैः सोस्सलैर्योधैराहवायामनिस्सदैः। कान्तिर्विमानोद्यानेषु सुनारीणाममुच्यत।
भर्तुः प्रसादस्यानृण्यं प्राणैर्युधि समर्पितैः। राजपुत्रौ गतौ तत्र सहदेवयुधिष्ठिरौ।
वराश्वान् सुस्सलानीकान् गगगत्तान् प्राप विद्रुतान्। चक्रे भूरितुरङ्गस्य यैर्भूपस्यापि कौतुकं।
निविष्टकटकं तं स श्रुत्वा सेल्यपुराध्वना। क्रमराज्योन्मुखं यातुं द्रुतमन्वसरन्नृपः।
अन्विष्यमाणसरणिः प्रयत्नादग्रजन्मना। प्रविवेश दरद्देशं परिमेयपरिच्छदः।
दत्तमार्गं तस्य राजा डामरं लोष्टकाभिधं। स सेल्यपुरजं हत्वा नगरं प्राविशत्ततः।
तस्मिन् दूरं गते वैरे कलुषोऽपि स नाददे। भ्रातृस्नेहैरसंरम्भं ग्रहीतुं लोहरं गिरिं।
कह्णः कालिन्दराधीशो दौहित्री पुत्रवद्गृही। यामवर्द्धयत स्नेहादपुत्त्रः पितृवर्जितां।
राज्ञो विजयपालस्य सुतां सुस्सलभूपतिः। उपयेमे स तां श्रीमाननघां मेघमञ्जरीं।
तस्य प्रभावाधिष्ठानाच्छिबिरेऽपि न लोहरे। शक्तिरासीत् विरुद्धानामपि बाधाय वैरिणां।
धीरः सुस्सलदेवोऽपि मार्गैर्निर्गत्य दुर्गमैः। आसदद्भूरिभिर्मासैः स्वोर्व्वीं दुर्गैरिवर्त्मना।
प्रशान्ते व्यसने तस्मिन् धीरस्योच्चलभूपतेः। अन्येऽपि व्यसनाभासा उत्पन्नध्वंसिनोऽभवन्।
भीमादेवः समुत्थाय भोजह्लणदेवजं। साहायकार्थमानिन्ये दरद्राजं जगद्दलं।
सह्लोहर्षमहीभर्तुरवरुद्धात्मजोऽभवत्। भ्राता दर्शनपालस्य सज्जपालस्तु तद्दलं।
नीतिज्ञेन ततो राज्ञा सार्थेन दरदीश्वरः। आक्षेपात् पारितप्रायात्प्रत्याहृत्य निजां भुवं।
सह्लसन्ननाच्छन्नं भोजोऽविचलमण्डलं। भेजे सुस्सलदेवभ्या सज्जपालानुजीवितां।
गृहीतार्थेन स्तेयेन निजेनैव प्रदर्शितः। भोजः चिरं नृपात्प्राप निग्रहं तस्करोचितं।
देवेश्वरात्मजः पित्थकोऽपि वैराज्यलालसः। डामराना श्रिते राज्ञि निर्याते व्यद्रवद्द्विशः।
विचारपरिहारेण धावन्तः सर्व्वतो जडाः। तिर्य्यञ्च इव हास्याय प्रसिद्धशरणा जनाः।
मल्लस्य रामलाख्योऽहं सूनुरासं दिगन्तरे। अर्द्धसूदः कश्चिदेवं चक्रिकाचतुरो वदन्।
निन्ये प्रवृद्धिं व्यामूढैर्वक्रभिर्विश्वविप्रियैः। धनमानादिदानेन भूमिपैर्भूम्यनन्तरः।
ग्रीष्मे प्रविष्टः कश्मीरानेकाकी घर्मपीडितः। व्यधीयत छिन्ननासः परिज्ञाय नृपानुगैः।
कटके पर्यटन्नाशः स एष दृदृशे पुनः। स्वजात्युचितभल्लादिविक्रयी सस्मितं जनैः।
मिथ्यैव नीतिकौटिल्यैः क्रियतेऽभ्युदयश्रमः। शक्यतेऽपरथा कर्त्तुं न दैवस्य मनीषितं।
शान्तापि ज्वलति क्वापि क्वचिद्दीप्तापि शाम्यति। दैववातवशाच्छक्तिः पुंसः कक्षाग्निसन्निभा।
पलायने नापयाति नियता भवितव्यता। देहिनां पुच्छसंलीना वह्निज्वालेव पक्षिणः।
नान्विष्यवक्रविषयश्वशरप्रयोगैर्न श्वभ्रपातरभसेन नचाभिचारैः।
यस्य निरन्तुमपरैः विधुरैरकाण्डे भोक्तव्यभोगनियतोत्क्रमितस्य जन्तोः।
भिक्षाचरः समादिष्टवधो जयमतीगृहात्। मक्कं मध्यभुवं निन्ये वधकैः पार्थिवाज्ञया।
पार्श्वे प्रक्षेप्य निशितो विलम्बायां समीरणैः। चित्रमृटान्तरे स्पन्दमानश्च स्वपालुना।

द्विजेनैकेन सम्प्राप्तश्रिया दुर्गतचेतनः। आसमत्यभिधानायाः धात्रिर्दद्देति गौरवात्।
सा हि पुत्रीति ख्यातायादत्तश्चतुरया तया। नीतो देशान्तरं गूढं ववृधे दक्षिणापथे।
स कृतप्रत्यभिज्ञोऽथ पुत्रवन्नरवर्म्मणा। मालवेन्द्रेण शास्त्रास्त्रविद्याभ्यासमकार्य्यत।
अन्यदीयं घातयित्वा तत्तुल्यवयसं शिशुं। रक्षितो जयमत्यैव स किलेत्यपरेऽब्रुवन्।
देशान्तरागताद्दूतात्तद्वार्त्तामुपलब्धवान्। अतएवाभवत्तस्यां भूभृद्विरचितादरः।
बहिरप्रतिभिन्दंस्तस्य धीरो मार्गवर्त्तिभिः। चक्रे तदप्रकाशाय सम्बन्धं पार्थिवैः समं।
ईर्ष्यामगोपयन्नार्य्याः शङ्कामाच्छादयन्नृपः। स्वयमन्याभिगम्यत्वं करोति हि जडो जनः।
भिक्षाचरे हते बालं कञ्चिदादाय तत्समं। तन्नाम्ना ख्यातिमनयद्दिद्देवेत्यपरेऽब्रुवन्।
तथैवैषोऽस्तु मिथ्या वा प्रतिष्ठां तां तथाप्तवान्। यथा लघुत्वमानेतुं न दैवेनाप्यशक्यत।
स्वप्नेन्द्रजालमायानामपि निर्विषया इमाः। कर्म्मवैचित्र्यजनिताः काश्चिदाश्चर्य्यविप्रुषः।
सराजबीजी नाशाय विशां गूढं व्यवर्द्धत। पुरग्रामादिदाहाय कक्षान्तरिव पावकः।
रोहत्यन्तिकसीमनि प्रतिविषा वीरुद्विषक्ष्मारुहः काले प्रावृडुपद्रुताच्छसलिले मूर्च्छत्यगस्त्योदयः।
सर्गच्छेदविधिक्षमानुदयतो दृष्ट्वा किलोपद्रवान् सन्धत्ते प्रतिकारकल्पनमहो दीर्घावलोकी विधिः।
अजायत विपन्मज्जज्जगदुद्धरणक्षमः। तस्मिन्नेव क्षणे यस्मात्सुस्सलक्ष्मापतेः सुतः।
तज्जन्मकालादारभ्य सर्व्वतो जयमर्ज्जयन्। नामान्वर्थं नृपस्तस्य जयसिंह इति व्यधात्।
शास्तुः सर्व्वार्थसिद्धाख्यां यथा सर्व्वार्थसिद्धिभिः। तथा तस्याभिधान्वर्था नात्यजद्रूढिमन्दतां।
मुद्रां तां कुङ्कुमस्याङ्घ्रेस्तदीयस्याभ्युपागतां। विलोक्योच्छलदेवोऽभूद्विमन्युर्भ्रातरं प्रति।
बालस्यैवाङ्घ्रिमुद्रास्य वैरं पितृपितृव्ययोः। निवारयन्ती विदधे सुस्थितं मण्डलद्वयं।
स स्वर्गिणः पितुर्नाम्ना ततः सुकृतसिद्धये। चकारोच्छलभूपालः पैतृके स्थण्डिले मठं।
गोभूमिहेमवस्त्रान्नदाता तस्मिन्महोत्सवे। आश्चर्य्यकल्पवृक्षत्वं त्यागी सर्व्वार्थिनामगात्।
प्रसादैः प्रहितैस्तेन महार्घैः श्लाघ्यसम्पदा। महान्तोऽपि दिगन्तेषु पार्थिवा विस्मयं ययुः।
भर्त्तुः प्रमादाधिगतां श्रियं नेतुं परार्थतां। विहारं समठं देवी जयमत्यपि निर्ममे।
केषाञ्चित्पूर्व्वपुण्यानां विरहेण महीभुजः। सुताभीष्टाभिधानाभून्मठे नवमठाख्यया।
खल्लां स्वमारमुद्दिश्य परस्मिन् स्थण्डिले पितुः। विहारोऽपि कृतस्तेन नोचितां ख्यातिमाययौ।
मृत्योर्हेलकपातित्वं तस्याः कलयता किल। स निष्ठां स्वप्रतिष्ठासु सम्प्रपेदे व्ययस्थितिः।
कदाचित् क्रमराज्यस्थो दृष्टमग्निं स्वयंभुवं। ययौ वर्हणचक्राख्यं गिरिग्रामं स भूपतिः।
तद्भस्वेतश्वरग्रामाध्वना यातुमवेष्टयन्। अकस्मादेत्य तत्रत्याश्चौराश्चाण्डालवर्म्मिणः।
प्रजिहीर्षुभिरप्याप्य तस्मिन्नत्यल्पसैनिके। न तैः प्रहृतमह्योजोवष्टम्भस्तम्भितायुधैः।
अथ हारितमार्गः स गहने गिरिगह्वरे। भ्रमन्नल्पानुयाय्येकां क्षणदामत्यवाहयत्।
उच्चचार क्षणे तस्मिन् स्कन्दावारेषु दःखदा। न चिरं भ्रातर्दुर्वार्त्ता सर्व्वतः क्षोभकारिणी।

कटकाग्निः सुतात्यल्पा वात्येव गिरिगह्वरात्। सा दुष्प्रवृत्तिदीर्घत्वं पुरेऽरण्यइवासदत्।
नगराधिकृतस्तस्मिन् क्षणे छुड्डाभिधोऽभवत्। सस्त्रिणः कामदेवस्य कुल्योरड्डादिसोदरः।
कृत्वा पुरक्षोभशान्तिं सश्लाघैस्स नृपास्पदे। प्रविश्य भ्रातृभिः सार्द्धं कार्य्यशेषमचिन्तयन्।
नृपं कं कुर्म इत्येवं तान् विचिन्तयतोऽब्रवीत्। सड्डाभिधोऽपि कायस्थः कुटुम्बिकुटिलाशयः।
यूयमेव सुहृद्बन्धुभृत्यवाञ्छल्यदुर्जयाः। राज्यं कुरुत सम्प्राप्य राष्ट्रमेवमकण्टकं।
तेनैवमुक्तास्ते पापाजातराज्यस्पृहास्ततः। सिंहासनाधिरोहाय चिप्रमासन् समुद्यताः।
श्रीयशस्करदेवस्य वंश्यायत इति श्रुतिः। तदन्वयेऽभूत्सर्व्वेषां राज्योत्सुक्यप्रदायिनी।
अतएवाभजत्क्रोधं तेषां कुसुहृदुक्तिभिः। सा वासनान्तःसंलीना सदाचारानपेक्षिणां।
कथं वः प्रतिभात्येषां सड्डस्यापि कुपद्धतिः। भारिकस्य कुले जातो लवटस्य हि सोऽधमः।
क्षेमदेवाभिधानस्य पुत्रोऽप्यल्पनियोगिनः। क्रूराशयत्वमभजन्महासाहसिकोचितं।
चौर्य्येण स्वर्णभृङ्गारं हृतवान् भूपतेर्गृहात्। सम्भावितोऽपि गाम्भीर्य्यान्नाज्ञाय स किलेङ्गितैः।
सामिधेनुर्निरुष्णीषे विहसन्नखिलान् स्मयन्। राजपुत्रइवात्यल्पं स त्रैलोक्यममन्यत।
तस्य चिन्ता काचिदासीत् सदा दोलायतोऽङ्गुलीः। या राज्यहेतुकूरेण फलेन समभाव्यत।
तद्गिरा निजसङ्कल्पादपि ते राज्यलालसाः। नृपं जीवन्तमाकर्ण्य ततोऽभूवन् हतस्पृहाः।
न स्फुरन्न च संमीलन्नवा सुप्त इवानिशं। तेषां चेतसि सङ्कल्पस्तदाप्रभृति सोऽभवत्।
असुस्थिरादरेणाथ शनकैः पृथिवीभुजा। निन्यिरे मध्यमां वृत्तिं राजस्थानान्निवार्य्य ते।
प्रकृत्या रूढवाधाजा सर्व्वेषामेव सर्व्वदा। तेषामथकरोद्दत्तान्तेरमर्मस्पृशः कथाः।
ते राज्ये हर्षभूभर्तुः पितरि प्रभयं गते। मातुस्तारुण्यमत्ताया विधवाया गृहेऽवसन्।
तैर्मेघावत्तको नाम ग्रस्तभृत्यातिवेश्मिकः। सुहृद्भूतोऽथ विश्वस्तो जननीजारशङ्कया।
असतीमपि किं नैते न्यस्यन्निति भूपतिः। विचार्य्य कोपात्तन्मातुर्नामच्छेदमकारयत्।
तां कथां स नृपस्तेषां परोक्षमुद्घोषयत्। क पुत्र्याच्छिन्ननासाया वर्द्धन्त्यन्वियेव च।
इष्टह्मादिगन्धेशं कृत्वा कार्य्याण्यवारयत्। स कायस्थ. कृतान्तत्वं भजन् सड्डमपि प्रभुः।
पीडितस्तेन रौद्रेण निजोऽथ गणनापति.। कोशोत्पत्त्यपहर्त्तारं तं नृपाय न्यवेदयत्।
प्रवेशभागिकपदे स्थिते राज्ञा हृते ततः। स क्रूरोरड्डकुड्डादीन् प्रेरयत् पूर्व्वचिन्तिते।
जिघांसवस्ते नृपतिं प्रमङ्गप्रेक्षिणः परैः। समगंसत दुष्प्रशैरय हर्षरथादिभिः।
प्रजिहीर्षुभिरुद्धीशं पीतकोशैः समेत्य तैः। चतुष्पञ्चानि वर्षाणि नावाप्यन्नमरः क्वचित्।
पञ्चभिर्बहुधा भिन्नैर्भङ्गकालं विचिन्तितः। स भेदमगमत्मन्त्र सचित्तं लोकदुष्कृतः।
नवैतां कुरुते सन्धनृपो सर्व्वस्यां .कथां। इति प्रत्येकमुक्ता ते विरागं पार्थिवे ऽभजन्।
नेत्रः पार्श्वशठादि गूढैर्मर्मभिरायधे.। सच्छाद्य पार्थिवोऽजस्र तनुमस्ते जिघांसुभिः।
यथथो विरुद्धं सोढुं यां प्रसादयितुं न क्षमः। राजापि सन्दधे चेष्टां स्मरन्प्राकृतपुमान्कृत।

स्वभाववैपरीत्येन नाशचिह्नेन स स्थिरां। जयमत्या महाप्रीतिं तदादाद्वत्सरद्वयं।
रक्षां भिक्षाचरस्याऽऽनिमित्तं तत्र केचन। केचित्तु विद्युल्लद्दृशीं प्रेम्णां तरलवृत्तितां।
अथ वर्तुलभ्रभर्तुरात्मजा विम्मलाभिधा। कृतपाणिग्रहाऽस्यागादाज्ञभ्यं वसुधाभुजः। १९०
सङ्ग्रामपाले नृपतौ तस्मिन्निर्मिर्रे हृते। तत्सूनुः सोमपालाख्यः पितृराज्यं समादधे।
राज्यार्धमग्रजं वद्ध्वा सोऽभ्यषिच्यत चाक्रिकैः। इति कोपान्नरेन्द्रोऽभूत् क्रुध्यन् राजपुरीं प्रति।
लक्ष्मीस्थैर्य्यप्रतिभुवः पुत्र्याः पाणिमजिग्रहत्। तं प्रेष्ठं सर्व्वलोकानां श्रेष्ठं सर्व्वक्षमाभुजां।
अर्थिचिन्तामणेस्तस्य प्रीणतो निखिलाः प्रजाः। नानाव्ययोर्जितो रेजे पश्चिमः स महोत्सवः।
याते जामातरि क्ष्माभृच्चक्रे निखिलतन्त्रिणः। निर्वृत्तीन् किमपि क्रुध्यन् दुष्प्रवृत्तं व्यसर्जयत्। १९५
भोगसेनोऽपि भूपेन काले तस्मिन् समन्युना। निवारितो दारकार्य्यात्स्वैरः समपद्यत।
विक्रान्तः स हि कार्य्यस्थोनिर्जितः खिल डामरः। सुस्सलक्ष्मापतिं जेतुं प्रतस्थे लोहरं पुरा।
वात्सल्यमिश्रवैरेण वारितोऽथ महीभुजा। तत्परीवादमकरोच्छुक्रोधावेत्य तत्र सः।
प्रावेशयत् रुड्डकड्डमुखान् स समया ततः। तमादिसुव्वदं वीरं तदा राज्ञा विमानितं।
विमानिताविशालेच्छाः संहता हतवृत्तयः। न ते वहिष्कृतास्तेन यमराष्ट्रं जिगीषया। २००
तान् भोगसेनवित्र्यस्तसद्भावान् कुटिलाशयः। सड्डो निनिन्द वीरत्वात्तज्जानन् सरलान्तरं।
ऊचे चाद्यैव हित्वापि प्राणान् व्यापद्यतां नृपः। भोगसेनोऽन्यथा भेदं कुर्य्यादगहनाशयः।
अन्यथाभूच्च सड्डाकं भोगसेने यदब्रवीत्। कञ्चिद्ब्रूहि द्रोहोऽस्ति वक्रेति नृपतिं भेदलालसः।
स तु किं दक्षिणद्वारं तव दद्यामिति ब्रुवन्। दुष्प्रभुपक्षप्रणयं निन्ये तमवमानयन्।
प्रबोधाधायिनो दृष्टिं नियतिप्रणयी भवन्। तापात्ययाद्दनिद्रान्तइव जन्तुर्गतस्मृतिः। २०५
तत्क्षणो यामिका भूत्वा स्वस्मिन्द्वारे ततोऽविशन्। ते राजधानीं सन्नद्धैः स्वसैन्यैः सह संहताः।
यामिन्यां यं वयं छन्नस्तं हतेत्यभिधाय च। प्रावेशयन् न्यस्तचिह्नांश्चण्डालान्मण्डपान्तरं।
भुक्तोत्तरं स्थिते राज्ञि ते वाह्ये मण्डपे स्थिताः। सरोषनृपदत्युक्ता सेवकोऽस्मारणं व्यधुः।
राजा च विज्जलाविम्स यियासुर्मण्डपान्तरात्। दीपिकाभिःकृतालोको निर्ययौ मदनालयः
मध्यमं मण्डपं तस्मिन् प्राप्ते स्वल्पैः सहानुगैः। तत्यक्तं मण्डपं सड्डो रुद्धान्यानरुणाल्लमान्। २१०
अन्यैरप्यपिमे द्वारे निरुद्धे सर्व्वएव ते। जिघांसवः समुत्थाय नृपतिं पर्य्यवारयन्।
विक्षिप्तदिष्टादेकेन रुद्धमध्ये निर्वेदुपा। तं द्विजोदोर्घवत्तेजाः शस्त्र्या क्षुरकेषाऽभिनत्।
ततः काञ्चनगौराणि तस्याङ्गान्यसिधेनवः। वह्नयः सुमेरुश्रृङ्गाणि महोरग्यइवाविशन्।
स द्रोही द्रोहदत्युक्ता केशान् छृष्टान्विमोचयन्। क्रोडामस्त्र्या कर्णां रुद्रमुष्टिं दन्तैर्व्यपाटयत्।
सुजनाकरनामा हि भृत्यः कट्टारकं वहन्। तस्यान्तिकात्पलायिष्ट प्रहरत्सु विरोधिषु। २१५
घनो वामोषितां लघ्वीं छुरिकां स चकर्ष तां। मुष्टावर्गमिता कोशात् सा कण्ठेन विनिर्ययौ।

निर्यातान्त्रः शत्रुभिस्तैस्त्यक्तकोपो बबन्ध तं । धम्मिल्लमथ तां शस्त्रीं जानुद्वन्द्वान्तरर्पयन् ।
न हित्वा प्रहरंस्तेजस्तादृग्वीर्योऽपि सोऽभवत् । येन क्षितौ निपतितः सर्वमर्मस्विवाहतः ।
अभिनच्च ततो रड्डं प्रहरन्तश्च पृष्ठतः । नदन् सिंह इव व्यड्डं परिरभ्य व्यदारयत् ।
अन्यश्च शस्त्रिणं कश्चित्स्वर्वमोणमपातयत् । विचेष्टमानो यः प्राणैरचिरेण व्ययुज्यत । २१०
इत्यन्तरे प्रवाहाय तस्मिन्धावति मण्डपः । रचिभिर्भूमिपालोऽयमित्यबद्धा कपाटितः ।
द्वारमन्यत् प्रसर्पन् स क्व प्रयासीति जल्पता । च्छुड्डेन रुद्धमार्गेण खड्गपातैरहन्यत ।
भोगसेनं ततोऽपश्यत् द्वारस्थान्ते समुत्थितं । दारुहलिकया भित्तिमालिखन्तं पराङ्मुखं ।
भोगसेने चमे कस्मादमुं त्वमिति वादिनं । सोऽप्यर्क किमपि ह्रीतः प्रधावन्तं जगाद तं ।
रथ्यावट्टाभिधो दीपधरस्तिष्ठन्निरायुधः । अयोदीपिकयारब्धयुद्धस्तैर्भिन्नतोऽपतत् । २१५
चाम्पेयः सोमपालाख्यराजपुत्रः चताहितः । प्रहारैः प्राप्तवैक्लव्यो न ग्राह्याचारतामगात् ।
पुत्रः श्रीशूरपालस्य राजकापथ्यमल्लकः । विद्द्रो गेत्र संच्छाद्य शस्त्री पुच्छच्छटोपमां ।
ततः प्रधावन् प्रग्रीवमारुरुक्षु क्षितीश्वरः । निकृत्तजानुखण्डस्तैरालिलिङ्ग वसुन्धरां ।
तत्पृष्ठे स्वं क्षिपन्देहं प्रहारैर्जर्जरीकृतं । शृङ्गारनामा कायस्थो निर्द्रोहो वारितोऽरिभिः ।
पुनरुत्थातुकामस्य मूर्ध्नि शस्त्रावलीढ्विषः । न्यपातयंस्तस्य कान्त्या नीलाब्जवरणस्रजं । २२०
तिष्ठेत्कदाचिद्धूर्तोऽयमविपन्नो विपन्नवन् । कन्धरामधमः सङ्गस्तथेति स्वयमच्छिनत् ।
हृतं पदापहरणं यस्य सोऽहमिति ब्रुवन् । च्छित्वाङ्गुलीयकर्धापि रत्नाढ्यामुक्तिकावलीं ।
एकपादस्थितोपानत्समस्तमाल्यैः शिरोरुहैः । च्छन्नवक्त्रः स ददृशे सुप्तोदीर्घभुजः क्षितौ ।
पर्याप्तयाम्य पर्यन्ते वीरवृत्त्या महौजसः । निर्दोषनामीपदगान्निस्त्रिंशत्वं जनान् प्रति ।
सेवकः शूरजोनाम पूत्कुर्वन् द्रोहमुच्चकैः । निर्गत्य भोगसेनेन वहिः क्रोधान्निपातितः । २२५
प्रस्थितो दयितावासं स दिव्यो इवमादिव । पन्थानं पृथिवीनाथः कान्त्या जग्राह वेश्मनि ।
राज्योद्याने नृपतिमधुपा भोगिकिञ्जल्कलोलायैतोनानायशनकुसुमश्रेणिभिः प्रीणयन्तः ।
ता धिग्दैवानिलतरलया पात्यमाना नियत्या वल्लेयेन किमपि सहसा दृष्टनष्टा भवन्ति ।
निर्धन्यस्त्रिजगाच्छ्री परिभवं लङ्केश्वरो लब्धवान् प्रापोग्रपनृपोत्तमः कुरुपतिः पादाहतिं मूर्द्धनि ।
इत्थं ते वहमानचक्रपरिभवः सर्वस्य सामान्यतस्तत्को नाम भवेन्महानहमिति ध्यायन् धृताहङ्कृतिः ।
परामृष्टदिनैस्त्वं तु गममायमिव प्रभुं । मग्नं कृतान्तमात्मकं तु स्वच्छचयाहिणोऽमयन् ।
भुग्नो कण्ठे स्यदोलिकः कराभ्यां चरणौ परः । तं भुग्नग्रीवमालोलकुन्तलं रुधिरोचितं । २३०
वधू वाहनं मग्नममायमिव पार्थिवं । राजधान्या विनिष्कृष्टं न्यधत्तां पितृकानने ।
गराहर्गिहिमणाव्यसवेहदीनमनने । श्मशाने वह्निसंस्कारं ते भूतायस्य चक्रिरे ।
न हतो नाभि निदेशः स के नापि च्येनावन । उद्योयैव गतस्तस्माद्भ भेषमिम्बिपयोऽभवत् ।
हतीनेन चर्वर्वहवमारिंहनमादुपा । घरामीत्यन्दे पीपच्छ प्रकापचां चपुस्यत ।

चक्रेऽथ मासिकवचोरङ्गः शोणितमंडितः। श्मशानाश्मनि वेतालइव सिंहासने पदं। ५४५
तस्यावरोहतः सिंहासनाद्योद्धुं पुरोयुधि। विक्रामन्तो बन्धुभृत्या युद्धभूमिमभूषयन्।
तन्त्रिणौ बट्टपट्टाख्यौ युद्धा तद्वान्धवौ चिरं। योधाश्च कट्टसूर्य्याद्याः सिंहद्वारेऽपतन् हताः।
रणरङ्गनटोनृत्यन्निव राजा श्टहाङ्गने। मखड्गाखेटकोरङ्गः खंडयन्नहितान् बभौ।
दिशन् विजयसन्देहमहितानां चणे चणे। प्रहारैः सुबहून् भित्वा स चिरेणापतद्रणे।
राजद्रोहोचितं तस्य निहतस्यापि निग्रहं। वैश्मत्यक्रमर्थ्योद्दो गर्गः कोपादकारयत्। ५५०
दिद्दामठान्तिकोव्यङ्ग. पौरैर्भस्माश्मवर्षिभिः। अवस्करप्रणालान्तर्मग्नवक्त्रो न्यपात्यत।
ते शुल्फदामभिः क्लिष्टाः स्थाने स्थाने प्रभुद्रुहः। तत्क्षणं लोकथूत्कारपूजाकृत्योचितां दधुः।
पलाय्य प्रययुः क्वापि सङ्गहंसरथादय.। मरणाभ्यधिकां कश्चित्कालं सोढुं विपद्ममयां।
दृष्ट्वा पराजितं गर्गे नष्टे तदनुजे विदन्। भोगसेनोऽथ तां वार्त्तामश्टणोत्प्रलयोपमां।
व्यावृत्य प्रत्यवस्थातुकामः पश्यन् पलायिनः। योधान् स्वैः सहितः कैश्चित्ततः क्वापि भयादगात्। ५५५
इत्थं निहतविध्वस्तनायका द्रोग्धृसंहतिः। स्वदोर्मात्रसहायेन गर्गचन्द्रेण सा कृता।
सत्वं साहससिद्धिश्च नेतिहासेष्वपि क्वचित्। अश्रौषन्तादृशं यादृक्तस्यास्ते स्म प्रतापिनः।
निशाप्रहरमव्यत्र राज्यं कृत्वा स लब्धवान्। द्रोहकृच्छ्ं खराजाख्यां गतिं कुकृतिनामगात्।
यशस्करकुले जन्म द्रोग्धृभिस्तैः प्रमाणितं। चणभङ्गभजद्राज्यं यस्मादर्णटदेववत्।
दावोद्दीपनकूटयन्त्रघटनैः सिंहादिसंहारिणो यान्त्याकस्मिकगण्डशैलपतनैरन्तं किरातावने।
एकैनैव ननु प्रधावति जनः सर्व्वोऽपि मृत्योः पथा हन्ता हन्ति हतोऽयमेष तु हृथा कालस्य भेदग्रहः। ५६०
खाद्वाहे ललनौघमङ्गलरवो यैर्हर्षुलैः श्रूयते दीनैस्तैर्दयिताविलाप उदयन्नाकर्ण्यते तु चणे।
योऽपि प्रन्नहितं प्रहृष्यति परः स्वं प्रन्तमन्ते मुदोहृत्तं सोऽप्यवलोकयत्यहह धिङ्मोहोऽयमान्ध्यावहः।
सायं विचिन्तितो रात्रौ फलितोऽन्यत्र वासरे। दुर्व्विपाकप्रदाताभूद्द्रोग्धृणां साहसद्रुमः।
अथ सिंहासनस्यान्तः कार्थ्यान्ते त्यक्तविग्रहः। गर्गः प्रचालितामर्षश्चक्रन्द स्वामिनं चिरं।
तस्मिन् रुदति सर्व्वोऽपि पौरलोकोभयोज्झितः। संप्राप्तावसरो भूपं व्यज्ञापोल्लोकवत्सलं।
कारुण्योत्पत्तये दत्वा कोशं जीवितकामया। जयमत्या तदावादि गर्गः कपटशीलया। ५६५
कुरु मे संविदं भ्रातरिति सत्वभयस्तु सः। तत्प्रक्रियावचो ज्ञात्वा चिन्तितस्याप्यकल्पयत्।
चिकुरनिचये यत्कौटिल्यं विलोचनयोश्च या। तरलतरता यत्काठिन्यन्तथा कुचकुम्भयोः।
वसति हृदि तद्यासां पिण्डीभवन्ननु ता इमा। गहनहृदया विज्ञायन्ते न कैश्चन योषितः।
दौःशील्यमथाचरन्त्यो घातयन्त्योऽपि वल्लभान्। हेलया सविशन्त्यग्निं न स्त्रीषु प्रत्ययः क्वचित्।
युग्याधिरूढा सा यान्ती यावन्मार्गे व्यलम्बत। अयतो विज्ञता तावन्निर्गत्य प्राविशच्चितां।
अथ तस्याश्चितारोहं कुर्व्वन्त्या भूषणार्थिभिः। लुण्ठकैर्लुण्ठ्यमानाया यया गात्रेषु पत्नये। ५७०
सच्छत्रचामरे राज्ञ्या दह्यमाने विलोकयन्। लोकः सर्व्वोऽपि साक्रन्दो दग्धदृष्टिरिवाभवत्।

श्रैचित्यं तेन च तदा निन्येऽत्यन्तपवित्रतां । सर्वैर्यदर्थ्यमानोऽपि नोपाविशन्नृपासने ।
सुतमुच्चलदेवस्य बालमङ्के निधिमता । राज्येऽभिषेक्तुं ते केचित्तेनान्विष्यन्त यत्नतः ।
लोकोऽयेष्वद्य केषांश्चित्तत्त्वमालोक्य सस्मितः । भिक्षामप्यटितुं जाने नैष जानाति योग्यतां ।
राज्ञ्यां श्वेताभिधानायां मल्लराजस्य ये सुताः । सल्हणाद्यास्त्रयोऽभूवन् मध्यमे प्राक् क्षयं गते ।
ष्वन्तु ज्येष्ठकनिष्ठौ द्वौ शेषौ सल्हणलोठनौ । चनिष्टा शंखराजेन भयात्त्वमठङ्गतौ ।
निर्लज्जैर्निहतान् द्रोग्धृन् विज्ञाय मिलितैः पुनः । तव्यश्वारोहसचिवैरानीतः क्षतचाक्रिकैः ।
दृष्ट्वा राज्यार्हमप्राप्यं कश्चिज्ज्यायांस्तयोस्तदा । गर्गेण राज्ये संरम्भादभ्यषिच्यत सल्हणः ।
हा धिक् चतुर्णां यामानामन्तरेण पतिव्रथी । अहस्त्रियामे तत्रासीदृश्या या पुरुषायुषैः ।
ये सायमुच्चलनृपं प्राक्ले रक्षं सिषेविरे । मध्याह्ने सल्हणं प्रापुर्दुष्टास्ते राजसेवकाः ।
अथ सोदरकोद्दास्यः सार्द्धेऽह्नि गलिते नृपः । सुस्सलो भ्रातृमरणं श्रुत्वा उद्भ्रान्तमानसः ।
गर्गेण प्रहितो दूतः सक्रन्दं स्वं चिपन् चितौ । ततस्तं वीतसन्देहं चकारार्त्तप्रलापिनं ।
आदायान्हणवृत्तान्तपर्य्याप्तां नाशृणोत् कथां । गर्गदूताद्भ्रातृवधं स्वस्याह्वानञ्च केवलं ।
अश्रद्दधानस्तं शीघ्रमरिच्छेदं सुदुष्करं । तदाह्वानाय गर्गीयं प्राहिणोत्तञ्चलन् गृहात् ।
आक्रन्दमुखरो भूत्वा तां रात्रिमरुणोदये । कश्मीराभिमुखो यात्रामसम्भृतबलोऽप्यधात् ।
अन्योऽथ गर्गदूतस्तं पथि संगदितोऽभ्यधात् । कृत्स्नमावेद्य वृत्तान्तं नागन्तव्यमिति भुवं ।
क्षिप्रं हतेषु द्रोहेषु त्वय्यसन्निहितेऽनुजः । कृतस्तु सल्हणो राजा कृत्यमागमनेन किं ।
श्रुत्वेति गर्गसन्देशं कोपादसहनो नृपः । अप्रयाणैषिणो भृत्यान् विहस्यैवं वचोऽब्रवीत् ।
नास्माकं पैतृकं राज्यं यदि रिक्थहरोऽनुजः । यज्ज्यायसा मया चैतद्भुजाभ्यामर्जितं पुनः ।
राज्यं स्वीकुर्वतोरन्यो नादाताभूत्तदावयोः । येनाहृतमिदं पूर्वं स क्रमः क्व गतोऽध्वनः ।
इत्युक्त्वा विरतैरेव सहस्रासील्प्रयाणकैः । दूतांश्च पार्श्वे गर्गस्य स्वीकृत्यै प्राहिणोद्द्रुतम् ।
स काष्ठवाटं सम्प्राप सल्हणस्य हितैषिणा । निर्गत्य गर्गचन्द्रेण चक्रे क्रुम्भपुरे पदं ।
प्रवृत्तायां विभावर्य्यां दूतैः कृतगतागतैः । तस्याङ्गीकृतसाम्नापि गर्गो द्रोग्धाभ्यधीयत ।
कार्यमध्यगतो राजा तथापि प्राहिणोत्तदा । धात्रेयं भ्रातरं गर्गाभ्यर्णं हितहिताभिधं ।
भोगसेनः क्षणे तस्मिन्नायैया दैवमोहितः । खाशकान् विल्वबनजानभ्येत्य नृपान्तिकं ।
सोऽभ्यर्णे कर्णभृत्याख्यमश्वारोहं महीपतेः । विसृज्य गर्गं जेष्यामीत्युक्त्वाभूल्लोभनोद्यतः ।
बालापेक्षामपि त्यक्त्वा हन्तुं भ्रातृद्रुहं स तं । योग्यं प्रसङ्गमन्विष्यन्नेव लोकैरसज्जनः ।
यत्र भ्रातृद्रुहः पार्श्वे स त्वमाश्रीयसे कथं । गर्गोऽपि तमुपालेभे दूतैरित्यादि संदिशन् ।
स तु मा गात्पलाय्यायन्नमयीति विलम्बकृत् । दत्तास्कन्दः क्षपापाये तं सानुगमघातयत् ।
पतयंश्च कर्णभूतिर्वीरहत्या व्यरोचत । तस्य दैमातुरो भ्राता तेजःसेनोऽप्यनूनया ।
तेजःसेनस्तु प्रभावे नृपादेशाद्व्यवेश्यत । सरिचो चत्रराज्यस्य तनूजोऽश्वपतेरपि ।

अवष्टम्भेन भूपोऽभून्नियहावग्रहक्षमः । नयेनासितुमस्वस्थं तावदासीत्तु तद्बलं ।
पुरोगोऽपि हतः पश्चाद्योऽतीतेऽह्नि महीभुजा । स मल्लपालस्त्यागैर्ममयादायायौ हयान् ।
तेष्वायातेष्ववष्टम्भं यातं किञ्चिच्च तद्बलं । प्राप्तश्च गर्गसेनानीस्तुराष्योऽनल्पसैनिकः ।
दुधुचून् वीक्ष्य तानाशैर्नृपोऽश्वमधिरोपितः । उत्क्षिकण्ठधोर्वर्म छक्राच परिधापितः ।
गगणं शलभच्छन्नमिव कुर्वन्नथापतत् । शराशारोरिपोर्वल्गन् सर्वतोऽच्छिन्नसन्ततिः ।
ओंकारं शरभूत्कारैः कृत्वा द्रोहस्य दुःसहाः । प्राहरन्वाजकटके सर्वाम्सर्वायुधैर्द्विषः ।
हतविचतविध्वस्तसैन्यः साहसिको नृपः । वेगादपससारैको मध्यान्निर्गत्य वैरिणां ।
गर्जेत्सिन्धुरयाक्रान्तनत्युन्नतिरलङ्घयत । सवाजिना तेन सेतुर्नालङ्घ्यः पक्षिणामपि ।
मल्लपालादयोद्विजाः शेकुस्तमनुवर्त्तितुं । पृष्ठलग्नानिरुन्धन्त स्थाने स्थानेऽवरोधिनः ।
वीरानकाभिधस्थोरः स खशानान्निवेशनं । त्रिंशद्विंशैः समं भृत्यैः प्रविष्टस्तत्यजेऽरिभिः ।
निरम्बरैर्निराहारैस्तिष्ठन् कतिपयैः समं । स तत्र चिरमाक्रम्य निर्भयाद्दण्डयन् खशान् ।
क्रमेण च हिमापातदुर्लङ्घयाध्वनि सङ्कटे । अविपन्नोभाग्ययोगात्प्रययौ लोहरम्पुनः ।
पदे पदे प्राप्तमृत्युरायुःशेषेण रक्षितः । तथाप्यासील्स कस्मीरप्राप्तिमेव विचिन्तयन् ।
वराकं द्वारसैन्यग्राह्यगोहितहितं क्रुधा । विरुद्धधीर्वितस्तायां वद्ध्वापाण्डुभिमचिरत् ।
तस्मिन् प्रक्षिप्यमाणेऽप्सु चेमाख्यः खङ्गिपन् पुरः । दासोऽस्याचै पदारोहमधःपातेऽपि लब्धवान् ।
राज्यप्रदः घतारिश्च गर्गः प्राप्तोऽन्तिकन्ततः । प्राप सल्हणराजस्य सविशेषनधीमतां ।
स भूभृन्मन्त्रिविक्रान्तिहीनो राज्यमवाप्तवान् । चक्रभ्रममिवापश्यत्सर्वतो भ्रान्तमानुषः ।
न मन्त्रो न च विक्रान्तिर्न कौटिल्यं नचार्जवं । न दातृता न लुब्धत्वं तयोर्द्विकं किमप्यभूत् ।
तद्राज्ये राजधान्यन्तर्मध्याह्नेऽपि मलिम्लुचः । लोकं मुमुषुरन्याध्वसञ्चारस्य कथैव का ।
पङ्गुरप्यङ्गनाकान्तं क्रान्त्या यत्रात्यवाहयत् । पुमानप्यभवत्तत्र साध्वसाध्वन्तधीरसौ ।
यामस्य सल्हणोऽन्वियुर्भेजे तां लोठन श्रियं । साधारण्यं गतो राज्यभोगद्वयमवत्तयोः ।
पुरुषान्तरविज्ञानविहीनस्य प्रमाद्यतः । सर्वोऽपि तस्य तन्त्रस्थैर्व्यवहारो व्यहस्यत ।
श्वशुरो लोठनस्तोत्र सर्यस्तेन व्यधीयत । द्वारे तापसगोष्ठीषु योग्यो विक्रमनिष्ठुरे ।
यः सुसल्लभयोच्छेदमङ्गीकुर्वन्सदागमे । स्वमन्त्रजपजापेन सिद्धिं मल्लकणेऽभ्यधात् ।
जिह्मो गर्गाश्रया राजा तदप्रियमपातयत् । चक्रामसानं त्रितस्तायां विम्बं नीलाश्वडामरं ।
राजानुग्राहको गर्गस्तांस्तान् व्यापादयन् रिपून् । हालाहां डामरान् भूरीन् दत्तभोज्यानघातयत् ।
राज्यकिञ्चित्करे गर्गायत्तजीवितसृत्यवः । वहिर्याभ्यन्तरे चासन्नल्पे वा पृथवोऽपि वा ।
कदाचिल्लोहराद्दुर्गे प्रविष्टेऽथ नृपान्तिकं । चुक्षोभ नगरे लोकः सर्व एव भयाकुलः ।
तदा क्षुद्रचरद्वाता प्रसूतान्यारोप्य नौषु यत् । क्रुध्यन् गर्गोऽयमायातो हन्तुं सर्वाननृपाश्रितान् ।
गर्भिणीगर्भपातिन्या तादृशा भयवार्त्तया । हिताप्यहान्यप्यभावि जनैर्ज्वरद्रवाखिलैः ।

ततस्तिलकसिंहाद्यैरुद्रेकाद्द्रागदीयत। अनवेक्ष्य नृपादेशमास्कन्दो गर्गमन्दिरे।
दैशस्यात्युल्वणः क्षत्त्वा धावति स्म धृतायुधः। प्रत्यग्रहीत्तानखिलान् गर्गचन्द्रस्तु विह्वलः।
निर्लज्जा दिल्हभट्टारलक्ककाद्यास्तुरङ्गमैः। भ्राम्यन्तस्तत्रादृश्यन्त गर्गावसथवीथिषु।
निषिषेध न तान्राजा प्रत्युतास्कन्ददायिनां। लोठनं कुण्डशक्तीनान्तेषां स्फूर्त्यै व्यसर्जयत्। ४२५
तेनापि योधैर्गर्गस्य रुद्धमार्गेण मन्दिरं। न रुद्धं नापि निर्दग्धुं पारितं दत्तवह्निना।
धानुष्कैश्चैवानाम मठोशीलोठिकामठे। अबाधतैव नाराचैस्तद्योधान् घातयन् परं।
प्रकाशेन समं राजलोके विरलतां गते। सायं सानुचरो गर्गो हयारूढो विनिर्ययौ।
समरैरप्रतिहतो निनाय लोहरं व्रजन्। बद्धौजःस्वास्थ्यमस्वस्थमासीनं त्रिपुरेश्वरे।
तापसेन किमेतेनेत्युक्त्वान्यैर्मुमोच तं। तं सुस्सलेऽपि विधुरे नृपतिं नोदपाटयत्। ४३०
क्षणे क्षणेऽभवद्द्वेषस्ततःप्रभृति सर्वतः। गर्गागमनसन्त्रस्तैः पौरार्गलितमन्दिरः।
अथार्त्तस्य महीभर्त्तुर्गर्गसन्धानमिच्छतः। महत्तमः सहेलोऽभल्लोहरे दूत्यमाचरन्।
तेनाङ्गीकारितो गर्गः कथंचित्कन्यकार्पणं। भृत्यास्तु तेन सम्बन्धं नैच्छन् भूतस्य भूपतेः।
ततः सुस्सलदेवेन सह सन्धिं निबद्धवान्। पश्चात्सम्प्रार्थ्यमानोऽपि सम्बन्धं न व्यधत्त सः।
मण्डले विग्रराकुलमेवं याते नृपोऽब्रवीत्। सद्दं हंसरथं नोनरथश्चासादितांस्वरैः। ४३५
तानग्निकणस्वच्यादिप्रवेशैरिह दुर्जनः। अत्यकानस्तु भिर्घोरामवस्थामन्वभवत्।
भोगसेनाङ्गनामज्ञामनुमेने स्वयं नृपः। अनुसर्तुं पतिं च्छन्नं वसन्तीं साधु तद्व्रतात्।
तादृग्दृष्ट्वापि वैक्लव्यं गुह्नितेन तदन्तरे। प्रमिम्ये दिल्हभट्टारो रसदानेन भूभुजा।
न राजयोगी नोचण्डविक्रमो वा सभूव सः। प्रमितो गूढदण्डेन यत्तया तेन पापिना।
तं या निनिन्दानिष्पर्षपीरुषं तत्स्नुषा तदा। तस्या वह्निप्रवेशेन सिद्धं मानवतीमतं। ४४०
सोऽन्योऽपि राज्यकान्तोऽभूदेवमातङ्कदुराग्रहः। दीर्घसपादृश्यमानदीर्घदुःस्वप्नसन्निभः।
कास्त्वित् सुस्सलो गर्गादद्धमन्थिरपि भ्रमन्। न्ययुंक्त पार्श्वे सञ्जपाल काश्मीरोन्मुख्यभाक्ततः।
दारैश सह दत्तार्थो लक्ककः सल्हभूभुजा। सराहमूलं सम्प्राप कथञ्चित्सम्मितं भजन्।
गर्गः स्वरथ्यवस्कन्दं पथ्यादभ्येत्य मार्गयन्। सराहमूलेन समं तस्य सैन्यमनुण्ठयत्।
विरुद्धो स तु मद्यापेदंतेय परिषध्वजे। अदिध्यैर्मदिनी दिध्यैर्देहस्तस्तरमां गणः। ४४५
नायकैर्गमिते, प्रहृहस्तैः सदंशजेभरी। पतितैरप्यचूडाधैर्भूषिता मौक्तिकैरिव।
नागच्छता च्छिन्नभीति सञ्जपालेन लक्ककः। निराश्रयः सम्प्रपेदे पार्श्वं सुस्सलभूपतेः।
सोऽथ भूपालप्रयाने दूरं कालारिपौ गते। आजगामाम्निकं प्राप्तैः मेलितः पौरडामरैः।
पश्चि तत्र विधाच्छाभि सार्द्धं सुस्सलभूभुजा। रत्नुजा सरहण्ं प्रायात्तद्भयं सहेलकः।
सर्गहिताच्युदयं पैशेदामकैरिव मान्दिरं। प्रमिम्रियव जवर्यं सम्यं एवोपसामुगं। ४५०
रगेण सरिलो इड्डाभिधानाया सरस्मिकं। कन्दरादयमादाय परिणेतुमुपाययौ।

उपयेमे स्वयं राजा राजवत्यभिधां तयोः। गुणलेखां सुपालेन स्वीचक्रे तद्यवीयसीं।
मल्हणे सानुजेऽभ्येत्य सज्जपालेन वेष्टिते। राजापि राजसदसः सिंहद्वारं समासदत्।
साचाद्विरोधिभृत्येन द्वारमेकेन पातितं। अभ्नोघं तमप्राप्य सार्द्धं वैरिमनोरथैः।
ससैन्ये गलितद्वारराजवेश्मस्थिते रिपौ। गर्गास्कन्दविशङ्काभीचकितं सोऽस्मरं वचः।
गर्गे वितीर्णकन्येऽपि राजसैन्यमविश्वसत्। तस्थौ स्थातव्यमित्येव क्षणस्यन्देऽपि शङ्कितं।
अस्ताभिलाषिणि दिने तादृक्त्रासहते बले। स्नेहाददहति च्छापे दुर्भेदीकस्थितान्रिपून्।
प्रविश्य धामनिर्भुग्नकवाटेन तमोरिणा। द्वारं विहत्याङ्गनस्थैः सज्जपालोऽप्यहीरणं।
तस्य निश्चित्य पातङ्गी वृत्तिं भूयस्त्वरिम्रजे। अनुप्रवेशं विदधे पदा तिलकाभिधः।
दरदानयने काष्ठवाटसङ्कटविक्रमे। यस्तस्य सदृशो योधः प्रतिबिम्ब इवाभवत्।
स केशवश्च स मठाधीशस्तमनुससृतुः। शैनेयमारुतो पार्थमिव प्रार्थितसैन्धवं।
निर्गत्य मण्डपाश्मप्रहारैस्तैः कथञ्चन। विहते प्राङ्गनद्वारे धीरो राजाविशन् स्वयं।
निर्विभागे वर्तमाने सङ्गरे सैन्ययोर्द्वयोः। प्राङ्गने प्रमयं प्रापुर्भूयांसस्तत्र शस्त्रिणः।
सचिवः सल्हराजस्य पतंगग्रामजो द्विजः। आजौ प्रापाज्जको नाम स्वस्त्रीसम्भोगभागितां।
कायस्थेनापि रुद्रेण लब्ध्वा गञ्जाधिकारितां। स्वामिप्रसादः साफल्यं निन्ये त्यक्त्वा तनुं रणे।
सायं वनस्पतिर्लीने. स्वगैर्व्याचालितो यथा। धाम्नि प्रविष्टे सोड्डोननि शब्दविहगोऽभवत।
आयोधनोर्व्वी वाचाला चक्रे चित्रार्पितेव सा। तया सुस्सलभूपेन तुरङ्गस्थेन तर्जिता।
अनाहतोऽङ्गनान्त.स्थे तस्मिन् सिंहासने ध्वनिः। सुस्सलो जयनीथेव ढक्कावाद्यश्च शुश्रुवे।
मल्लराजसदृक्षे तादृग्भान्यस्याप्युदपद्यत। अगातां तत्र वैक्लव्यं यादृक् सल्हणलोठनौ।
आबद्धकवचावश्वाद्धावालिङ्ग्य सुस्सलः। सालौ युवामिति वदन् धूर्त्तोऽत्याजयदायुधं।
आदिश्य मण्डपेऽन्यस्मिन् सद्ध्योश्च स्थितिं तयोः। प्राप्तराज्यस्ततो राजा विवेशास्थानमण्डपं।
व्यहोनायतुरोमासान्भुक्तराज्यं बबन्ध तं। सितस्य सोऽष्टाशीतेऽब्दे राधस्य त्रितयेऽहनि।
तेन सिंहासने क्रान्ते भास्वतेव नभस्तले। क्षणादेवाखिलो लोकः क्षोभनिर्विवाद्यत।
विकोशशस्त्र.सन्दोहावेक्षणक्षोभितः सदा। व्याधलोके व्यात्तवक्त्रो मृगराजइवाभवत्।
भाग्यद्रुहः कुलच्छेदमप्यिश्चान्विय कुर्व्वता। न तेन नीतिनिष्ठेन रिपवोऽप्यवरोपिताः।
जनस्य वीक्ष्य दौर्जन्यमधृष्टाकारतां वहन्। स कार्य्यापेक्षयाऽप्यासीन्न क्वाप्याहितमार्दवः।
वस्तुतस्त्वार्द्रहृदयः क्रूरन्दमयितुं जनं। अवास्तवं तद्गीमत्वाङ्क्तिं व्यालइवादधे।
कालविस्र मतत्यागी प्रगल्भः प्रतिभाववान्। इङ्गितज्ञो दीर्घदृष्टिः सरवान्यो न कोऽप्यभूत्।
अधिकः कोऽपि कोऽप्यूनः कोऽपि तस्य समोगुणः। दोषोऽस्य वा पूर्वजस्य स्वभावे योऽप्यदृश्यत।
अभ्यकारि समानोऽपि कोऽपि तत्पूर्वजन्मनः। कोपेन विषमात्सर्कं तदीयेन तु मारधं।
न बभूव स वेदादौ सात्वयोऽनुचितं पुनः। स्थितिभेदमथाक्षेपे नाल्पेक्रमनुजीविना।

नैच्छत्स द्वन्द्वयुद्धादि सन्धानैर्मानिनां वधं । तस्मिन् प्रमादान्निर्व्यूढे लदीयत छत्राङ्कुरः।
वाक्पारुष्यं नृपस्यासीदाद्यस्यातङ्कदुःसहं। तस्य तु प्रणयप्रायं हिंसाद्याबाधवर्जितं।
तस्यार्थस्त्रीरुत्पादो भूयानास्ते स्म सम्पदां । त्यागो विषयकालादिनैयत्यानुमितोऽभवत्।
नवकर्मास्ववाञ्छप्रिये तस्मिन् दरिद्रतां। तत्यजुः कारवो वाजिविक्रेतारश्च दैशिकाः।
दुःसहव्यसनोत्पत्तौ जिगीषोः प्रथमैषिणः । तस्यासीदपरित्याज्यं न किञ्चिदसुवर्षिणः ।
तस्येन्द्रद्वादशीभूरिपराङ्गाङ्कदायिनः । यथा नृपस्य शुशुभे तथा नान्यस्य कस्यचित्।
यथा प्रागुच्चलो राजा सुप्रापः प्रियसेवकः । स तथा सेवकैरासीद्भूम्ना दुर्लभदर्शनः।
नोच्चलादपरस्यासीच्छ्लाघनं हयवाहने। नान्यस्य सुस्सलनृपाद्राज्यं तत्र च पप्रथे।
शममुत्पन्नमुत्पन्नं निन्ये दुर्भिक्षमुच्चलः। राज्ये सुस्सलदेवस्य न तत् स्वप्नेऽप्यदृश्यत।
किमन्यदखिलैः सोऽभूदग्रजादधिको गुणैः। त्यक्ता त्यागार्थनैःस्पृहंस्सुप्रापत्वानि केवलं।
श्रीपालैः पालको गर्गो यं राज्ये कर्तुमैहत। सहसमङ्गल्लेन निरावास्यत स क्रुधा
तस्मिन् भद्रावकाशस्थे प्रासनामा तदात्मजः। काञ्चनोत्कोचदस्यैके डामरैः सह चाकिकं।
प्रसन्धयन्नुच्चलजं पित्र्यैणार्थितं शिशुं। प्रसङ्गे तत्र गर्गोऽपि प्रातिकूल्यमदर्शयत्
प्रहितानां नरेन्द्रेण तृणानामिव शस्त्रिणां। गर्गदावाग्निदग्धानां निःसंख्यानामभूत् चयः।
गर्गश्यालोऽपि विजयः स देवसरसोद्भवः। प्रातिलोम्येन नृपतिसैन्यानां कदनं व्यधात्।
राज्यप्राप्तेर्मासमात्रे दिनैरभ्यधिके गते । तेनोत्पिञ्जेन राज्ञोऽभूदधीरस्याकुलं मनः।
सुरेश्वर्यमरेशोर्व्यांवितस्तासिन्धुसङ्गमाः। गर्गेण राजसैन्यानां हताः कदनकाङ्क्षिणः।
संग्रामे तुमुलेऽमात्यौ भट्टारकपिलो हतौ। कर्णग्रुद्रकनामानौ तन्त्रिणौ च सहोदरौ।
निहताननसुतटसमूहान्तरस्थवितान् 'तादृशानपि निष्क्रष्टुं नासीत्कस्यापि पाटवं।
हर्षमित्रः कम्पनेशो भूभर्तुर्मातुलात्मजः। विजयेन हतानेको विदधे विजयेश्वरे।
पुत्रो मल्लमराजस्य शिरोहा राजन्यंशजः। तत्र तिम्द्राकरमुखास्तन्त्रिणश्च प्रमिम्यिरे।
राजानीके सज्जपालः प्रवीरप्रवरोऽभवत्। भूरिसैन्येन गर्गेण नान्यसैन्योऽपि योजितः।
असंभ्य विजयसैन्य मल्लकाद्यैर्विसर्जितैः। धीरो राजा बलं भग्नं स्वयं गर्गाभिमुखं ययौ।
सोऽन्विष्य गर्गेण हताम् व्यधापात्री हताम् बहुम्। निरदाहयदन्येषु रसद्भोषैयितामिभिः।
बलिना भुभुजा गर्गः पीड्यमानः शनैः शनैः। ततः स्ववसतीर्दग्ध्वा फलाहाभिमुखोऽभवत्।
स तत्र रत्नवर्षाख्यं गिरिदुर्गं समाश्रितः। हताश्वोऽमुष्यैरस्यैका गुपेणारादवेष्यत।
चन्द्राह्वदेन तथापि सस्त्रपात्मेन वेष्टितः। पाणौ मरणीयके राज्ञी दर्शितायमात्मजं।
पर्णायपाखे नृपे कर्णोकेष्टअं मनकोष्टकं। विदद्धं बहुवत्याद्य गर्गोविश्रामसमाययौ।
यशोमण्डनिष्कण्ठ मेष्टेषु विजयादिषु। प्रतिमोपस्नेशो राजा विजि ममार शमैः।
ममायलोर्दशिर्न्यस्य बद्धा प्राहवलोटनौ। स कल्हवैमपासीधेरमे वैषविता नृपः।

भूयः प्रविष्टः कश्मीरान्सेव्यः सर्व्वातिशायिभिः। गर्गं प्रसादैरनयत्प्रवृद्धिमधिकाधिकैः।
योमार्कप्रतिमे तस्मिन् ह्लादिनावनुचक्रतुः। महादेवी कुमारश्च द्रुमच्छायावनानिलौ।
डामरौ देवसरसोद्भवौ विजयगोचिणौ। टहट्टिक्कस्तथा सुज्जटिक्को वेलां प्रचक्रतुः।
सानाथ्यकाङ्क्षिणौ पार्थिवेऽस्य प्रविशतः पुरः। लोकपुण्ये तस्थतुस्तौ क्रन्दद्भिः स्वानुगैः समं ५२५
विजये गर्गसम्बन्धात्सदा चिण्णो महीपतिः। सदाचारं परित्यज्य वेत्त्रिभिस्तावताडयत्।
तौ मानिनश्च तद्भृत्याः क्रुष्टशस्त्रास्ततोऽव्यधुः। साहसं सुमहत्सैन्ये प्रहरन्तो महीपतेः।
श्वपाके भोगदेवाख्ये कृपाण्या प्राहरन्नृपं। धीरो गज्जकनामा च करवालेन पृष्ठतः।
सावशेषतया भूपस्यायुषोऽमोघतां ययुः। द्विपप्रच्छतयोर्वाहतुरगौ तु व्यपद्यत।
नृपस्यान्तरयैद्धरिप्रहृतिं वाणवंशजः। निहतस्तत्र शृङ्गारसिंहः सादी समस्तकः। ५३०
सैनिकैस्तैर्टहट्टिक्कभोगदेवादयो हताः। सुज्जटिक्कस्तु निस्तीर्णो हेतुभाविनि विप्लवे।
प्रकूले व्यापादिता गज्जकाद्यो द्रोहसंश्रिताः। सन्देहितासुरित्यासीद्राजा गर्गानुकूल्यभाक्।
न भवेत्परिपातेऽपि प्रमयः समयं विना। प्रस्खलमथस्खलन् हन्ति जन्तोः प्राप्तावधेः पुनः।
ज्वालाभिरौर्व्वदहनस्य पयोधिमध्ये न म्लानतामपि हि यानि मुहुः स्पृशन्ति।
तान्येव यान्ति विलयं किल मौक्तिकानि कान्ताकुचेषु युवभावभुवोष्मणापि।
प्राक्छिवामपि विसृज्य परोत्सेकासहिष्णुना। मण्डलात्सञ्जपालाद्या निरावास्यन्त भूभुजा। ५३५
सम्बन्धी कादम्बर्यानां यशोराजाभिधस्ततः। सहस्रमङ्गलाभ्यर्णं राज्ञा निर्वासितो ययौ।
तमन्यांश्च विनिर्य्यातान् देशाद्रुक्मस्पृद्धिमान्। रैच्छल्लब्धप्रतिष्ठः स राज्ञः प्रत्यभियोगिनां।
तत्पुत्रः कान्दमार्गेण विविक्षुः क्ष्मापसैनिकैः। यशोराजे हते प्रासः प्रत्यावृत्य ययौ भयात्।
अथान्येष्वपि भृत्येषु राज्ञा निर्व्वासितेषु सः। मिलितेषु प्रथां यावत् यथावदुपलब्धवान्।
उपरागे नवे सूर्य्ये पर्व्वतीयास्त्रयो नृपाः। चाम्पेयो जासटो वज्रधरो वल्लापुराधिपः। ५४०
राजा सहजपालश्च वर्त्तुलानामधीश्वरः। युवराजौ त्रिगर्तावल्लापुरनरेन्द्रयोः।
कङ्क आनन्दराजश्च पञ्च सङ्घटिताः क्वचित्। प्रस्थानार्थं कलपणाः कुरुक्षेत्रमुपागताः।
आसमत्याहतं तावदभ्येत्य नरवर्मणः। प्रापुर्भिक्षाचरन्तेन दत्तपाथेयकाञ्चनं।
कुलकं ॥ स जासटेन सम्बन्धिस्नेहादाहितपक्षतिः। नीतोऽन्येद्युः प्रथां भूपैर्वल्लापुरनयायगौ।
देशादिनिर्गतैर्व्विश्वप्रमुखैर्व्वल्लितप्रथे। तस्मिन् प्राप्ते सहस्रस्य प्रतिष्ठा लघुतामगात्। ५४५
आत्रेयं हर्षदेवस्य क एते राज्य इत्यय। उक्त्वा त्यक्त्वा सहस्रादींस्तमेवाभिश्रियञ्जनाः।
कृतप्रभावमुत्सृज्य सम्बन्धिस्नेहमोहितः। दर्द्दको राजपुत्रस्तं राज्ञा निर्व्वासितोऽप्यगात्।
पुत्रः कुमारपालस्य तत्पितुर्भ्रातुरुच्च सः। वृद्धिं स्खलनदेवेन पुरा निन्ये हि पुत्रवत्।
प्रेरितो युवराजेन जासटेन च कन्यकं। वल्लापुरेश प्रदधौ भिक्षवेऽस्य सपत्नकः।
तद्देशठक्कुरो भूपान् सङ्घट्याखिलांस्ततः। तमैच्छद्रूपपालाख्यः कर्त्तुं पैतामहे पदे। ५५०

तां वार्तां श्रुतवान्राजा सोऽविदग्धोऽतिसंकुलः। गयपालो हतस्तावद्रोणजैः स्वद्मना वनी।
पद्मके तान् प्रतिगतो योद्धुं प्रधनमध्यग.। भिक्षाचरश्चमूधुर्य्यो दर्पकोऽपि व्यपद्यत।
तेन प्रधननाशेन ततो भिक्षाचरो ययौ। अकिञ्चित्करतां मेघद्रवावग्रहवारितः।
आषमत्यां प्रयातायां चणे पाथेयकाञ्चने। श्वशुरोऽपि ययौ तस्य शनैर्मन्दोपचारितां।
षट्पञ्चानि वर्षाणि तिष्ठन् ज्ञातृमन्दिरे। ग्रासाच्छादनमात्रं स ततं क्लेशात् समासदत्।
ठक्कुरो देवपालोऽथ चन्द्रभागातटाश्रयः। दत्वा सुतां धम्मिकाख्यां तं निनाय निजान्तिकं।
प्राप्तसौख्योऽवसंस्तत्र कञ्चित्कालं भयोज्झितः। स राजबीजो दैन्येन शैशवेन च तत्यजे।
तदन्तरे साहसिकः प्रासः साहसिकस्मर.। गतागतानि कुर्वाणः संरम्भमनयन्नृपं।
स सिद्धपथमार्गेण विविक्षुर्विमुखोन्मुख। तैरेव भृत्यैर्भूभर्तुर्बद्धा पापैः समर्पितः।
तत्रोत्पिञ्जे परं सत्वं सज्जपालस्य पप्रथे। खिन्नोऽपि द्रोहविमुखो यत्स देशान्तरं ययौ।
तस्मिन् शूरे कुलीने च किं वाच्यं स दिगन्तरे। शौर्य्येण च यशोराज. पप्रथे यत्तदद्भुतं।
अथ राजा निवास्याद्यान्सहोलादीन्महत्तमान्। सर्व्वाधिकारे विदधे कायस्थं गौरकाभिधं।
स तापसस्य सम्बन्धी कथञ्चिद्विजयेश्वरे। सेवया लोहरस्थस्य तस्य वाल्लभ्यमाययौ।
शमिते पूर्व्वकायस्थवर्गे तेन ततः क्रमात्। नीतः सर्व्वाधिकारित्वं सोऽन्यामेव स्थितिं व्यधात्।
अशेषकर्मस्थानेभ्यो वृत्तिं राजोपजीविनां। निर्व्वादकोशे भरणं तेनाकार्य्यनिशं प्रभोः।
सदित्वा पापिनस्तस्य नाज्ञायि क्रूरता जनैः। मधुरिम्णो विषस्येव शक्तिः प्राणापहारिणी।
न्यधात्क्षपणवित्तं स पूर्व्वसञ्चितनाशकृत्। विरुद्धे नृपति. कोशे हिमे हिममिवाम्बुदः।
कोशः क्षपणवित्तेन प्रविष्टेन हि दूषितः। भुज्यते भूमिपालानां तस्करैरथवारिभिः।
लोभाभ्यासेन भूपोऽपि सञ्चितं कोशमन्वहं। आस्ते स्म लोहरगिरौ संहिवन्नवसंपदः।
गौरकार्थिभिर्भ्रष्टपञ्चसाद्यैर्नियोगिभिः। विधीयते स्म निःसारा महोत्पातैरिव क्षितिः।
उच्चलन्नापतो शान्ते मूर्द्धारूढमिवोपदे। अथासंस्तं पुनर्लोकं व्याधा इव नियोगिनः।
प्रशस्तकलशस्यान्ते तद्भ्रातृतनयः परं। कायस्थकनकोनाम श्लाघ्यामकृत सम्पदं।
नानादिगन्तरायातो दुर्भिक्षपतितो जन.। येनाविच्छिन्नसत्रेण शान्तव्यापद्व्यधीयत।
मज्ञातसुचलस्यान्ते येषां तत्परीक्षणं। त एव चक्रिरे राज्ञा प्रमत्तेनाधिकारिण.।
द्वारे तिलकसिंहस्य तादृक्त्वेन व्यधीयत। राजस्थाने च जनकः कणस्यास्य सहोदरः।
प्रतापैर्नृपतेस्तोल्ले. करमाक्रान्तमण्डलः। जितात् द्वाराधिपः सोऽपि स्वीचकार रसाधिपान्।
शाकंभरस्तु तिलक. क्षमाभुजा दत्तकम्पनः। निन्ये प्रकम्पमहितान् प्रकम्पन इव द्रुमान्।
पास्त्रप्रभुता प्रेङ्गराजस्यानाधिकारिणा। नृपाः प्रतापैरहिताः सज्जकेनापि निर्जिताः।
साकंभाग्यथायातराजद्वारेण धीमता। अट्टमेत्तकम्टत्येनाप्यवापिटेन मन्त्रिताः।
एवं स्वार्हदृपां त्यक्ता गुणापेक्षेण मन्त्रिणः। कुर्व्वतोऽपाचचांसेन कदित्कालोऽव्यवाहत।

वितस्तापुलिने सोऽय कर्तुं प्रारभतात्रतं । स च श्वश्रूःस्वपत्न्याश्च नाम्ना सुरम्हद्वयं।
उत्पातवह्निना दग्धो नि.संख्यधनदायिना । तेन दिङ्गविहारोऽपि नूतनत्वमनीयत।
पुरीमट्टिलिकां जातु स प्रयातोऽन्तिकस्थिते.। आप्ते. प्रेर्यत कल्य.शैर्गर्गो च्छेदाय भूपतिः।
गार्गि. कल्याणचन्द्राख्यस्तानतिक्रम्य हि स्फुरन्। मृगयादिच्छगे तेषामक्षयामुदपादयत्।
सर्व्वार्थ्यधिकसामर्थ्यं तन्निग्राह्यं निवेद्य ते। नित्योपजपनैर्गर्गे विक्रियामनयन्नृपं।
बद्धा त्वां लोहरे भ्रष्टुदिच्छति चेप्सुमित्यय। गर्ग. ययद्धे भयेन राज्ञा चैकेन बोधितः।
तत. स ससुतस्तत्र पलाय्य स्वभुवं ययौ। दिनैर्भूपोऽपि संप्राप्तः प्रविवेश स्वमण्डलं।
अन्योन्यशङ्कया भेदं यातयोराजगर्गयोः। चाक्रिकैः कृतसञ्चारैर्वैरं प्रौढिमनीयत।
प्रयातं गर्गस्य विजयं स्वेदमेषवशंवदः। समीपात्संत्यजन्राजा पयात्तापिन पस्पृशे।
कारायां गर्गसचुर्यस्तेन पूर्वं न्यधीयत। स मल्लकोष्टकस्तस्मिन् कालेऽमुच्यत बन्धनात्।
निबन्धे येन सोऽबद्ध डामरैरपरैः समं। तद्धारयित्वा सामर्थ्यं निनाय ब लतां नृपः।
शनैर्युद्धेषु निर्याते राजसैन्येऽथ पूर्व्ववत्। गर्गेण कदनं चक्रे योधानाममरेश्वरे।
तत्र सर्व्वातिशायिन्या वीरवृत्त्या नृपाश्रितः। शमालोडामरः प्राप प्रथां पृथ्वीहरः परां।
रणे द्वारपतेर्गर्गनिर्जितस्य पलायने। शैथ्यं तिलकसिंहस्य प्राप सर्व्वोपहास्यतां।
हतशेषाः चेताः शस्त्रवस्त्रादि त्याजिता भटाः। तदीया गर्गचन्द्रेण कारुण्यात् केऽपि रचिताः।
वह्निसात्क्रियमाणेषु वीरदेहेषु सर्व्वतः। राजसैन्ये विनाशीनां गणना कापि नाभवत्।
हृष्टसैन्येन राज्ञाऽगर्गो निर्दग्धमन्दिरः। सन्त्यज्य लोहरं प्रायाद्गिरिचूडावनाभिधं।
गिरिमूलोपविष्टस्य भूपतेः सैनिकैः समं। तेषु तेऽव्यकरोन्नित्यं गिरिमार्गेषु सङ्गरं।
कूटयुद्धैर्नृपानीकं प्रतिरात्र्युपतापयन्। रणे त्रैलोक्यराजादिप्रमुखास्त्रिणोऽवधीत्।
फाल्गुणे हिमसम्भारभीमे परिमितानुग.। स धीरो रात्र्यपि रिपौ न धैर्य्येण व्ययुज्यत।
धैर्य्यवान्काकवंशस्तु तिलक कम्पनापतिः। परं शिखरिशृङ्गस्थं शक्तोऽभूत्त प्रधावितुं।
पीडितस्तेन सम्प्रेष्य स्वभार्य्यां तनयान्तिकं। निन्येऽनुकूलतां भूपं प्रसादाच्छादितक्रुधं।
गूढमन्युर्नृपः सन्धिं बद्धा प्रचलितस्तत.। तं मल्लकोष्टकं वृद्धिं निनाय न पुनः समं।
सेहेऽथ लोहरे दिचान्मामानविमर्दे नृपे। स मल्लकोटकाप्तश्चत्वर्थं नीचविमाननां।
तन्मध्ये नृपतिर्गूढं विभेदं तद्दलं नयन्। तदीयानकरोद्भृत्यान् कर्णाशीनहितात्रहान्।
स खिन्नो नीचदायादसमश्रीर्विक्रयाय तैः। प्रेरितः पार्थिवाभ्यर्णं सदारतनयोऽविशत्।
स्थानसङ्क्तः पार्श्वस्थानद्रोग्धुपरिस्थितः। अथैकदा तमाचिन्तसत्समयाजयन्नृपः।
कुर्यादास्थामतःपश्चैं कोऽन्य. पौरुषगर्व्वितः। आचिपसमये सोऽपि यत् क्लीबं भीरुवद्ययौ।
उत्खातरोपितनृप. क्व नु सोऽभिमानः कार्पण्यभागितरलोकसमा क्व वृत्तिः।
यद्वा वशं नटयति प्रकटं विधातुरिच्छेव सत्त्वगुणपंक्तिरिवात्र जन्तुं।

अकाण्डव्यवहारेषु स विपर्य्यासितेष्वभूत् । अत्रमन्नधनो गाढमप्रोत्साहान्नवमन्त्रिणः ।
सौवर्णारिष्टिकाः कृत्वा प्राद्विणात् लोहरान्तरे । काञ्चनाद्रिप्रतीकाशान् स्वर्णराशीनढौकयत् ।
अथ दण्डयितुं गर्गभृत्यान् दण्डाधिकारिणं । लहरेऽकृत गर्गस्य मन्त्रिणं गज्जकाभिधं ।
तं दण्डभीतैर्गर्गस्य सेवकैराश्रितस्ततः । विश्वस्तमवधीत् क्रुध्यन् छद्मना मल्लकोष्ठकः ।
लहरे विद्रुते राजा द्वैमातुरमयापरं । मल्लकोष्ठस्यार्जुनाख्यं बबन्ध सविधस्थितं ।
हतश्च मट्टचन्द्रस्य पुत्रं गोविन्दमप्यधी । बद्धा व्यधादिन्दकाख्यं तस्य तद्भ्रातरं हितं ।
पूर्व्ववैरं स्मरन् सूर्य्यं सपुत्रं तं परां स्तया । बबन्धानन्दचन्द्रादीनीत्युसद्व नमाचरन् ।
निर्गते लहरं मल्लकोष्टके विद्रुते ततः । आरोप्यार्ज्जुनकोष्ठं तं शूले कोपाद्व्यपादयत् ।
निवेश्य सैन्यं तत्राथ प्रविष्टस्य पुरं ययुः । डामरा निखिलास्तस्य वैरं विश्वस्तघातिनः ।
क्रुध्यन् पृथ्वीहरायापि कृतसेवाय मन्त्रिभि. । आदिष्टै. कम्पनेशाद्यैरवस्कन्दमदापयत् ।
कथञ्चित्स तु निर्म्मोणं जयन्तीविषयैकमः । यन्धोः चौराभिधानस्य प्रविवेशापवेशनं ।
दिनेऽवन्तिपुरादीनां पुराणामन्तरेण तं । व्रजन्तं विधुरं केचिन्नाशकन् बाधितुं द्विपः ।
तद्वैधुर्य्यविधानं तत्प्रगार्भहारकार्य्यभूत् । प्रमादाद्भूपतेः कुट्टवेतालोत्थापनोपमं ।
चौरोऽथ तीक्ष्णधीर्दृष्ट्व. सह पृथ्वीहरेण सः । अढौकयच्छमागामान्तरेऽष्टादश डामरान् ।
अभेद्यवर्द्धांस्तान् जेतुं निर्यातो विजयेश्वरं । न्ययुङ्क्त भूभृत्सम्भ्रान्तस्तिलकं कम्पनापतिं ।
संग्रामैः खण्डशः कुर्व्वन् स तानतुलविक्रमः । विद्रावयामास रयैः पुरोवायुरिवाम्बुदान् ।
संस्थानावसरे तस्य जित्वा यातस्य डामरान् । प्रवेशं सत्युत नृपो न प्रादादवमानकृत् ।
स भज्यमानो नगरं प्रविष्टे नृपतौ ततः । खिन्नः स्ववेश्मन्यवसत् स्वामिकार्य्ये निरुद्यमः ।
सम्प्राप्ताः समधीर्पिकां विनद्द्वैस्तत्त्रैर्निरुद्धोदया वैरे विद्विषतां कृता धुरि पदं सन्धौ वहि, स्थापिताः ।
कार्य्यान्तेऽद्भुतकर्नकोशवकृतावज्ञाविरागस्पृशः । सर्पाकीर्णमिवाशु वेश्म स्वहिषो भृत्यास्त्यजन्ति प्रभुं ।
त्यक्तकार्य्यानुसन्धाने तस्मिन् सर्व्वत्र डामराः । सभृतिं विकिरंधा निन्युः क्षपिं चयधनाद्व ।
आतङ्कोद्वेजितैर्विप्रै. कृतप्रायैः पुरे पुरे । वह्नौ कृताग्निभिर्घोरा कुकीर्तिरुदपद्यत ।
उपसर्गेण तुरगाः करभाश्च क्षयं गताः । न्यवेदयन्मण्डलस्य प्रत्यासन्नमहाभयं ।
प्रत्यासन्नाशुभा कम्पं भयेन जनता दधे । आसन्नवज्रपतना वातेनेव द्रुमावलिः ।
अथ पञ्चवताब्दस्य प्रारम्भे डामरावलिः । उन्मसृष्टा हिमानीव बभूवापतनोन्मुखी ।
प्रथमं देवसरसादिसत्रमसरस्ततः । मुख्यं व्ययावशेगण्ड इव पाकं व्यदर्शयत् ।
एककार्य्यत्वमानीय टिक्कादीन् गोत्रजान् बलो । स्यामन्तं विजयेऽभ्येत्य राजानीकमवेष्टयत् ।
तत्र कायस्थपुत्रोऽपि स्यामस्थानीकनायकः । धंरम्भं नागवद्वान्दस्त्वेदे तस्य चिरं युधि ।
कथञ्चिदथ भूपेन प्रार्थित. कम्पनापति. । निर्ययौ स्वामिदोर्व्वत्आत्संक्षतिसयैषाहव. ।
विजयेन समं तस्य मट्टसूत्रेन संयुगे । सन्देहं प्रालट्क्तिय सयश्रीयासकृचयो ।

प्रहृद्धिं मल्लकोष्ठेऽपि प्रयाते लहरान्तरे। वैशाखे निर्ययौ राजा ग्रामं चन्द्रोरकाभिधं।
सैनिकाः प्रभुभिस्तस्य भ्रामितास्तत्र रात्रिषु। अरातिं निन्यिरे धीरैः स्वप्नैरिव मुमूर्षवः १७५
याऊमा चक्रहायेन सर्व्वशक्तिमतां वरः। येन हर्षनरेन्द्रोऽपि विधुरेणोदपाद्यत।
भूरीर्षया जितवतो विक्रमेण महीमिमां। साहसानां न सङ्ख्यास्ति जामदग्न्यस्य यस्य वा
स सङ्कुचितविक्रान्तिः कालस्य बलवत्तया। तत्र भग्नबलोऽकस्माद्व्ययुज्यत जयश्रिया।
ततः पलायिते तस्मिन्नकस्मादेव्य सम्भ्रमे। ग्रामिणामस्थितो वीरं भङ्गं पृथ्वीहरोऽनयत्।
पलायिनस्तानुधरंस्तस्य पृष्ठं स निष्ठुरः। प्रतापी नगराभ्यर्णे दग्ध्वा नागमठं ययौ। १८०
स चान्ये च ततः क्रूरा डामराः सर्व्वतोऽनयन्। राज्ञो राजाश्रितानाञ्च चरकेभ्यस्तु रत्नमान्।
निस्त्रिंशतां तीव्रकोपस्ततो भूपः समाश्रयन्। अभाग्यभागिनां योग्यामाललम्बे कुपद्धतिं।
नीते पृथ्वीहरस्याथ हता डामरमन्तिकं। पृष्ठन्यस्तविधं भोज्यमिव राज्ञा व्यसर्जयत्।
विहस्य भ्रातरं हर्षं विन्दकस्य तथैव सः। अन्येषां प्राहिणोत्पार्श्वं भ्रातॄन् पुत्रांश्च विश्रुतः।
मातरं जयकाख्यस्य शिपिकाग्रामवासिनः। विच्छिन्नकर्णघ्राणाञ्च हत्वाभ्यर्णे व्यसर्जयत्। १८५
सपुत्रं सूर्यकं शूलेऽधिरोप्य नगरे परान्। भूरीन् बध्नानबध्यांश्च क्रोधाक्रान्तो न्यपातयत्।
कालस्यैव स्वरूपस्य तस्य सर्व्वेऽपि शङ्किताः। आभ्यन्तराश्च वाह्याश्च विरागं प्रतिपेदिरे।
यैनैवानीतिमार्गेण हारितं हर्षभूभुजा। निन्द्यमपादधे तं स राज्ये व्यवहरन् स्वयं।
प्रविष्टानां युद्धे गहनकरिकर्म्मप्रणयिनां प्रसक्तानां द्यूते नरपतिधुरायां विहरतां।
तटस्थस्य प्रभु स्खलितमसकृद्धोऽर्हति परं प्रयोगे वैकल्यं स्वयमविकलो यो न भजते।
तीव्रप्रयत्नो नृपतिस्तथापि विहितोद्यमः। निनाय मल्लकोष्ठादीन् किञ्चिन्मन्दप्रतापतां। १९०
अथानिनाय निर्मोयो विपणाप्टाध्वना शनैः। कुमारं हर्षदेवस्य तं भिक्षाचरमन्तिकं।
विविधन्देवसरं कम्पनापतिना ततः। विद्राव्यमाणः स्वभ्रायामधावन्सोऽपतत् चितौ।
परिज्ञाय हतस्याथ स तस्य विजयी शिरः। विससर्जान्तिकं राज्ञः फलं जयतरोरिव।
मदप्रत्ययहृतं कर्म्म भजन्मूर्त्तकृतघ्नतां। न तस्य तुष्टस्तुष्टाव न चकार च सत्क्रियां।
अग्रग्रामप्रधानांशु स्वभ्राख्यः कम्पनापतिः। तत्र कस्मात्तवोत्सेक इति तं सन्दिदेश च। १९५
सर्व्वप्रकारं निरकः कृतघ्नं नृपतिं विदन्। अथ जातविरागः स द्रोहोन्मुख्यं समादधे।
हन्ता स्यादनुपानभ्योमसेदैमुख्येमेव चेत्। द्रोहेच्छया स निर्याय यथावप्राग्रनामतां।
भेदाद्विस्मयशोचितत्यहृतं नीतिप्रियाः प्रतिपदं समुदाहरन्तु।
मानोन्नतास्तु विहितप्रणयः कृतघ्नाप्यसम्परहितं घटयन्ति भृत्याः।
पदं यस्मिन्नंस्थितिमर्मच्छिद्रोषाम्बवमरैः श्रुतिं यातं भक्ष्य पतननिरतां जीर्णवसतिं।
त्यक्ताग्र भूप व्यसनविमुखं विधमशक्य धीरोऽप्युत्थानोपहतमहिमा शक्तं लभते।
राजभ्रातं परित्यज्य स्वार्थं ये भ्रमते भुवि। द्रोहपाराः कथिताश्चेभ्यः केऽन्ये पापीयसां धुरि। २००

जन्मन्येकोपकारित्वं पित्रोः सर्वत्र च प्रभोः। अधिकाः पितृघातिभ्यः पापिनः स्वप्रभुद्रुहः।
निहते विजये शान्तप्रभावेष्वपरेष्वपि। माद्यति कश्चित्स्वास्थ्यं तत्रभ्येनान्तरात्मना।
कश्चित् चणं सोऽपसृत प्रत्युतोद्योपतापकृत्। विस्तृतप्रसरोद्भूतः सर्व्व एव इवोन्मदः।
आनिनीषुस्ततोमल्लकोष्टं भिक्षाचरं पुनः। विपलाष्टन्तस्य पार्श्वे निजं सैन्यं व्यसर्जयत्।
कम्पनेशस्तमायान्तं द्रोग्धाप्यावेदयंस्ततः। राज्ञा न्यषेधि तद्रोपादेवस्य समदिग्धत।
एवं वर्त्मन्यनुद्धाते ज्वरा इन्यामहं ततः। पुरोगतं मृगव्यान्तः श्टगालमिव वाजिभिः।
द्वैराज्यकार्य्यसंभ्रमभावेऽपि विधिचोदितः। कर्त्तव्ये तत्र शाठ्यं स नृपतिः प्रत्यपद्यत।
सर्व्वराजमुखानेवं लब्ध्वा द्रोग्धाय डामरान्। तिलकोऽकारयच्छलमार्गैर्भिक्षाचरानुगान्।
स्थाने स्थाने ततः प्राप तत. कर्णोपकर्णिका। जनानां या ख्यातिहेतुर्भिक्षाराजस्य भीतिदा।
नासंज्ञानं वक्ति शिला भिनत्त्येकेषुणा द्रुम। अश्रान्तो योजनशतं यात्यायाति च सत्वरम्।
इत्यादि तादृक् माहात्म्यं भिक्षुस्तुत्यानयज्जनः। निखिलाम्पलितश्वेतलम्बकूर्चोऽपि कौतुकं।
भविष्यन्निव स.साज्येत्येक एकोऽर्थभारभाक्। वार्तामव्यवहर्तापि भिक्षोश्चेऽन्विषेप च।
सरित्स्नानरतेह ह्यान्तो वृद्धाः चीणनियोगिनः। राजवेश्मन्यगणिता नामसात्त्वं नृपात्मजाः।
स्वभावदुर्जनाः केचिद्योधायोधाम्बकाङ्क्षिणः। कारयन्तोऽप्युपाख्यायाः शिष्यान् स्त्रिक्षपणं मखैः।
वृद्धाः सुराको नर्त्तक्यो देवप्रासादपालकाः। वणिजोभुक्तनिक्षेपाः पुस्तकश्रुतितत्पराः।
प्रायोपवेशकुशला.पारिषद्द्विजातयः। शस्त्रिणः कार्मुकप्रायानगरोपान्तडामराः।
सुखयन्तः स्वमन्योन्य किमप्युत्पिञ्जवार्तया। एते प्रायेण देशेऽस्मिन् पार्थिवोपप्लवप्रियाः।
॥ कुलकं ॥ प्रवर्द्धमानया भिक्षाचरागमनवार्तया। वेपमानोऽभवच्छोको रयो चिन्ताश्च भूपतिः।
पृथ्वीहरस्तहच्छन्ने गिरिकच्छे वसन्नथ। राजानीकं सभस्त्राशो निर्गत्यातुलविक्रमः।
अनन्तकाकयोर्विश्वावानन्ददारनायको। चक्रे तिलकसिंहस्य मन्त्रिण्यश्चीन् पलायिनः।
*निहते विजये ज्येष्ठे शुक्लशर्व्वा पराभवं। तमायाढस्य नृपतिः प्राप्याभूद्विस्मयः पुनः।*
मट्टीकिते गर्त्ता द्दचमूर्द्धारोहेण भोगिना। पिपीलककुलस्याण्डोपसंक्रान्त्येव वर्षिणं।
प्रत्यासन्नं स राजाय दुर्निमित्तैरुपद्रवं। विचिन्त्य यातमुचितं कर्त्तव्यं प्रत्यपद्यत।
तृतीयेऽह्नि शुचे शुक्ले तत प्रास्थापयत्सुतं। देवीमन्यकुटुम्बं च सकोटं लहरं पटुः।
तानन्वजतस्तस्य सेतुभङ्गात्परिच्युताः। सोऽष्टदिशातयो विमा चितस्तां प्रपेदिरे।
स तेन दुर्निमित्तेन डिम्बोऽम्बकपुरान्तिकं। अनुगम्याथ तान् दिनैर्दिनैर्भूयोऽविशत्पुरं।
विना पुत्रेण देव्या च स ततः प्रत्यपद्यत। प्रतापेन च लक्ष्म्या च परित्यक्त इवान्यतां।
स मन्त्रिण्यापदि शुभः प्रत्यभात्तस्य तद्यात्। अभ्यन्तरमकम्पोऽपि सर्वाभ्युदयमगमत्।
स्वयमुत्थापितामर्थः सोऽपि स्वपनेरैश्रवत्। अद्यापि साम्बयोगेन्या तया साम्राज्यभोगभाक्।
श्रावणे शाहरेयोधेरागोय सत्रशाविनां। भिक्षुर्भवत्यराज्यानां डामराणामयाचत।

उपायाः सामभेदाद्या रिपुचक्रे प्रयोजिताः। राज्ञो विफलतां जग्मुर्वैरिरात्रैः प्रकाशिताः।
क्रान्ततत्तन्महीपालमण्डलस्यापि भूपतेः। फलं दोर्व्विक्रमस्यासमासीन्नगररक्षणं।
अमरेश्वे द्वारपतिः सार्द्धं तस्थौ नृपात्मजैः। राजानवाटिकोपान्ते राजस्थानीयमन्त्रिणः।
दूरद्वीपान्तरगता इव स्वीचक्रिरे नृपात्। ते प्रपासदनभूरि नचायुध्यन्त कुत्रचित्।
कटका विद्विषां सर्व्वे पर्य्यायेण जयाजयौ। लेभिरे विजयादन्यत्रतु पृथ्वीहरः क्वचित्। ९१०
मधुमत्तेन तेनाजौ वेतालेनैव वल्गुना। मायोवरावरास्तुर्ण्णे ग्रस्ता नृपचमूभटाः।
उदयस्येच्छटिकुलोद्भूतस्यैकस्य पप्रथे। युवदेश्यस्यापि शौर्य्यमेकस्मिंस्तु तदाहवे।
पृथ्वीहरस्यापजह्रे द्वन्द्वयुद्धाभिमानिना। प्रहृत्य छटकूर्च्चेन कराग्रेणासिवल्लरी।
युद्धे पुरोपकण्ठेषु वर्त्तमाने शराहताः। स्त्रीवालाद्या अपि वधं प्रमादात्प्रतिपेदिरे।
एवं जनक्षये घोरे वर्द्धमाने किमप्यभूत्। अनुत्साहान्नृपो व्यूहादपि निर्गन्तुमक्षमः। ९१५
तस्मिन्निरुद्धसञ्चारे क्षेमपालस्तदन्तरे। अलुण्ठयद्घाटलिकां लब्धरन्ध्रो ददाह च।
भिद्दे गजाहवव्यग्रे तद्गुहाग्रपरिग्रहे। समयोग्रामगोमायोः पौरुषस्य पुरोऽन्तु कः।
राष्ट्रद्वयोपमर्देन राजा निःसद्दृशेन सः। तेन वशाविधेयोऽभूत्स्वमपि द्रष्टुमक्षमः।
सर्व्वानौचित्यवहलः सर्व्वव्यसनदुःसहः। सर्व्वदुःखमयः कालस्तस्यावर्त्तत कोऽपि सः।
तथाप्यस्खलिते तस्मिन् हितव्याजाद्धितापहः। राजानवाटिकाविप्रैः प्रायश्चक्रे विरागिभिः। ९२०
प्रार्थयन्ते स्म ते युद्धे तटस्थास्तव मन्त्रिणः। गृहीत्वा नोविरतेभ्यो लोहराद्रौ विसृज्यतां।
न चेद्वाप्यद्वैतस्मिन् व्यसने स्थायिताकृते। कोदथ्यान्न परैर्नीतं मत्यासन्नं शरत्फलं।
न प्रत्यभैत्सीत्ताटस्थ्यं यत्कालापेक्षया नृपः। तस्मिंस्तैर्दर्शिते शङ्कां निखिला मन्त्रिणो दधुः।
शक्तिस्तृणं कुलयितुं न यस्य स तदार्थिभिः। विस्रब्धव्यवहारत्वं सिन्ये राजा शठद्विजैः।
कर्म्मस्थानोपजीव्युग्रपारिपद्यादिसङ्कुला। तत्पार्श्वात् प्रथयौ वृद्धिमन्या सेनेव वैरिणां। ९२५
तत्क्षान्त्वनक्षणे तैस्तैः प्रमादैरुत्थितैरगात्। देशो व्याकुलतां छक्कं लुण्ठियाधटतोत्कटः।
अदृष्टपार्थिवास्थानैः शठैरव्यवहारिभिः। ऊचे तैः सान्त्वयन्राजा दुःस्थितस्तत्तदप्रियं।
सत्रन्यविश्वाद्राज्ञो सोऽधिकोविश्वोऽभवत्। गलरोगः पादरोगादिव तीव्रव्यथावहः।
काञ्चनोत्कोचदानेन तन्मध्येऽधिकचक्रिकां। कांश्चित् स्वीकृत्य स प्रायं कथंचिदिन्यवीवरत्।
विजयोवर्ष्मसामादिग्रस्विवंशेयाहठात्पुरं। प्रविशन् भिक्षुसेनानोरश्वारोहैरहन्यत। ९३०
तेनातिरभसात् स्थानं भित्त्वा प्रविशता पुरं। प्रायशः क्षत एवाभूत्तदा राज्यविपर्य्ययः।
ईषन्मन्दप्रतापेन नचान्येष्वपि भूपतेः। पृथ्वीहरेण सन्धित्सा भेदेच्छोः सम्प्रकाशिता।
तस्मिन् धुर्य्ये जिगीषूणां सन्धित्सा भूभुजा समं। दयेऽपि सैनिकायान्तं तममन्यन्त शिरसं।
राज्ञा नागमठोपान्तमानेतुं प्रहितास्ततः। चीनमात्यान् स्वविश्वस्तानागच्छन् छद्मनाविधीत्।
धान्वेयः सपको गङ्गो द्विजोरामश्च वारिकः। तेषां तिलकसिंहस्य पार्श्वे भृत्यास्त्रयोहताः। ९३५

नीविन्दत्ते गोरकस्तु हतोभूतपतिं स्मरन्। दृष्टे लाक्रन्दिनि परैः प्रघ्नतं करुणोज्झितैः।
तद्देशसं श्रुतवतो देश. सर्व्वो विरागवान्। राजधान्यन्तरे राज्ञो दुरुक्तिमुखरोऽभवत्।
दृष्टे गुरुक्षचतुर्द्दृश्यां तदिपर्य्यस्तमण्डलं। अतिवाहयितुं कष्टं दिनमासीन्महीपतेः।
अथ सञ्जातवैक्लव्यो नेदमस्तीति चिन्तयन्। किङ्कृत्यमित्यसद्दृशानपि पप्रच्छ भूपतिः।
विषमे वर्त्तमानस्य तस्य कश्चित्स नाभवत्। अन्तर्जहास योनान्तर्वहिर्योन तुतोष वा।
तमनित्यसमापातं तस्यासोढवनस्ततः। अभजन्त क्रमाद्भूत्या. प्रतिपक्षसमाश्रयं।
कम्पनेशस्य विम्बाख्यो भ्राता द्वैमातुरो हि तान्। समाश्रयद्द्वारकार्य्यं तद्वृत्तं प्रत्यपद्य।
गूढं जनकसिंहेन दूतान्प्रेषयतानिशं। भिक्षवे भ्रातृतनया वाग्दत्ता निरवर्त्तत।
असिवाजितनुत्रादि हृत्वा भिक्षाचरान्तिकं। अथवा राज्यभाज्यन्त प्रयान्ति. प्रतिवासरं।
किमन्यच्चार्य्यमेवाक्ति येऽवमन् पार्थिवान्तिके। अलब्धन्तायतो भिक्षोस्ते निशायां गतत्रपाः।
यतो याति ततश्चेति लोकोव्यक्रमतन्त्रितः। इति राजनि कुण्ठाज्ञे कोऽप्यजृम्भत विभ्रमः।
डामरैः शरदुत्पत्तौ नीतायां सर्व्वतस्ततः। कान्दिशीकोऽभवल्लोकः कृत्स्नो धनजनोज्झितः।
प्रयाते सुस्सलनृपे स्वर्णपूर्णामिमां महीं। भिक्षुः कुर्य्यादिति मृषा लोकस्यासीदिनिश्चयः।
क्व दृष्टा त्यागिता भिक्षोः कुतोवा तस्य सम्पदः। परामर्शेणमेति गतानुगतिकोजनः।
सन्दृश्यते परिहृता चिरमम्बरेण रेखा स्वयं न खलु या शशिनो नवस्य।
तस्यां जनः प्रकुरुते नतिमम्बरार्थी धिग्लुब्धतामपरवत्सदसद्विचारां।
विजये राजवर्ग्याणां भग्नग्रीवइवाभवत्। भिक्षुपक्षजये लोको चव्यस्तासीद्विशृङ्खलः।
द्विजकालेयकत्यागे राजडामरसङ्गयोः। ततोऽन्योन्यभयभ्रष्टदैरयोरुदजृम्भत।
राजाभ्यन्तरभेदेन राज्ञश्चैर्य्येण चारयः। ऐच्छन् पलायितुं भीता अज्ञातान्योन्यनिश्चयाः।
बान्धवानपि दुर्भूचूनविश्वस्तो विदन्नृपः। स्थितौ पलायने वापि श्रद्दधे न स्वजीवितं।
तं सहाव्यसने वासःस्वर्णरत्नादिवर्षिर्णं। नाभ्यनन्दन् गृहीतार्था निनिन्दुः मन्त्रिणः परं।
सहोऽयमेष भवितेत्यभीतैर्जल्पतो जनात्। वचोरोगी भिषक्त्यक्त इव शृण्वन्स विव्यथे।
कृपणोपस्थितं किञ्चित्तदादेशेन ढौकयन्। सविलासं सर्व्वगञ्ज तमैक्षिष्टानुगमजः।
मैन्दरवाभवत्तस्मिन् क्षणे साहसिकोऽप्यहो। स्वगृहादपि निर्गन्तुं नाशकत्क्षयाकुलः।
यावदैच्छन् मन्त्रभेदाद्धन्तुं डामरप्रजाः। स्वैरवैव मन्त्रिभिः सर्व्वनिन्ये भूभृदिस्वतां।
मे शुष्मशस्त्रागाराणि रुन्धतो नृपमन्दिरे। प्रवासवित्ते सम्भ्ये प्रायं चक्रुः पदे पदे।
ददहतं धमत्रयोर्द्दैवादप्यधिकं नृपः। तेषामभिमतो नाभूद्दवमानाभिलाषिणां।
कर्त्तुं चिरमनिपुणोऽथ प्रतिकेरिव शासयः। स दुष्टा निश्चितैर्द्दैवं दापितोऽथ गतत्रपैः।
स्थानपालैरपि प्रायश्चिरायत्य दापितः। धनं सुवर्णभाण्डादि चूर्णितस्य विस्तृतैः।
महद्भूयाम नगरं ततः क्षुभ्यत् क्षणे क्षणे। योऽभूदस्थिमिषोद्भूतं स संस्थापयितुं क्षमः।

एकदा प्रातरेवान्यैरुद्धद्वारः स शस्त्रिभिः। सर्व्वतः क्षोभमागच्छन्नगरं स व्यलोकयत्। ८१५
ततः क्षोभं शमयितुं जनकं नगराधिप। पुरभ्रमार्थमादिश्य चलितुं क्षणमैक्षत।
कथञ्चिद्दानमानाभ्यां तानावर्ज्यापि शस्त्रिणः। सावरोधः स सन्नद्धो राजधान्या विनिर्ययौ।
अङ्गनात्तुरगारूढो बहिर्यावन्न निर्ययौ। राजधान्यन्तरे लुण्ठिस्तावत्प्रारम्भि तस्करैः।
अददन् केऽपि केऽप्युच्चैरनदन् केऽप्यलुण्ठयन्। तद्भृत्यान्राज्यमुत्सृज्य तस्मिन् व्रजति शस्त्रिणः।
विश्रब्धलब्धपाकोपशङ्काभिः शस्त्रिणां नृपः। सहस्रैः पञ्चषैराशीद्व्रजन्ननुगतोऽध्वनि। ८२०
वर्षे पश्चत्ते कृष्णपक्ष्यां मार्गे विनिर्गतः। याममात्रावशेषेऽह्नि सम्भृत्याद्रोहविक्लवः।
निजैर्हरद्भिरश्वादि त्यज्यमानः पदे पदे। स प्रतापपुरं प्राप क्षपायामल्पसैनिकः।
तिलकस्य पुरोगत्वा प्राप्तस्याशङ्क विश्वसन्। तत्र बन्धोरिवाश्रूणि चिरं दुःखात्क्षणेऽमुचत्।
द्रोहं न कुर्य्यादेवं मे चिन्तयित्वेति सत्वरं। वेश्म ऊस्कपुरेऽन्येद्युस्तस्य च प्राविशत्स्वयं।
तद्वीरवेण स्नानादि कृत्वेच्छत्सैन्यसंग्रहं। प्राविशत् क्रमराज्यं स कर्तुं भूयोजनोत्सुकः। ८२५
ग्रहं युयुत्सुकल्याणवाद्यादीनथ डामरान्। आनीय स पुरस्तस्य धैर्य्यभंशमकारयत्।
ग्रहात्तेन तया युक्त्या निष्कृष्टः स ततो ययौ। स्वीकुर्व्वन् स्वर्णदानेन दस्यून्मार्गविरोधिनः।
प्रयान्तं ततएवौज्झीत्तिलकस्तत्सहोदरः। प्रयाणमेकमानन्दो दाक्षिण्यादन्वगात्तु तां।
अत्यत्यक्तः स दानेन विक्रमेण च तस्करान्। अगान्मार्गेण शमयन्नायुः शेषेण रक्षितः।
क्षणं सिंहनखाद्द्रुमाद्द्रिगहनस्याराद्दरण्यस्य ये तेषां बालगलाश्रयादपि भवेत्कालातिवाहः क्रमात्।
ये दन्ताः करिणां रणप्रहरणं तेऽथाप्युर्द्दोव्यतां क्रीडायां करताडनानि न दृढा शौर्य्यस्य रूढिः क्वचित्। ८३०
जन्तूनां विक्रमत्यागयशःप्रज्ञादयो गुणाः। भवे चित्रस्वभावेऽस्मिन्न भवेयुरभङ्गुराः।
भास्वानप्याप्यमृदुतां भिन्नावस्थां दिने दिने। तां तामायाति जन्तूनां कः प्रभावेषु निश्चयः।
अशक्नुवन्नट्टलिकामरिसृष्टां निरीक्षितुं। मन्युनिःशब्दसैन्योऽद्रिमारुरोह स लोहरं।
स्वल्पत्वमपि द्रष्टुं तत्रातिक्षपयाक्षमः। शयनीयविमुक्ताङ्गस्तप्यते स्म दिवानिशं।
दत्तदीपादनिर्गच्छन्नर्गेहाद्दिनेष्वपि। दाक्षिण्यादर्शनं प्रादाद्भृत्यानां भोजनक्षणे। ८३५
विलेपनानि नास्प्राक्षीन्नारुरोह तुरङ्गमान्। गीतनृत्यादि नैक्षिष्ट सुखगोष्ठीर्न चादधे।
तास्यं स्वाटस्यमैश्वर्य्यैतत्क्षणद्रोहादिदर्शितं। एकैकेन च स्मृत्वा स्मृत्वा देव्यै न्यवेदयत्।
अन्यगात्स्वां भुवं त्यक्त्वा मामेतेऽन्वगुरित्यपि। निन्ये वृद्धिं परार्ध्यश्रीः स दाक्षिण्याद्धनार्पणैः।
कश्मीरेषु गते तस्मिंस्तदेवाखिलमन्त्रिणः। पुराणि राजधान्यैव ससैन्याः समगंसत।
मध्यश्वारोहसामन्ततन्त्रिपौरादिसम्मतः। तेषां जनकसिंहोऽभूद्ग्रणीर्नगराधिपः। ८४०
स भिक्षोर्भल्लकोष्टाद्यैराप्तैः कृतगतागतैः। विश्वासाय सुतभ्रातृसुतौ नीतिमप्रदायितः।
प्रावर्त्तत भयभ्रश्यत्स्त्रीबालाघाघट्टिते पुरे। अराजकाथ रजनी सर्व्वभूतभयावहा।
निहताः केऽपि मुषिताः केऽपि केऽप्यरिभिः पुरे। दग्धगेहा व्यधीयन्त दुर्बलाराजवर्जिते।

सैन्यैरन्यैश्चतुरङ्गैर्निरुद्धाखिलदिक्पथः। सिन्दूरारुणपुण्ड्राश्वसादिमण्डलमध्यगः।
विकोशशस्त्रकदलीषण्डदुर्लक्ष्यविग्रहः। मृगेन्द्र इव लोकस्य भयकौतूहलावहः।
वीरपट्टाञ्चलश्लिष्टैर्यौवनोद्रेचितैः कचैः। श्रवद्भिः शोभितः पृष्ठे जयश्रीपल्लवद्युतैः।
कुण्डलद्योतिना स्निग्धधवलायतदृष्टिना। प्रत्ययश्मश्रुणा चारु चन्दनोल्लेखशोभिना।
तारहारेण वक्त्रेण श्रीसान्निध्याधिकत्विषा। पक्षपातं विपक्षाणामपि सम्पादयन्मनः।
अंसे विकोशस्यान्तःस्थां श्रियमश्वेन वल्गता। केसरच्छटया चापि चामरेणेव वीजयन्।
पदे पदे निवृत्ताश्वैः सामन्तैरुपपादिता। स्त्रीकुर्व्वन्दर्शनं भिक्षुः प्राविशन्नगरं ततः।
कुलकं॥ तस्यार्भकस्य धात्रीव पृष्ठस्थो मल्लकोष्ठकः। भययावप्रगल्भस्य सर्व्वकार्य्योपदेष्टृतां।
अयं पितुः प्रियस्तेऽभूत्त्वमस्याङ्के विवर्द्धितः। राज्यस्यास्य मूलमिति प्रत्येकं समदर्शयत्।
गृहं जनकसिंहस्य प्राक्न्यावाप्तयेऽविशत्। राजलक्ष्मीं स सम्प्राप्तुं राजधानीं ततः परं।
दूरनष्टे कुले तेन पुनरुद्रेचिते यथा। बद्धास्थोऽगर्भकेऽपथ्ये स्त्रीजनोऽनवहास्यतां।
दृष्टेन तादृशा भिक्षोरिति वृत्तेन शत्रुषु। चित्रस्थेष्वपि साशङ्का नोपहास्या जिगीषवः।
प्रावर्त्तन्त धनाधीशश्रियः सुस्सलभूपतेः। कोषेण नीतश्रेयेण विलासा नवभूपतेः।
वाजिवर्म्मासिभूयिष्ठां राजलक्ष्मीं विभेजिरे। राजडामरलुण्ठाकमन्त्रिणो यन्त्रणोज्झिताः।
पुरे स्वर्ग इवास्वादं भोगानामुपलेभिरे। दस्यवो ग्रामभोगार्द्राः पिशाचा इव गह्वराः।
आस्थानेन बभौ भूमृद्ग्रामीणैः सर्व्वतो वसन्। प्रलम्बकम्बलप्रायविलासावरणैः समं।
भिक्षाचरस्यासभ्यप्रादुर्भावतया प्रथां। डामरा अवतारोऽयमित्यन्यां निन्यिरे प्रथां।
राज्यस्यानन्यदृष्टस्य कर्त्तव्येषु मुमोह सः। अदृष्टकर्म्मेव भिषग्भैषज्यस्य पदे पदे।
शनैर्जनकसिंहेन कृतभ्रातृसुतार्पणं। कम्पनाधिपतिर्दत्तकन्योऽपि तमशिश्रियत्।
जङ्गो राजपुरीयस्य राज्ञः कटकवारिकः। पादाग्राधिष्ठितोऽद्राक्षीत् स्वार्थमर्थं नतु प्रभुः।
सर्व्वाधिकारिणं राजलक्ष्मीर्बिम्बमशिश्रियत्। राजशब्दस्यैव पात्रमभूद्भिक्षाचरः परं।
वेश्यायत्तीकृतैश्वर्य्यः प्राकृताचारभागपि। अन्तरङ्गः सदसतां किञ्चिदिम्मदाभवत्।
द्वैमातुरो दर्पकस्य भ्राता साहस्र्यशौर्य्यभृः। नृपान्तरङ्गज्येष्ठत्वं ज्येष्ठपालोऽप्यशिश्रियत्।
मन्त्रिणो भूतविश्वाधास्तस्य पैतामहा अपि। लक्ष्मीधरो राजिनीभृङ्गा बहवोऽन्ये जजृम्भिरे।
मुग्धे राज्ञि प्रमत्तेषु मन्त्रिधूर्तेषु दस्युषु। उत्थानोपहतं राज्यं नवलेऽपि बभूव तत्।
स्त्रीभिर्नवनवाभिश्च भोज्यैः प्राज्यैश्च रञ्जितः। भिक्षुर्नैच्छिष्ट कर्त्तव्यं सुखानुभवमोहितः।
स सुखानुभवप्राप्तनिद्रान्ध्यो विजयोद्यमे। स्वैः प्रेरितः सभामध्ये स्वप्नमैक्षन्मदालसः।
दर्पेण सचिवे वाचं कथयत्यनुकम्पिकां। न स चुक्रोध मुग्धस्तु पितरीवान्वरज्यत।
निष्प्रतिष्ठैः सेव्यमानो वेश्याछिद्रैरशिष्टवत्। श्रद्धा चेटोचिताश्चेष्टा विटैः प्रैर्य्यत सेवितुं।
पानीयरेखाप्रतिमस्थैर्य्यस्याखिलवस्तुषु। तस्याप्रमाणवचसः सेवाम्रुणयिनोऽजहुः।

चौरचाक्रिकसीमान्तभूभृद्देश्याविटादयः । लुण्ठिमप्रारेभिरे पुष्टां नवे मल्लार्जुनोदये ।
वञ्चयित्वाथ गीन् भ्रष्टत्ताम्यन्विघटितेप्सितः । अथ चित्ररथं तूर्णमास्कन्दाय व्यसर्जयत्
द्वारपादाग्रयोस्तुल्याधीकारेण प्रवर्द्धितः । सोऽनन्तसामन्तयुतः पदं फुल्लपुरे व्यधात् । १९६५
धत्सेहिरे न विततां अपि दुर्गसमाश्रयात् । मल्लार्जुनचमूर्जेन्यं जेतुं तदनुजीविनः ।
भेदाय कोट्टमारूढसङ्कृत्यो राजसम्मतः । मल्लार्जुनानुगैराजौ हतः सम्वर्द्धनाभिधः ।
युद्धासाध्येऽपि तिष्ठन्तः कोट्टे भयविधेयतां । कोष्ठेश्वरेऽन्वगायाते तत्रामित्राः प्रपेदिरे ।
प्रतिश्रुततरो बद्धसन्धिः स व्यसृजत्ततः । सभाजनाय जननी तेषां मल्लार्जुनोऽन्तिकं ।
सा वैधव्यं विविक्तेन वेशेनैश्वर्य्यशोभिना । कोष्ठेश्वरादीन् सोत्कण्ठांश्चक्रे चपलचेतसः । १९७०
तस्यां गृहीतविश्रम्भं व्यावृत्तायां तदन्तिकात् । द्वारेशाय ददावूरीकृतं मल्लार्जुनः करं ।
आकृष्टो राजजननीचतुरागेण कोष्ठकः । दिदृक्षाकपटात् कोट्टमारुरोह मितानुगः ।
अर्द्धरूढेन सहितस्तेन चित्ररथस्ततः । सम्भूतप्राभृतोभूमिभर्त्तुः सविधमाययौ ।
राजा तु सम्मन्त्र्य ततः प्रायुङ्क्त हतिशालिना । उदयद्वारपतिना नीतिं जेतुमरीन् पुनः ।
वीतास्कन्दोलोठनेऽपि गते पद्मरथान्तिकं । लेभेऽभिनवभूपालः किञ्चित्पादप्रसारिकां । १९७५
तदूढवान् सोमलाख्यां तां पद्मरथकन्यकां । उपयेमे धृतायामो नागपालात्मजामपि ।
तस्मादहंक्रियामूढास्तेभिरे गूढकैतवाः । भूभुजः सोमपालाद्याभृत्यभावेन वेतनं ।
कविगायनजल्पाकयोधचारणवेष्टितैः । वदन्तो मुमुधुर्धूर्तास्तेऽपि तं राजबीजिनः ।
स्वाख्यानिष्परीपाकप्रज्ञो दृष्टो रटन् बहु । जज्ञे वाक्प्रौढिमात्रेण वालिशोऽकुशलाशयः ।
केतोरिवाभद्रहेतोः प्रदीप्तं वदनं विना । अमिष्टुराकृतेर्दृष्टं तस्यान्यत्र न सौष्ठवं । १९८०
अत्रान्तरे नृपः सुज्जिं मध्यग्राहोपविक्रमं । माभून्मल्लार्जुनेनापि श्लिष्टोऽसाविति चिन्तयन् ।
निर्वासने प्रवेशे च प्रभुः सुज्जेस्ततोऽधिकं । तात्कालिकीं प्रतीहारशक्तिं काञ्चिददर्शयत् ।
स कम्पनाद्यधीकारग्रंशं राजविमार्जितां । वितरन् सुज्जेथ राजस्थानकार्य्यस्वं विना ।
निर्वासाय गृहायातसोमपालानुरोधतः । प्रसीदन् वामहस्तेन निजजूटस्वमं प्रदात् ।
आहूय प्रददौ तस्य तत्रात्मिपरितोषितः । आयाय मान्द्यया बुद्ध्या यशस्पदोऽधोव्यधात् । १९८५
अवैं हिताय सौहार्द विधुयोदयधन्ययोः । अभजद्रिम्हणः सुज्जेः प्रवेशे प्रतिलोमतां ।
प्रत्युद्गमेन सम्मान्य सुज्जिं प्रावेशयन्नृपः । देशाधिगम्याहून्यादीन् मागसान्नतु सद्दिरा ।
कृतागाः कापतालब्धः क्षणे सोत्कण्ठेऽधिपांमति । कोष्ठेश्वरः पलायिष्ट ग्रामोद्यमाद्दन्तिकात् ।
आस्कन्दमागते राशि गृहीतसमुपेश्वरे । मघघभेदोपहतः सोऽथ देशान्तरं ययौ ।
लोठनस्तु निजधार कांचिदाक्रम्य ठक्कुरान् । शमलीलाभिधे स्थाने वसन् मल्लार्जुनं श्रयात् । १९९०
तत्र दृष्टसमाश्लेषाद्भोवाम्य यस्तु पौरुषं । परिभ्रष्टोऽपि यद्रूपदं तमजयत् सदा ।
जहार तुरगांश्छिक्क्व गांगाद्वालिकापथे । मागंद्राद्विभ्रूह सदा सर्वं च सोऽकरोत् ।

राजराजाभिधानेन डामरेणार्थितस्ततः। कश्मीरराज्यसम्प्राप्त्यै क्रमराज्यमगाहत।
तद्वेत्य समीपस्थे हते चित्ररथेन सः। तस्मिंस्तवन्ये प्रययौ वप्यनीलभुवं पुनः।
तस्मिन्नास्कन्दमस्कन्दद्दत्यट्टालिकामपि। अवरोद्धुमशक्तोऽभूत् कोट्टे मल्लार्ज्जुनोऽवसत्। ९९५
भ्रातृव्येण पितृव्यस्य दापयित्वा धनं बहु। ततः कोष्टेश्वरो यात्रासज्जः सन्धिं न्यबन्धयत्।
लोहरे विहितस्थैर्य्ये गृहीत्वा लोठनं ततः। कश्मीरोर्व्वीं पपातासौ विजिगीषुः क्षमाभुजा।
गिरीनुल्लङ्घ्य कार्कोटद्रङ्गे विहितवान् पदं। निपत्य मार्गेऽनुद्घाते यावदन्यैश्च डामरैः।
नावाप योगं निर्गत्य क्षिप्रकारी क्षमापतिः। सर्व्वोद्योगेन तं तावदुत्थानोपहतं व्यधात्।
अत्रान्तरे प्रतीहारः मापास्तमपपीडया। न सम्पत्स्वल्पपुण्यानामनपायित्वमायुषः। १०००
उत्सारणाप्रियतया परिरुद्धसर्व्वद्वारे गृहे निरनुरोधतया वसन्तः।
सम्पल्लघूकृतधियोऽप्रतिघप्रवृत्तेर्धिग्जानते न रभसात्त्रियतेर्निपातं।
कुर्व्वाणोत्सारणं तस्य गृहजा सततं नृणां। नाज्ञासीत् सुखसुप्तस्य पृष्ठे पतितमन्तकं।
ज्वरितः स हि निर्धूतज्वरः स्वपिति विज्वरः। विदित्वेति न विज्ञातः स्वपन्नेव मृतस्तदा।
सलोठने कोष्टकेऽथ प्रयाते नृपतिः पुनः। न स मल्लार्जुनो नापि कोष्टको न स लोठनः।
छद्मनोदयनं पार्श्वस्थितं मल्लार्ज्जुनोऽवधीत्। तस्मै चुक्रोध मध्यस्थे स्थापितस्तेन कोष्टकः। १००५
अनुनिन्ये न तं खिन्नं स सम्भृतबलस्ततः। अभिषेणयितुं क्रोधादधावत् सह लोठनं।
कोष्टको मल्लकोष्टाद्यैर्मितैर्युक्तोऽपि सादिभिः। तीर्त्वा परोष्णीं तत्सेनां निर्ममाथाप्रमाथिनीं।
हतेषु तेषु संग्रामे खशसैन्यत्रकादिषु। बधं प्राप्तः सिंहभूस्तत् देशात्स नृपोद्धृतः।
आरूढः कोष्टमूर्द्धानं मानमूर्ध्वः परिच्युतः। भग्नप्रतापोभूयोऽपि समधत्त स कोष्टकं।
विसृज्य लोठनं तिष्ठन् निर्भरमगमत्पुनः। अनिर्व्वाहितदैवेन तेन द्वैधं सडामरः। १०१०
बद्धाधिकारिणः शुल्कं गृह्णताकारि राजवत्। तेन स्वमाया भाण्डेषु द्रङ्गे सिन्दूरमुद्रणा।
जतुसंहतयोः काचकलशीदलयोरिव। क्षणे क्षणे सन्धिभङ्गस्तयोः समुदपद्यत।
निर्व्यूढिशून्यैस्त्वायोद्योर्व्विरागं लोहरेश्वरः। निन्ये लवन्य सोऽप्येनं सद्भावन्यैरनङ्कुशैः।
डामरेण ततो दत्त्वास्कन्दं तत्कटकान्तरं। पराङ्गायुधधुर्य्याश्वहरणात् सुस्थिरं कृतं।
दत्त्वाभयं तैरायत्यां विषमैर्हठपौरुषैः। एवं तं कोष्टकोमूढः सुखोच्छेदं व्यधाद्द्विषां। १०१५
तनयादानसम्बन्धात् श्वशुरं मुख्यमन्त्रिणं। अत्रान्तरे नृपो हन्तुं माजिकं स व्यचिन्तयत्।
आसीत्कठोरतारुण्यतरङ्गितमनोभवः। सुस्वक्तं स हि तन्मातुरौपपत्येन सम्मतः।
आहारावसरे तीक्ष्णाः छन्नसज्ञाः क्षमाभुजा। दत्तप्रहरणाः प्रीणैर्भुञ्जानन्तं व्ययोजयन्।
धुन्वन्नसिपटं बद्धवीरपट्टोऽरटन् बहु। निर्लुण्ठयन् स तत्सेनां तां तामारभटीं व्यधात्।
अत्रामिथ्यत न द्रोहमध्याद्विद्याकरोऽप्यहो। राज्ञा त्रिषमितन्त्रेन रसदानेन स स्वयं। १०२०
दैवेनोत्सारितारातिस्ततः सिंहमहीपतिः। स ददे कोष्टकं सुज्जिं साहिणाद्विजयाय च।

मार्गस्य याममात्रेण गम्यस्यान्तिकमाप सः। यावत्तुरङ्गहरणात्कोष्टकेनाकुलीकृतः।
अन्तर्भेदाकुलस्तावत् प्रत्यवस्थातुमक्षमः। गृहीतकोशः सन्त्यज्य कोट्टं मल्लार्जुनोऽयथौ।
राज्यभ्रष्टः स निर्लुण्ठ्यमानो मार्गेषु तस्करैः। अवनाहोन्मुखो रक्षन् कोशशेषं कथञ्चन।
अष्टमन्नादशपरद्वेश्यस्याष्टमवत्सरे। राज्यात्तेन द्वितीयस्यां वैशाखस्यासितेऽहनि।
दाता शिखास्मृतहचेरस्मृतं विलक्षकार्पण्यकृतमिति लूनशिराः कृतश्च।
दूरेन यत्र उदकार्य्युपकर्त्तुरस्तु तत्रापरः कइव सन्निहितद्विजिङ्कः।
मुक्ता इमा इति जलं नलिनेषु लीनं ज्ञात्वलभेतदिति जाड्यमिनेषु लग्नं।
यज्जायते किमपि हन्त विमोहनी सा शक्तिः श्रियः स्फुरति कापि तदाश्रयायाः।
अन्यद्भुतमहरणाविपिनेषु केऽपि घ्राणेन केचन दृशाय रसज्ञयान्ये।
ते केऽपि सन्ति तु नरेन्द्रगृहेषु हिंसावाचैव ये विरचयन्ति क्लिशोपघातं।
ज्योतीरसाश्मनइवाश्रितमीश्वरस्य निर्दग्धुमिन्धनमिवाग्रगतं न शक्ताः।
पश्चाद्भवेद्यदि न तत्प्रहतावकाशा कुर्य्युः खलारविकराइव भस्मशेषं।
कापिलं दर्पटं कोट्टं नीतवान् मण्डलेशितां। उदये कोट्टभर्त्यानां सङ्ग्रहं कम्पनाधिपः।
कुर्व्वन् शय्यां पुनर्नेतुं मण्डलं तद्व्यलम्बत। दिनानि कतिचित्तत्र यावत् प्रकृतिदुर्जनैः।
विटैरस्थयाविषमैः प्रसादावसरो नृप.। तावत्कलुषतां तस्मिन्नुपजापैरनीयत।
राजा भवन् परः कोऽस्तु सुविचारदृढक्रियः। एषोऽपि शिशुवद्भूमङ्गत्र धूर्त्तैः प्रनर्त्यते।
शैशवे बालिशप्रायैः संस्तुतैर्जाड्यमर्प्पितं। प्रौढावपि नश्यायाद्राज्ञः कार्ष्ण्यं मणेरिव।
भृत्यान्तरपरिज्ञानमात्रेण जगतीभुजां। निरागसोवज्रपातः कष्टं राष्ट्रस्य जायते।
हत्वे व्यवमिति माध्ये हास्यः स्यात्सङ्कादिवत्। सुज्जिः प्रायोजि राजाग्रैर्न्निर्ज्जेतुमिति सोहरं।
निर्व्यूढाद्भुतकार्य्योऽय तस्मिन् मल्लास्तत्तुल्यया। अमोघया प्रजेऽस्ते पापाः पैशुन्यविद्यया।
गाम्भीर्य्यालक्ष्यविकृतैः प्रीत्यालापैर्महीपतेः। प्रत्यायातः कलुषतां नाज्ञासीत् कम्पनापतिः।
प्रहत्या सस्य निर्द्रोहतया शङ्कास्य तादृशं। प्रियं कृतवतश्च स्यादविश्वासोऽयवा कथं।
प्रीतिराभीश्च नृपते. स्वकृत्येहचितेरपि। अप्रियसमदाक्षापैर्व्विरक्तस्येव कामिनः।
श्लिष्टा राष्ट्रदयं प्रादां हारितं नृपतेरिति। वक्रमानेन दर्प्पाच्च स्वच्छन्दं स व्यवाहरत्।
पौरामगारहरणाद्युपकारैर्निरहुशः। तदन्यत्रोगधमानाविरागमनयज्जनं।
मिथागःस्मरणात् कोटेश्वरोऽथ व्यस्मीन्नृप। न विलम्ब्योऽपि भूपालकोपाविष्कृतविक्रिये।
केशं प्रकोपसन्तापेन सक्षिप्यन् सुज्जिना समं। समन्यवहितरथोनाभूदपि सत. प्रभो.।
धन्योदयो नृपः सुज्जिदापित्यामक्षभोऽवदः। अपुण्याद्विनिर्गृढं राज्यपुर्य्यां कृतस्थितिः।
तौ यावाल्लगतौ सौलत्परमहपरिच्छदौ। मल्लार्जुनस्य मायाज्यभ्रंशेऽपि विपुलश्रियः।
सुज्जिद्देपात् पुरा दूतैराहूतोऽलङ्कतेन यः। आगच्छत् भस्मपाच. स प्राप राजपुरीं तदा।

सुस्सिचित्तरथाभ्यान्तं स्वद्रुचेष्टेन भूभुजा । अविदृष्टप्रवेशाय दूतैर्भिक्षार्जुनोऽभजत्।
तन्निमित्तं स केनापि मामन्त्रेण महाध्वनि । सञ्जातकलहे ग्रस्तचतो लक्ष्म्या व्ययुज्यत।
तथाभूतमपि स्वर्णं भूर्य्युरीकृत्य नामकत्। यत्तन्मञ्जार्जुनो नेतुं कार्य्यशेऽस्लदपूज्यत।
सोऽस्वतन्त्रेण राज्ञा च सौजन्याद्रिल्हणेन च। दूतैः प्रच्छन्नमाहूतोरभसादाययौ ततः।
न न्यग्रहत्र चेत् हन्युर्मामसुचेति चिन्तयन्। अमित्रविषमे मार्गे पुरं साहसिकोऽविशत्।
स कान्यकुब्जगौडादिमण्डलेषु महीभुजां। स्वर्द्धया लब्धसत्कारो भूपतेर्यन्त्रियन्त्रितां।
अनवाप्य निजे देशे सत्क्रियां दुःखितोऽभवत्। राजधान्यन्तिकैः पौरैः प्रहतास्तु व्यलोकयत्।
भूपालो गणयित्वाऽथ मन्त्रिणो दत्तदर्शनः। भेजे स्वहस्ततांबूलदानप्रक्रिययैव तं।
निष्किञ्चनोऽपि सन् ख्यातिमात्रेणानुगतो जनैः। यातायातं नृपस्यद्रे कुर्वन् मञ्चूनकल्पयत्।
व्याहारव्यवहारादि व्यालोक्यालौकिकाकृतेः। पुरुषान्तरवित् सुस्सिलस्य स्वैरमवेपत।
दध्यौ सोऽथ ध्रुवं राष्ट्रे खर्व्वसर्व्वैकपक्रियं। नैवमेवाद्भुतं भूतमेतादृक् शान्तिमेष्यति।
तांस्तान् देशान्तरे वीरानुत्सिक्तान् दृष्टवान् स च। तं पर्य्यालोच्य विश्रान्तिमौत्सुक्यानाममन्यत।
भवितव्यतया दर्प्पणाय नीतः स्वतन्त्रतां। परिवादावहं सुस्सिलस्तेनायत्तद्यवाहरत्।
स्वानुगैर्लुण्ठितं रुक्ममाचचाणं तथा द्विजं। माधेर्मण्डवराज्यस्थः स शृगालमिवावधीत्।
वाद्ये कुकर्म्मणा तेन विज्ञाय जनमागतं। तं प्रत्युपक्रियं लोको विरागं नगरेऽप्यगात्।
अत्रान्तरे मन्युमेकं व्यधुः कमलियादयः। अगण्यप्रायमुत्सेकादुत्तमप्रक्रियास्पदं।
मयि सत्यपरोऽपि स्यात्किमनुग्राहकः स्वयात्। अर्कारिचारणप्रायस्यादृक्कोऽपीति सुस्सिना।
सञ्जातवैनमसम्बन्धबन्ध कमलियादिभिः। अयास्याविगतोऽप्ययं सामर्थ्याद्रिल्हणोऽप्यभूत्।
अस्येन हेतुनोद्भूतं द्वैतं तेषाञ्च तस्य च। खलपैशुनमेकैस्तत् मापाग्रु गतशाखतां।
प्रकृत्योत्सिक्तमुत्सेकावहैः समुददीपिपत्। दुर्मन्त्रैर्विंपरैशाग्ये साहदेविस्तमुल्हणः।
आसमानां महासाभिः चमते समगोर्धिकां। कृतघ्नोऽयमिति स्वैरं मन्युं राज्यपि सोऽग्रहीत्।
विश्वत्तु भूपतिस्तस्माद्रिल्हणं वाद्यमत्यवत्। मन्त्रस्वैरकथास्वेषु निश्चर्मेषु व्यवर्जयत्।
स तु धूर्त्तलदुर्लङ्घ्यनादृचस्वामिवेष्ठितः। स्वैरं धैर्य्यं परेयान्तु सन्नाशं माययातनोत्।
समपाप्मक्रियाकाङ्क्षमंसतः पद्वैयार्द्दयोः। तस्य तु प्रययौ सञ्जपालो दानेन मित्रतां।
समद्रयोः प्रविशतोरन्योन्यस्पर्द्धया तयोः। चणे चणे राजधानी ययौ सभ्रमलोलतां।
सुस्सि. स भूपानाचेष्टुं प्रतिपचान् युयुत्सया। महीमानोत्थशाखाने संक्षोभमुदपादयत्।
स्फाटिकान्यसाहस्रे द्वाःस्थाने वेदितो हि सः। तं निर्भेस्य शिलाचेपं क्रोधरूक्षाचगोऽकरोत्।
लिखितैरिव तान् सर्व्वैः सोढुं रचणमौग्नितु। मिथ्यातथ्यमिवोदोर्य्य संयतद्धिः समर्पितां।
उपाविशयदभ्यर्थे भूपतिः परिसान्त्वय तं। सत्यमित्यात्मि नः किञ्चिदित्यनन्तु व्यचिन्तयत्।
स्वके मल्लराज्यस्यैरथ मायोद्विशातिभिः। न सुस्सिः कम्पनेशत्वमिहाम्रदति वादिभिः।

अन्विष्य विद्विषः शङ्कां मन्त्रवित् निशि रिल्हणः । सन्नद्धसैन्यमानिन्ये पञ्चचन्द्रं तदप्रियं ।
प्रशङ्कि सज्जपालाच्च तस्माच्च वङ्कसैनिकात् । सुज्जिरन्यानगणयन्न युद्धास्य च तद्रिपुः ।
आक्रन्दभीत्या निर्गत्य हयारोहैः समं गृहात् । व्यूढानीको निरुद्धाग्रो जगामाराय सोऽध्वनि । १०८०
भूपतिः प्रातिलोम्येन वर्त्तमानस्तदाभवत् । कोष्टेश्वरोऽपि सन्नद्धसुज्जिना सद्धैवाचरः ।
स्थितमप्रातिलोम्येन सोऽवधीन्मनुजेश्वरं । इति द्वेष्योऽपि नितरां द्वेष्यतां नृपतेरगात् ।
तथा स्थिते निशीथिन्यामाचख्युस्तस्य विद्विषः । दुभुषाहेतुतां राज्ञा स्वगुप्त्यै तेन या कृता ।
अतथ्ये तथ्यवद्वस्तु तथ्यञ्चातथ्यवन्नृपः । यः पश्येन्मूढवत् सोऽर्थैस्त्यक्तोऽनर्थैः कदर्थ्यते ।
रत्नज्योतिर्ज्वलनवद्धिया त्यज्यते दृष्टिपातः श्यावाश्माणामितरविषयः स्वस्य सम्भाविते च ।
वस्त्वेकैकं यदिह न मृषा तन्मृषा यन्मृषा तत्तथ्येनेत्थं किमवनजनैर्दृश्यते तत्प्रभूत्यैः । १०८५
राजा यत्नधनादन्यदजानन् दौस्थ्यभेषजं । न्ययुंक्त तस्य तीक्ष्णत्वे सज्जपालं महौजसः ।
स कापुरुषवद्वीरः प्रहर्त्तुं छद्मना क्षमः । काङ्क्षिणान्विष्य तं हन्तुं तत्र तत्रैक्षत क्षणं ।
मायाप्रयोगानन्योन्यमुद्दिश्य स्पृशतोर्द्वयोः । क्षणे क्षणेऽभजद्राष्ट्रं त्रासोल्लासविलोलतां ।
प्रत्याशङ्कोदयं रात्रौ सुज्जौ जाग्रति पूर्ववत् । अव्यग्रयामिकग्रामं राजधामाप्यजायत ।
राज्ञाविश्वासने रिल्हणस्य सुज्जेरभीप्सिते । पार्थिवोऽप्यनुमन्ताभूदनीशः प्रत्यवस्थितौ । १०९०
सनिर्विंयासुरामन्त्र्य तत्खेदात् क्षुभिताः प्रजाः । सन्दर्श्य द्वारपतिना राज्ञो युक्त्या समर्थितः ।
संमन्त्र्य नृपतिं मैत्रीप्रार्थिना सुज्जिना समं । पीत्वा कोशं सज्जपालः प्राप्तो राज्ञोऽभ्यजिज्ञपत् ।
प्रेरणादुल्हणादीनां स्वात्मिकाचेष वर्त्तते । राजन् सुज्जेरभिप्रायस्पर्द्धिनोऽन्याननिच्छतः ।
निर्द्रोहस्यापकर्त्तुश्च सुते स्याद्यदि मे नृपः । निर्वास्य रिल्हणं चित्ररथं बद्धा महाधनं ।
लोहरारब्धिनिर्नष्टानश्वान् कोशञ्च भूपतेः । नयेयं संभृतोहन्यां दुर्वृत्तमपि कोष्टकं । १०९५
कार्य्योपरोधान्निर्बन्धः सम्बन्धेष्वत्र नास्ति मे । दाक्षिण्यं स्वामिनः कृत्ये यस्य प्राणास्तृणोपमाः ।
मध्येऽस्य प्रतिराजादिनिर्जयस्वीकृतोद्यमे । युवा विश्रान्तचित्तोऽयं नृपश्रीभोगभाग्भवेत् ।
साहायकाय द्वारेशमुल्हणं रिल्हणाश्रये । कार्य्यजाते च मामीशमाकारयितुमिच्छति ।
ब्रूते च मामुल्हणश्च त्वं चाहं चाविभेदिनः । मिलिता यत्र तत्रास्ति गण्यः कोऽनु नृपास्पदे ।
दूरस्थानवदायादमेकमानीय कञ्चन । निदध्योऽस्य पदे राज्ञो नानुतिष्ठेदिदं यदि । ११००
गुणान् प्रसरणत्रासादन्वायेत्र गिरा सृजन् । दिगाश्रुभङ्ग्या राजाथ विनिश्वस्याब्रवीद्वचः ।
यथाह स तथैवैतन्माद्रोहो नाममर्ष्यता । औदासीन्यमथैतस्मिन् सम्भाव्यमभिमानिनि ।
निष्प्रतिद्वन्द्वभावोऽस्य दुरुच्छेदो भवेदिति । इयमप्यन्यतस्तावदस्त्वपायधियः कथा ।
किन्तु दूये य आक्षेपमाथ्यात्तर्य्येनापि वा । निर्द्रोहस्य वधो ख्यातो योऽस्याशो कार्य्यएव तत् ।
अर्थोऽयमल्पसत्त्वानामपेक्ष्याभिर्हिं सम्मितः । नूनन्तैनोपलभ्येत तानावर्जयता धनैः । ११०५
पुष्पैरपरिहार्य्यैः स्वैर्गादेवैर्माद्दृशाममी । जानतामपि जायन्ते निर्गुणाभोगभागिनः ।

वाल्लिग्रान् गूढ़तां प्रायश्चित्तमेतन्महीभुजां । तन्मौर्ख्यस्य फलं मूढैरेतैर्यदनुभूयते ।
दुर्गमोऽभूमिभूर्मार्गो विटैर्हृष्टपैरिव । क्व स नीतिज्ञविज्ञेयः क्व च ते खलबुद्धयः ।
तन्वाना शैवमुख्यं रसनालौल्यशालिनः । परपिण्डापहर्त्तारः खलाः कौलेयका अपि ।
इत्थं खलोपतापेन प्रयुक्तं तद्भयात् पुनः । असंहार्य्यं कुकर्म्मेदं पश्चात्तापाय नाभवत् । ११६०
इत्युदीर्य्य नृपः सुज्जेः सज्जो व्यापादसिद्धये । तमगागारयच्छय्यागारं चाग्रहीत् स्वयं ।
विभ्रम्भस्नुतेः शङ्का जिघांसुः सुज्जिरित्यपि । तथ्यं भृत्यत्रयोजानंस्तस्थौ दौःस्थ्येन पार्थि
गत्वा स्वयं गृहान् यानसम्बन्धं कुरुतां युवां । इत्युक्त्वा रिल्हणेनाथ स सुज्जिं समयोजयत् ।
विश्राम्यापि तया हन्तुं तं प्रसङ्गमनाप्नुवन् । उद्ताम्यद्दिवारात्रं तल्पापर्य्यङ्कश्च लुठन् ।
सज्जपाले गृहादद्य नाशदुःखिन्यनागते । आशङ्क्य साहससिद्धिमधिकं पर्य्यतप्यत । ११६५
निपत्य वीरशयने सुस्सलस्यापसत्क्रियां । भ्रातरौ यस्य कल्याणराजाद्यावस्मरन् युधि ।
सेनानीः कुलराजः स ख्यातो व्यायामविद्यया । प्राणैरानृण्यमिच्छंस्तमपृच्छच्चोक्तकारणं ।
स संस्थापयितुं हन्तुं वाप्यशक्यं न्यवेदयत् । तस्याप्रतिमसाधेयं कम्पनाधीश्वराद्भयं ।
कियदेतन्निजप्राणसाध्यं लभ्यं महीभुजां । इत्याभाष्य स जग्राह साहसाध्यवसायतां ।
दिनद्वयमनायातो गृहेभ्यः कम्पनापतिः । न प्रातिभाव्यमभजत्तस्य मृत्योः श्रियोऽथवा । ११७०
विस्रम्भभृत्यः शृङ्गारनामा चाप्यब्रवीत् प्रभोः । तं दृष्टवांस्तृतीयेऽह्नि शयनेऽवगणं स्थितं ।
धीभोऽपि योगिनो भर्त्तुर्नित्यं सततसेवकः । कर्त्तुं साहसमाचिन्त्यं विदा तेन न पार्य्यते ।

करे पिनाकी मकराङ्कशत्रोः शोभाविशेषाय सदानुषक्तः ।
पुराहवे कार्म्मुककर्म्म तस्य तत्कालमात्रेण तु मन्दरेण ।

ताम्बूलहारकव्याजात्ततो राजा व्यसर्जयत् । कुलराजन्तमव्याजधैर्य्यामलक्ष्यविक्रियं ।
ध्रुवं मृत्युः पुनर्नाहमागन्ता तत्ततोऽस्य कः । आरब्धेति स निन्ये न ताम्बूलं स्वर्णभाजने । ११७५
व्यसनप्रशमं राज्ञः स्वदेहत्यागतोऽन्वगाः । एवं कर्त्तुं यतन्तेऽन्ये निर्व्यूढा स्तुविताः पुनः ।
सगणोऽवगणो वास्तु निहतो नियतं मया । जागर्त्तितः परं देवइत्युदीर्य्य विनिर्ययौ ।
गतस्य साहसासिद्धौ शक्यं शङ्कं पलायनं । इति चिन्तयतस्तस्य मन आसीदिशृङ्खलं ।
व्रजन् स्वामिहितं छत्वा पुनः पश्यान्निनाय स । शस्त्रिणौ दौ सिपाश्छत्रौ बन्धस्थाने परामृपन् ।
स्वयं गृहीत्वा ताम्बूलं राज्ञा प्रहित इत्यय । द्वाःस्थेनावेशितः सुज्जेः पार्श्वं हृष्टानुगोऽविशत् । ११८०
ददर्शासावपेतास्त्र मितैः परिजनैर्युतं । यूथनाथमिवात्यन्तैर्द्विपैररहितान्तिकं ।
गृहीतवन्दितस्वामिताम्बूलस्थंमितं स तं । दृष्ट्वा छत्यादि नृपतेः सत्यत्व्यस्रजत् क्षणात् ।
जनप्रवेशशङ्की स त्वरमाणस्तमब्रवीत् । कृतागाः कोऽपि कैवर्त्तः शस्त्रभृन्मत्समाश्रितः ।
तस्याक्षेपपरान् भृत्यान् स्वान्निवार्य्याधुना तव । समान्या वयमित्यर्थोऽन्वचयन् प्रकृतिचणं ।
मौक्तिकामिव तां वाचं सदर्पादवधीरयन् । तस्य इत्याचरं नाहं कुर्य्यामित्यब्रवीदसः । ११८५

सरोषादिव निर्गच्छन् मान्योऽसाविति वादिभिः । तं सान्त्वयित्वा तद्भृत्यैरुद्धा व्यावर्त्तितः पुनः ।
तेनावादि ततः कर्त्तुं विज्ञप्तिं वस्तुनोऽमुतः । सञ्जयोरादिशद्द्वारप्रवेशं रुद्धयोर्मम ।
अवशेनैव तेनाथ वीक्ष्य तौ सम्प्रवेशितौ । सहायलाभाद्धृष्टः प्रजिहीर्षुरवर्त्तत ।
याताथ कुर्य्यां प्रातर्व्वा विधेयमिति तान् वदन् । दत्तपृष्ठोऽविनिद्रासुलभे सुज्जिर्जहौ वपुः ।
गत्वाथ किञ्चिद्व्यावृत्तो निष्कृष्टछुरिको जवात् । आहरत्कुलराजोऽस्य वामे पार्श्वे कृतत्वरः । ११४०
तस्य धिक्कुर्व्वतोद्रोहमधावन् छुरिकां प्रति । यावत्पाणिः प्रहरणं तावत् सर्व्वेऽपि ते वधुः ।
विमर्षः पश्यतां यावदायङ्के तत्र नोदयौ । स तावदेव सुचिरापेतस्यामद्रवाभवत् ।
भयव्यक्ताभिमानेषु विद्रुतेष्वनुजीविषु । चकर्ष शस्त्रं तत्रैकः पिच्छदेवः परं तदा ।
प्रहरंस्तैस्त्रिभिस्तुल्यप्रतिप्रहर्तृभिः ततः । भ्राम्यन् लुताष्टकस्थात् स मण्डपान्निरवास्यत ।
स्थितान्दत्तार्गले धाम्नि रुद्धद्वारतमोरयः । जिघांसवः सुज्जिभृत्यास्ततस्तान् पर्य्यवारयन् । ११४५
तमोरिप्रतिकुर्व्वाणाभज्यमानेऽरिभिर्व्वधुः । ते द्वारे ह्वलग्ग्यान्तौ मोत्सार्य्य शवमुद्धृतं ।
खड्गमुद्गलपरशुछुरिकाप्रासाभिवर्षिणः । तान् स सम्भ्रमयन् मार्गैरनेकैस्तु विविचरः ।
नैराश्यहेतोर्व्विमतां तेषां सङ्कटवर्त्तिभिः । पृष्ठाच्छित्वा शिरः सुज्जेरङ्गनेऽक्षिप्यताथ तैः ।
अश्रुनिःसरणाभीत्युग्मुक्तेक्षणपुटश्रुतिः । उत्तरोष्ठकचच्छन्नसन्नघ्राणपुटद्वयं ।
अक्ष्णोर्व्विभ्रम्यमाणस्य लोकस्य प्रतिबिम्बकैः । सम्भाव्यमानसंस्पन्दलोकमयकतारकं । ११५०
स्यपुटस्थाक्रमच्छेदाङ्गलमांसस्य सन्धिषु । हरिद्रार्द्रैरिवाश्यानमेदोग्रन्थिभिरुल्बणं ।
धूलिध्वस्तकचश्मश्रु तदेतदिति निश्चयं । परं भालतलस्थेन ददत्कुङ्कुमबिन्दुना ।
तद्वीक्ष्य तिर्य्यक् पतनव्यक्तसन्ध्यन्तरद्विजं । उच्चलत्कुमुलाक्रन्दा स्त्रियः क्वापि विदुद्रुवुः ।
कुलकं ॥ तीक्ष्णान् प्रयुज्य क्ष्मापस्तु तिष्ठन् व्याकुलधीस्तदा । बहिर्व्वीक्ष्य जनक्षोभं साहसं निश्चिकाय तं ।
सुज्जौ हते च्युते वापि कार्य्यमेतदिति श्रुतं । सन्नह्य सैन्यस्यादिक्षत तन्मन्दिरवेष्टनं । ११५५
मिथ्यैव सुज्जिनिस्तीर्ण इति श्रुतवता जनात् । स्वयमप्याद्रि भूपेन ततः समरसम्भ्रमः ।
निस्संशयं हतं ज्ञात्वा सुज्जिं राजोपजीविनः । तत्र स्थितं मिवरयं सर्व्वदेश्यमवन्ध्यन् ।
हित्वात्मजन्मनः सुज्जिभ्रातृश्यालस्य कोष्ठकं । कलशस्याथ निर्वर्त्य वाणीयं पुण्यभागिनी ।
आचिक्षमाणेभिर्व्याधैरन्ते वीरोचितं कृतं । तेन लसंशयस्थेन सदाचारान्न विच्युतं ।
राजाकस्थैव तां वार्त्तां श्रुत्वा सद्यःपलायितः । हतस्य स्वामिनोऽभ्यर्णं जिहासुर्जीवितं ययौ । ११६०
द्वारं पदप्रहतिभिर्भञ्जन्तं राजसैनिकाः । अपमार्य्य कथञ्चित्तं तीक्ष्णाः छिन्नादरचिषुः ।
प्रविष्टेऽस्मिन् निर्य्यूढपीडिने मण्डपान्तरं । सद्यः प्राणनृपाभ्यर्णं कुमराजादयोऽययुः ।
हठप्रविष्टो हतवान् स तत्रैकं महाभटं । शरैरेव हतो दूरात् कथञ्चित् परिपन्थिभिः ।
आयातं क्षुभिते देशे सङ्ग्रपालं महीपतिः । रिल्हणं चोल्हणं हन्तुं प्रादिशद्दिदिशत्वरः ।
यातौ मार्गात् पलाय्याथ परिहासेति रिल्हणः । चिचिकातटपर्य्यन्तमटित्वा यावदाययौ । ११६५

पूर्व्वायातः सज्जपालो गृहद्वाराद्विनिर्ययौ । उल्लङ्घ्य पयोदन्वान् सुवहन् प्रहरत्रये ।
तावदेकस्य खड्गेन निकृत्ते दोष्णि दक्षिणे । लक्ष्मास्त्रियेपे च्छिन्नास्त्रिन्नायुधन्विरजायत ।
अगच्छमायतां प्राप्ते वंशे यत्कीमलादसौ । दिगन्तरेषु स्वस्मिंश्च देशे प्राप प्रथां पुनः ।
फलकाले समासन्ने शौर्य्यप्रतिभुवामजत् । स तेन दोष्णा वैकल्यं धिगिच्छां विधुरां विधेः ।
स प्राप्स्यदुदयावाप्तौ भवेदविकलो यदि । फलेन तस्य जानीयादिच्छां लोकोऽयमद्भुतां ।
पीतामृतस्य क्षतविग्रहत्वं न प्राग्भविष्यद्यदि नाम राहोः ।
अज्ञास्यदिच्छान्तदमुष्य लोकः सामर्थ्यभाजः सुचिरप्ररूढां ।
दृष्टः शोनाभिधो दृड्डः पितृव्यः सद्देवविना । समृद्धं निहतः साधु सम्यग्ज्ञातप्रवर्त्तिना ।
तस्यार्त्थौ विषेतो वेश्म लक्ष्मलाख्योऽयगोहनः । मान्धोऽनुगो भटौ द्वौ च यामिकश्च जनङ्गमः ।
बालं तनयमालोक्य निपषस्याङ्गनस्थितेः । तस्य निर्गच्छतो गेहे रिल्हणोऽग्निमदापयत् ।
आनीयमानो धूमान्धो बद्धा मुख्यैः सनैनिकैः । स्वद्वारे हतः कैश्चित् प्राकृतैर्नरविक्रमः ।
तस्य प्रधानप्रकृतिचयैर्हेतामहीपतिः । सुप्तमप्यवलोक्यासीदशान्तक्रोधविक्रियः ।
व्यापाद्यमानः साकोपं भूपतिप्रेरितैर्भटैः । उच्चावचाः सुज्जिसत्व्याः कृत्यं मनोचितं व्यधुः ।
अनुजो लवकः सुज्जेर्बद्धा नीतः स विक्रियां । नृपं वोच्छादयैः कैश्चिद्राजधान्यङ्गने हतः ।
भ्राता पितृव्यजस्तस्य सङ्कटाख्यो नृपाङ्गने । खुटवटदव प्राणानौचित्येनामुचत् छनी ।
प्रविष्टः शरणं वाणवंश्यैः पापैः प्रमापितः । उन्मत्तो मुम्मुनिस्तस्य भ्राता कैश्चित् स्वमन्दिरे ।
सुज्जिश्यालस्तु शृङ्गाररत्या भङ्गुरया हतः । महाकुलीनोविचरन्नौचित्येन च चित्रियः ।
सड्ढिकाख्यः प्रतीहारो व्रणितः शनकैर्हतः । अन्येऽपि मन्त्रिणः सुज्जेस्तत्र तत्र प्रमिम्यिरे ।
जात्या वाजिजवप्राप्तप्राणः कोटेश्वरान्तिकं । आमाद्य वीरपालाद्याः द्विवाम्रत्युभयं जहुः ।
व्रजन् शरदि यो दुष्टोत्थानरुद्धतुरङ्गमः । प्रपेदे मङ्गटभ्राता बन्धनं सुभटामठे ।
सूनुश्च सज्जलः सुज्जेः श्वेतिकस्याप्रजात्मजः । उल्लङ्घ्य तनूजश्च कारागारं प्रपेदिरे ।
इत्थं राजन्यमात्ये च प्राप्ते पिशुनवश्यतां । नवमेऽब्दे शुचेः शुक्लपञ्चम्यां विप्लवोऽभवत् ।
कार्य्ये क्वापि विपर्य्यस्तमस्तं संस्मृत्य मन्त्रिणं । तमद्यापि नृपस्तादृक् भृत्योपेतोऽनुतप्यते ।
वेतालोत्थापनाच्छ्मशानदहनादिव सर्प्पणात् । व्यालाद्यैश्चैव विषमं सत्यं राजोपसेवनं ।
अनात्मायत्तनिस्तीर्णगुणानां चक्रवर्त्तिनां । शकटानामिवाश्म्यो त्रिश्वस्तः कोऽनुभज्यते ।
अयुक्तं नृपतेः सुज्जिवधं मेने प्रजाः पुनः । युक्तं ज्ञात्वा तमुद्रिक्तशक्तिता विविदुः प्रजाः ।
भेजे राजा सज्जपालं कम्पनाधिपतिं ददत् । कुलराजे च नगराधीकारित्वं समार्पयत् ।
त्यक्त्वा मल्लार्जुनो धन्योदयौ नगरमागतौ । प्राप्यत् पुनर्जगृभाते प्रियौ विश्वसराभुजः ।
इतराश्रयविच्छेदा वीतपारिप्लवस्थितिः । श्रीः सर्व्वाकारमकरोत् स्थिरं चित्तरये पदं ।
अद्भुतैश्वर्य्यधुर्य्योऽपि राष्ट्रं दण्डेन पीडयन् । शमं नेतुमशक्योऽभूत्तस्य भूपस्याध्वनदुमः ।

गन्धर्व्वानाभिधे ग्रामे टिक्कं हत्वा व्यसर्जयत्। पारं विग्राकं कोट्टेशस्ताच्छिरः पार्थिवान्तिकं। ११९५
निसर्गद्वेषिणा प्राप्तप्रतापे नितरां नृपे। तदानीं तप्यमानेन दूतेनाध्यायितोऽप्यकृत्।
कोष्टेश्वरेण रभसादल्पैः परिजनैर्युतः। निशि लोठनदेवः स डामरग्रामं ततोऽविशत्।
महाकथितकन्थोऽन्यैः संरम्भे रात्रि सर्व्वतः। बहूपभिर्विलवन्यस्तं विससर्ज यथागतं।
उच्चलादिवसादात्तं राज्यं सरभसं भजन्। निर्व्यूढियुद्व्यदार्ढ्योऽगान्मूढो लोकस्य हास्यतां।
तीक्ष्णप्रयुक्तिभिः सैन्यभेदैरन्येद्य कोष्टकं। उपायैर्नृपतिस्तैस्तैस्ततो हन्तुं व्यचिन्तयत्। १२००
प्रतिदन्दीव तीक्ष्णानां पाटिताच्च चमाभुजां। न संप्रसादयन् क्रुद्धः प्रतियोद्धुं व्यचिन्तयत्।
स्वैः स्वैः प्रदेशैरादिश्य प्रवेष्टुं पृतनापतीन्। स्वयमुच्चावचैः सैन्यैरवचस्कन्द तं पुनः।
स भूपं रभसायातं ज्ञात्वाल्पपृतनं बली। प्राप्तस्खलयितुं तस्थौ प्रतापैः परिहारितः।
लग्ने रणे चित्ररथः पृथुसैन्योऽपि दैवतः। तस्य सैन्यैकदेशेन निन्ये जयविपर्य्ययं।
अङ्गनामङ्गलोद्धारकल्पेन किल तेन सः। ततः प्रभृत्यभूद्युद्धदवष्टम्भोदिने दिने। १२०५
रिल्हणादीन् योधयित्वा व्यूढव्यस्ताखिलानुगः। लवन्योन्यपतत् सायं कम्पनाधिपतेर्बली।
जनैः शतादपि भटैर्युतो विगतसैनिकः। सह तत्सैन्यरोषं स गजक्षोभमिवाचलः।
किं वाच्यः स नरव्याघ्रः प्रहृष्टिं याति सङ्गरे। निजवर्मतनुत्रादि यस्य मानि न वर्माणि।
मन्दीकृतारिसंरम्भमवष्टम्भेन तादृशा। तन्निश्चक्रादय प्रापुर्लवन्याः सैन्यशालिनः।
तैः स्वजातीयदाक्षिण्यात्तटस्थैरपि सङ्कटे। तस्येषदुपयोगोऽभूत् स्ववीर्य्योपात्तविद्विषः। १२१०
काले सप्तदशं रात्रिं जायत सामतोबलैः। समये ग्रहणात्यागतत्तद्युक्तिविकल्पनं।
लब्धभूत्या परित्यागो जिगीषोरीदृशैर्गुणैः। चलैर्युररयोऽप्यस्य का धैर्य्याक्रमणे स्तुतिः।
अविश्वसन् भिन्नभृत्यस्तादृक् संरम्भपीडितः। पलायनोन्मुखः शैलात् कोष्टकोऽथ व्यगाहत।
मार्गेष्वकालप्रालेयपातरुद्धेषु वाजिनां। गन्तुं तस्यासमं जग्मुः पृष्ठलग्ना विरोधिनः।
अवसादोपतप्तोऽथ परिमेयपरिच्छदः। स ययौ जाङ्गवीं स्नातुं राज्ञा राष्ट्रादपाकृतः। १२१५
सोमपालोऽथ भूपालनाम्ना पुत्रेण खेदितः। दीर्घवैराज्यद्दु स्वार्त्तः शरणं नृपतिं ययौ।
पुत्रौ दत्तवतो नीविं नागपालस्य तस्य च। अभयं प्रतिशुश्राव भूभृद्दाश्रितवत्सलः।
इह द्राज्यस्य जिह्मोऽयं दौस्थ्यहेतुरभूदिति। स तदापदि नासार्पीदध्याजोदार्य्यधुर्य्यधीः।
साहायकाय स्वं सैन्यं दत्तवांस्तं महीपतिः। भूय प्रतिष्ठामनयद्दर्पप्रशमनाद्रिपा।
ध्यात्वा पुनर्यो व्याहत्त्य कोष्टकोऽप्यन्तरे पुनः। मल्लार्जुनं प्रदीप्ताभूत् दैराज्योत्थापनोद्यतः। १२२०
अर्कोपरागे प्राप्तः स कुरुक्षेत्रमवाप तं। लवन्यं कार्य्यतस्त्यक्तपूर्व्ववैरो नृपात्मजः।
आहूतो लोठनः पूर्व्वमायातस्तेन डामरैः। निशम्य तं सङ्कटितं खिन्नः प्रायाद्यथागतं।
विजयेश्वरतः पोतकोशोऽपि नृपतिद्विषः। प्रविविक्षुर्नृपैषिष्ट सोमपालो दुराशयः।
आराधनाय भूभर्तुस्तत्पुत्रः कोष्टकं पुनः। प्रार्थ स्वविषये तैस्तैरुत्कुरैर्मिरसुप्तयत्।

अत्रान्तरे चित्ररथं संरुद्धायामदुर्ग्रहं। अनिच्छन्तोऽवन्तिपुरे प्रायं चक्रुर्द्विजातय ।
उपेक्ष्यमाणास्ते दर्पात्तेनागणितभूभुजा। ज्वलिते ज्वलने देहान् बहवो जुहुवु शुचा।
चरके धर्म्मधेनूनामुत्तम्भेऽपि तदाश्रिते । वङ्किं गोपालकोऽप्येक कारुण्यप्रवणोऽविशत्।
भट्टस्योद्भटवंशस्य पृथ्वीराजस्य नन्दन । युवा विजयराजाख्य मातुलोगाढदुर्गत ।
देशान्तरं जिगमिषुर्व्विषमं वीक्ष्य तत्र तत्। व्याजहारानुजन्मानं कारुण्यामृतकणान् किरन्।
उपेक्ष्यमाणा दाक्षिण्यस्तम्भितेन महीभुजा। विप्रा सचिवपाशेन विवशा पश्य नाशिता ।
छन्दानुवृत्त्यामात्यानां यत्र क्ष्माभृदुपेक्षते। कस्तत्रान्यस्तु दीनानामापत्क्षमयिता विशां।
यदा न्यायोऽयमन्योन्यस्पर्द्धया यदुपस्रुतं। शमिता दण्डयेच्छाम्यं शमितारं परोऽपत्रा।
विशृङ्खलं नयेच्छाम्यं दार्व्वभारं विघट्टनै । कदाचिन्नोद्धमशानमगमा लोढं कदाचन।
दोषेणैकेन न द्वेष्यो राजा सर्व्वगुणोज्ज्वल । वधाश्चित्ररथस्यान्यद्विधेयं नावभाति मे।
धर्म्मं सर्व्वोपकार्य्येकत्तुद्रक्षणमुच्यते। जघानाजगरं सोऽपि जन्तूनामन्तकं जिन ।
दुर्वृत्तदमनेऽस्माभि कृते तेजस्विनोजनात्। भूयोऽप्यधिकृतो बिभ्यन्न कश्चित् पीडयेत् प्रजा ।
कायस्यास्य परित्यागादनन्ता जन्तवो यदि। सुखिन स्युरसौ भ्रातर्व्वणिज्या व्याय्यसौ न किं।
सर्ग्गुस्तवांसं स तथेत्यथ कङ्कोत्रपीयिनं। विधायानुससारैत्य हन्तुं चित्ररथं तदा।
कालेऽस्मिन् धर्मदौर्व्वल्यकलुषेऽपि कलौ किल। प्रभावो भूमिदेवानां द्योतते ऽद्याप्यभङ्गुरः।
ब्राह्मणैरपरिक्षीणपूर्णपुण्यो न कश्चन। धैर्य्यमारभते भ्रष्टदुष्टोत्पाटनपाटवे ।
द्विजानुद्वेजयन् मुक्तिं द्विजादेवासदद्वधं। विप्रैरेव हतश्चित्ररथो विप्रावमानकृत्।
द्विजोत्थापितया क्रान्तचित्तोऽसौ कृत्यया ध्रुवं। दध्यौ तस्य वधं प्राणान्विना कारणमुत्सृजन्।
क्ष्मानुसारक्षपत विप्रा देहान् यदैव ते। तद्रूपस्तुल्यसङ्कर्षे तदैवासीत् हतानुग ।
अनासादयतश्चित्ररथं पृथुबलान्वितं। गणरात्रमभूद्धन्तुर्द्दिवारात्रं प्रजागर ।
स क्ष्मापर्य्यन्तसामन्तसीमन्तितपथो व्रजन्। अभूदृश्यो दूरस्थस्य जनसम्बाधमध्यग ।
तेन सायम्मैत्यस्य निष्ठुरेणैकदा जवात्। सोऽनुपस्ते व्यतिक्रान्तानि श्रेणिर्नृपवेश्मनि ।
विलुण्ठितस्य स्कन्धाये कृपाण्यामूर्द्ध्रयाप्य स । सामन्तमध्यगस्यैव प्राहरत्तीव्रमाहस ।
मुमूर्षोरिव तत्रास्य वैक्लव्यगलितस्मृते । उद्भ्रान्तचक्षुषो वक्त्रेस्थ्यवनं समपद्यत।
प्रमापितोऽयं राज्ञेति ज्ञात्वा मत्सरहिंस्कृता । वित्रस्तास्ते तथाभूतमत्यजन्ननुजीविन ।
तं वीतजीवितं ज्ञात्वा न तीक्ष्ण प्राहरत् पुन । प्राप्तं द्वितीयनिःश्रेण्या भ्रातरं निषिषेध च ।
न पलायिष्ट निर्व्विघ्नसर्व्वमार्गोऽपि घातित । राज्ञा चित्ररथ सर्व्वदित्युधै प्रोपकार स. ।
प्रनष्टं भ्रष्टमांसादिराज्यभोगपुरस्सरे. । सर्व्वे कापुरुषैस्त्वाषादय चित्ररथानुगे ।
व्यायाक्षोठरथस्य भ्राता भीत्या पलायित । शरण नर्त्तकीमेकां ययौ वञ्चापिंतस्तन ।
तादृक् प्रवेशितश्चित्ररथोऽभ्यर्थ्य महीभुजा। मा भैषी प्राहरत्कस्त्वामित्युक्त्याश्वसित स्वरं।

नृपाज्ञया को निहन्ता दारेशस्येति वादिभिः। तीव्रोऽस्मिंष्टौभटैः सोऽहमित्युक्त्वा स्वं न्यदर्शयत्। २२०५
धीरो योधान् स्वधैर्य्यात्तु लङ्घनश्लाघ्यविक्रमः। त्रिंशद्दिंशान् स हत्वाथ प्रहृत्य चरणे हतः।
परित्राणाय साधूनां विनाशाय च दुष्कृतां। धर्म्मसंस्थापनार्थाय सम्भवामि युगे युगे।
हृष्ट्वा लिखिततत्कृत्यकारणा पत्रिका करात्। तस्यान्तसमयाशंसा श्लोकेनानेन पावनी।
अच्युतादादीन्लयुतश्चित्ररथस्ततः। हृद्व्रणोऽपि ललाटसन्धिवेधादजायत।
स मासान् पञ्चषान् याप्य निराप्यायक्षमाकृतिः। विवेष्टमानोऽवर्त्तिष्ट शयनीयतलेऽन्वहं। २२१०
मल्लार्जुनं पुरस्कृत्य कोष्टकोविघ्नोन्मुखः। तन्मध्ये तरुसंबाधं गिरिदुर्गमगाहत।
मा मामभ्रमयं भ्राम्यन् स्वयूथ्यग्रथनोद्यमात्। अविस्मृतापदं लोकं पुनर्दैराज्यशङ्किनं।
अकाण्डाम्बुदजालेन पीडिताङ्गदवाभजत्। परचक्रोदयेनाशु लोकः शिथिलशक्तितां।
तद्दुर्गं तदक्षश्चक्रोपवाप्यथ सर्व्वतः। व्याप्तोपान्तवनग्रामैः सचिवैः स न्यरोधयत्।
सञ्जपाले यवनकैः स्कन्धावारं निवघ्नति। अनुचक्रुर्द्दिषोऽस्पन्दा निवातस्तिमितांस्तरून्। २२१५
धन्यकोश्रिलकाकोष्टपर्य्यस्तकटकोऽभवत्। गन्धद्वेषी गजरिपुः सिन्धुरस्येव वैरिणः।
आवासितबलो राज्ञा गोवासे रिल्हणोऽकरोत्। अटवीं पर्य्यटन् यूकानिवार्कोत्कपिठतानरीन्।
तीव्रशक्तेर्नृपस्यैवमारम्भैः स्तम्भितोऽभजत्। कोष्टेश्वरश्चिचतुरान् मासान् सञ्चारशून्यतां।
क्लिष्टोदेशान्तरे राष्ट्रानन्तरैर्निकृतोनृपैः। भिन्नस्वर्गोभूभर्त्तृभृत्यवर्थीकृतोद्यमः।
वालिशत्वादकुशलोशातुं वृत्तिं महीभुजां। सविस्मृतागः सन्धातुमैच्छच्छिन्नपदोनृपं। २२२०
उज्जिहीर्षोः प्रभोर्म्मन्युं वाच्यं तदश्मनादिदन्। भक्त्यैकाग्रः सञ्जपालस्तस्यैकां तामपूरयत्।
तथार्त्तोऽपि रिपुं राज्ञः सन्धित्सुर्न्यग्रहीन्न सः। पृथ्वीहरप्रभृतीनां निर्द्रोहत्वं न कौतुकं।
तेन प्रहिण्वता राजवैरिणं स्वकराङ्गुलिं। छिन्दतापि महीभर्त्तुर्मन्युश्छेत्तुं न पारितः।
कण्ठबद्धशिरःशाटः शीर्षेणोपानहं वहन्। भुक्तवेलोऽपि भूपालं कर्त्तुं नाशकदक्रुधं।
अस्खोठतदिवभूभृत्साञ्छनः स हि राजवत्। तत्तत्प्रत्युक्तम्भूपाग्रः सर्व्वं गर्व्वान् व्यवाहरत्। २२२५
शुश्राव बद्धं तन्मध्ये यातं मल्लार्ज्जुनं नृपः। अनुबध्नाति भव्यानामुदयोऽभ्युदयान्तरं।
नियमानः स हि स्कन्धमधिरोप्यानुजीविभिः। अजातिकतया मार्गोल्लङ्घनाय स निःसहः।
ततस्ततोभयस्थानात्रिस्तीर्णो लोहराश्रितं। शावर्णिकाभिधं ग्रामं प्राप्तो विन्यस्तरक्षिणा।
निरुद्धोजग्गिकाख्येन ठक्कुरेण महीपतिः। प्रियंकरं तञ्च मत्यं शुश्रावान्तिकमागतं।
रक्षमाणोऽरिणा दुर्गान्निर्गतः स कथञ्चन। सङ्कुलेन पुनः शक्तिः कस्य भावार्थलङ्घने। २२३०
गङ्गाम्बुमार्गलुठिता जठरात्कथञ्चिदेकस्य संहतवतो निहता महर्षेः।
यत्नापरेण स्वतमागरगर्त्तपूर्त्तिः शक्तो न कोऽपि भवितव्यविलङ्घनाय।
जग्गिके सद्रुसंप्राप्तिपर्य्यन्तोपान्तरक्षिणि। राजाद्यदारपतिः प्रायोऽसि प्राध्यबुद्धिना।
तं विना धैर्य्यगाम्भीर्य्यसौर्य्यधुर्य्यं महाधियं। घट्टेन प्रारब्धो राजाज्ञाप्यभिमन्त्रितः।

स व्यतिक्रम्य साबाधान् मार्गान् उभयवेतनैः। तमोरिस्थितमद्राक्षीत्तं क्षमापतिविद्विषं।
निष्ठाशून्येन धैर्य्येण शौर्य्यसम्भावनावहः। स्तुवन् स तं यैर्द्विःप्राप्तं तत्तदुक्त्वाब्रवीत् पुनः।
सर्व्वतो ज्यायसीं भर्तृभक्तिं यो बहु मन्यते। भवान्धुर्य्योमतिमतामाहवोत्तोडनान्तरैः।
हता रत्नामणिसमं सहायं त्वादृशं विना। हानिर्मे दुर्नरेन्द्रस्य बाल्ये राज्ये वहुच्छलैः।
दुष्प्रेक्ष्याणां भवत्येव नियमाद्राजभास्वतां। भाग्यान्तहेमन्तदिने जनैर्न्नविलङ्घ्यता।
शोभते रुधिराताम्रमण्डलाग्रो यथोदये। तथा योऽस्तमये भास्वानिव वन्द्यः स भूपतिः।
धन्योऽवतारो यस्यासीत् क्षुभ्यत्पौराङ्गनाजनः। उदयेऽस्तमयेऽप्युग्रे रागव्याप्तपरीगणः।
पदे प्रयोगं सन्ध्यार्थं किञ्चित् कृत्वा कुलीनवत्। अहं कविरिव प्रौढं प्राप्तो निर्व्यूढिमूढतां।
सत्यंकारोऽधुना भूत्वा विधत्तां स्वान्तसुस्थितिं। साध्वलानभिव्यक्तेन वर्णेनैकेन सोभवान्।
इत्युक्त्वा प्रत्ययोत्पत्त्यै संस्प्रष्टुं स्फाटिकं ततः। भूपीठं पुरतो द्वारपतेर्लिङ्गमुपानयत्।
अच्छलाहवसंमर्दप्रासशूलेषुवर्षिणः। योधान् योद्धुं वरं सायं मानवान्नूनमिच्छति।
इति सम्भाव्य संस्पृष्टशिवलिङ्गः स वाञ्छितं। वरं तस्यारिरीचक्रे स च भूयो जगाद तं।
आकृष्टदृष्टिरहतः क्ष्माभुजोऽन्तिकमत्रतः। यथेदृगेव प्राप्नोषि तथा त्वामर्थयेऽधुना।
कार्पण्यापहतं तस्य वचः श्रुत्वा त्रपाजडाः। सर्व्वेऽप्युर्व्वीमुखास्तस्थुर्दष्टाग्राः पल्लवा इव।
अन्येद्युस्ततो भिक्षोः स्मर्यमाणः सचेतसां। विकाशहेतुतां प्राप स्वस्थस्य मनसः पुनः।
मनुष्यवाह्यमारूढः पत्रं जिन्ये स निस्त्रपः। तेन स्वपालितांल्लोकानपि पश्यन्नविक्रियं।
अहीनाचारनिद्रादिवैवश्यः पथ्यवत्पथि। हन्यमानः स केनापि न विक्रन्येन पस्पृशे।
पश्यन्नानीयमानन्तं गोपृभिस्तादृशं जनाः। दयार्द्रहृदयश्चासीन्नाभ्यनन्दच्च भूभुजं।
उवाच चानुकम्प्योऽस्मिञ्जनस्त्वेष्टस्य भूपतेः। नैतावद्भाति नैर्घृण्यमनुजे पितृवर्जिते।
आसेचनकमेतस्य मेचकाब्जदृशो वपुः। क्लेशगर्ह्यमनिस्त्रिंशचेताः कः कर्त्तुमर्हति।
पूर्व्वापरानुसन्धानवन्ध्यस्तं दृष्टवांस्तदा। विस्मृतागा नृपं तत्तदित्युपालम्भनाध्वनि।
गणना कथ वा बालबालिशादौ विधीयते। न चित्तहस्तेरैकार्थ्यं महतामपि सर्व्वदा।
आहूणां द्यूतपाञ्चालीकेशकृष्ट्यादि शृण्वतां। पाण्डवेभ्योऽधिकः क्रोधो धार्त्तराष्ट्रेषु जायते।
कुरूणां क्षतजापाने भीमेनोरुमूर्द्धताडने। श्रुते पाण्डवविद्वेषस्तेषामेव च दृश्यते।
परावरज्ञः कार्य्याणां न कश्चिन्मध्यमं विना। ततस्तोऽनुभवाभेदस्तत्र तत्र कथं भवेत्।
स पौरान्निर्दयतङ्के च्छिन्नाङ्गुल्यङ्कमुद्वहन्। युग्याधिरूढो मृत्पात्रं मायं नगरमासदत्।
न्यधत्ताश्वयुजा शुक्लपक्षदशम्यां महीपतिः। एकादशेऽब्दे तं रक्षितुं नवमठान्तरे।
त्यक्ताहारस्य च भिक्षाः पश्यपास्तस्य तान्यतः। पार्श्वं जगाम कारुण्याच्चरणस्पर्शनार्थिनः।
अवादीदर्पितं तस्मै प्रतिशुश्रुवुपे भयं। द्रोहावेकान्ततो वध्यौ सचिवरयकोष्ठिकौ।
राजा निर्जगुपः स्वोर्व्या कोष्टकस्याथ बन्धनं। निधिकुः पद्मपानाम्नाविद्रुणादीन चूचुदत्।

सर्व्वेषु गलितौजस्सु स्वयं राज्युद्यमस्पृशि । अथ तं रिल्हणो दोर्भ्यां झपं ग्राहइवाग्रहीत् ।
हृतशस्त्रः स बलिनस्तस्य दोष्पञ्जरान्तरे । तस्थावचेष्टो निद्रान्धो भूतेनेवालसीकृतः ।
भ्रातृव्यो ऽभि खराजाख्यः कुलराजस्य कोपनः । भूभुजस्तस्य कृपाण्यास्य निर्बिभेद क्रकाटिकां
परस्वधेन मूर्द्धानं पृथ्वीपालस्य ताडयन् । राजबीजी स च क्रोधान्ध्यपिध्यत महीभुजा ।
क्रकाटिकास्थिसञ्जातमर्म्मवेधोपचेष्टितः । विवेष्टमानोऽवर्त्तिष्ट क्षितौ स रुधिरोक्षितः ।
महाबलैः कमलियप्रमुखैस्तस्य सोदरः । चतुष्कः पातितोऽप्युर्व्व्यां गण्डशैल इव द्विपैः ।
विलोक्य वैकल्यहतौ बद्धौ तौ स्वामिनौ तथा । कृष्टासिधेनुरुत्तस्थौ द्विजन्मा मल्लकाभिधः ।
उच्चावचेषु प्रहरन् स भूपालोपजीविषु । अतर्क्यमाणस्तुमुलं राज्ञोबालव्यतापतन् ।
नृपान्तिकादापततस्तांस्तान् घ्नन्तं महाभटान् । अधावत् सासिधेनुस्तं कुलराजो महौजसं ।
प्रतिप्रहृतिषु क्षिप्रापतत्पाणिमपारयन् । निहन्तुं संहरेऽधेव भित्तौ व्यायामवित् स तं ।
अपयातुमवस्थातुं प्रहर्त्तुं वाप्यशक्नुवन् । तस्थौ च वज्रसन्धानः संस्तभ्येनमविचलं ।
चरणास्फालनोत्फालदोःशब्दमुखरोऽन्तिकं । धाविते पद्मराजेऽथ मल्लकोऽक्षिपदीक्षणं ।
प्राहरत् कुलराजोऽस्य लब्धरन्ध्रोऽथ वक्षसि । प्रहृत्य गच्छतः पाणेः स तस्याङ्गुष्ठमच्छिणोत् ।
तौ विज्जराजो दर्पोष्णनिबिडे प्रहरत्युभौ । तस्मिन प्रतिप्रहरति क्षिप्रं प्राहरतां ततः ।
स क्षीनप्यभियोक्तृंस्तांस्त्यक्त्वा दृक्पथमागतं । चतुष्किकाद्वारगतं राजानं समुपाद्रवत् ।
लक्ष्यीभूते नृपे शीघ्रमनुधावन् ससम्भ्रमं । चकार कुलराजस्तं स्फिगस्थिक्षतिनिर्जवं ।
ततः सर्व्वेष्टतो योधैः क्रोशक्रोशान् स सत्वरं । हत्वाभजद्वीरशय्यां रक्तस्यन्दोत्तरच्छदां ।
जीवद्व्यापद्गतस्वामिनोचितः श्लाघ्यविक्रमः । स एवास्पृहणीयान्तश्चणो वीरैरगण्यत ।
बहिःकोष्टकभृत्येषु विद्रुतेषु दरिद्रतां । परं जनकचन्द्राख्यो धैर्य्येणोवाह डामरः ।
निरायुधो राजभृत्याद्भल्लेकस्मात् परश्वधं । स ह्यायुद्धायदूतलं नयन् भूरीन् यमान्तिके ।
यियासोस्तस्य चण्डांशुमण्डलं परशुः करे । सुषुम्नासंविभागार्थी शशिखण्डइवाविशत् ।
नाद्राक्ष नाश्रौक्ष वापि वेट्टू भर्त्तरि यत्तदा । कोष्टकस्य वधूरन्वतिष्ठन् मानवती सती ।
जीवन् भूयोऽपि लभ्येत लया स पतिरित्यसौ । बन्धूनामवधीर्य्योक्तिं प्राविशद्धुताशनं ।
सप्तर्षियोपिदाक्षेपतर्पकिल्बिषदूषितः । तस्याः सतीलोकगायाः पादाभ्यां पावितोऽनलः ।
वसन्ताख्य सुताधन्योदयभ्रातुः पुपोष सा । शुचिवंशाभिमानेन न डामरवधूव्रतं ।
अनन्यलग्नमनाः सुर्य्यैर्धर्थ्येऽपि धनेच्छया । ग्रामकादिकुटुम्ब्यादीन्नितम्बाभोगभागिनः ।
मतिव्यामोहनिर्व्यूढवैक्लव्यस्याभिमानिनः । तयानुगाभ्याश्च कृतं कोष्टकश्लाघके शिरः ।
हटमणोऽपि क्रिमिमाकृत. कैरपि क्रिमिवे. । निष्प्राणो गणरात्रेण कारायां कोष्टकोऽभवत् ।
अथ चित्ररथः शोपहतः कम्पितं नृपं । श्रुत्वा मल्लार्जुनेनाभूद्भयादरण्यनादु स्थितः ।
दवी तस्येशभार्य्यस्य प्रियास्वयमसौ सती । परलोकातिथि. पूर्व्वं विभ्रमतिभूरभूत् ।

देहे वाप्यहताध्याये गेहे गतपरिग्रहे । पत्यौ वैमत्यकलुषे नैषदर्थेष पिप्रिये ।
तीर्थस्थितस्य न स्यान्मे सागसोऽप्यप्रियं नृपात् । इति सञ्चिन्त्य स प्रायान्निवान्मन्तुं सुरेश्वरीं
अथ नानार्थभूयिष्ठा धनाधीशाधिकश्रियः । स्थानात्ततस्ततस्तस्य पार्थिवोऽपाहरच्छ्रियं ।
कनकांशुकसन्नाहवाजिरत्नायुधादिभिः । सा स्वा प्रकाशिता लक्ष्मीः स्पर्द्धयेवाधिकाधिका ।
लोहरद्रोहघर्म्माभ्रशोषितो राजपादपः । तल्लक्ष्मीशैलनटिनीसेकेनाप्यायितोऽभवत् ।
विशते चिरनष्टेऽपि श्रीकल्याणपुरं न यः । वनवासोचितवासः सालूनेऽन्वुमिवात्यजत् ।
श्वेतच्छत्राददृष्टेव चिन्तापाण्डुरवर्त्तत । वन्दीकृता नरेन्द्रश्रीर्निर्निद्रा यस्य मन्दिरे ।
राज्ञा प्रयुक्तं विज्ञाय विजयः स भवोद्भवः । तीव्रमानन्दनामानमवधीत्तेन चावधि ।
इत्थं स पप्रथे तादृक्प्रजापालनशालिनः । सर्व्वोत्साहमयेऽनेहा जयसिंहमहीभुजः ।
तीर्थस्थिते चित्ररथे पादाग्रग्रहणैषिणौ । शृङ्गारजनकावास्तां तद्भृत्यौ व्यक्तचाक्रिकौ ।
प्रचुरोत्कोचदानेन स्वीकृत्य नृपतिं ययौ । शृङ्गारोऽभ्यजनकः स्वामिश्रीभोगभागितां ।
चिरप्रचलितं द्वारमुदये निदधे पुनः । मेघकालः सरित्पूरं प्रतीरद्रव पार्थिवः ।
अवश्यभोग्यदुष्कर्म्मदत्तमर्म्मव्यथश्चिरं । कथाशेषोऽभवच्चित्ररथोमासैरथाष्टभिः ।

हास्यावहोऽप्यविकृतो विकृतोऽनपास्तोदुर्गन्धिरप्यतिजडोऽपि गृहीतवाक्यः ।
पूर्व्वानुभावजयिनो भवति प्रभावाद्यस्य स्तुमस्तमतिसंस्तवसम्प्रतर्क्यं ।

निन्द्यैराचूतनादैर्यश्चेष्टितैः प्रागभीष्टतां । बाल्ये दुर्ललितस्यागाद्भर्त्तुश्चित्रचेतसः ।
विसृज्यमानः सम्प्राप्तमाघाज्येन दिवानिशं । क्रमात् स्वीकृत्य ताम्बूलं तेन चित्ररथान्तिकं ।
दूत्यैः कृत्यान्तराज्ञत्वं प्राप्तवानाप्ततां गतः । तदन्ते घटयघाजस्तद्भृत्यान् कोशदर्शकान् ।
तदा सर्व्वान्तताशेषमन्त्रिशून्ये नृपास्पदे । सज्जकस्यात्मजः प्राप शृङ्गारो मुख्यमन्त्रितां ।
तस्य वैधेयताभ्यस्तकुदृष्टेरपि दुष्कृतां । नातः पात्रार्पणात्तुच्छत्यागिलनापि सम्पदः ।
योपित्कशिपुभोग्येन धर्म्यंमन्योऽपि सोऽभवत् । धान्यदानवदान्यत्वं गुरूणामाजगाम यत् ।
पीठं कृतवतो रूप्यं संयोज्य रजतैर्निजैः । विद्यमानं सुरेश्वर्यां सायुज्यं तस्य युज्यते ।
उर्व्वीशैरपि नार्वाग्भिर्य्योऽनुगन्तुमशक्यत । आपाद्यामाव्ययभारो निविडद्रविणव्ययः ।
नन्दिक्षेत्रे स तत्राद्यैः प्रणीतस्वम्पकादिभिः । तेन कालानुसारेण पोषितः पञ्चपाः समाः ।
नर्माङ्गतायां निःसारो ज्ञातीयः सोऽधिकारभाक् । अचिन्त्यकृत्यकार्य्यासीत् स्वामिस्नेहप्रभावतः ।
केलीषस्त्रैर्य्युवतिकरजैः कण्ठभूषादशायां यस्याशायि त्रुटनमसकृत् क्ष्माधरस्यासकृष्टौ ।
सोऽप्यादिष्टस्त्रिपुररिपुणा प्राप भङ्गं न भोगी सत्याधायी क्वचन न परो भर्त्तुराज्ञाप्रभावात् ।
तस्य रिल्हणधन्यौ च समाश्रित्येतरेतरं । कार्य्यं जनकशृङ्गारावुत्कोचेनापजह्रतुः ।
कदाचिज्जनकं वद्धा सार्द्धं भूषणमौक्तिकैः । सपुत्रदारं शृङ्गारं वाष्पविन्दूनमोचयत् ।
स तस्य जातु निर्भिद्य मानहीनमकारयत् । स्वचरार्पितोत्कोचधनाभ्यर्थितमैथुनः ।

अङ्गुष्ठनखनिर्घर्षनर्त्तितानामिकोर्म्मिकः। वदन् वामोत्तराष्टाग्रोदञ्चनैः कुरुते क्षणः।
भ्रूभङ्गादेशितवलीनिम्नोन्नतललाटभूः। पुनरेकस्तयोर्लब्धकार्य्यो लोकमहासयत्।
अव्यक्ताक्षरवाग्गोच्यमीलिताक्षो रटन् बहु। हसन् सकरतालञ्च सम्पश्यन्योऽप्यभाष्यत।
सोल्लेखप्रतिभान्नीतलेख्यं संहास्यवस्तुनि। कथाशरीरं पर्य्याप्तं न दृष्टं किमचेतसां।
सर्व्वस्मिन्वस्तुतो वाचि काले विगतयोग्यते। जाने तृणनृणां तुल्ये शृङ्गारोहत्यगर्ह्यतां।
यः सर्व्वंकषनिष्कम्पशेमुषीकः क्षमापतिः। धुर्य्यतां धर्म्मचर्य्याभिर्गतः सुकृतशालिनां।
लब्धबोधिरिवारेभ्येश्चक्रे व्यापद्युपक्रियां। दावप्रदस्य दग्धाङ्गोऽश्लाघत्वमिव चन्दनः।
गुरुसूरिद्विजानाथप्रभृत्युचितयापि यः। प्रतिपत्त्या संविभेजे संविभाग्यकुटुम्बकं।
प्रासादान्विजयेशादिदेवप्रातस्य शुद्धधीः। सुधादानेन निन्ये च धन्यः कैलासतुल्यतां।
मठदेवगृहारामह्रदकुल्यादियोजने। जीर्णोद्धृतिव्यसनिनस्तस्य चिन्ता निरन्तरा।
सकृद्दर्शितविद्वेषकार्य्यसब्रह्मचारिणा। सक्रोर्य्यधामपर्य्याप्तमीदृगप्युच्यते जडैः।
विश्वाध्यापनसप्तसिन्धुभरणब्रह्मादिसम्प्रीणनप्रायं कृत्यमुदात्तमेकसमयोपात्तेन दुष्कर्म्मणा।
स्वःसिन्धोर्लघुतां गतं सुरगजश्रेणीचितास्पर्शनात् जाता येन जनाः श्मशानमिव सा योग्या किलास्यां स्थिता।
तदन्तरं शिवरथो द्विजः प्रचुरचाक्रिकः। कायस्थपाशः पाशेन गलबद्धो व्यपद्यत।
इत्थं पृथ्वीपतिः कृत्वा तत्तत्कण्टकपाटवं। अपेतविघ्नं सौजन्यनिघ्नो व्यधित मण्डलं।
विपक्षावरणापायप्रायेण पृथिवीभुजः। तैक्ष्ण्यमायान्ति जीमूतमुक्तार्कविकरा इव।
परिणाममनोज्ञत्वं राजरत्नं त्वयं नृपः। माधुर्य्याधिक्यमुत्पाको द्राक्षाद्रुमइवाययौ।
प्रावर्त्तयत सातत्यात्कृत्स्नान् विततदक्षिणान्। विवाहतीर्थयात्रादीन् महितांश्च महोत्सवान्।
संविभेजे स्वसम्भारैः स क्रियाधर्म्मचारिणां। तेजोभिः कुलशैलानामोषधीरिव चन्द्रमाः।
प्रतिष्ठातं सुतोद्वाहप्रतिष्ठादौ पुरोकसां। तेनोपयिकसामग्रीदानमव्यग्रचेतसा।
दारुणामाकराः कोशदृष्ट्यै ये धराभुजां। नवीचक्रे पुरं सर्व्वं स्वाधीनान्स विधाय तान्।
मन्त्रोराजकार्य्येषु तत्त्वविद्भिर्दुराचरैः। विस्मितैर्वीक्ष्यते तस्य निष्ठा काष्ठा मुनेरिव।
प्रातरादारभ्य सायाह्नपर्य्यन्तं प्रास्य दृश्यते। न तत्कृत्यं गता यत्र नाप्यचलं विचक्षणाः।
अविचारान्धतमसे विद्या व्यद्योततान्तरा। जयापीडादिमेधश्रीसौदामन्या विलोलया।
तेन स्थियन्तु विश्राण्य स्थास्नु रत्नप्रभामिव। गुणवैचित्र्यचित्रस्य प्रकाशो नश्वरः कृतः।
सूर्य्येयेन संग्रामे विषमेक्षचमत्करे। ग्रामाणामाग्रहाः कर्म्म साम्यया स्वामिनः कृताः।
विदुषां विततोत्सेधसौधास्तद्विहिता गृहाः। व्याप्ताः सप्तर्षिभिर्दृष्टमुत्कर्षमिव मूर्द्धसु।
प्रतिभाप्रभवे शास्त्रे शस्त्रे च पथि मान्यतां। सार्थवाहत्वमालम्ब्य निर्दोषा विदुषां स्थिता।
आभोगयार्थ्यराजस्य प्रयाणस्याप्तनिश्रियः। कामं लिङ्गाभिषेकाम्बुसङ्क्षोभप्रभवोध्वनिः।
निद्राणस्य तथा वेणुवीणादिपरिहारिणः। दयितं तस्य निर्द्वन्द्वविदग्ध्याल्पविकल्पनं।

कोल श्रीललितादित्यावन्तिवर्म्मादिभूभुजां । सिद्धं न यत्प्रतिष्ठादि निष्ठां तदधुना गतं ।
मठदेवगृहेष्वेव स्वकालप्रभवेषु यत् । सर्व्वेष्वेव कृता तेन निरपाया व्यवस्थितिः ।
रत्नादेव्यादृढाच्छमठेऽत्वसभताभुवः । सर्व्वप्रतिष्ठाप्रथमविहारः प्रथमं गतः ।
रिल्हणोऽथ गुणग्रामवान्यत्रो धर्म्मपद्धतौ । बभूव पूर्व्वपथिकः समस्तामात्यसन्ततेः ।
तपोधनांश्चतुर्वर्णान्धर्मिष्ठांश्च शुद्धधीः । विश्रम्भभवनस्थोऽपि भक्त त्यक्तुं न यः क्वचित् ।
कृष्णाजिनाभयमखदानमुख्यैः सुकर्मभिः । धर्म्मकन्याविवाहैश्च यस्यागुन्यत्वमायुषः ।
सर्व्वेषामाहिताग्नीनां निष्प्रत्यूहा महात्मना । सर्व्वयागोपकरणैर्येन विश्राणिते. क्रियाः ।
भोगान् बुभुजिरे भव्यान् सत्रे स्वन्तितविस्मये । यस्य वर्णाश्चतुःषष्टिः कुटुम्बस्पृष्टचेतसः ।
अग्रहारगुणोदग्रैर्व्वितितैर्मठसेतुभिः । पुरे परिष्कृते येन द्वयोः प्रवरसेनयोः ।
आद्ये प्रवरभूभर्त्तुः पत्तने प्रत्तविस्मयः । प्राप्तः प्रतिष्ठाप्रथमं यत्कृतो रिल्हणेश्वरः ।
लोकान्तरगतां कान्तां छत्तिनोद्दिश्य सुस्मतां । भिक्षोरेकप्रपाध्याने विहारस्तेन कारितः ।
मार्जार्य्यास्तिर्य्यगुचितस्नेहविसत्यपोहितः । स्मृतामनुस्मृतायास्तन्नाम्ना यः ख्यातिमागतः ।
तद्भर्त्तुरीर्ष्याकालुष्ये तस्यादूरायगा पुरः । प्रदेशे मानुषीवासीत प्रिया क्रीडाविडालिका ।
तीर्थप्रस्थानदिवसादारभ्यास्याविराविशौ । उत्सृजन्त्याहृतं भोज्यं सा शुचा जीवितं जहौ ।
आरोहति परां काष्ठां प्रतिष्ठाविविधाधुना । दिद्दा नृपतिपत्नीषु मन्त्रिपत्नीषु तु सुस्सला ।
श्रीचङ्कुणविहारं या यातं नामावशेषतां । अश्मप्रासादवेश्मादिकर्म्मणा निर्म्ममेऽधुना ।
अरघट्टमवन्ध्यान्युच्चावचशालादिकर्म्मभिः । तस्याः सम्पूर्णतां पुण्यप्रकारा निखिलागताः ।
पूर्व्वराजकुलाखण्डखण्डिलव्यापिनाखिलं । तद्विहारेण नगरं नीतं नेत्राभिरामतां ।
प्रापि प्रतिष्ठयेवाशु यत्समर्पितया तया । विपत्तिः श्रीसुरेश्वर्य्यां प्राज्यसायुज्यदूतिका ।
मठाग्रहाराधन्येन वल्लभाभिधया कृताः । नाभीष्टं लेभिरे नाम ख्यातिः पुण्यैर्विना कुतः ।
अथवारमठांस्तद्वदुदयः कम्पनापतिः । कृत्वापि स्वाभिधामेव तत्सम्बद्धां सदाप्तृणोत् ।
उदयद्वारपतिना सह मल्लपुरोगणैः । कृते प्रष्ठे मठे शोभां लेभे पद्मसरस्तटः ।
शृङ्गारतन्त्रपतिना श्रीद्वारेऽप्यथ्यजन्मना । प्रत्यष्ठापि मठोद्यानदीर्घिका येन चात्मना ।
स्नानकोष्ठमठप्रख्यपुरीसेलादिकर्म्मणा । सोऽनम्बुकारालङ्कारोऽष्टहट्टाधिपोधरां ।
बुधः सदोपधीमान्निहतोऽभीतः कलावतः । यः कविर्दानवत्सख्यातस्त्यागेन योऽजयत् ।
नृसिंहसेवी निर्दिष्टहिरण्यकशिपुच्छिदः । वराहसमये दत्तगोश्च योऽपूर्व्ववैष्णवः ।
भट्टारकमठाभ्यर्णे पूर्णवार्धाविव प्रदिः । मठः शृङ्गारभट्टस्य ख्यात्यानौचित्ययोज्झितः ।
सान्धिविग्रहिकोदार्व्याभिसारोर्व्विभुजोऽकरोत् । अष्टमूर्त्तौर्भट्टनामा प्रतिष्ठां पुण्यकर्म्मठः ।
पुष्पाकरप्रणयभूः सुभगा विभूतिरेकस्य हन्त करवीरतरोर्द्रुमेषु ।
पुष्पाणि यस्य सफलीकुरुते स्वयं तत्प्रादुर्भवत् किमपि विघ्नमनङ्गमन्त्रोः ।

कश्मीरान् पृष्ठतः कृत्वा दौराज्यं तत्र कुर्वते। उत्सृज्य सज्जपालादीन् सर्व्वकार्य्यभरक्षमान्।
देवाकप्रतिपत्त्यान्यामिधमेध्यनिरुद्धधीः। सर्व्वाधिकाराद्यारोपान् मन्यमानोऽभिमानितां।
पर्य्यङ्काजयतः सुज्जेरप्रौढमनुजं निजं। अहिंखानोऽनुमन्त्रितं मन्त्रज्ञोऽप्यभवन्नृपः।
अपूर्व्वमण्डलारब्धा वाटोपाट्टामशालिनः। क्व सर्व्वङ्कपनिष्कम्पप्रतिभाः कार्य्यवेदिनः।
क्व बालबालिशप्रायोनष्टव्यवस्थितिस्मिनः। धिक् परीपाकविषमं स्वाच्छन्द्यं मेदिनीभुजां।
कार्य्येपिचविपचैरेरिच्छन्त्युद्रिक्तनाच्छिदां। सैन्यक्मादुर्गकोषादेर्न शंसन्त्यन्तरज्ञतां।
प्रक्रियामात्रतो मन्त्रं गृह्णन्ति चित्यनन्तराः। छत्रमाहायकैरेव चित्राचित्रमुखादिषः।
युक्त्यारब्धविधी तत्र वैरिसाहायकग्रहे। क्व वैधेयान् वक्रप्रायान् कार्य्यसन्दर्भवेदिनः।
दरद्राजद्रुमोऽन्यान्यं भेदकूलच्यवाच्युतः। क्रष्टुं नाग्रस्यताप्रौढैः स्रोतोभिरिव सध्यगः।
पर्य्युकात्सङ्कटे कार्य्ये तन्त्रमुक्तोचमिच्छतः। स दुग्धघातुमादातुमथासीदलसक्रमः।
पर्य्युकेण समं विङ्गसिंहः सन्धिं निबद्धवान्। ययागतं गते सुज्जौ कश्मीरेन्द्रेऽग्रहीन्नृपं।
सर्व्वाधिकारप्रवहाचिरसञ्चारभूरुहः। प्रसङ्गे तत्र शृङ्गारोऽमात्युसौहित्यकार्य्यभूत्।
आलक्षकान्तात्सर्व्वाधिकारोऽस्माद्द्वितीयया। वृत्त्या ततस्तु शतधा निर्झराभद्वाभवत्।
अन्येऽप्यमात्याः सामत्याङ्कुर्माहात्म्यभागिनः। समयं समये तस्मिन्देवात्किमपि लेभिरे।
प्रशंसा सा नृशंसस्य विद्भोन धराभुजः। मृतामात्यार्भकापत्यं निधत्ते यः पितुः पदे।
प्रवर्त्तिता त्वमात्यानां भृत्यै पद्धतिरद्भुता। निर्भिन्नत्याः प्रभोर्लक्ष्मीं जडैः स्पष्टद्विणीमिव।
भूभर्त्तुः प्रामतीक्रत्य मृतस्य स्वामिनः श्रियं। सन्तानस्य विभूत्यर्थं कृत्वा कार्य्यं हितेऽहरन्।
गञ्जाधिपे विश्वनाथे विपन्ने रचितापरं। एकेन सहजात्येन सहायानां सहायता।
नाध्यारुरोहाधिकारं पार्थिवेनार्थितोऽपि यः। स्वामिसूनोरिष्टनाशो दृष्टो माहायकं व्यधात्।
निद्रायामप्रतिवलं दृष्ट्वापि प्रभविष्णुभिः। धिक् परस्परया मया: सवर्द्धनोऽधिकाधिकं।
आसीदाचन्द्रनोपयोगिकत्वात्सङ्कुञ्जगमद्धनजान्तारिकनहार्थ्यस्वरसिरोत्सवोत्तमं ग्वायदः।
प्रभुस्तद्विदधे स्वमूर्द्धनि जडेऽप्येकप्रयुक्तादृतो यः सर्व्वेऽप्यरसा गतानुगतया गाढादराः स्वामिनः।
सुज्जिर्निर्वासनप्राप्तप्ररोहोदुर्णयद्रुमः। साज्जिजाद्यक्रताप्यायः क्रमेणासीत् फलोन्मुखः।
द्विजाः मनाः समन्युः स विङ्गसिंहस्ततोऽभवत्। अकुण्ठराजायुत्कण्ठे घृतैरकृत लोठनं।
दूरादाखण्डितोत्थानः शूरमाश्रित्य भूपतिं। जीवत्स्वपितरिज्यादिकर्म्मणा स सबान्धवः।
दरदां मन्त्रिणं आतजानैर्गभियोगभाक्। चक्रेऽनुद्धारचक्राधेर्डामरैः सह चक्रिकां।
साप्यद्रिदुर्गस्वास्थ्य मथनप्रस्थितो मुहुः। चुरीजनकभद्रास्य पार्श्वं निश्चार्थयत्।
कर्णाटकादावभवत् स्वामिस्वने विद्रोहवतां। सन्धिर्न कस्यचिद्द्रोहे बुद्धिः कस्यापि साधुता।
तं तया विपुलारम्भमपि प्राप्य दृष्टभ्रमं। प्रविविक्षुमुपैविष्ट कोशीयानुदसो नृपः।
पोषिते पेषितश्रीकैरल्पिधे विडवेषिभिः। कथोदयदारपतिः नैपि विश्वधराभुजा।

संस्पृष्टता च मूर्त्तेन पुरे शङ्करवर्म्मणः। प्राप्तोऽलङ्कारचक्रस्य पार्श्वमश्रावि लोठनः।
अपि विग्रहराजाख्यः सूनुः सुस्सलभूपतेः। भोजः सुल्हणजन्मा च श्रुतौ तेन सहागतौ। २१८०
अथोपचितउत्थान एव तेषां स सत्वरः। मार्गे वर्द्धदिनोसरमेकेनाह्ना व्यलङ्घयत्।
मन्दूच्यकन्याग्रथनासिद्धिर्याते विधेयताम्। तदास्कन्दहतस्पन्दः स पलायिष्ट डामरः।
सिन्धोर्मधुमतीमुक्ताश्रियमन्तस्थितं ततः। शिरःशिलाभिधं कोट्टमथ तैरधिशिश्रिये।
गहने ग्रुडितः कोट्टे स्थितः किं वा स दस्युषा। न निश्चिकाय दारेशो भ्राम्यन् दीर्घासु भूमिषु।
अथोपालक्ष्यतद्दुर्गारोहणेऽस्मिन्नशङ्कित। दैवेनापि न भूभर्त्तुः प्रभावो निष्फलीभवत्। २१८५
उत्थानोन्मुखतां सर्व्वेऽप्युत्पिञ्जे तत्र दस्यवः। पालालास्तिमयेवार्थपृथक्कृत इवाभवन्।
तैस्तिल्लकादिभिर्गूढवेष्ठितैरथ लोठनः। पालहारिः पुनश्चक्रे मायाचतुरचाक्रिकैः।
पुरग्रामादिदग्धारमसाध्यमथ धावतां। पदे पदे कृच्छ्रगतं खपचास्तमरक्षिषुः।
धिक् चक्रे नियतेर्भ्राम्यन् दृश्यादृश्यः स सर्व्वतः। कल्यात्ययोदयी ब्रह्मपुत्रः केतुरिवाभवत्।
श्रान्तैरमात्यैर्निर्व्विन्नैः सन्धौ कालानुरोधतः मेने मडवराज्योर्व्वीहारितेवाखिला जनैः। २१९०
असम्वृत्तप्रतीकारतयारोहत्सु वैरिषु। तदन्तरेऽथ समभ्य धन्यं प्रास्थापयन्नृपः।
तत्स्कन्धारोपिते कार्य्ये श्रीडां गच्छेत्तटस्थतां। विपर्य्यासमथ दाराधीश इत्यभ्यधाज्जनः।
भिक्षुर्मल्लार्जुनस्ताधीदेक एव जयलक्ष्मी। संहताद्यन्तदुःसाधादध्युषेत्यखिलाः प्रजाः।
दाराधिपस्त्वद्वैवाकव्यवहारो महीपतेः। सिद्धिं स्वसाप्रसिद्धापि वाञ्छन् द्वैधाचमोऽभवत्।
एकाकी य किल न भजते मूढतां भर्त्तृकार्य्ये नौदासीन्यं श्रयति च रुषा वद्धधीने च तस्मिन्।
निर्द्वैवाकव्यवहृतितया साध्यसिद्धिं किलेच्छंस्तादृक् मन्त्री प्रभवति परं नाल्पपुण्यस्य राज्ञः। २१९५
पञ्चचन्द्रे मृते तस्यानुजं राजोपवेशने। न्यधाद्यं षष्ठचन्द्राख्यं सोऽप्यारब्धे विनिर्थयौ।
दिवाङ्ककादयोमुख्यायारणैः सह गायकैः। धन्यमैवान्वयुर्व्वाह्याश्चान्ये राजोपजीविनः।
धन्यादिषु तिलग्रामं कोटिसिन्धुतटाश्रयं। अयत्स्वगच्छद्दुर्गेभ्यो दुर्गस्य, पृष्ठपद्धतिः।
हठप्रवेशायोग्याजिमुख्यद्वैवाकवर्ज्जितः। शोपयन् द्विषतोधैर्य्यगम्भीरं स व्यवाहरत्।
कुठारिकादिभिः काष्ठवृन्दैर्मन्दिरपद्धतीः। धन्यो मधुमतीतीरे नगरस्पर्धिनोर्व्यधात्। २२००
निर्ध्वान्तं द्रुमसम्बाधं सनिकेतावनस्थलीः। कटकं सर्व्वभोगाढ्यं शक्रः परिवृढोऽकरोत्।
देशे भूरितुषारोपहिमर्त्तौ भाग्यसम्पदा। भूभर्त्तुरभियोग्येव भूरभूद्धानुभूषिता।
भुवनाद्भुतसम्भारप्रेषणं दिग्जयैषिणः। दैराज्यं मीलिताक्षोऽपि काले राज्ञो न खण्डितं।
उत्थानएवोपहतभये याम्यत्यगात्परं। भारोढिपीडितपाम्याक्रन्दं घान्तिचमूपमां।
दीर्घप्रवासनिर्व्वेदादायस्तितां दधत्पृथुं। स्याधूंय तोषयन्दायैः स्थैर्य्यं निन्ये नृपश्चमूः। २२०५
इत्थं चिरतुराग्मामांमिष्ठमिरभिः छुरैः। नैशदाहुमगत्यना कटकेः कोट्टधंशयाः।
तेषां हि सीनधासारनिरोधादीनि कृच्छ्राणां। अप्रियाणि न जातानि देन्यदायीसि कानि चित्।

छेद्यांद्दक्षिणे पारे सङ्गरे स महीपतिः। स्वनामाङ्कं व्यधात् कोट्टं यशोराशिमिवापरं।
प्रमादाङ्गङ्गमानीतः प्रमालाविजयोद्यमे। तेनोत्पलपुरे विष्णोः प्रासादो नूतनीकृतः।
पुष्पं चन्दनवृक्षस्य फलं चम्पकभूरुहः। अपत्यं तस्य राज्ञश्च हन्त नाकारि वेधसा।
सिपायकपुरस्थस्य कस्यचिद्ब्राह्मणस्य सः। पुत्रं लक्ष्मणनामानं पुत्रीयामास भूपतिः
अव्यक्तिमपितापुत्रप्रीतिं प्रीतिः प्रयोयसी। वस्त्विशेषचितमालेख्यं तयोरतुलयत्तरां।
श्रीसमुद्राभिधा देवी विमुद्रितसमुद्रजा। वितस्तायां स्वनामाङ्कं नगरान्तर्मठं व्यधात्।
त्रयोदशदिनं मासं वत्सरांश्चैकविंशतिं। क्ष्मां भुक्त्वैकोनपञ्चाशे वर्षे स धामगात् स्वयं।
कथञ्चित्सत्त्वदेवोऽथ पाश्चमानाङ्गविक्लवः। नानाकण्टकिनीं वल्लीमिव क्षौणीं बभार सः।
चत्रीकृतोऽपि नामुञ्चत्स्वधर्मं द्विजभूपतिः। न माणिक्यश्रियं धत्ते रञ्जितोऽश्मापि जातुचित्।
वितस्तायास्तटे श्वश्रुमठोपान्ते मठं नवं। निष्पद्मा निजनामाङ्कं महिला महिषी व्यधात्।
कज्जलेन तुरुष्केण बहिरेत्याथ मण्डले। मलिनेन प्रजादृष्टिरुत्पाद्यास्रवता हृता।
त्रयोदशाब्दान् मासांस्त्रीन् द्वादशाहश्च भूपतिः। भुक्त्वा द्व्यष्टवर्षेऽथ पौषान्ते स व्यपद्यत।
कज्जलोपद्रवात्त्रासादरीमात्रनायकः। सिंहदेवोऽथ संग्रामचन्द्रेणाथाभि भूपतिः।
नगरान्तर्मठं कृत्वा लहरेन्द्रे मृते सति। सिंहदेवो नृसिंहोऽथ क्ष्मां ररक्ष जयाकुलां।
सिंहदेवो नृसिंहस्य सिंहेन गुरुणान्वितः। प्रतिष्ठां सिंहलमेऽथ ध्यानोड्डारेऽकरोत् कृती।
कर्त्ता कार्य्येषु सर्वेषु गुरुः सिंहस्य कोविदः। पतितेयं भवे तस्य मते सिंहपरम्परा।
स निष्कलङ्कविक्रीतचौरैश्च विजयेश्वरं। एकादश्येव स्वपयन् व्रतशुद्धिं ययौ नृपः।
राज्ञा श्रीशङ्करस्वामी गुरुर्मन्त्रोपदेशकृत्। योऽष्टादशमठैश्वर्य्यं दक्षिणाभिरपूजयत्।
परलोकजयोपायं वाग्देवीप्रामृतं नृपः। आत्मोपज्ञमिमं श्लोकं शय्योत्थायं सदापठत्।
पावकनिर्मलदृष्टिं विबुधगणैरर्च्यमानपादमहं। शशिशकलार्द्धयुतं गौरीशं शङ्करं वन्दे।
दुहितुर्दुश्चरित्रेण योऽभूद्दृष्टः पितुः पतन्। दुर्वासस्त्वार्थितो राजा नर्मोक्त्या तं न्यवारयत्।
स दुर्जनपरिष्वङ्गादास्तिकप्रश्रयोज्झितः। धात्रीपुत्त्रं सरादर्श स्वात्मानं प्रत्यविम्बयत्।
दर्य्याख्यो भगिनीस्वामी कामसूत्रापदर्शितः। तं विरक्तप्रजं मुक्तविनयं च्छद्मनावधीत्।
चतुर्दशाब्दान् पञ्चमासांस्त्र्यहन्यूनान् महीपतिः। भुक्त्वा शुचौ दिवमगात् वर्षे सप्तमके।
तद्भ्राता सुहदेवोऽथ कामसूत्रोपदर्शितः। जडोऽपि मरुन्नामिव कश्मीरक्ष्मां वशे व्यधात्।
दिगन्तरादुपागत्य मधवो वृत्तिलिप्सया। तमाश्रयन् महीपालं पुष्पदुर्मलिनालयः।
यथाऽन्यदूर यथाऽभूत्पञ्चगह्वरसीमनि। योगभैरपुरं चक्रे तत्पुरोविभुराददः।
तद्वंश्यः कुरुशाहोऽभूत्तदाह्वदयपर्वते। व्याक्रिगच्छप्यता भेजे यशः शुभ्रत्विषं निशा।
काश्मीरः पर्वतस्तत्र राजा श्रेयोद्दरांशजः। इत्येतत्प्रत्ययायेव यन्नाशो चक्षुषां स्वयं।
काश्मीरेषु हि साम्राज्यं कुरुशाहस्य सन्ततिः। प्रोद्दिनमुखीमुख्याः ख्यातकीर्त्तिः करिष्यति

ताहराजोऽजनिष्टास्याद्यस्य चापनताश्रिता । मुहुर्मुहुरहो मौर्वी श्रुत्यन्तगमनं तरां ।
ग्रहमेरः स्वतीर्थ्यामपोभोभानुस्ततोऽजनि । यस्य वैरिवधूवाष्पैः प्रतापाग्निरदीप्यत ।
वने विहरतस्तस्य शङ्करस्य कदाचन । मृगया प्रथमं दृष्टिं पद्माम्बिद्रा व्यलोभयत् ।
राज्यमासन्ततेर्भावि कश्मीरेषु तवेति सः । स्वप्ने वाक्सुधया तत्र महादेव्याभ्यषिच्यत ।
पञ्चाग्न्यर्कमिते शाके नवाष्टाद्धितवत्सरे । ततः सपरिवारः स कश्मीरानविशच्छनैः ।
सकुटुम्बं तमायान्तं वृत्तिदानेन भूपतिः । अनुजग्राह सोत्कर्षं चूतद्रुमदवानिलं ।
डलचाख्यः कर्म्मसेनचक्रवर्त्तिचमूपतिः । कश्मीरान् स तदैवागात् सिंहो मृगगुहामिव ।
षष्टिग्रामसहस्रेषु स्वाम्यं दातुमिवात्र सः । तावत्सङ्ख्यसहस्राणि स्वसैन्ये सादिनोऽवहत् ।
डलचं धनप्रयोगेण निविवर्त्तयिषुर्नृपः । सर्व्वेषामेव वर्णानां दुर्म्मदो दण्डमचिपत् ।
प्राणाहत्या प्रभोः कोपे तत्प्रतिग्रहसाहसः । प्रायस्त्या ब्राह्मणाः प्रायश्चित्तीयाश्चकुरक्रमं ।
तदैव कालमान्याख्यैर्भोट्टैर्घट्टितवैरिभिः । सबन्धुर्गोचओ व्याजादकतन्त्रो न्यहन्यत ।
मान्योऽसामान्यधीः कालमान्यवंशदवानलः । अत्राशिष्यत तत्पुत्रो दैवादेकः स रिञ्चणः ।
व्यालटक्कमुखैर्मन्त्रसूत्रसंयोजितैरथ । बद्धा संहतिकन्थां स तान् जघान जेतुमिष्टवान् ।
निपात्यमानकोशं मां स्त्यले वृणुतेति सः । तान् प्रत्यश्रावयद्दूतमुखेन स्वाततायिनः ।
नृसिंहः स नदीतीरे सिकतास्थगितायुधः । तान् प्रत्यैचत रतस्य नतु कोशस्य पीतये ।
व्यालाद्यैरागतास्तत्र कालमान्या निरायुधाः । सिकतान्तर्निविष्टस्य परस्त्रीस्तृणीकृताः ।
प्रचाल्य वैरिरक्तेन पितृद्रोहरजोमलं । शेषानेकारिभीभ्योऽगात् कश्मीरान् बन्धुभिः सह ।
पूर्णस्य रामचन्द्रस्य दुहितान्यै धरार्य्यमा । नीलाश्मान्ने रिञ्चराहोरुदयं सोऽद्य सोढवान् ।
हेतिभिस्तापयत्याशा डलचे कृष्णवर्त्मनि । काश्मीरिकैर्जनैः सर्व्वैः शलभत्वमलभ्यत ।
रुद्धयोर्डल्चरिञ्चाभ्यां प्राच्युदीच्योर्वैकृर्जनः । वसतेः पश्चिमामाशां प्रायमाशामयागमत् ।
अधोडल्चाम्बुपूराद्रौ गिरौ रिञ्चनमारुतात् । छायायुषां फलाढ्यानां पुन्नागानामभूत्तदा ।
पचिशावमिव स्थानच्युतं चित्रोत्सवद्रुया । बलश्रीरेञ्चनो लोकं काश्मीरिकमपाहरत् ।
धनाम्बु प्राप्य भोट्टेभ्यः काश्मीरजनविक्रयात् । गर्ज्जन्नाशाः प्रधान्सर्व्वास्तदा रिञ्चनवारिदः ।
नाश्रिताश्चपदेवोऽय स्फीतशीतभयाकुलः । डल्चः कश्मीरतस्तारबलमार्गेण निर्य्ययौ ।
जनाः काश्मीरिकादुर्गविलेभ्यो मूषिका इव । डलचेऽस्तोगते वन्दीकृतशेषा विनिर्ययुः ।
नालब्ध पितरं पुत्रः पिता तस्य न कश्चन । भ्रातृंश्च भ्रातरो डल्चराचधोपसत्रात्यये ।
मितलोकाखिलचेत्रा निर्भोज्या दर्भनिर्भरा । सर्गारम्भ इव प्रायस्तदा काश्मीरभूरभूत् ।
समर्थान्यपहीन डल्चो रिञ्चनः प्राभवत् पुनः । विश्वमन्धयति ध्वान्ते सुखभाजोऽभिसारिकाः ।
डल्चराजविनिर्मुक्तं राजानं तुङ्गिगस्पृशा । अहरत्सत्स शृङ्गेण रिञ्चनाख्याचलस्ततः ।
दृष्ट्वा गगणमिर्ध्येये भास्वन्तं रिञ्चनं स्थितं । प्रशस्यन्त न कैराद्यः प्रत्याससोऽस्तसंस्तवः ।

रिञ्चनश्येनराजस्य जिहीर्षोर्नगरामिषं । कुलचन्द्रो रामचन्द्रो विघ्नं चक्रे पदे पदे ।
भोट्टांश्छदरकोट्टान्तःपट्टविक्रयकौतुकात् । प्रत्यहं वस्त्रनेपथ्योगी रिञ्चनोऽथ विष्टवान् ।
तथैव लहरस्यान्तर्भुट्टलोके प्रवेशिते । अपिबद्रामचन्द्रासृं मधु शस्त्राणि रिञ्चन ।
रामचन्द्रकुलोद्यानकल्हवर्शी स रिञ्चनः । वच.स्थले महावाङ्ः कोटादेवीमरोपयत् ।
श्रीरिञ्चनभयाद्राजा नगरं त्यक्तवांस्ततः । विप्रशापाग्निदग्धानां कुतः स्यादुदयाङ्कुरः ।
प्रमण्डलगुहां राजजन्तुर्भीतोऽविशत्ततः । पापस्य तादृशो मृत्यु सम्मुखस्य रणे कथं ।
वैरिधाराधरश्रित्रं रणे राजास्त्रवर्षणैः । दण्डदानां द्विजातीनां चक्रे नैवेष्टवपदं ।
पञ्चाहीनांश्चतुर्मासान् वर्षाश्चैकोनविंशतिं । स राजराजशेखरत्वाज्जात् चौणीमभचयत् ।
श्रीरिञ्चनसुरत्राणेभुजत्रातायने मही । व्यश्रिश्रमदथ श्रान्ता दौःस्थ्यात् दुःस्थितिविभ्रवैः ।
पूर्वदृष्टमिवाशेषं तिमिरापगमे पुमान् । कश्मीरमण्डलं पूर्वराजशेषाढ्यं तदैक्षत ।
दीपैरिव प्रतिस्थानं चैत्यैर्नैः स्थिरं स्थितं । अकम्पन्त प्रभातस्य ते राज्ञोवत्सरायुना ।
मन्त्रशुद्ध्या कृते भेदे वाणस्त्रे प्रवेशिनि । अभूत्तन्यकन्यायाश्चित्रं विश्वयता तदा ।
वने कण्टकिनीवाङ्गनक्षायत्राकुलोऽभवत् । तत्रैव व्योम्नि पत्नीव देशे समचरन्नृप ।
तस्य दाक्षिण्यदक्षस्य प्रजानां हितहेतुना । पुत्रे मन्त्रिणि मित्रे वा दुष्टे नालत्र चमा ।
छेदं यच्छन्नतुच्छानां वैरिणामुच्छलच्छियां । आच्छोदनमगच्छत्स च्छत्रमाली कदाचन ।
टुक्कभ्राता तिमिर्नाम मार्गे सन्तापखेदितः । गोपान्याः कुर्चादत् ग्रामे चीरं निष्पीतवान् हठात् ।
राज्ञा विज्ञापितेनाथ सद्यो गोपालयोषिता । अनुयुक्तस्तिमिर्भीत्या व्यधात् सर्वस्य निह्नवं ।
असत्ये भाविता गोपी यदा धैर्यान्न सास्खलत् । पानाशयन्तिमेरेव स पत्रीचौ व्यदारयत् ।
तस्य पानाशयाद्दीर्णान्निर्यान्त्या चीरधारया । राज्ञः कीर्त्तिर्मुखश्रीश्च गोप्या प्रापप्रसन्नतां ।
वानपाले निवसतोरसुत्रातां कयोश्चन । अश्वे किशोरकौ तुल्यौ कस्मिन्नपि वनान्तरे ।
सिंहसंवर्धितापत्या तयोरन्यतरा वने । अश्वसादृश्यवात्सल्यादपुत्रोऽयित् परं ।
मदीयोऽयं मदीयोऽयमित्यप्रज्ञातनिश्चयौ । वडवाधिपती क्षोभाद्राजान्तिकमगच्छतां ।
स विवादं तयोः श्रुत्वा स्वान्तिकं स्वीयमानुषैः । वडवे च किशोरश्च राजाभ्यानाययत्तत ।
तस्मिन् किशोरके बाल्याद्दूरं धावति लीलया । माता धात्री च नितरामस्त्रिग्धमाप्य हेषयत् ।
सभ्येष्वनेलमूकेषु वादिनोः क्षोभसज्जयोः । अश्वे नावानयन्मध्येविनस्तं सकिशोरके ।
मातार्थं पातितं नद्यां मावो राज्ञा महाधिया । हठादन्वपतन्माता परा परमहेषयत् ।
सन्दिग्धव्यवहाराणामेवं निश्चयकर्त्तरि । तस्मिन् राज्ञि जनोऽमंस्त कृतं युगमिवागतं ।
श्रीदेवस्वामिनं शैवीं दीक्षां याचन्नराधिप । नाप्यपाहि स भोट्टलात्तेनापात्रत्वशङ्कया ।
अनुजस्तनुजो बन्धुर्धर्मन्त्री सहचरः सखा । व्यालराजो नृपस्याभूत्तत्यैश्रुतनिष्ठया ।
अहो व्यासः कृतं राज्ञा न स व्यालकृतं पुनः । मनो हि कार्यिकं हन्ति तत्कृतं न वपु पुनः ।

कलानिधौ रसमये व्याले भूलोकभास्वतः। मूर्च्छिता रुचिरच्छैत्सीदच्छेद्यं जगतां तमः।
श्रीमानुद्यानदेवोऽथ रत्नसंहरणोद्यतः। समादिशत टुक्कादीन् गान्धारक्षोभयादिति।
जीवतामेव गन्तव्यं जाने तन्नगरान्तरं। यत्नेष्यते विशेषज्ञः स्वामी संमानलिप्सया।
भुङ्क्ते व्यालः श्रियं प्राणपणैर्युष्माभिरर्जितां। करौ साधयतो यत्नाद्रसना भोगभागिनी।
ईश्वरो भूतिलिप्ताङ्गोव्यालं हठाच्चिकीर्षति। अनास्थां तु सुवर्णेषु युष्मासु विदधाति सः।
चीरमाचैकपायिलं निमित्तीकृत्य भूपतिः। युष्मच्छौर्याभिशङ्कित्वात्तिमिं तिमिमिवावधीत्।
एवं सन्देशनिर्भिन्नाः टुक्काद्याः शङ्कलङ्किताः। विश्रमस्थे कदाचित्ते प्रजह्रुरथ भूभुजं।
तत्खड्गधारासम्पातैर्व्यालस्तेषां च्छदन्तरात्। खैश्वर्य्यतापमनुदद्राजामूर्च्छेत्तु केवलं।
तेऽथ लब्धजयंमन्यास्तदधापोढमन्यवः। नगरान्तर्य्ययू राज्यग्रहणार्थमहङ्कृताः।
क्षणं मृतद्व स्थित्वा भूयो घातभयान्नृपः। दूरं गतान् रिपून् दृष्ट्वा राज्ये राजोदतिष्ठत।
आरुहन् राजधानीं ते यावत्तावन्नराधिपं। अपेतमूर्च्छमायान्तमद्राक्षुः चुरवुद्धयः।
त्वया किं न त्वया किं न हतो राजेत्यनीतयः। परस्परविवादान्ते तत्कालं चुचुभुर्जडाः।
सान्यान्यमन्यवोऽन्योन्यलोठनाद्राजसद्मनः। कर्त्तव्यं मरणं राज्ञा व्यधुः स्वस्य स्वयं जडाः।
शेषान् राजाथ दुःशीलान् शूलारोपेण केवलं। उच्चैस्तामनयन्मानी सर्व्वथाधोगतिं पुनः।
सगर्भावैरिकोट्टस्त्रीरोपयन् स व्यदीदरत्। असिभिर्भूपतिर्गर्भशालिशिम्बीर्नखैरिव।
तद्गोद्दरोषजा पीडा राज्ञस्तत्कुलमारणात्। चित्ते शान्तिमगात् खड्गघातोत्था नतु मूर्द्धनि।
दुःस्वप्नमिव तद्दृष्ट्वा टुक्कादिर्चरितं क्षणात्। प्रबुद्धेव पुनः प्रापदभयेन सुखं मही।
अद्रोहसंध्यगे राजा शहमेरे प्रसन्नधीः। सकोटामातृकं दृष्ट्वा स्वपुत्रं हैदरं ददौ।
वर्द्धितः कोटया देव्या मातृव मद्दीरुहः। सच्छायत्वं स्फुरत्पत्रः शहमेरो न्यषेवत।
परिखाच्छलतोऽकीर्त्या स्वपराजयजातया। परितोवलितं राजा स्वनामाङ्कं पुरं व्यधात्।
पौषदुर्दिनमार्त्तण्डसन्निभोधरणीपतिः। मासांश्च कतिचिद्भूयः प्रकाशमकरोद्भुवः।
हेमन्ते शैत्यपारुष्यदोषेण धरणीपतेः। मरुत्कोपेन नैविद्यं शिरःपीडाप्यहोत्तरां।
सदोनेकात्तमाङ्गानां पीडाहरगुणश्रियः। भूपतेरुत्तमाङ्गस्य पीडा कष्टमवर्द्धत।
एकादश्यां ततः पौषे नवनन्दाङ्कवत्सरे। निरस्ता मृत्युवैद्येन भूपतेर्मृत्युवेदना।
एकादशदिनैर्न्यूना माषे चौन् वत्सरानपि। षंमा संरक्ष्य स स्वर्गं ययौ रिञ्चनभूपतिः।
पुत्रं हैदरनामानं वाल्यादनभिषिक्तवान्। अतया विधशक्तिलाद्राज्यं स्वेनाप्यसंवहन्।
सवन्यैः सुतनाथत्वाद्विषमे प्रतिपादपि। अव्याहतमनेशाशो मतिमान् शहमेरकः।
समं श्रीकोटया देव्या मूर्त्तयेव जयश्रिया। तदोदयनदेवन्तं कश्मीरक्षामलम्भयत्।
राज्यलक्ष्मीमहादोला गुणग्रहा गरीयसी। रिञ्चनोर्ध्वःपदं गत्वा राजाधःपदमाश्रयत्।
भाभा मद्रिरपुत्रेण तौ व्यंसराशेयरौ सदा। कामराज्यादिदेशानां स्वाम्यदामादरञ्जयत्।

धीरिवासीत्तदा कोटा देवी सर्व्वाधिकारिणी। राजा देहद्रवात्यर्थं तदादिष्टं समाचरत्।
तेजसापि हितान्यासन् यानि रिञ्चनभास्वतः। लवन्यज्योतिषां राजप्रदोषेऽभूत्तदोदयः।
यस्याक्रम्यत सौम्यस्य स्वहिंसा कोटया स्वहं। विषयाक्रमणं तस्य लवन्यैः किन्नु सोच्यते।
लवन्यदेशचण्डालस्पृहस्पर्शविवर्जकः। स श्रोत्रियद्वानैषीत् कालं स्नानतपोजपैः।
आस्तिकत्वं कियत्तस्य वर्ण्यते वर्णधारिणः। क्रिमिमर्दभयाद्वस्त्रां योऽवशाद्दाजिनो गले।
तावद्वविणतामेव कोशालङ्करणं दधत्। कण्ठभूषां समौलिं स चक्रिणेऽदित काञ्चनीं।
अथ मुग्धपुरस्वामिदत्तानीकिन्यहङ्कृतः। कश्मीराञ्चलोऽविचर्दात् ऽचलचद्वापरः।
स्वपचैराचिपत्याशाचलेनाक्रम्य मेदिनीं। नाचने गोत्रभित्त्वं स कर्त्तुमैष्ट महोत्सवा।
माशे भीमानकं तस्मिन् ससैन्ये दैन्यमाश्रितः। भौट्टदेशमगात्तूर्णमुर्व्वीपरिवृढो भयात्।
निवर्त्तय चमूमन्यां किं मिथ्यादेशपीडया। अराजकास्त्वया पाल्याः कश्मीराः कुत्रनायवत्।
इति श्रीकोटयामात्यैः प्रेरितैर्लेखधारिभिः। आसारसैन्यमचलः प्रत्यमुञ्चद्विमोहितः।
प्रतिमुक्तनिजासारः सारहीनोऽचलः स तैः। मार्गात्प्रच्छलात् कश्चित् कालं मार्गे विलम्बितः[1]
तावच्छ्रीकोटया देव्या तदा पालयितुं प्रजाः। भौट्टः खे रिञ्चनो नाम राजभावे न्ययुज्यत।
प्रमीतभर्त्तृकोत्पन्नम्टतापत्येव सा तदा। अदूयत निजैः सर्व्वैस्थिरस्याचलधीमुषी।
तुषारलिङ्गपूजाभिः कृतार्थीकृत्य वासरान्। भौट्टदेशान्निजं देशमगच्छद्भीतभीर्नृपः।
उदयाद्रिभुवा पूर्णः शशीवाथ स कोटया। खे रिञ्चनतमोनाशी शिरसाधारि सादरं।
यं कोट्टादूतजट्टाख्यं शिक्षणाख्यस्य मन्त्रिणः। वर्द्धनायात्मजं राजा स तं मृत्युमिवाददित।
शहमेरः स वीरोऽथ परिपालितरैञ्चनिः। अचलुप्य, क्षमाभर्त्तुः पुत्रप्रेमभरादभूत्।
देव्यास्तु समदृष्टित्वात्पुत्रयोरुभयोरपि। राज्ञो देव्याऽपि शह्मेरो नाभयेन स पस्पृशे।
अचलोपप्लवातङ्के मयासोकैः समाश्रितः। शह्मेरस्य स राजानं न तृणायाप्यजीगणत्।
शह्मेरो हैदरख्येनं दर्शयित्वा मुहुर्मुहुः। अभाययत्तरां राजपक्षिणं तं दिवानिशं।
रवंसलटस्यानुद्वेगरहितो जलवर्ज्जितः। अल्लेश्वराम्बुपूरः स प्रजाश्चिरमतारयत्।
शिरःशाटकाहिंदाख्यौ समभूयिषतामुभौ। चन्द्रार्काविव तस्यायां शूरौ पौत्रौ गुणोच्छ्रितौ।
दारैश्वर्य्यात् स्फुरद्दर्पो राजाशाशत्रु नोद्यतः। शह्मेरः स विपद्वारमभूद्भूपतिसेविनां।
सोऽल्लेश्वरसुतां दत्वा सुतस्य तदधीशितुः। श्रीमद्रपुरं जित्वा राज्ञः शङ्कामवर्द्धयत्।
यशैलाकशूरोऽस्य भाक्तिरैश्वर्य्यभाजनं। ज्यंसरस्य सुतां हस्ते कृत्य कृत्यविदोऽभवन्।
सङ्कृपजयी यशोनिधिरच्युततापदं। शमालां स नृपसिंहोऽथ दैत्यश्रियमिवादुनोत्।
मकरालयगाम्भीर्यः करालम्बो जयश्रियः। करालं स करालौजाः करमालम्बयन्ननान्।
अभिस्मरन् शेरयशादशमानमितस्ततः। राज्ञः कलसदेवस्य विजयेशपुरं ततः।
स्थित्यै प्रकल्प्य पक्षस्य स्वस्य पक्षधराचलं। शह्मेरोऽचलकार्य्योऽपि जनस्य समदर्शयत्।

मङ्कटात् कम्पनेशस्तां कुलायादिव पक्षिणीं। जीवग्राहं गृहीत्वाथ कारापञ्जरमानयत्।
मन्त्री कुमारभट्टाख्यस्तस्याः सचिवपुङ्गवः। तन्मोक्षसिद्धयेऽकार्षीत्तदामात्यैश्छलात् कलिं।
राज्याः पुम्भावमात्रेण भिन्नमाकारसन्निभं। कमण्डलुकरं कञ्चित्सोऽधाद्विद्यार्थिनं शिशुं।
गत्वा स कम्पनाधीशं धीप्रथमाविमण्डितः। सोऽटवोदार्य्यसम्पत्तिशालिनीं वाचमभ्यधात्।
खशिरोमलिनीकृत्य जीवतां योपिदाज्ञया। पुरुषत्वं त्वया स्वामिन् कृतार्थीक्रियतेऽद्य नः।
गत्वा त्वदाज्ञया कारान्तस्तस्यास्तर्जनसान्त्वनैः। धनञ्जयस्त्वदीयोऽयं स्वामिसात्कर्त्तुमिच्छति।
स्त्रीत्वादशक्ता दातुं सा समचैपीद्धनं यतः। व्यसृजत् कम्पनेशस्तां कारामेवं विमोहितः।
काराधानिर्गमिष्यन्तीं देवीं कोटामिवेचितुं। तत्कालमेव सन्ध्यागाज्जगद्वञ्चनकोविदा।
सन्ध्यावन्दनयोग्याम्बुवाहिना वटुना सह। असौ कारामविक्षच्च राज्याश्च निरगुः शुचः।
राज्ञीवेशभृतं तत्र स्थापयित्वा वटुं स तं। तद्वेशधारिणीं कोटामन्वाधाय विनिर्ययौ।
रक्षितारोऽपि नाजानंस्तद्यावत्तावदेव सा। कम्पनाधिपतिं चक्रे स्वचक्रीभयशल्करिं।
सा ब्राह्मणकुमारेण मोचिता भट्टभिक्षणात्। एकदन्तहृतारेः किं नान्येनेभमुखाद्भवेत्।
तयानपोदितोऽप्योज्झि शत्रुरो नैव शङ्कया। कृतवैराः समर्थेन प्राज्ञा नैव ह्युदासते।
न प्राभीदन्न चाकुप्यत्तस्मिन् सा बलशालिनि। घृणा प्रमादसहिता विनाशप्रथमाङ्कुरः।
जयापीडपुरं यान्त्यां तस्यां कार्य्यानुरोधतः। शहमेरोवची जातु नगरं स्वीचकार सः।
तस्मिंश्चन्यलोकेन गृहीताज्ञे बलीयसि। राज्ञी समस्तणोत्कोट्टद्वारं सहजयाशया।
निरुद्धे बलिना कोटगुहाभ्रे मतिशालिना। नृसिंहेनाभजत् कोटा शृगालीव मुहुर्भयं।
सिंहासने मया सार्क श्रिया सार्क समीरसि। क्षमया सह चित्ते मे राज्ञी निविशतां स्वयं।
तामेवमादिशन् दूतैर्मुग्धां संमोह्य यत्नतः। हस्ते चकार कोट्टश्रीं कोटादेवीश्च बुद्धिमान्।
एकस्मिन् शयने रात्रिमतिवाह्य तया समं। स प्रातरुत्थितो जातु तोत्वैर्देवीमरोधयत्।
वर्षे पञ्चदशे शुक्लदशम्यां नभसस्ततः। तारेव नभसो राज्याद्राज्ञी भ्रंशमलभ्य सा।
तत्पुत्रावपि तौ द्वौ स करणीयविचक्षणः। बबन्ध बन्धुसम्बन्धिकन्पटचोभटायणी।
स्वं रूपं चिदचिद्भिरेभिरभितो व्यञ्जन् स्वयं निर्मितैर्यन्त्यात्मीकृत देशकालकलनाकल्लोलितं तन्महः।
आत्मा वास्तु शिवोऽस्तु वास्त्वथ हरि. सोऽप्यात्मभूरस्तु वा बुद्धोनास्तु जिनोऽस्तु वा भगवते तस्मै नम' कर्मणे।
श्रियं लवन्दलोकेषु कीर्त्तिं दिक्षु महीं भुजे। लक्ष्मीं वक्षसि कोटाश्च कारायां स ततो व्यधात्।
नीत्वावस्थान्तरं दौस्थ्यशमात्कश्मीरमण्डलं। श्रीशंसदेन इत्याख्यामन्यां स्वस्य व्यधान्नृप।
महाबले भुजे तस्य काष्ठाद्दीपनशालिनः। मौर्व्वीकिण. प्रतापाग्नेरधूमायत्त सन्ततं।
प्राहरन्मन्त्रिणां राजा संशयं नतु तस्य ते। भिनत्त्यन्यान् मणीन् वज्रो नान्यस्त्वाणि तं पुन।
स राज्ञ राजतो राजस्थानीशान् काष्ठवाटगान्। भयात्ततोऽपि विश्राव्य श्लाघनीययशा बभौ।
चिरं धुरं परिन्यस्य पुत्रयोः स्वादनूनयोः। नयोच्छ्रितयशा राज्यं सुखं भुङ्क्ते स्म भूपति।

स पञ्च वासरान् भुक्त्वा त्रीनब्दान्मेदिनीपतिः । अष्टादशेऽब्दे राकायामाषाढ्यां स व्यपद्यत ।
अथ प्रथमधामन्नैः सम्मताङ्गः स जंसरः । मतीसरःचितेरन्तामन्धामश्रीरटङ्कयत् ।
राज्यतोरणसम्बाहस्तम्भाभ्यां धरणीपतेः । अनुजीवलवुद्धिभ्यामगमच्छङ्कनीयतां ।
नैव दानं न चादानं निग्रहं नाप्यनुग्रहं । विहारं न नचाहारं राज्ञो न्यूनं स हि व्यधात् ।
प्रागवद्विश्वासमम्पत्तिमकुर्व्वति महीभुजि । युवराजो मनाक् चक्रे निकटस्थैर्व्विरक्तधीः ।
तद्वैमनस्यवृत्तान्तश्रवणच्छिद्रलाभतः । युवराजं ततोराजस्थानीयाः प्राक्तरञ्जयन् ।
आगते विग्रहे व्यक्तिं राजस्थानीयसंश्रयात् । सोऽगादवन्तिनगरं तन्मूलस्थानमुद्धतः ।
अथोत्पलपुरं राजा भटैः सह रणोद्भटैः । अधिश्रियदिदं भ्रातुर्व्वाचि कञ्च विसृष्टवान् ।
दुर्जनप्रेरणात्त्वञ्चेत्त्वन्नेदं नाभ्यजीगणः । लोकापवादज्वरतः कथं कम्पो न जायते ।
अन्योन्यपालनायाज्ञा राज्ञस्त्रिदिवगामिनः । पालनीयामनुध्याय प्रत्यानय दयां मयि ।
इति सन्दिश्य दूतञ्च व्यसृजत् स नरेश्वरः । कम्पनाधिपतिं हन्तुं व्यसृजच्च निजात्मजं ।
मृगयां युवराजोऽगादिति दूतं निरोधयन् । भ्रातृपुत्रं निहन्तुञ्च श्रुतद्रोहोऽगमच्च सः ।
दूतः किमिति नायातः कालो हि सुचिरं गतः । इति चिन्ताकुलोलक्ष्मभट्टो राजान्तिकं ययौ ।
ऊचे च जाने स द्रोहं सूचयित्वा तवानुजः । त्वत्पुत्रमारणायागाद्यद्दूतस्य चिरागमः ।
स्नाति भुङ्क्ते स्वपत्येव युवराजइति च्छलात् । तदुद्योगनिषेधाय नूनं रुद्धो वचोहरः ।
तदवन्तिपुरं तस्मिन् श्रीदेवधरसङ्गते । मद्योनिःस्वामिकं हन्तोजयोऽस्माकं तनोभुवः ।
अथावन्तिपुरं गत्वा सत्वातिशयशालिना । राज्ञा रुद्धं तथाकारि तद्भटैरुद्भटैः समं ।
अलेश्वराय भृत्यानां बधं नूनं निवेदितुं । वितस्ता शवरुद्धौघा प्रतीपमगमद्यया ।
भ्रातृपुत्रं पराभूय तावदलेश्वरे द्रुतं । व्यावृत्ते रणखेदान्तः प्रपलायत जंसरः ।
अनयोर्न्नैव कर्त्तव्यः कलिर्भ्रातृद्वयोरिति । राज्ञा समं विदाञ्चक्रे धीमानलेश्वरस्ततः ।
प्रतिमुच्य निजान् योधानवन्तिपुरमुत्सृजन् । अथ चौरोपयेणासावलेशोऽगमदीचितां ।
नगरी रचितान्यस्य मध्यराजे स्वमन्त्रिणि । क्रमराज्यं त्रिराजश्रीर्जंसरस्यागमत्तदा ।
दानमानैः प्रतिश्रुत्य मध्यराजं विभिन्दता । युवराजेन नगरी स्वीकृता मन्त्रयुक्तिभिः ।
नाम राजतया दुःखं भुक्त्वा कश्मीरमण्डले । मासद्वयोनौ द्वौ वर्षाववसानमगान्नृपः ।
शानम्लावदेनोऽथ तं कालं कनकाचमं । दारैश्वर्यं ददौ भ्रातुः सर्वोऽविप्रनिष्ट तथैव ।
सलिलोत्तरणोपायसेतुं सुय्यपुरे व्यधात् । विपत्सूत्तरणोपायं न पुनर्जंसरोऽस्मरत् ।
पथिकानां निवासाय तेन पर्य्यन्तसीमनि । कद्याविभागसहितः स्वनाम्ना रचितः मठः ।
एवं विभ्रमनीतिभ्यां देशं शोधयतो निशं । श्रीशिवस्वामिको राज्ञो दारैश्वर्य्यमवर्द्धयत् ।
राजपुत्रः स वाक्पुष्टाटवीं लोठारधादटन् । योगिनीचक्रसद्भावोत् कदाचिद्गिरिगह्वरे ।
उदयश्रीस्तथा चन्द्रडामरयाश्च सप्रभौ । अपश्यतां न किं तेषां महतामनुयामतः ।

अचलडाडंनादण्डघण्टानाक्षण्टङ्कटांकृतं । मनांसि न पुनस्तेषां वीराणां साहसस्पृशां ।
सान्तर्धासिपुरेवैता: सृष्टुं द्रष्टुञ्च काङ्क्षिता: । इति तेऽश्वादवारोहन् सवीरा नतु तद्भयात् ।
शनै: शनैस्ततो यान्तो मौनपूर्व्वं महाशया: । योगिनीनिकटं प्रापुर्व्विकटप्रकटौजस: ।
योगिनीनायको दूरात् परिज्ञाय नृपात्मजं । सायिपं शीधुचषकं प्राहिणोन्मन्त्रितं तत: ।
चन्द्रस्तदमृतं दृप्तिभाजा राज्ञावशेषितं । उदयश्रीमुखापेची न सन्तृप्तिमशेषयत् ।
भवितव्यबलादश्वपालं सपदि विस्मरन् । उदयश्रीरशेषन्तत्पीत्वा दृप्तिं परामगात् ।
आश्चर्य्यदृप्तनेत्रेषु तेषु दृप्तेषु योगिनी । निमित्तज्ञावदद्राजपुत्रं बद्धाञ्जलिं तत: ।
अखण्डं भावि ते राज्यं चन्द्रस्त्वद्विभवांशभाक् । आजीवमुदयश्रीश्च मण्डितोऽखण्डया श्रिया ।
अश्वपालस्त्वसावस्मदनुग्रहविवर्ज्जित: । अचिरेणैव कालेन नूनं प्राणैर्वियुज्यते ।
भविष्यत् सूचयित्वैवं योगिनीभि: समन्विता । सान्तर्दधे पुर: प्राणा: पश्चात्तुरगपालिन: ।
अविचारतमोमग्नान् जन्तूनुद्धर्तुमीश्वरा: । सम्भवन्ति प्रजापुण्यै: प्रकाशोत्कर्षहेतव: ।
स्वगडराड्भर्त्तृभागं यद्वीरा पुंश्चली वधू: । हरन्त्यासीत् स तं राजा दुराचारं न्यवारयत् ।
जयापीडपुरे कृत्वा राजधानीं महामति: । श्रीरिञ्चनपुरे चक्रे बोद्धा बुद्धगिराभिधं ।
रवीनविंशे वर्षेऽथ दुष्कृतोद्भवमद्भुतं । दुर्भिक्षं चोभयामास लोकं शोकाकुलं महत् ।
मासानष्टौ द्वादशाब्दांश्चयोदश दिनानि च । चमां भुक्त्वा त्रिंशवर्षेऽथ चैत्रे राजा व्यपद्यत ।
सन्दराजकथाख्यानात्लडिमा वाचि संस्तुत: । तीव्रप्रतापशाहावदीनाख्यानाद्विनश्यत ।
राज्ञि शाहावदीनेऽथ स्मरणं चित्तिरत्यजत् । ललितादित्यसम्पत्तिविपत्तिसुखदु:खयो: ।
श्रीशार्कं चोरिवान्यर्त्तून् राज्ञोऽतीत्य वहन्महीं । ध्रुवमापञ्जयापीडमेतं न तु स किल्बिषी ।
पूर्व्वे परे च भूपाला नायकेनेव भूषिता: । क्ष्मानायकेन तेनाशामुक्तागुणसमच्छ्रिया ।
तदीयो जयलक्ष्मीभि: प्रविष्टाभि: पदे पदे । न प्रतापानलोऽदृप्यत् सरिद्भिरिव सागर: ।
*जयं विना गच्छत: चणमात्रं वृथा मतं । हद्दूस्य तरुणीवाभूदाज्ञा तस्यातिवल्लभा ।*
न मृगाची न वा शीधुपानलीला न चन्द्रिका । यात्रैव केवलं तस्य भूमिभर्त्तुर्मनोऽहरत् ।
न तापो न हिमन्तस्य न सन्ध्या न निशा तथा । न चुन्न वा पिपासा च राज्ञो यात्रामविघ्नयत् ।
न सरिद्दुस्तरतरा दुरारोहो न पर्व्वत: । दुर्लङ्घ्यो न मरुश्चाभूद्यात्रायां मानिन: प्रभो: ।
अजितां पूर्व्वभूपालै: पारसीककुलाकुलां । उत्तराशां विजेतुं स प्रस्थानं प्रथमं व्यधात् ।
जगतां विजयी कामो मधुशीधुयधूरिव । चन्द्रोलकापूरान् स प्राहायलेऽष्टपोत्प्रभु: ।
सैन्यचेतांसि सत्त्वेन तमसा स्वविरोधिन: । अपूरयत् स रजसा दिगन्तानुद्धतान्तक: ।
प्रविष्टं तस्य गोविन्दखानपालनमा(लिनि । उदभाण्डपुरे पूर्व्वं वाणेस्तदनु सैनिकै: ।
सैनसदृक्षं नृपानीके प्राप्ते तस्य विरोधिभि: । भयातुरैरवारोह: दद्रृक्षात्तुरगाद्व्यधीयत ।
सद्रूपं प्राभृतं दातुमसमर्थोऽथ सिन्धुप: । उपधीकृतवान् कन्यारत्नमादाय भूपते: ।

राज्ञस्तु गौरवं वाहो गान्धाराणां भुवोढया। चिचन्तु लाघवं तेषां भये भारानुषङ्गतः। १७५
भङ्गस्तुङ्गस्य शृङ्गस्य खङ्गानां मैव भूभुजा। शिङ्गानामपि देशेऽस्मिन्विहितः शौर्य्यशालिना।
आकर्ण्य राजसिंहस्य सिंहनादमयीं चमूं। मदन्तत्याज चस्खाल विभाय गजिनी पुरी।
आचियचवियैरष्टनगरेऽरोदि शाम्यतोः। तरुणाग्निप्रतापाग्न्योर्धूमेनेव भयातुरैः।
यशसा सह सम्पत्तिं तस्मिंल्लुण्ठयति प्रभौ। प्रापत्पुरुषवीराख्यदेशाख्या रूढिशब्दतां।
दत्तवाप्यनिवापाश्चोनगरायहरस्त्रियः। जीवतः स्वस्य पत्युश्च पिण्डास्तेननिभाद्द्दुः। १८०
अश्वपालेषु गच्छत्सु घोषधातुतटच्छलात्। उदकूपतितिरस्कारप्रशस्तिं स व्यधात् प्रभुः।
ततो व्यावृत्य गच्छन्स दक्षिणाशां स्ववाजिनां। मार्गखेदोचितं तापं शतद्रूवारिणाहनत्।
ढिल्लीमुल्लुण्ठ्य तत्कालमुदकूपतिमुपागतं। मार्गरोधेन नृपतिर्निर्नितान्तमुद्वेजयत्।
तुरङ्गवल्गदानेन स तान् सामान्यभूपतिः। स्वदेशं प्राहिणोत्कीर्त्तिराशीन्मूर्त्तान्महानिव।
सुशर्मपुरराजेन तस्मात् स्वाशर्मशङ्किना। दुर्गाहङ्कारमुत्सृज्य देशैव शरणीकृता। १८५
स्वयं नत्या नठनत्या भौट्टानामस्य भूपतेः। अर्व्वतां पर्व्वतारोहदोहदो विनिवारितः।
दुस्तरत्वात्तटस्थस्य देवताभिस्तनूकृतः। सिन्ध्वोघो नृपतेरेवं पूर्व्वेभ्यः श्रुतमद्भुतं।
एवं नित्यजयोद्योगात् स्वदेशः परदेशवत्। परदेशस्तु तस्यासीत् स्वदेशइव भूपतेः।
प्रतापेनेति सम्पाद्य दिङ्मुखे तिलकश्रियं। व्यधात् प्रविश्य काश्मीरान् स पौरानयनोत्सवं।
तस्य वर्णयतां शौर्य्यं प्रसङ्गादतिमानुषं। अस्माकं चाटुकारित्वं शङ्क्यते भाविभिर्जनैः। १९०
याचायातः कदाचित् स दूरदेशे महीपतिः। अप्सरःसदृशीं काञ्चिच्छुतवान् हरिणेक्षणां।
निजानुगान् वञ्चयित्वा राजा युक्त्या कयाचन। अथैकाकी स तं देशमविशद्भोगलालसः।
नर्म्मणा मोहयित्वा तां द्वितीयइव मन्मथः। मनोरथानविघ्नेन स तदोष्ठाश्रुतपानतः।
अपश्यन्तस्तमाशङ्क्य हतं केनापि वैरिणा। अथ कोपभमावेशमुद्घटाखड्गटाययुः।
अन्विष्यद्भिमदस्येन निवहेनाङ्गनादहिः। समभाव्यत तैराज्ञो वैरिभिर्निर्णयः कृतः। १९५
शौर्य्यस्वाम्यनुगाभ्यान्तु विधातुं युद्धमुद्भटैः। तद्भटैः सदनं रुद्धमवद्धकवचान्तरैः।
अश्वमद्गिय तत्सिंहनादपूर्णात्ततः पुरा। चित्तैः भीत्या मुखैर्भीत्या नीत्या मुर्द्धभिरानतं।
एवं स स्वजयस्तम्भपान् गुणमुखान् बहून्। हतवैरिपराष्ट्रैयके सुप्रतापानलार्चिषः।
स्वदेशे सन्निवेशोऽस्य कोटभट्टोदयश्रियोः। समरेषु भरस्त्वाशीचन्द्रडामरलोलयोः।
देवार्घ्यांन्वयोदभ्यचन्द्रेराज्ञार्पितंमुक्त.। वैराग्यादिभवं त्यक्त्वा कोटशर्म्मा वनं ययौ। २००
तस्य दर्शयितुं राज्ञः स्वबलाधिकतां ध्रुवं। कदाचित्तत्प्रजा देवी व्यापह्नादमपोषयत्।
पुरीकेरविणीसरः शूरः पादपविद्विषां। पदुर्विंशेऽब्दे जलापूरः क्रूरोऽग्रसत प्रजाः।
नगरमुद्गनादपु सुषम्नोनिर्झरच्छलात्। तत्थोद्दोपस्य महतः पर्य्यक्तासटतामगुः।
न स दृष्टो न वा सीमा न स सेतुर्न तद्गृहं। तटस्थमपि यत्रैव जलपूरो व्यनाशयत्।

नाद्रिदुर्गाण्यपश्यत्स जातुचिद्वैरिभीतितः। अम्बुपूरभयात्तेषु राजा समचरत्तरां। ४०५
पीते तत्तेजसेवाम्बुपूरे शान्ते मितैर्दिनैः। भूयस्तद्दिशशङ्की सोऽचिकीर्षद्गिरौ पुरीं।
नाम्ना लक्ष्म्या महिष्या च प्रसिद्धां नगरीं व्यधात्। खेदार्य्यानुगुणं राजा निर्म्माणमविलोकयन्।
शारिकां शैलराजस्य मूले पुण्यजनाश्रितां। यामद्राक्षीत्तरां लोकः सुमेरोरलकामिव।
वितस्तासिन्धुसम्भेदे स्वनाम्ना स पुरीं व्यधात्। प्रतिबिम्बच्छलात्तोये त्रपया खिन्निमज्जति।
सौधोत्सेधमयीं राशीभूतां कीर्त्तिमिवाचलां। श्रीलोलश्रीः पुरीं लोलडामरः स्वाभिधां व्यधात्। ४१०
आजन्मलोलता मज्ञाः स्वरधाम्याय वर्द्धिता। निहन्ति च्छायया तस्याद्युमणिस्पर्शजं सुखं।
या लक्ष्म्या भागिनेयीत्वाद्बालापालि निजान्तिके। लासाख्या सा समाक्रामन्नृपतेश्चित्तदर्पणे।
यथानुरोधतन्तुस्तं चिरं लक्ष्म्या निबद्धवान्। स च्छिन्नो रागवेगेन लासासौन्दर्य्यजन्मना।
बलिजिन्मूर्त्तिना तेन वसन्त्या वचसि श्रिया। प्रतिवेश्मकितां नीता लासा सौभाग्यभागिनी।
छाया तद्रचितोदयापि दिवसश्रीभोगमातन्वतः सूर्य्यात्सम्मुखतां जहाति वहति श्रेयोहरीं कालतां।
स्त्रीणामस्ति चतुर्गुणा मतिरिति स्थानेन हन्त श्रुतिर्यद्दा दुर्व्विधिपङ्कमाकलयितुं शक्तो न कश्चिद्ध्रुवं। ४१५
प्राकृतस्यावताराख्या भक्तस्यापि सुता सती। लक्ष्मीर्लासानुरक्तेऽधादथ रोषं महीपतौ।
रोषात्सिन्धुपतेर्देशसम्बन्धिलाङ्गतां नृपः। प्रत्यानयंस्तपोद्रेकान्न पुनः स्नेहगौरवात्।
अपनीय तापखेदं मरुकरिणो पद्मिनीतोयैः। तत्पद्मशैवलाम्भोनिर्म्माथे कर्म्मठोभवति।
लक्ष्म्या मातृस्वसुः सर्व्वमाद्यकृत्यकृतोऽभवत्। राजप्रियाय राकेव लासा पक्षद्वयोद्यता।

सत्कर्म्मपाकसमयेऽस्य न चेद्दिकाशशोभां न किं परिहरेत् कुमुदाकरस्य।

विश्वप्रबोधहरणप्रवणक्षणेन कुत्सो निशा च सहसैव निशाकरेण। ४२०

चिन्तासूचकनिश्वासस्थानेोद्भावं कदाचन। अत्रोचद्भागिनी वेति लासाख्या भोगिनी नृपं।
न चेद्दिकाशयेद्भास्वान् पद्मिनीं स्वरुचा स्फुटं। तस्याश्छेदाय शैवालवस्त्राद्व यतेत कः।
पतन्तीं प्रेमभारार्द्रां मयि दृष्टिं तवासहा। मां निहन्तुमुपायेन कुरुते महिषी तव।
अभिचारे दुराचारमुपचारप्रियङ्करं। सा चाराचो मयि द्वेषादुदयश्रियमैरयत्।
देव द्वेषपरे तस्मिन्नभिचारविनिर्म्मितिः। असम्भाव्येति तां राजा प्रत्युवाच विचक्षणः। ४२५
निर्ब्बन्धेनोपजल्पन्तीं तदेव वचनं ततः। तां प्रत्याययितुं देवोमुदयश्रियमब्रवीत्।
व्ययित्वातिशयेनाद्य कोशो रिक्तत्वमागतः। प्रार्थयन्ते जना राज्ञः सर्व्वं कल्पतरूनिव।
द्रविणोत्पत्तये तस्मादुपायः प्रतिभात्ययं। प्रतिमा श्रीजयेश्वर्य्यायास्ति रीतिमयी पृथुः।
तां खण्डयित्वा विहितैष्टङ्कैर्म्मनामचिह्नितैः। व्ययनिर्व्वहणं कीर्त्तिस्थिरत्वञ्चोपजायते।
साध्वेतत् किन्तु तन्मूर्त्तिर्देव्यो किं प्रभविष्यति। दृढदुर्द्धेन मुद्रास्तु छुरसं सचिवोऽभ्यधात्। ४३०
भद्रोपकरणं सज्जीकृत्यान्येद्युरुपागतं। राज्ञीं प्रत्यय्य भूपालो रहोमन्त्रिणमब्रवीत्।
याः पूर्व्वैर्निरमीयन्त यशःसुकृतलब्धये। अङ्गीकर्त्तासि ता देवप्रतिमा भङ्क्तुमञ्जसा।

अमरप्रतिमा विधाय केचित्परिपूज्याथ परे प्रसिद्धिमाप्ताः।
परिपाल्य यथोचितं तथान्ये विदलय्याहमहो महद्दुरन्तं।
निर्म्माणाज्जलधेः कृतेश्च सरितां कौमारशोकावधि प्रख्यातः सगरोभगीरथनृपोगङ्गावतारोच्च यः।
दुष्मन्तः स च विश्वविश्वविजयाज्जिष्णोर्भयान्यावहन् रामोहन्त दशाननेन विहितात्सोतापहारात्पुनः।
राजा शाहावदीनाख्यः सुरमूर्त्तीरलोठयत्। सा दुर्व्वार्त्ता यमत्युग्राचकम्पञ्चाविनो जनान्।
उदयश्रीर्नतशिरा राज्ञीत्युक्तवति स्वयं। मह्नीरत्नमिवैचिष्ट द्रागधोगतिवाञ्छया।
भास्करोद्युपरीरम्भरसासादितकौतुकः। स्वपुत्त्रशनिमुख्यानां ग्रहाणां हानिमिच्छति।
रागी तद्दोषवादिन्या तया देव्या प्रबोधितः। व्यवासयत् स्वदेशात् स राजपुत्त्रान् परानिव।
कार्य्यंव्यतिमनुष्येषु साहायकविधायिभिः। योगिनीपुरनाथस्य तैर्व्यक्तो विक्रमः कृतः।
औदार्य्याद्वृत्तहर्त्तीन् स हिन्दुकानेव बोधितः। म्लेच्छान् शेकन्धरमुखान् राजद्रोहकृतोऽवधीत्।
पिशुनैर्जनिताशङ्कः शूरोमदनलाविकः। राजा विश्नम्भसज्जोऽपि सेनयास्य निवारितः।
राजा जातत्वरां यात्रां व्यसनेनाभ्यशेणयत्। नौसेतुकौतुकं सिन्धोः परिखायाद्ववाहरत्।
शूरः खड्गनगर्य्यां स पर्य्यटन् मृगयारसात्। सिंहमभ्यद्रवद्राजा सिंहसंहतसाहसः।
गच्छंस्छिद्रोधिकं राजा वाजिना वेगराजिना। अन्वगादतिभक्तेन मदनेनैव केवलं।
एकाकिनं चिरं बद्धयुद्धमुद्धतकेशरः। तमधःकृतवान् राजसिंहं सिंहोऽतिसाहसं।
उत्प्लुत्य वाजिमस्तस्थं शूरोमदनलाविकः। निपातितनृपं सिंहं कृपाण्या सहसावधीत्।
प्राणरक्षोपकारेण प्रसन्नः पिशुनाज्जनात्। श्रुत्वा मारणमेतस्य शङ्कमानो नरेश्वरः।
स विवाहच्छलाद्दत्त्वा द्रविणं करुणामयः। मदनं व्यसृजत् डिल्लीपतेर्निकटमञ्जसा।
उत्पन्नचम्पकं दीप्त्या कुर्व्वतीं व्योम जातुचित्। स्वप्ने शक्करस्तहाख्योदृष्टवान् काञ्चनीं पुरीं।
वेश्म वेश्म विशंस्तत्र शून्यं पश्यन्नयं ततः। राजधान्यां स्त्रियं काञ्चिदपश्यत्कान्तिदन्तुरां।
अपृच्छच्च त्वमेकैव ह्यन्तेर्यात महापुरे। व्योम्नीव शशिलेखा किं चित्रं तिष्ठसि निर्भया।
कस्येयं नगरी कस्माच्छून्या सर्व्वत्र वर्त्तते। अत्रेदं पतितं कस्य वर्त्तते च कलेवरं।
सा तं जगाद गन्धर्व्वराजस्याधो महापुरी। सुन्दरी पतिहीनेव विधुहीनेव शर्व्वरी।
स चामात्यैः समं सर्व्वैः पातुं कश्मीरमेदिनीं। अवतीर्णः परित्यज्य निजमत्र कलेवरं।
शाहावदीनइति यः प्रथितोऽस्ति जगत्त्रये। तत्कलेवररक्षार्थमत्र तिष्ठामि केवला।
स च निष्पादिताशेषकार्य्यो मासत्रयान्तरे। स्वामिमां नगरीमेव ध्रुवं रचितुमेष्यति।
प्रयुद्धेऽभ्यधिकायय्यंशोकचिन्तारसान्तरे। मज्जन्मरणयद्राशे स्वप्नवृत्तिमपण्डितां।
असत्ये किं भयं स्वप्ने सत्ये नैश्चर्य्यमेव मे। इत्यन्तर्विम्रृशन् राजा न तथा पस्पृशे शुचा।
मदन्तिकमुपागम्यमिति भूमिपतिस्ततः। दूरस्थितानां पुत्त्राणां सद्योलेखान्विसृष्टवान्।
ततोऽमुमूर्षुर्भूपालो हिन्दुकानां निजे पदे। अमात्यतमयो धीमानभ्यषिञ्चत् स्वयं ततः।

ज्येष्ठशुक्लचतुर्द्दश्यां तानाङ्केऽब्दे महीपतिः। आलिङ्ग्य नाकवनितास्तनौन्नत्यमपीडयत्।
कुम्भदीननरेन्द्रोऽथ भैलावाख्यां महीभुजां। चित्ते सुखं मुखे हर्षं स्तुतिं वाचि न्यधात्ततः।
नातितीव्रो न वा मन्दः सर्व्वस्यैव महीपतिः। चित्तमादित लोकस्य वैपुवोभानुमानिव।
लोहरप्रत्यवेचार्थं यान्प्रशात् पूर्व्वभूपतिः। लोहराधिपतेर्भीत्या ते पलाय्य गतास्ततः।
शाम्यन्त्योषधयः सर्व्वाः शशिन्यस्तं गते सति। दृष्टो हि सूर्य्यकान्तानां रवौ याति द्युतिक्षयः।
लोहरं प्रतिसन्धातुं कुम्भदीनमहीपतिः। शौर्य्यशालिनमादिचत्पुरोडामरलोलकं।
अवेष्टयत्ततो गत्वा लोहराद्रिं स सर्व्वतः। प्राणा हि स्वामिभक्तानां तृणायन्ते महात्मनां।
असामर्थ्यान्निजं दुर्गं दुर्गेन्द्रोऽर्पयितुं ततः। ब्राह्मणान् व्यसृजद्दूतान् डामराधिपतिं प्रति।
द्विजलिङ्गान् स तान् मत्वा चारन्द्रष्टुमुपागतान्। न्यग्रहीदिग्रहादुपात् द्विजानप्यग्रमानसः।
द्विजदैवतमर्थ्येतं श्रुत्वा तदपकारिणं। लोहरेन्द्रो न कोटागं जीवाशास्य विसृष्टवान्।
पश्यन्तोमरणं स्वस्य युद्धे वाथ पलायने। क्षत्रियाणां निजं धर्म्ममग्रहीपुस्ततो रणं।
शरासारशिलावर्षैर्दुर्दर्शान्दुर्घनादिव। लोहराद्रेरवारोहन्नारोहंस्तु यशांसि ते।
विप्रकीर्णैः स पाषाणैरेलडामरनायकः। अन्तर्हितः समं कीर्त्या भावि को नाम लङ्घति।
अनुकीर्णशिलाराशिच्छन्नोडामरलोलकः। यवनप्रेतसंस्काराच्च विपद्यप्यहीयत।
शाहावदीनभूपालो निर्व्वास्यापि सुतान्निजान्। आकारयत् स्वयं लेखैर्निजवर्णपरिष्कृतैः।
गुणैश्च वयसा तेषां ज्येष्ठामादिन्द्रमण्डलं। हस्सनो राजपुत्रः स प्राप तावदनङ्कुशं।
स नेत्रशुक्तिमुक्ताभिर्मुक्ताभिर्वाष्पवीचिभिः। श्रुत्वा तत्र पितुर्मृत्युं निवापाञ्जलिमार्प्पयत्।
व्यावृत्य गमनेच्छायाः स्वच्छाशयममुं ततः। न्यवारयत् पितृव्यस्य लेखः कश्मीरभूपतेः।
शक्रादिसौख्यलोभेन भृत्यानसानुपेक्ष्य सः। समस्कुरुत शाहावदीनभूमिपतिर्दिवं।
स्वःस्त्रीभोगरसेनेव गमनाय त्वरावतः। तस्यास्माभिर्भवत्कार्य्यमशेषं निरपद्यत।
चारचारत्रणमाज्ञा विचक्षणशिरोमणेः। तन्मन्त्रनालितां मौलिमूले मालां विदध्महे।
प्रवासागमनाभ्यां त्वं स्वपितुः पालिताज्ञया। श्रीराम इव भूलोकं यशोभिः समपूपुरः।
भूतो भावी च सम्भानो यद्यपि स्वगुणैस्तव। यौवराज्यग्रहाद्भारं लघूकुर्य्यास्तथापि मे।
स्वधैर्य्यं सम्यसंयोगेनानावन्धुसमागमः। तत्र रक्षाधिकारस्य दौर्मनस्यं विलुम्पते।
यशसेव प्रमीतानां परदेशनिवासिनां। महतां नहि जातः स्वादिभवेन सुखोद्गमः।
स्वरूपप्रतिबिम्बेन भवता स्वर्गवासिनः। तदुत्कण्ठाभरोऽस्माकं दर्शनेन निवार्य्यतां।
पुनः शाहावदीनस्य सोऽयमित्यन्यमण्डले। अङ्गुलीमुखनिर्द्दिष्टः प्राक्तनस्येव मास्तु ते।
राज्ञां मदनुकम्प्यानां मुखप्रेक्षी भवन् भवान्। कश्मीरैश्वर्य्यमतुलं मानैर्पीरस्पकं स्वयं।
विभज्य भवति धौरीभारं मेरुगिराविव। सुखं सम्पत्तिमतुलामत्युद्युतिराश्रयां।
येन मानेन मामग्रहीत् स वसुधाधिपः। त्वं सद्वरस्व तेनैव मयि पालयति प्रजाः।

उदयश्रीमुखामात्यमतानुष्ठानशालिनीं। स्वप्रार्थनानिषेधेन सञ्जोमेव वृथा क्षयाः।
अज्ञानन् लोककर्णेलं राजेन्द्रकरिणामथ। पन्थानं लेखवाची स काश्मीराणामगाद्धन।
पर्ज्जन्यैः सम्मुखायातैर्झाकाररवधारिभिः। न्यवार्य्यतेव कश्मीरप्रवेशाद्राजनन्दनः।
स विशन्नथ कश्मीरसरणीमुदजिज्वलत्। अमलोमधयद्राज्ञः श्रुतिन्तु खलचोदना।

नक्राः समुद्रमिव केचिदुदेतुकामा वातालतान्तमिव केचन दर्पहृत्या।
दुर्मन्त्रिणोभुवनकाननचक्रवालहव्याशनानरपतिं प्रविलोलयन्ति।

अथ प्रविष्टे कश्मीरान् हस्सने राजनन्दने। कुम्भदीनमहीपालः पिशुनैरित्यकथ्यत।
सर्व्वासामेव बुद्धीनामुपरीश्वरबुद्धयः। तथापि सचिवैर्व्वाच्यो हिताहितविनिर्णयः।
पुरन्दरादिलोकेशतेजोंऽशाश्रयशालिनां। स्वरंध्रेभ्यो महीन्द्राणामन्तरायो विलोक्यते।
स्पर्शनाशितया ख्याताद्भद्ररूपाद्द्विजिह्मगात्। कृष्णसर्पादिवाश्लिष्टात्कष्टं दूरो न कस्यचित्।
विभवैस्तर्प्यमाणोऽयं न च स्वीभविता तव। स्नेहेन सिच्यमानोऽग्निः शीतलत्वं किमृच्छति।
न चिन्त्यं स्वयमेकाकी राज्ञो मे किं करिष्यति। हरेः पुरः सयूथोऽपि कतमो वारणेश्वरः।
मद्बुद्ध्या विक्रमस्तस्य हन्यतामिति नोच्यते। बुद्धिमानुदयश्रीस्तं स्वामिभक्त्या हि रक्षति।
आद्ये दर्पोदयः पक्षे दोषोद्रेकः परे यतः। नानुग्राह्यो न चोत्सृज्यस्तत्र राजेन्द्र हस्सनः।
नैवैर्वप्रायतावृत्तिं तेजस्वी स सहिष्यते। यस्मिन्दहति नाम्भोधिं स स्थाणोर्वाडवस्य कः।
अतस्तस्य निरोधेन निरत्पिञ्जसुखाः प्रजाः। कुण्ठयन्तुतरां पूर्व्वभूपालोत्कण्ठितां चिरं।
प्रविष्टैरिति दुर्व्वाप्यैर्निगताङ्घ्रिरिव हृदः। वैरस्यमभरद्राजा खलवाक्यैः स हस्सने।
पश्यन् शृण्वन्ननुभवंस्तस्याप्युत्सेकविक्रियां। भ्रातुः पुत्त्र इति स्नेहान्न तं राजा न्यरोधयत्।
उदयश्रीरथालक्ष्य विरक्तं हस्सने नृपं। लोलडामरभार्य्यां तद्वार्त्तां समदिशत्ततः।
स्वामिरागमिवारूढो नाकं डामरलोलकः। अहारयद्यशो न स्वं कुस्वामिमुखवीक्षणैः।
कृष्णाद्दुर्भगघोराशो विभवाशास्तु दूरतः। वर्द्धितस्त्वया, प्राणसंशयोहस्सनस्य तु।
तस्मात्त्वया निजार्थानां ग्रहणार्थं महीपतिः। प्रार्थनीयो यथाभ्येति लङ्गृहानेव लुब्धधीः।
तथागतं महीपालं हनिष्यामो वयं बलात्। बध्नीमो वा ततो राजपुत्त्रोऽवृद्धिमुपैष्यति।
अथ दैवाद्गते तस्मिन् मन्त्रे भेदं महीपतेः। उदयश्रीस्ततो भीतः पलाययत हस्सनं।
आत्मनो मतपक्षे वा चोदयन्नपरान् जनान्। रसेन्द्र इव लोकेऽस्मिन् श्लाघनीयत्वमश्नुते।
सर्वंस्थतीलृणतीत्रेऽपि तथा सचितमुचतं। क्षमाशीलः क्षमापालो नातत्त्वणादुदयश्रियं।
गुणैः संहृत्य रश्मीनपि सर्वेषां शीलयन् वह्निः। विसवत्कालमनयत्पङ्कवत्सु जलेषु च।
तावद्वसति पक्षोपे दूरान् घ्नतो हिमांशुना। किंस्विन्नैव नरात्सिष्टमणियावा सवेदिति।
उदयश्रीर्गन्तुकामो राजपुत्त्रान्तिकं ततः। उदयश्रीः श्रुतद्रोहो राज्ञा कारां निवेशितः।
परीषितमिवाशुभैर्गुरोस्तस्य च शेमुषी। सुरैरिवार्चितो राजा क्रोधग्रापादयत् स तं।

मथ्नन् पद्मं गजो भञ्जन् मत्स्यन्दनपादपं। निघ्नन् पुरुषरत्नञ्च राजा सिन्धो जगत्त्रये।
वच: पुरुषपुष्पाणां भुवनोद्यानवर्त्तिनां। सौरभातिशयं श्लाघ्यं विचिनोति मनोहरं।
विनष्टहस्तपादोऽन्धो ययातिचक्रिनाशयः। उदयश्रीचये राजपुत्रोऽभूद्भुवनस्तया।
प्रसादप्रीणितैः प्रायः खशराजैर्दुरात्मभिः। राजपुत्रोहस्तुनः स हन्तुं प्रत्यवितः प्रभोः।
उत्पिञ्जे गलिते शत्रुवर्गेऽप्याशाच्युते सति। मतिः सतेजालोकानामालोकश्रियमाययौ।
वितस्तायां स्वनामाङ्का पुरी तेनाथ निर्मिता। उच्छ्रितैः कनकच्छत्रैर्यामुद्धसति या श्रिया।
प्रत्यब्दं जनमालक्ष्य दुर्भिक्षचयितायुषं। मासि भाद्रपदेऽकार्षीत् स सत्त्वं भूरिदक्षिणं।
साधुसूक्तिसुधास्नानात्कर्णाभ्यर्णतले कवेः। ध्रुवं धवलिमापेदे वार्द्धके चास्य भूपतेः।
भूषणं निजवंशस्य पूषणं धरणेरसौ। शत्रुश्रीदूषणं पुत्ररत्नं न च स लब्धवान्।
योगिनो ब्रह्मनाथस्य कश्मीरादागतस्य सः। प्रसादेन महीपालः सन्ततिं प्राप्तवांश्चिरात्।
अन्वयाभरणं देवी पितुरानन्दपारणं। तमोहरणमर्थ्यर्थंकरणं सुषुवे सुतं।
शृङ्गारमङ्गलावासमवलोक्य वपुः शिशोः। शृङ्गार इति नामास्य व्यधाद्भूलोकवासवः।
हर्षादादिशति क्ष्मापे बन्धमुक्तिं तदुत्सवे। अन्वभावि तदा चित्रं बन्धो नौसेतुभिः परं।
अथ द्वितीयपुत्रं सा देवी दैवतसंज्ञितं। असूत कान्तिसन्तानतर्ज्यमानसुधाकरं।
चन्द्रस्येव कलङ्कोऽभूदयं दोषो महीभुजः। कुलागतां मही यस्य सवास्तथामपाहरत्।
भाद्रे कृष्णद्वितीयायां पञ्चपष्टे स वत्सरे। अस्तं जगाम राजेन्द्रः कुम्भदीनमहीपतिः।
राज्ञी शोकातुरा राजपुत्रौ बालाविति प्रजाः। अभूवंश्चकिताः सर्वा विनाथवद्यथाधिकं।
देव्या वाष्पजले शोकवर्धजाते पृथौ सति। परस्परममात्यानां मात्स्ये न्यायेऽभवद्रुचिः।
अलं शोकनिवेशेन धैर्य्यमत्रोचितं यतः। हन्यते मलिनात्मानः क्ष्मामशूरामराजकां।
इति प्रबोध्य सुभटां देवीमुद्दकसाहकौ। ज्येष्ठं शोकन्धरं पुत्रं महाराज्येऽभ्यषिञ्चतां।
राज्ञीमतेनोद्दकोऽथ साहपुत्रं महत्पदं। स्वजामातरमप्येष सजानिमदहच्छलात्।
सुक्ष्मानत्ति तिमिर्महान् स्वकुलजानन्धानजानन् वधं स्वामस्वामपि मक्षिका वत मधुग्राहाद्भजिघ्रदहधा।
सद्गीलोभभरेण मोहितधियः कस्यानलस्थोत्स्थितिं जानन्तोऽतिजडा न किं कुचरितं कुर्वन्ति हा हन्त हा।
श्रीशोभाया महादेव्याः श्लाघ्या लक्ष्मीरभूत्तरां। यां हेमलिङ्गैर्या पुष्पलिङ्गैर्या स्वैरमण्डयत्।
एतद्वन्धुघ्नमेषोऽपि मां हनिष्यति निश्चितं। इत्युद्दकोराजपुत्रं विषेणाथ व्यपादयत्।
निजयैव कृपाण्याहं स्वं छिन्द्यां कण्ठमेतया। यद्यहं त्वां निरुन्ध्यामा हन्यां वेत्यथ संविदा।
विश्वास्य साहकं वीरमुद्दकोऽथ व्यपादयत्। आसन्नविनिपातानां द्रोहादूता हि दुर्धियां।
यथा भ्रातुस्तथा स्वस्य वधं सम्भावयन्नृपः। प्रौढीभूतस्तनोऽहट्टिं स्वं पदं किञ्चिदानयत्।
मौद्गान् जित्वा गतो दूरोऽसहमानोऽन्यवैभवं। श्रीशोभाभ्रातरं सुञ्ज्याराजमुद्दोऽवधीत्ततः।
श्रादिशन्मेवकं स्वं स दारोत्पिञ्जनि मस्तकं। राज्ञोऽपि मरणं त्यक्त्वा दोलरानगमन्मदात्।

तच्छ्रुत्वा लद्दराजाद्या भूपतेरनुयायिनः। योद्धुं बद्धोद्यमाः पद्मपुरधन्वनि धन्वनः।
प्रत्यासन्नविनाशानां प्रायो मतिमतामपि। पिशाचादिभ्रमो नूनं स्वच्छायास्वपि जायते।
उद्दसैन्यैर्यतो योद्धुं बद्धोद्यममुपागतैः। पारेवितस्तं मद्दिषीग्रामभ्रान्त्या पलायत।
आवितस्तापुरं रात्रौ तमनुद्रुत्य भूपतिः। व्यवर्त्तताथ तं बद्ध्वा नगरोत्पित्तशङ्कया।
तं बध्यमपि कारायां कारुण्यात्तु नृपोऽक्षिपत्। उद्दकस्तु स विश्वस्तद्रोहपापमलीमसः।
शङ्कमानो बधं भूपात् करुणाकोमलादपि। निजयैव कृपाण्याथ स्वगलच्छेदमाचरत्।
पत्त्रिराजइव व्यालान् शृगालानिव केशरी। पालान् धरणिपालः स कालान्तिकमथानयत्।
राज्यं शौर्य्यं वपुस्तेजो निर्नियन्त्रणता तथा। तदा तथाभवद्राज्ञः पश्चाग्नितपसः फलं।
हन्त राज्ञां ततं दर्पतिमिरं खण्डयन्नृपः। यात्रामहन्नयपवित्रं गोत्रभिद्वयदा ततः।
विश्वं रञ्जयता तस्य प्रतापेन प्रथीयसा। राजस्त्रीनखलक्ष्मश्रीः पाण्डिमानमवापिता।
तदैव दीनाभरणामपालकतया युतां। म्लेच्छराजो व्यधात् डिल्लीं विधवामिव लुण्ठयन्।
ततः प्रव्याव्रजन् म्लेच्छराजः कश्मीरभूपतेः। शङ्कमानो गजेन्द्रौ द्वावुपायनमचीकरत्।
हस्तिद्वयगलद्दानराजिव्याजात् स्वयं व्यधात्। देशसीमाविभागं स कश्मीराधिपतेः किल।
हस्तिद्वये समारूढे हिमाद्रिशिखरश्रियि। विन्ध्यशृङ्गभ्रमाद्विन्ध्यनियन्ता कोपमागमत्।
नागौ कोपमगातान्तौ वितस्तातरणक्षणे। प्रतिबिम्बं निजं दृष्ट्वा प्रतिहस्तिभ्रमं गतौ।
राजस्त्रीस्तनधान्दर्य्यचौर्य्यकारिकटोत्कटौ। तौ गजौ भूमिपालेन वारीकारां प्रवेशितौ।
वदान्येन नरेन्द्रेण सुवर्णपरिपूरिताः। नैवार्थिनः परं देशो निजोऽपि प्रत्यधीयत।
यथाकामार्पणप्रीतया चकम्पितलज्जया। विनमन् संकुचन् हस्तस्तस्य दानक्षणेऽभवत्।
दानं वर्णयितुं तस्य शक्यते नैव केनचित्। पाणिरूपमधः पद्मं यत्रोपरि जलं सदा।
सदा दानाम्बुसेकाद्यत्र प्रारोहयवः करे। खड्गत्सरुविमर्दानां मन्ये तत्र निमित्ततां।
प्रजापापविपाकेन ततो यवनदर्शने। बालस्येव हृदि चोणिपतेर्व्यसनमुद्गत।
अनेके यवना दानमसिद्धन्तमथाश्रयन्। विहायापरभूपालान् पुष्पाणीवालयो द्रिपं।
दीप्तेन्दुरिव पक्षाणां तेषां बालोऽपि विद्यया। यवनानामभूज्ज्येष्ठो मेरदेशं महम्मदः।
अनमदृत्यवन्निच्छां शिष्यवच्छिष्यमग्रहीत्। दासवत्स पुरो नीत्वा राजा तत्र न्यविक्षत।
मरुद्भिरिव वृक्षाणां शालीनां शलभैरिव। कश्मीरदेशाचाराणां ध्वंसोऽथ यवनैः कृतः।
स्वामिनो दानमामाभ्यां वैशद्या गुणवृत्तया। कश्मीरान्विशन् म्लेच्छाः सचेतं शलभा इव
उदभाण्डपुराधीशं शसो जातु गयन्नृपः। श्रीमेरात्मसुतां प्राप मूर्त्तामिव जयश्रियं।
स्वामरध्वादिकुले नूनं सा कापि देवता। योजयिष्यति तत्पुत्रः कश्मीरान् म्लेच्छनाशितान्।
श्रीजैनोल्लाभदीनाख्यो मूर्त्तो धर्मः कलावपि। राजापि योगिराजोऽयं राजचूडामणेः प्रियः।
केनापि रससिद्धेन दत्तशोकरसो नृपं। रससिद्धिं वदन्मूर्त्तमहादेवाभिधोऽप्यधात्।

यदा राज्ञि महीभारोद्वहनादनुरोधवान्। अदान्मेरुर्महादेवरूपेण द्रविणं बहु।
रससिद्धिप्रमादोऽथ महादेवस्य हीनतां। अगमत्तु कश्मीरनिवासविषये मनाक्।
रससिद्धिभ्रमार्थं स कृत्वा दृम्भमौषधैः। हेमेव मूषिकामध्ये चिरमासीत् किरन् किल।
अज्ञानज्ञापितो राजा तच्छद्म स्वयमेकदा। अकीर्त्तिश्रवणाद्भीतोमहादेवोऽजहादसून्।
•लद्दराजोऽगदङ्कारशङ्करौ भट्टसूहकः। मन्त्रिणश्चान्तरङ्गाश्च सर्व्वदैवाभवन् प्रभोः।
मेरखानः शाहिखानखानो मह्मदइत्यपि। यैः सङ्गा अभ्यभूषन्त गङ्गौघैर्भ्रिष्टपादव।
सत्यचाद्व धर्मार्थकामाः काममनोरमाः। मेरदेव्यास्त्रयः पुत्राराज्ञास्तस्यादपत्सत।
हन्निमलान्निरस्तानां शोभादेव्यात्मजन्मनां। पुत्रं पितृजनामानं न निरासत् पुरान्नृपः।
अलकासदृशीं राजा मानसप्रतिविम्बितां। पुरीं पुण्यजनाकीर्णां प्रद्युम्नाद्रितटे व्यधात्।
अयत्नप्राप्तवित्तानां यवनानां महीपतेः। वराटके च कोटौ च दृष्टिरासीत्समा तदा।
कश्मीरमण्डले म्लेच्छदुराचारेऽतिदूषिते। महिमा ब्राह्मणैर्मन्त्रैर्देवैश्च स्वः समुज्झितः।
प्रभावतेजो यैर्देवैः सततं प्रकटीकृतं। खद्योतैरिव तैरेव देशदोषाद्विनिह्नुतं।
प्रत्याहृते ततस्तेजोविशेषे त्रिदशैरभूत्। प्रतिमानां शिलाभावोमन्त्राणां वर्णमात्रता।
पुण्यक्षयेण कर्तॄणां कलिदोषेण चोज्झिताः। गीर्व्वाणैः प्रतिमाः सर्व्वा निर्मोका भुजगैरिव।
रक्ते रागं शुचौ शौक्ल्यं मलिने मलिनां स्थितिं। संक्रान्ते सति गाहन्ते स्फटिकानीव भूभुजः।
स्वयं ब्राह्म्यक्रियाद्वेषी म्लेच्छैश्च प्रतिबोधितः। सूहभट्टः प्रभुं जातु देवभङ्गार्थमैरयत्।
विहाय राजकार्य्याणि प्रजाभाग्यविपर्य्ययात्। देवानां प्रतिमाभङ्गे राजारज्यदहर्निशं।
पापिनां पापमूलोऽभद्भूभृतामनयद्रुमः। हर्षदेवतुरुष्कोऽभूद्यस्य प्रागङ्कुरायितः।
पत्रायितोलवन्यानामुत्पिञ्जो दारुणोऽभवत्। उत्तचोत्सिच्छराजोऽभूद्यस्य पुष्पायितः सदा।
देवानां मूर्त्तिभङ्गेच्छा यस्यासीत्तस्य भूभुजः। म्लेच्छप्रेरणया नित्यं विस्रत्रः स फलायितः।
मार्त्तण्डविषयेशानचक्रभृत्त्रिपुरेश्वराः। भग्ना येनास्य कोविघ्नः शेषभङ्गेन कथ्यते।
सुरेश्वरीवराहादिप्रतिमाभङ्गकर्मणि। अकम्पत भियेवोर्व्वी नास्य सर्व्वङ्कषा तु धीः।
न पुरं पत्तनं नापि न ग्रामो न च तद्वनं। यत्र सूहतुरुष्केण सुरागारमशेष्यत।
क्षयाशेषीकृते सर्व्वगीर्व्वाणप्रतिमागणे। व्याधिमुक्तइवानन्दं सूहभट्टोऽभजत्ततः।
अपथ्याशीव बालः स सामन्तमहितस्ततः। जनानां जातिविध्वंसे सूहभट्टः कृतोद्यमः।
जातिध्वंसे मरिष्यामो द्विजेष्विति वदत्स्वथ। जातिरक्षानिमित्तं स तान्दुर्द्दण्डमजिग्रहत्।
प्रसादप्राप्तिलोभेन भूपतेरुपजीविषु। ब्राह्मणत्वाधिकां जातिं त्यजत्स्वथ विडम्बितं।
श्रीसिंहभट्टकश्यूटौ वणिजौ श्लाघ्यतां गतौ। श्रीनिर्मलाचार्य्यवर्य्यस्त्रिजगत्श्लाघ्यताद्भुतः।
त्यक्ता जातिरयं यत्तावन्यदर्शनसेविनौ। शुल्कं तुरुष्कदण्डस्य विन्यशारयतां यतः।
निर्म्मलाचार्य्यवर्य्यः स सर्व्वस्वं तृणवत् क्षणात्। त्यजन् राजप्रमादेन न जातिं स्वामदूषयत्।

स्वामी भृत्यापराधेन दण्डनीयइति स्थितेः। सूहभट्टापराधेन कालोभूपेऽकरोत् क्रुधं।
ज्यायांसमभिषिच्याथ पुत्रं शोकभरोनृपः। नन्दाष्टाब्दे ततोज्यैष्ठकृष्णाष्टम्यां व्यपद्यत। ९१०
आलिङ्गाहः स वसुधासुधांशुर्जगतस्तमः। प्रदोषारम्भमच्छैत्सीत् भाखनोऽस्तो पितुस्ततः। *
अदर्पकलितं बालं प्रौढा लक्ष्मीर्भुजङ्गभुङ्गः। कुलजालिङ्गदङ्गेस्तं राजानं नतिशालिभिः।
पूर्व्वोर्व्वरेशवत्ब्रालमपि तं भूभुजोऽनमन्। अहिदंष्ट्रोऽपि दामापि क्रमितुं न प्रगल्भते।
निजबुद्धिबलाद्दैवहितलेनोपथं हितात्। सूहभट्टेन मुख्यत्वं सचिवानामवाप्यत।
विश्वासमन्यस्तस्तं स लद्दमार्गपतिं बलात्। बद्धवान् सह तत्पुत्रैर्व्वर्ज्जयित्वा महम्मदं। ९१५
महम्मदो मार्गपतेर्व्वन्धं श्रुत्वैव शौर्य्यवान्। भाङ्गिलाचलमार्गेण मार्गाभिज्ञः पलायितः।
निरुध्यमानं निःशङ्कमगदङ्कारसङ्करं। अप्रयुक्तातितीक्ष्णापि शक्तिधीश्च व्यडम्बयत्।
अपश्यद्दर्पतः कश्चित् सिंहो विशतु वागुरां। छिद्यन्तु तद्विशेत्याद दूरदृश्यापि यः खगः।
एकाहेनैव तच्छ्रुत्वा महादः प्राप्तिचिन्तया। कन्ययेव दरिद्रः स नक्तंदिवमदूयत।
दुर्द्दण्डदेशे गोविन्दनाम्नामित्रस्य वेश्मनि। विश्वस्तः प्राविशत्तावद्विश्रमार्थं महम्मदः। ९२०
वह्नेर्धूमविवर्द्धितः शमयति ज्वालाभरं वारिदोऽप्यच्चैरादभ्रैः वनानि नयति क्षिप्रं कृशानुः चयं।
दाहं जन्मभुवोद्विशेद्विपतरुर्व्वैरस्य दोषावहं द्रुह्यन्त्यपकारिणोऽपि नितरां लोभाभिभूताजनाः।
प्राप्ते महम्मदे मार्गपतौ विश्वासतो गृहान्। स गोविन्दखशश्चित्ते चण्मेवमचिन्तयत्।
मन्त्रिणा सूहभट्टेन राज्योपद्रवराचिणा। वैराज्यकारी दुर्ब्बुद्धिरित्यशारि महम्मदः।
राज्यद्रोहादतः पापी निःसामर्थ्यभयादयं। मम देशं प्रविष्टोऽद्य रक्षणीयो न युज्यते।
तावच्छ्रीसूहभट्टेन विसृष्टाः श्रेष्ठवुद्धयः। अन्वेषका गृहं प्राप्ता गोविन्दस्य खशेशितुः। ९२५
मैत्रीमुल्लङ्घ्य निर्व्यूढामाश्रितस्य च रक्षणं। महम्मदं निजं मित्रमर्पयामास दुर्मतिः।
सुप्तं पुरीमिव व्याधो यदा बद्धाक्षिपत् खशः। पद्मवक्त्रं तदा तेऽय काश्मीरानानयद्द्रुतं।
मन्त्रार्दितस्य फणिनः खगाशपेटैर्व्वाधाःशटाविघटनानिरसोद्दरस्य।
यद्दुःस्य कातरतया वलिनोऽवमानैर्निन्द्राविना किमिव नाम परं लभन्ते।
मान्यं इतावमानन्तं मद्दमानः पलायनं। वह्निरूपे महादुर्गे सूहकारमवीविशत्।
विद्युद्द्योतभरैर्निशि प्रवसतः पान्थानिवो वारिदः पश्चात्स्येव नवासिनो मृगगणान् व्याहृत्य विश्रंवितैः।
गत्या यमगतेर्द्दिमेमतमयोराशीनशादोन्विधिर्भ्राभासविलोकनैर्दुरितिनोः शिवास्य पर्य्यन्यति। ९३०
प्राहनाध्मास्ततोदाम्ना मुखेन प्रतिबोधितः। महादो निजधार्य्यैर्व्वन्धस्थानादहश्यत।
स हि खेदावुत्र स्नानं करोमीति स्वरक्षकान्। श्रामयित्वा प्रविश्याथ स्नानकोष्ठं ततोऽचलत्।
धार्य्यैर्व्वेष्टितं सन्धिभिर्द्यामुपेत्य सः। हंसः क्रीडान्तरालेव नि हतोऽथ महम्मदः।
रोपादिव श्रुतिं हन्तुं निष्पतन्निश्रंराभयां। भगोरिव ततोदुर्गाद्दाडम्पामकम्पितः।
च्ठक्रुरमं गोढुं पाषाणारपिलोम च। मिश्ररास्तु मदद्भिर्न्यागडश्वनिउमरं। ९३५

धात्रेयामह्मदस्याथ भङ्क्त्वा निगडान् दृढान्। सूहभट्टममन्यन्त भग्नं साकं स्वबन्धुभिः।
महम्मदवदेवास्मिन् शङ्कमानः पलायनं। हृद्धं निपीतकोशोऽपि मार्गे समवधीत् द्विजः।
हते मार्गपतौ हृद्धे सूहभट्टेन दुर्धिया। अमन्दनिन्दमक्रन्दन् पितरौ बालिशाजनाः।
दृष्टैः संलङ्घयन्नाशा विशेषं निशि निश्चय। पक्षीव नीडभ्रष्टः स सूहोल्लोकभयाद्ययात्।
अर्हस्तस्य विहस्तस्य रात्रिरासीन्निशादिनं। विपर्य्येति ध्रुवं सर्व्वं विधौ विधुरतां गते।
कारागारं समुल्लङ्घ्य चलितं तं स्मरन्मुहुः। महम्मदर्तिमं सूहधीवरः शुचमासदत्।
मन्त्रिणा सूहभट्टेन पालितैर्लालितैर्जनैः। ख्यातोदर्शनमात्रेण स्वर्थ्यातः श्रीशिकन्धरः।
श्रीशिकन्धरशाहिर्थ्यं शोभादेव्याः स्वमात्मजं। उत्पित्झानामभावार्थं स्वदेशान्निरवासयत्।
उदीचीपतिना राजपुत्त्वादभिनन्दितं। काश्मीरानाययौ जेतुं तमादायाथ मह्मदः।
तुरुष्ककटकैः सार्द्धं श्रुत्वा पिरुजमागतं। व्यसृजत्तन्निरोधाय सूहः श्रीलद्दगौरकौ।
मन्त्रैः श्रीलद्दराजस्य विक्रमैर्गौरकस्य च। सा तुरुष्कचमूः शान्ता व्याधिर्दानजपैरिव।
वीतभीतिस्ततो मन्त्री कम्पनाधिपतिं व्यधात्। लद्दराजं गौरभट्टं क्रमराज्येश्वरं च सः।
सन्ध्यारुणद्वोदये सूहे रञ्जितभूभृति। नाभूतामुदितौ राजयुवराजौ रवीन्दुवत्।
श्येनो हन्ति पतत्रिणो मृगपतिर्न्निष्पातयिष्णुर्मृगान्भिद्यन्ते मणयोऽपि वज्रमणिना खाता खनित्रैर्मही।
पुष्पाणीव च भास्वता ग्रहगणाः सूर्य्येण निर्धूनिताः प्रायेणात्र विलोक्यते परिभवत्रासः सजातीयतः।
द्विजातिपीडने तेन प्रेरितोऽपि मुहुर्मुहुः। श्रीशिकन्धरभूपालः करुणाकोमलाशयः।
यवनाब्धिमहावेलां यामकार्षीत् कथञ्चन। उल्लङ्घिता द्विजातीनां तेन दण्डस्थितिस्ततः।
दर्शनान्तरविद्वेषी प्रदीपस्तमसां निधिः। यागयात्रादि नागानां दुर्वृत्तः स न्यवारयत्।
शङ्कमानः कृतातङ्कसङ्कोचानां द्विजन्मनां। विदेशगमनाज्जातिरक्षामक्षामसत्सरः।
मोक्षाक्षरं विना मार्गो दातव्यो नैव कस्यचित्। इत्यादिशद्देशान् स मार्गरक्षाधिकारिणः।
ततोमीनानिव व्याधो दत्तबन्धे सरिज्जले। द्विजातीनतिदुर्जातो देशेऽस्मिन्न्यग्रहीत्तरां।
तद्भयानलसन्तापं पापश्च वहवो द्विजाः। अग्निज्वालाप्रवेशेन सद्य एव न्यवारयन्।
केचिद्विषेण पाशेन परे तोयेन चापरे। भृगुणा वह्निना चान्ये विप्रा भीत्या विपेदिरे।
राजद्रोहिसहस्रेण रचितुं राजवल्लभः। नैतकमशकन्निप्रमेतस्मिन् देशदूषिते।
दुर्व्वहत्वेन निन्दन्स राज्यभारादहं खलः। अश्लाघत द्विजाक्रन्दश्रवणानन्दलाभतः।
म्लेच्छाक्रान्त्येव विप्राणां पङ्क्तिर्ज्जात्यभिमानिनी। रुद्धद्वारात्ततो देशादपमार्गैरपासरत।
त्यक्त्वापि पितरं पुत्रस्तं पिता चागमद्विज। सुहास्तके कृताचैरे विदेशं परलोकवत्।
स्माहृचाचाममयनं व्यामोहावेदनामयः। जीवमरकता तेषां विदेशोऽगाद्विजन्मनां।
धाटीफणीन्द्रभीतीमतापस्वल्पाशनातुरे। मार्गेऽनेकैर्द्विजैर्मृत्युलाभात्सुखमलभ्यत।
क्व च स्नानं क्व च ध्यानं तपः क्व च जपः क्व च। भिक्षार्थमटतां ग्रामानगात् कालो द्विजन्मनां।

द्विजानामुपकारोऽभूदपकारमुखाद्देहा। यत्तन्निर्वासिताः सर्व्वे पापं तीर्थेष्वनाशयन्। १६५
विदेशमगताः शुष्यत्कलत्रत्राणचिन्तया। म्लेच्छवेशा द्विजाः केचित् कश्मीरेष्वेव चाभ्रमन्।
विच्छेत्तुमिच्छता विद्यां तेनापहृतवृत्तिभिः। लुण्डितं प्रतिवेश्मार्थं पिण्डीलोभाद्द्विजैः श्ववत्।
तुरुष्कदर्शने भक्त्या न तु द्वेषेण स द्विजान्। व्यशातयदतश्चास्मिन् हन्या न प्रजगल्भिरे।
इत्याख्यच सरवैषां स तस्य परिहारदः। द्वेषद्योतनशक्तानां कार्य्याणामेव दर्शनात्।
रत्नाकरं यमाश्रित्य ब्राह्मणा जगतीभृतः। पचरचां व्यधुः सोऽभूत्सुहभट्टोऽस्य वल्लभः। १७०
मलानोद्दीननामानं यवनानां परं गुरुं। वैदग्ध्याच्छद्ममानः स द्रोहीति तमवन्वयत्।
यतः प्रभृति स प्रापद्राज्यमच्छत्रचामरं। ततः प्रभृति रोगार्त्तिरिव दर्शनदूषणा।
स्वप्नेऽपि नात्यजत् सूहभट्टं घट्टितवैरिणं। भोगः सद्वासना चातिशुद्धानां तपसां फलं।
तथैव फलपूर्णानामृतूनामिव मन्त्रिणां। मानस्य हानिसम्पत्ती भास्वतोऽधीनतां गते।
एकस्मिन् शाहिखाने स दृष्ट्वा मन्त्रपराक्रमौ। अत्यन्तचिन्ताचकितो निद्रां नापत् कदाचन। १७५
पश्यन्नेवाविलं स्वस्वर्पं सविषया दृशा। शाहिखानप्रदीपोऽभूत्तमः संहर्त्तुमक्षमः।
द्विजातिपीडया शास्त्रनिन्दया द्रोहचिन्तया। चिकित्सया च तस्यान्द्वैर्यातन्त्रिचतुरैस्तया।
प्रजापुण्योदयेनेव प्रेरितो दुष्कृतोत्थितः। क्षयामयो दुश्चिकित्स्यो द्विजराजमशोषयत्।
अगलोश्चैवेन्दोरुदयमगमिष्यद्यदि समं समन्तात्सादित्योपलदहनराशिव्यतिकरः।
विमद्रस्यस्यायन्नदुदयवशाम्बावितुहिनद्युतिपाशाम्भोभिः छतधरणितापोपशमनैः।
वर्षाण्यपि चतुरगमन्याम् जीवेर्वेत स किं ततः। शाहिखानोदये पश्येदिहैव स्वांहसां फलं। १८०
जीवत्येव ततः सूहभट्टे भीत्या पलायितं। विश्राम्य सहराजन्याक् हंसगौरौ समन्वतुः।
श्रीधैमा गणिते। तौ दौ मदोदयौ रूपाविव। अन्योन्यवृत्तभङ्गार्थं प्रावर्त्तेते द्विजे मृते।
कारया गोपिते सहगाजे हंसेन संपति। प्राणांस्त्यक्त्वा गौरभट्टः सुरस्त्रीणां मुदं व्यधात्।
त्यक्ता गत्यन्तराभावात् कारिकर्णविलोलतां। पुंश्चत्येव पतिर्द्दृष्टे हंसभेजे हंसमत्सरा श्रिया।
यामोऽपि शाहिखामोऽस्य भाक्तिकं भेद्भवाम् पुन.। शमीव तिमिरस्फारं महि तेजोवयोऽनुगं। १८५
टक्कुरैः सह पंगस्य युवराजोऽप्य मन्त्रवित्। सहराजं विनिष्प्रभं हंसभट्टं रणेऽवधीत्।
शाहिखानं प्रजारागो नित्यं पयरनागमत्। अमन्दचूतमण्यमो कुन्दं निन्दति षट्पदः।
युवराजं अयोदयं परिरब्धुं समुत्सुका। राज्यश्रीः समयालाभाश्चिन्ताकुलमवर्त्तत।
धैर्यादिरत्नभारस्य प्रजारागभरादपि। अधिकारभरं राज्ञा युवराजे समार्पयत्।
नौरवधारयंसस्य तुरुष्कस्य च दूर्घनैः। द्विपस्येव मदाम्भस्य दिष्टोऽभूत्सङ्कुलाङ्कुशः। १९०
सुचिरं मलिनेनाहो नामधं कान्दिरोचि। पैशुन्यर्श्वविभिर्निर्हृत मालिन्यं म धा महीते।
भाले दधेत्सुखे विस्मिताप्रदा विनाशात्। अनिमेषतया नेत्रं राज्ञोऽप्युदितमागतात्।
युवराजं हैवंस हरिदं स्वामूलदीपनि। नीरांशुपरजाशाहाः अनिन्धिरसोचन।

अनर्थितर्पणं वित्तं चित्तमध्यानतर्पणं। अतीर्थसर्पणं देहं पर्य्यन्ते शोच्यतां व्रजेत्।
दिग्गजेष्विव युष्मासु भूभारं न्यस्तवानहं। पुरुषोत्तमसेवार्थं यते शेष इवापरः। १९५
साहिखानार्णवः प्रेममन्दरान्दोलितस्ततः। वाणीं सुधाकरकलामोश्वराय नवामदात्।
अस्तु सन्देहसन्दोहाद्दूरे तीर्थकदर्थना। द्वारं यश:सुकृतयोः प्रजापालनमस्तु वः।
चिरस्य पालितां पित्र्यां हित्वा निःशरणां महीं। नैर्घृण्येनेव स्वरस्त्वमशक्यैराक्षये ऽखिलैः।
देवस्य यदि तीर्थार्थमुत्कण्ठा वर्त्ततेतरां। आराधकानामस्माकं किमन्यत्कार्य्यमुच्यतां।
व्यक्तमित्युक्तवत्येव युवराजे नरेश्वरः। ईषत्स्मितरुचा चारु पुनर्व्वाचमवोचत। २००
प्रजानुपालनात्पुण्यं केवलात् कियदर्ज्यते। रसायनानामर्थ्यं यदनेकरसचर्व्वणं।
देहात् पृथक् निवसतोमङ्गजस्येव ते तव। दृष्ट्वा पराक्रमं शङ्का मदशक्तौ कथं भवेत्।
एतावदपि वाक्यं मे यदि नैवानुतिष्ठसि। त्वयि मद्धन्यिनाः शेपास्तदाशाः सन्तु दूरतः।
निर्व्वन्धेनेति जल्पन्स तीर्थार्थं धरणीपतिः। युवराजं हठाद्राज्यभारमग्राहयच्चिरात्।
श्रीजैनोल्लाहभदीनाख्यः सुरत्राणोऽभवद्भवान्। चिरं राज्यं क्रियादेवं राजास्याशिषमभ्यधात्। २०५
तीर्थदर्शनलोभेन स्वदेशान्निरगान्नृपः। न पुनर्युवराजस्य चित्तात्प्रेमार्गलाञ्चिता त्।
कोषसाराणि रत्नानि वाजिरत्नानि चार्पयन्। भ्रातरं वसतीर्दिनाः सोऽन्वगात् प्रेमगौरवात्।
मार्गे क्लेशं प्रयत्नेन सिद्धिं तीर्थफलात्मनां। उक्त्वा मार्गे स्वता राज्ञस्तीर्थश्रद्धामखण्डयन्।
स्वजामातुस्तिरस्कारं मन्यमानेन मानिना। मद्रेन्द्रेणाथ भूपालो द्वारात्तीर्थान्निवर्त्तितः।
प्राप्तायां शरदि श्रेष्ठदशायामिव भूपतिं। मद्रराजस्समादाय कश्मीरान् प्रत्यगात्ततः। २१०
भ्रातुरागमनातुष्ट्या मद्राशारयशाद्रुषा। नवराजः प्रमादे च कालुष्ये च निमग्नवान्।
चुद्रेष्वथ समुद्रेषु युवराजो महामतिः। भ्रातुः स्नेहाद्रुषं त्यक्त्वा राज्यत्यागं स्वयं व्यधात्।
तद्यस्तं दिवसावसानसमये सूर्य्यस्य तेजो निजं प्रत्यूषे प्रतिपादयन्नतिशयश्लाघ्यस्तनेशाभवन्।
वह्निर्यन्चकुलैस्ततोऽपि दिवसे श्रद्धानुबन्धाकुलैस्तेजोऽष्टद्धिमुषा नवेन हविषा यज्ञेषु सन्तर्प्यते।
ठक्कुरैरन्वितो राजा पवनः कुसुमैरिव। कश्मीरेभ्यो गतः सर्व्वदेशाधीशैर्नतस्ततः।
सुखं तावदगाहिष्ट वीतनक्रां नदीमिव। ठक्कुरैरुज्झिता मद्रचमूः कश्मीरमेदिनीं। २१५
अथ विस्तीर्णमाक्रान्तमालिङ्गाहेन भूभुजा। पित्र्यं सिंहासनं तेन ननु सज्जनमानसं।
प्रच्छेत कथं जडद्युतिरहो दूरोल्लसल्लाञ्छनो गच्छेद्दीप्तकरोन चेद्दिनकरो लोकान्तरं स्वेच्छया।
वीरेणात्यवहेलया विरचितोऽपचो जडः कातरः सम्भाव्य स्वपराक्रमेण विजयं विश्वं तृणं मन्यते।
शाखाभङ्गेन सच्छायमुद्यानं शत्रुगादिव। मण्डलं चोभयामासुस्तत्स्कारराजसेवकाः।
कातराचाम भूपालादनिष्पन्ननिमन्त्रणः। यवनोमेरकंसारोव्यधान्मण्डलविप्लवं।
अकार्षीन्मलिनो म्लङ्गः संकुचन्तीरिवाब्जिनीः। पौरनारीरनार्य्यः स हारसम्भोगदूषिताः। २२०
मधाकरैर्मदेनान्धैः पङ्कसङ्कुलतां भयात्। अधोभि मण्डलं स्वच्छैः सैरीमलगणैरिव।

मन्त्रिमन्त्रैरवार्य्याणां द्विषेऽण्यनिर्वर्त्तिनां। रचमामेव कश्मीराखदा द्दग्वग्रङ्गताः।
अराजकं वरं राज्यं न स्वामी तादृशः पुनः। अभूषणो वरं कर्णो न पुनर्लोहकुण्डलं।
सद्य तुङ्गं वरोवाजी स्वच्छं वासो मणिर्महान्। स्वीकृतं यवनैस्तत्तद्यच्छोभावहं प्रभोः॥
अकार्षीत् पञ्चषान् मासान् राज्यं स जडनायकः। प्रजापापविपाकेन न पुनः स्वेन कर्म्मणा। ७१५
मालिन्यं सुमनः प्रयाः प्रथयते दैन्यं निधत्ते द्रुमः सूर्य्यालोकतिरस्कृतं च कुरुते संहारमाग्रानयन्।
उन्निद्रः कमुपद्रवं न तरसा कुर्व्वीत धूमोद्गमोनिद्योतितरां शिखी यदि महाज्वालाकलापाकुलः।
श्रीषिकन्धरदत्तस्य राज्यस्य च्छणमात्मनः। निवारयितुकामेन स्वलक्ष्मीफलकाङ्क्षिणा।
महेन्द्रदेवपूर्णेन खुःखुरस्वामिना ततः। नवराजोऽर्थितो दूतैर्निजदेशागमं प्रति।
नक्रो न चेज्जलनिधेर्बहिरभ्युपेयात् काकव्रजेन वरपादपमुन्नतं चेत्।
आखुर्न चेद्गहनगर्त्तगुहां विमुञ्चेत् हन्तव्यतां कथमवाप्नुयुरेव तत्ते।
अश्वयो युवराजस्य मद्विषो दीयते ऽमुना। जसरथं प्रति भूपालः क्रोधादित्यभ्यषेणयत्। ७२०
स्वेच्छच्छादितमाहात्म्यैर्द्दशिभिः सचिवैर्निजैः। अनिषिद्धोऽयममतिर्दूतैर्हमयेतनैः।
युक्त्योपादलितश्रद्धस्तथा वैराज्यभीरुभिः। नवराजोदयं लेखमुखेन प्रापयिष्णुभिः।
प्रमादलोभायवनैरतिमात्रकृतस्तुतिः। नवराजजयोद्रेकश्रवणभ्रष्टसाहसैः।
स्वसैन्यैर्दैन्यचकितैर्निन्द्यमानोऽयमो नृपः। मल्लेकं जसरथं जेतुं प्रस्थानमकरोत्ततः।
अभ्यमित्रीणतां तस्य कश्मीरेन्द्रस्य गच्छतः। आसीन्निजस्य सांमुख्यं न मित्राणां महीभुजां। ७२५
यत्र यत्रागमत् स्वेच्छकटकः स मदोत्कटः। तत्र तत्र रजोव्याजात्तमोमूर्त्तमदृश्यत।
पालनीयेषु देशेषु राजपुर्य्यादिषूद्धताः। परदेशेष्विवाकार्षीत् स लुण्ठनपराभवं।
आश्रित्य मद्गरव्यालनामस्थानं महीपतौ। सन्देशमित्यमन्देौजाः प्राहिणोन्मद्रभूपतिः।
पत्तिलोकः ससम्पत्तिर्वाजिनोवेगराजिनः। भटारणोद्भटाः सन्ति कटके तव यद्यपि।
तथापि च्छलवत्स्वेषु प्रसिद्धेषु महीतले। यूयं खुःखुरयुद्धेषु नैव नाम प्रगल्भथ। ७३०
वयमेव तु जानीमः खुःखुराणां रणच्छलं। अहिरेव भुजङ्गस्य पदं जानाति नेतरः।
अतोयावदयं प्राप्तस्तेना विधिसिद्धये। भवद्भिस्तावदत्रैव स्थातव्यं पर्व्वतोपरि।
मद्रेशस्य स सन्देशमन्देयैर्जनपुङ्गवैः। स्वयशोलक्षये ख्यातो मदसंमूढदृष्टिभिः।
रात्रिं मूढेऽवरुह्येऽय सानादिव महीधरात्। ध्वजैर्व्वायुचलैर्यातं खुःखुरैर्बलाङ्क्षिया।
धावदश्वखुरोद्दाम्तनीयसि महीतले। दर्पभीरसम्भेदे मज्जति स्म फणीश्वरः। ७३५
अश्वखुरोऽखर्वमिलिते भूतले सिकताञ्चिते। धीराः प्राणान् प्रतापाग्नौ तत्राजुहवुराहवे।
आत्मिमाहस्ततोराजा सिन्धोः प्रवहणं यथा। अभाग्यदुर्ग्मरुद्वेगादभज्यत रणार्णवे।
विद्धान्धकारणान्धकारनिकरप्रसरस्य सूर्योदयं हेमन्ते हिममारुतैर्हतधृतेः पुष्पाकराभ्यागमं।
दुष्टक्षापतितर्जितस्य जगतोनिर्दोषधर्मप्रभुं लोकोऽजमयप्यमकि निकरां कारुण्यमयुज्ज्वलं।

श्रीजैनोल्लाभदीनोऽथ कश्मीरानपकल्मषः। अनुकूलो विधातेव प्राविशद्विजयोर्जितः।
सतां स्तुत्या दिशां भेर्य्या मुखानि ध्वनयन्नयं। पौराणां प्राक् मनः पश्चाद्राजधानीं नृपोऽविशत्।
धीनैर्मल्यं जनस्याहो जातं राज्ञोऽभिषेकतः। प्रतापो वैरिणां प्रान्तस्तर्षं स्फ्राक्षि बिभ्रति।
तन्नीतिः पूर्व्वराजेषु कुण्ठोत्कण्ठाः प्रजा व्यधात्। गुणातिशयिनी या च शर्करेक्षुरसेष्विव।
पूर्व्वराजव्यवस्थाः स विनष्टानवयन्नभूत्। शिशिरोपहता वल्लीर्वसन्त इव भूपतिः।
परस्पराधिकं शत्रून् जयद्भिर्दुर्ज्जयानपि। शस्त्रैर्मन्त्रा जितास्तस्य मन्त्रैः शस्त्राणि च प्रभोः।
कान्त्याङ्गं वदनं वाचा श्रियोरः क्षमया मनः। श्रितं पश्यन्त्यगाद्दूरं कीर्त्तिरीर्ष्यावशादिव।
राज्ञः कलिदशामध्ये धर्म्या साधाज्यपद्धतिः। अन्तर्दशेव शुशुभे शुभा कृतयुगस्य सा।
भोगे सखा नये मन्त्री विवेक्ता शास्त्रनिर्णये। श्रीमहम्मदखानोऽभूत् कश्मीरेन्द्रस्य सोदरः।
किमन्यद्राज्यमेवासीत् छत्रचामरवर्ज्जितं। श्रीमहम्मदखानस्य कश्मीरेन्द्रप्रभावतः।
वसन्त इव कामस्य भूपतेरभवत् सदा। खुःखुराधिपतिस्तस्य भृत्येष्वभ्यधिकप्रियः।
दुर्व्यवस्थां निवार्य्याहं देशेऽस्मिन् म्लेच्छनाशिते। इति राज्यपरिप्राप्तिफलं यावदचिन्तयत्
तावद्द्रोहोचितं कर्म्म द्रोग्धारो राजवल्लभाः। अपृष्ट्वैव महीपालं नीता वीतभयैः स्फुटं।
यशो दिशि श्रियं साधौ सुखं लोकेषु रोपयन्। व्यधात् प्रक्रमभङ्गं तं यस्तत्कूलमुदमूलयत्
एकान्ता तिग्मता भानोर्यद्दिमा शशिनः पुनः। सद्योजेतुमिवापुष्यत् तत्संसर्गमयीं श्रियं।
असद्‌ध्यानव सन्निभे तद्गुणान् वर्णयामि किं। शृगालानां गुहामध्ये कथं हस्तिपतिर्वसेत्।
तस्माच्छैलेन्द्रवच्चित्रे मुकुरे सूर्य्यबिम्बवत्। न्यस्यामि तद्गुणाख्यानमत्र चित्रे त्रिलोकवत्।
शीतोष्णयोरिवोष्णादौ विषुवेऽहर्निशोरिव। तस्य मानोऽभवत्तुल्यः स्वे परे वापि दर्शने।
राजा वणिगिवात्यर्थं तुलायाः पुण्ययोरिव। साम्यभङ्गं दर्शनयोर्नाक्षमिष्ट कथञ्चन।
शान्ते सिद्धाश्रमे सिंहैर्मृगा इव न पीडिताः। तुरुष्कैः पुष्कलभयैर्ब्राह्मणाः पूर्व्ववत्तदा।
दोषाकरेण स्वहेन येषां सङ्कोचिता स्थितिः। व्यकाशयत्ततो भास्वान् गुणिनस्तान्महीपतिः।
रन्ध्रैरधोगतिं प्राप्ता कुम्भेवोद्धृत्य भूभृता। विद्या प्रवाहिता तेन गुणिना गुणरागिणा।
दोषच्छेदकरो राजा क्षमाक्लिष्टगिवानलं। कश्मीरेषु सदाचारमपोषयदुपक्रमैः।
अहङ्काराग‌दङ्कारो राजा प्रकृतिदुर्द्धरे। दर्शनानां सधान्नामिवेल्वणमशीशमत्।
कलं धर्म्मेण बलिना मात्स्यन्यायप्रवर्त्तिनं। अष्टलोके सर्वेषां धारणस्यास्य लक्षणं।
स सुखभङ्गसंस्पर्शदुष्टायाः शुद्धये भुवः। प्रतापाग्निं ध्रुवं दीप्तमहाकाशमजिज्वलत्।
राज्ञः संचिन्वतो मन्त्रप्रपञ्चं पञ्चधा स्थितिं। जिगीषयेव तस्यारिवर्गः पञ्चत्वमाश्रयत्।
अनित्यशास्त्रविद्वेषिनश्चीयस्तति संस्तवः। नित्यान्तःस्थारिषड्वर्गस्तस्य प्रत्युत गर्हणा।
शक्तोऽपि काश्यपीशक्रः शक्यानेवाभ्यषेणयत्। योषि याचां करोत्यर्कः सतारे न तु सोडुपे।
नाजिगीषत् स तेजस्वी शत्रून् विश्वाट्टव्यया। हरिर्मार्जारिलोभेन हिनस्ति न हि हस्तिनः।

शैलेषु तद्विषोभानुप्रतापाधिदवस्रमे । प्रायश्चित्तोचितुं पश्च तपस्तभुवमाश्रयन् ।
प्रावर्त्तिष्ट महीष्टोऽपि नेत्यपेन स जातुचित् । राकेन्दुर्न निशारम्भं विना जालष्युदेति यत् ।
गर्व्व महृद्भावास्तथा हीना सैव चपं गमन् । इति नीतिविदा राज्ञा तेभ्योबलिरग्टह्यत ।
वैरिकीर्त्तिर्व्हेतु खं विक्रमस्य वियोगत । वनाभिसद्मे राज प्रतापे सहि तत्श्रिया ।
ढिल्लोशपीडित जातु जसयं शरणागतं । द्रोणीगुहासु सोऽरचत् तमोऽद्रिरिव भास्करात् ।
तस्मिन् शासितरि चोणी विनेतरि दुरात्मनां । जयापीडपुरस्थस्य भूमिदेवस्य कस्यचित् । ८८
शस्यग्रामाभिलापाद्वा विधातुर्वा नियोगत । तदा चिलाप्यगाङ्गेनुर्मूर्त्तिवाशा सुधाभुजां ।
गतामडवराज्यं स तीर्थस्नानाय जातुचित् । खां परिज्ञातसङ्केता गां परिज्ञातवान् द्विज ।
सनिश्चयो ग्टहं यान्तो सायन्तमनुगम्य गां । विवादमकरोद्देशस्वामिना सह तत्र स ।
तौ लोभनिश्चयग्रस्तावशान्तकलहावुभौ । महीपालसभास्थाने विवादं कर्त्तुमुद्यतौ ।
तयोरशक्तयोर्ज्ञतुमुपपत्तिं परस्परं । श्टङ्गाटानि परीचार्थं गोरग्रे व्यकिरन्नृप । ७९
सा वात्ये यमनाभ्याशाच्छीघ्रमाघ्राय सस्पृहा । गौरभुंक्त फलानीव नतु तत्सन्ततिस्थिर ।
सभाया राजनैपुण्यं स्तुवत्यक्षतनिश्चयात । दण्डेवाजिग्रहद्दण्ड भाण्डं राजा द्विजन्मना ।
तस्य दाचिण्यदचस्य प्रजानां हितहेतुना । पुत्रे मन्त्रिणि मित्रे वा दुष्टे वालव्यत चमा ।
अपराधं विना जाया चोत्रो निघ्नन प्रियोऽपि सन् । मेरेशायोऽपि यवनो वधं भूपेन लम्भित ।
प्रत्युपचे निकारं स चिपन् चितिपुरन्दर । अकरोदादर नित्य योगिनां नययोगिता । ७९०
पराक्रमस्य नीतिश्च तस्य तेपाञ्च भूभुजां । करुणा च विवेकश्च यस्मिन् राजनि राजति ।
कामो वियोगिवर्गस्य करोत्यपचितिं सदा । निर्व्विकार स्मरोयोगिवर्गस्यापचितिं व्यधात् ।
सौम्या भीमगुणा यस्मिन्नवमन्नवमङ्गभं । क्वान्यत्र सागराद्दृष्टा विषामृतजलानला ।
चिर स्थैर्य्यपात्ता यिप्रत्यर्थिभ्यो धनयह । तेन धर्मप्रवृत्तेन सद्वृत्तेन निवारित ।
केनापि हेतुना पूर्व्वं लोसराजद्विजन्मना । भूप्रस्थदशकात्प्रस्थो विक्रीतो लेख्यपूर्व्वकं । ८००
यानानां मोनराजादिपुत्राणां तमुदीर्य्य स । विक्रयाब्दे प्रशमथं लोलराजोऽगमत्तत ।
मोनराजाद्यमामर्थात प्रस्थपादैरभुज्यत । अविक्रीतमपि प्रस्थनवकम्मलिभिस्तत ।
एवं घ्नते दशमस्थो भोगे तैर्म्मिभिश्चिरं । नयभोगाय कपट कृतं विक्रयपत्रके ।
विक्रीतं प्रस्थदशकमिति वर्णानवेर्णयम् । तेऽस्मिन् राज्ञि विचारज्ञे मोनराजस्य नन्दन ।
यस्सुतां भुवं राजसभायामहमाचिपं । प्रत्यर्थिभिरयानीतं लेख्य राजाज्ञया नृप ।
युक्तिज्ञ मलिनस्यान्तर्वाचयित्व चिपत्तत । ८१
मठेषु मयरोणेषु पुराणेषु स्थितिर्यथा । भूप्रस्थमेकं विक्रीतमिति सभ्यानवाचयत् ।
राजाकीर्त्तिमरं भूमि कूटस्थदण्डमहुत । प्रजा सुखं स्वराभीतिं प्राप्नुवन्त समन्तत ।
इन्द्रोराज्ञभयं कदापि कुरुते कालावना पूरयन् निश्चनमिषितुं नडिच्छिपतमयोभ तरोर्म्मोरिदं ।

वेधाः सत्पुरुषस्य सर्व्वजगतामाह्लादनायोद्यमं कुर्व्वन्नानयदर्शनेन कुरुते भीतिप्रकर्षं चरं ।
अत्राधिष्ठितरां कष्टा विषस्फोटः कदाचन । प्रकोष्ठं भूमिपालस्य प्रजानां हृदयञ्च सा ।
माघमासीव पुष्पाणां म्लेच्छप्रालेयबाधया । न लाभो विषवैद्यानां देशेऽस्मिन्नभवत्तदा ।
यच्चा गारुडशास्त्रज्ञः शिवभट्टो नृपानुगैः । अत्रानियद्भिरानीतोऽथ कूपोऽम्बन्यैर्भैरावित्र ।
चिकित्सायां विदग्धः स म्लेच्छभीत्या व्यलम्बत । स्फुलिङ्ग दग्धः पुरुषः स्पृशत्यपि मणिं चिरात्
स्वयं दत्ताभयो राज्ञा प्राप्तसमुद्मूलयन् । शिवभट्टो विषस्फोटं करोव विपपादपं ।
तस्य कीर्त्तिः सुखं राज्ञः प्रजानां हर्षसन्ततिः । प्रारोहन्सोऽपि विस्फोटे तत्रैकस्मिन् विपाटिते ।
तुष्टेन भूभुजा दत्ता यथेष्टमपि सम्पदं । नैच्छिष्ट शिवभट्टः स यतात्मेव वराङ्गना ।
.......... त्रयदण्डं निवार्य्य सः । द्विजानां जातिरचार्यं रौप्यमापमकल्पयत् ।
स्थापितो ग्रामसीमायां ग्रामेभ्यः प्रापितो धनं । अरण्येऽरण्यनाथश्च पान्यस्तेन महीभुजा ।
हामाः श्मशानदेवीनां सुहभट्टं प्रतीव तं । प्रतिस्थानं विमानानि प्रेतानामच्युतस्तदा ।
म्लेच्छैरुपद्रुतां चौणीमचौणकरुणो नृपः । उद्दधार्थीत् क्रमादेवं दानवैरिव केशवः ।
उच्छृङ्खलान् स नयन् भङ्गं निम्नानापूरयन्नृपः । स्वकीर्त्तिवीजवापार्थमनुद्धातां महीं व्यधात् ।
भूपतेः परदारेषु निष्कर्त्तिकमयं मतं । अभज्यत परं तस्य परश्रोपरिरम्भणे ।
भम्मन्दग्रदलेनाथ सर्व्वेशेन महीभुजा । सौगतस्तिलकाचार्य्योमहत्तमपदे कृतः ।
स शिवभट्टस्तिलकः सर्व्वंहगणनापतिः । सोपानान्यभवन्तस्य पदारोहे द्विजन्मनां ।
मेदिन्याखण्डलस्यासीत् पिकस्येव रसश्रिया । अखण्डं रसपाण्डित्यं ब्रह्मकुण्डलसेवया ।
कर्पूरभट्टोथः श्रीमान प्राणिरचो महीभुजः । गुणिनां शरणं चक्रे स्वगुणैः सुरभिं सभं
पूर्व्वाब्दग्रहमप्पारादुत्तराब्दग्रहस्थितिं । रूप्यभट्टो विदन्नासीद्दिनैव गणितश्रमं ।
श्रीरामानन्दपादानां वाप्यव्याख्या चणं चणं । वी .. तेदारदाचौणी ... .....
गान्धारसिन्धुमद्राद्रिभूभुजस्तस्य भूभुजः । ................ ...... ।
युद्धे जितं ततोबद्धं सु.सुरेन्द्रेण भूपतिः । मालदेवं मद्रराजमाज्ञया निरमोचयत् ।
राजा राजपुरीराजा ........... । चणाद्भङ्गमाविष्य रणसहमलोठयत् ।
उदभाण्डपुराधीशं सिन्धुराजोपदर्पहतं । सकन्दुकमिवोत्थाप्य मुहुर्मुहुरपातयत् ।
भोट्टभूमौ महीन्द्रेण गोगदेशे कदाचन । वाणगोरखराखेण गुणैर्लोकाश्च रञ्जिताः ।
समिञ्जिते भयादेशे कूरादेशो महीपतिः । सुवर्णबुद्धप्रतिमां यवनेभ्योररच सः ।
कपाक ..द्धर्यस्तस्य निकषोभोट्टतेजसां । अप्रकाशो प्रतापोऽय स नूतनगरीं व्यधात् ।
केवलं हृदयं शून्यं भोट्टानां नाभवत्तदा । भूमिपालभयावेशात् कोपोऽपि चिरस्थितः ।
प्रकृतीनां ददद्राजाऽशेष्याधीयथोचितं । प्रत्यवेचामकार्षीत्स ग्रामीनामिव कर्षकः ।
नामह्रिष्टेव तचापं तुलां शार्ङ्गपिनाकयोः । दूरकार्य्यार्थनाधिन्या धनुषस्ताभुवा पुनः ।

सायाहारा द्विजायत्र सायाहाराश्रयोचिताः । सायजैनपुरी राज्ञा करालैर्निरमीयत । ८६५
अवन्तिपुरभूमौ च कान्तौ दत्तेन भूभुजा । कुल्यावतारिता तुङ्गशालिसम्पत्तिशालिनी ।
गिरिमार्गेण सर्वगङ्गायामानसं प्रापिते जले । किमुतं मानसे नेदममुना किमु मानसं ।
व्यडम्बयत् स्वमूर्त्तिर्या मानसप्रतिबिम्बितां । विधाय तत्तटे तेन नगरी सफलायिता ।
श्रीमान् सुय्यपुरात् पारे वितस्तां धरणेर्नृप । संयोज्यं प्रसरत्तापद्यापदं स न्यवारयत् ।
आप्रद्युम्नगिरिप्रान्तादमरेशपुरावधि । मठाग्रहारहट्टाढ्यां स जैननगरीं व्यधात् । ८७०
स्वर्गं जेतुमिवोदस्तादुन्नतैरग्रवेश्मभिः । सङ्क्रान्ता जैनगङ्गायां फणिलोकस्य यागमत् ।
जैनगङ्गा रणस्वामिप्रसादं प्रापिता कृतौ । व्यस्मरत् सैरयशा हरिपादकुतूहलं ।
पारेसुय्यपुरं स्नानगिरिसंज्ञां पुरीं व्यधात् । कैलासाचलतुल्यैश्च प्रासादैरभिभूषिता ।
सिद्धचैत्ये सुरेश्वर्यां प्रसिद्धो विलसच्छ्रयः । राजधानीं निषिद्धारिर्व्यधात् सिद्धिपुरीमसौ ।
प्रासादशिखरे राजा मार्त्तण्डामरनाथयोः । राजधान्यौ व्यधात् सौधधौतदूरनभस्तले । ८७५
सुभिक्षं सुय्यराजेन पूर्व्वमस्फुरितं किल । ततः प्रभृत्यतीतेषु बहुष्वपि च राजसु ।
प्रजानामल्पपुण्यत्वान्नावर्द्धत मनागपि । तपोबलात् पल्लवितं पुष्पितं फलितं तथा ।
श्रीजैनोल्लाभदीनेन युगपत्तद्व्यधीयत । तपसामतिदृढत्वात् किमिव ज्ञापकं परं ।
पूर्व्वपुण्यचये राज्यात् पतत्यन्ये महीचित । तस्य जन्मान्तरे राज्यप्राप्ते राज्यमभूत्प्रभो ।
स नदीमातृकाः कृत्वा धरणीर्देवमातृकाः । अग्रहारानतुष्टापो द्विजेभ्योऽयददात् सदा । ८८०
सराहचेत्ननगरविजयेशानकादिषु । सत्रदानेन स चाशमपि गोत्रभिदो व्यधात् ।
भूमिविक्रयभूर्जादिकृतचिक्कं महीभुजा । निष्क्रयभागभावाय धर्म्माधिकरणं कृतं ।
योजयापीडदेवेन प्राप्तोनागप्रसादतः । स दण्डमिव तस्यादात् ताम्रं ताम्रकरो गिरिः ।
मणीन् खनिभ्यस्तालभ्यांस्तद्राज्ये भूरजीजनत् । ये जैनमणयः ख्याताः पद्मरागमदच्छिदः ।
सरितां सैकते नीतसिकताभ्रमदं सदा । काञ्चनं काञ्चनच्छायां विभक्ताकैरचीयत ।
सरित्सुवर्णात् षट्भागो याञ्चो भाविभिरीश्वरैः । ताम्रपट्टेऽलिखच्चास्त्राबाध्यमेवं नरेश्वरः ।
नगराधिकृतः काचडामरे दुस्तरे पथि । कोशमात्रं व्यधात् सेतुं नगरान्तः शिलामयं ।
नात्मैव सेतुदानेन तेन पद्मात् समुद्धृतः । सकलोऽपि जनो मध्येनगरं पुण्यशालिना ।
विषये विषये चक्रे शिवभेट्टा मठान् पृथून् । अन्येऽपि सचिवा राज्ञो धर्म्मशालावहुर्व्यधुः ।

पद्माकरस्य मथनाय गजाधिराजावभ्युद्यतौ सततमेव तदम्बुदम्भौ ।

तावत्कराकरि रमादिह घातिमत्तौ कृत्वा क्षणादगमतां स्वयमेव नाशं । ८९०

सयोधग्रूरौ धात्रेयौ भूपतेरेकगोत्रजौ । द्वौ रन्ध्रान्वेषिणावास्तामन्योन्यविभवासहौ ।
राज्ञा तौ वारितक्रोधौ स्नेहदाक्षिण्यशालिनौ । कृतान्यनर्मुक्तिम्लक्ष्णावभवतां चिरं ।
कदाचिन्नृपतेरग्रे दृष्टः शूरेण याकृमरैः । मशोदठकुरः सस्वधेन्य सं समकालयत् ।

न्यस्तशस्त्रः स रजनौ गच्छन्मितपरिच्छदः। रन्ध्रं लब्ध्वाथ शूरेण सबोदः ठक्कुरो हतः।
विश्वाद्यैष्ठक्कुरैस्तस्य भ्रातृभिः ख्यातपौरुषैः। हन्तुमभ्यर्थित शूरो भूपतेः प्रेमशालिनः। ८५
शूरे सानुचरे विश्वठक्कुरेण हते सति। प्रसादमगमत् कीर्त्तिठक्कुराणाञ्च धीसदा।
तथा स योगिनां मानमभूद्भूलोकवासवः। तेषामग्रे यथाभद्रराजाद्यैर्लेखितं स्वयं तत्।
सद् सद्योगिनां भोगं यागं तेभ्योऽग्रहीन्नृपः। कुण्डलं हेमपात्राणि दुकूलमपि दत्तवान्।
छित्वा पर्व्वतपञ्चतीरपि नवाः फेणेन हत्वाथहिं कृत्वा यज्ञशतं त्रिलोकविजयी कीर्त्त्या न तृप्तिं गतः।
इन्द्र. पीतसितासितारुणहरिद्वर्णं विधत्ते तनुज्योतिर्धूमसमीरनीरघटनामात्रेऽप्यसारे घने।
भूतानां भाविनां वापि यदशक्यं महीभुजां। तदिष्टसाहसी राजा कीर्त्तये कर्त्तुमिष्टवान्।
कर्त्तव्यं साहसं यद्यदुचितं यदयं नृपः। कालस्थानवधिला च विपुललेन च चिन्तितः।
तत्तत्सम्भाव्य साध्यं स भाविभिर्म्मेदिनीश्वरैः। दूरादब्धिरिवायातो रत्नेष्वधिकदीप्तिषु।
साहसेष्वेकमादातुमपि प्राप न निश्चयं। उपचारैर्दरिद्राणां संभवोदारमानसः।
न तोषितः श्रुतै राज्ञामतीतानाञ्च साहसे। अगम्येष्वपि भूपाल. शैलेषु च सरःसु च।
शब्देष्वर्थेष्विव कविस्तत. समचरन्नृप। वणिजामिव वाक्यानि व्यवहारसमुत्सुक।
राजा नीलपुराणादीन् पण्डितेभ्यस्ततोऽशृणोत्। चिन्तान्तराणि संत्यज्य साहसैकसमुत्सुकः।
कदाचिद्धरणीपालश्चिरमेवमचिन्तयत्। देहस्येव त्रिलोकस्य मुखवत् क्षितिमण्डलं।
प्रधानं तत्र कश्मीरमण्डलं नयनं यथा। शैलराजशिखाः पक्ष्मतुल्या यत्र वहन्ति ताः।
तारामण्डलवत्तत्र महापद्मसरोवरः। महापद्मास्पदं त········मण्डलसोदरं।
तदापूर्य्य कथञ्चिच्चेत्कि··· ···· · क्रमात्। निर्म्माणं शक्यते कर्त्तुं तदा राज्य ·····। ९०
अगाधसलिलच्छन्नकोमाशाविंशतिप्रम.··· --। सरोराजः सहि महानाशयो महतामपि।
··सवि स्वयं तत्रोपाय सरोदरे। नावास्य गतवान् मध्यं योगीवात्मानमात्मना।
सदैवोद्धृतकल्लोलमहापद्मसरो महत्। नागाहन्त नृपाः पूर्व्वे तरणीभङ्गशङ्किनः।
तप.प्रभावाद्धैर्य्याद्वा कार्य्यगौरवतोऽपि वा। स्थलवत् सलिले तत्र स राजाभ्यसरत्सुखं।

पृथितया चिरतरं परिचिन्त्यमानं चिन्तामणिः किल ददाति तदेव मान्यत्।
चित्तस्य चापि यदगोचरतामुपैति तत्तु प्रयच्छति तरां वत बुद्धिरत्नं। ९५

तस्य हि क्षितिपालस्य निरालम्बमते. स्मृतः। सरसः स्थलतां कर्त्तुमुपायः प्रत्यभादयं।
शिलापूर्णप्रवहणैरुपर्य्युपरिपातितै.। शैलकूटैरिवाम्भोधिमिमदापूरयाम्यहं।
हताभिर्व्वीचिमहाभिः परीभिर्द्देवदारुणः। न क्षिद्यन्ते न भिद्यन्ते शिलाप्रवहणादिभिः।
ततः प्रत्यागतो राजा तद्भागावद्धकौतुकः। सम्भ्रमात् शरणं तत्र ते चैवं नृपमभ्ययुः।
द्वारिकेव प्रभा तस्य पुरी सन्निमतो किल। सुदर्शनेन चक्रेण मनुजानां समाश्रिता। ९९
मर्य्यादिता तत्र महापद्मः ······।· मिवेतां दत्तुर्ध्वधाम् पुत्रवत्पर्य्यपालयत्।

कलिकालबलात्तत्र दुराचारनिषेविणः । · · जनास्तद्देशवास्तव्याः प्रापुर्वृद्धिं दिनाद्दिनं ।
अथ कर्मानुसारेण विपर्य्यासानुबन्धतः । क्रोधं नागपतिर्यातो दूषणादिव सज्जनः ।
अमुञ्झितनिजाचारं कुम्भकारं स कञ्चन । स्वप्ने वदन् दुराचारान् पौरान् मज्जयिताख्ययं ।
नागः प्रजादुराचारात्प्रजा मज्जयतीति तं । प्रातर्वदन्तमहसन् पौराः पङ्गुमिवाखिलाः ।
फणाग्रेतोत्क्षसद्वारिधाराशब्दभयङ्करः । नागराजोऽथ नगरीं वैरीवावेष्टयज्जलैः ।
मन्त्रान् पिठत्सु विप्रेषु नागेषु प्रणमत्स्वथ । ददत्स्वपि च बलिषु नाभूद्यमनङ्करः ।
भयाद्वालेषु पुत्रेषु कण्ठलग्नेषु योषितः । बाष्पमुक्ताफलैश्चक्रुः पूजां फणिपतेरिव ।
पादादङ्कं ततः कण्ठं ततः स्कन्धं ततः शिरः । प्राणादिव सुताजग्मुर्मातॄणां भयविक्लवाः ।
सर्व्वाण्यङ्गानि नारीणां शृङ्गारीवानुरागवान् । कम्पमानानि लोल. स जलपूरः समस्पृशत् ।
ह्रस्वं दीर्घञ्च स्थूलञ्च स्थूलञ्चाणु महत्तथा । अन्धकारद्वाच्छाद्य जलपूरो व्यजृम्भत ।
अगाधे सलिले तस्मिन् खलसर्गामहस्तत. । फणिराज स्थितिं चक्रे विपिने मज्जनो यथा ।
कालियः स हि नागेन्द्रः पदाक्रान्तो मुरद्विषा । शिरस्युत्पन्नपादत्वान्महापद्माभिधां गता. ।
नष्टान्योजयितुं भूय कश्मीरानिच्छतोहरेः । अवतारस्त्वमेतत्ते सिध्यत्येव चिकीर्षितं ।
राजा शृत्वेति स स्वप्ने चणमेवमचिन्तयत् । एवंविधानि कार्य्याणि सिध्येयुः कथमन्यथा ।
प्रजाचारविपर्य्यासात् नाचमिष्ट पुरं फणी । ना निष्टं महतेऽल्पोऽपि तादृशस्तु महान् कथं ।
नागराजोचितस्थत्रसगोत्रमहमत्र तु । स्थलम · · · · · · शोरत्नघटिकारम्भ भारभे ।
उल्लोलसरसोमध्ये वर्त्तमाने महास्थले । पवित्रे विजने चात्र सिद्धिं यास्यन्ति साधकाः ।
चिन्तयित्वेति भूपाल.शिलाप्रवहणैर्दृढैः । उल्लोलसरसो मध्यमप्यगाधमपूरयत् ।
सरःस· · सुतस्तस्य स्थलीभूतेऽथ भूपतिः । मध्यदेशे महाराज · · · · न लङ्कां विनिर्ममे ।
अम्भो तत्रैव सरसो राघवेन्द्रप्रसादतः । जयापीडमहीपाल. स्थलभावमदापयत् ।
हेमन्ते विशत्शृङ्गाटककुकोद्धरणादिना । श्रीजयापीडकोटस्य ज्ञायतेऽगाधवर्त्तिता ।
उल्लोलस्थानभागेषु सुय्यकुण्डलकादयः । दृश्यन्ते बहवो ग्रामा विशालसदनाङ्किताः ।
गिरयोऽपि निमज्जन्ति यत्र तत्र तु स व्यधात् । जैन· · · कां महाटङ्कां तं निधायाधिकारिणं ।
रूप्यभाण्डा · · शिल्पकोंशनान्युन्नसन्मतिं । राजधानीमहादारयोधमा · · · · योजयत् पुनः ।
हिमाचलशिखादर्पच्छेदप्रासादमेदुरां । क्रमराज्ये स्फुरद्राज्यः सुरत्राणपुरं व्यधात् ।
जैनकोट्टं घट्टितारिरट्टशालि समन्ततः । तत्तत्पट्टपताकान्तकान्तं राजा विनिर्ममे ।
कोर्वोद्धारेषु सर्व्वेषु निर्म्माणेषु नवेषु च । आशाराशेःसभो हेलरूप्यभाण्डपतेश्च धीः ।
महापद्मसरस्तीरे जैनोपपद्मालिनः । पुरमण्डयिकाघोषांस्तया श्रीजैनकुण्डनं ।
स जैनपत्तनश्चापि विदधे धरणीपतिः । भूपते. कोमलकरा मनोज्ञा स्वर्णाङ्किताः ।

अभिरामसहो दन्ताकरुणावल्लभाभवत्। अनिग्रहम् करुणानिघ्नो नरेन्द्रो डोमतस्करान्।
बन्धयन्निगडैर्गाढं स्वल्कारामारयन् सदा।
निर्दिशन् यशसा शुभ्रा दिशो नृपतिरादिशत्। अवधं खगमत्स्यानामनेकेषु सरःसु सः।
अथ जातु हृतां चौरैर्गां परिज्ञाय कश्चन। क्रन्दन्तं भूमिपः पृच्छ्यं चौरांश्चाथाप्यढौकयत्।
वयोलक्षणसम्बद्धं विना गोर्भग्नशृङ्गता। सभाक्षोभेण हेतुं स सत्यवाक् ब्राह्मणोऽब्रवीत्। ९९०
तिलकादिव देवाख्यः सहशाभग्नशृङ्गता। राज्ञा पृष्टे वदन्त्येवं चौरे मूका सभाभवत्।
परीक्षार्थं तिमिस्खेदे राज्ञा गोशृङ्गयोः कृते। कुटिलत्वं व्यपैति स्म प्राक् चौरस्याथ शृङ्गयोः।
एवं बुद्धिप्रकर्षेण व्यवहारविमर्शतः। अमात्यपर्षदो हर्षचित्तोत्कर्षमजीजनत्।
प्राड्विवाकः क्षमाबुद्धियुक्तः रूपलरक्षकः। राज्ञोऽवहन्नगराभारं गणनापतिगौरकः।
येऽद्धृत्तमुपकारित्वादुत्कोचद्रविणं स्वयं। कालान्तरे कृतघ्नेषु तेष्वेवास्थानमण्डपे। ९९५
प्रकाशयत्सुतं भारं कुपितेन महीभुजा। मल्लानमल्लानाषाकस्तेभ्यस्तत्प्रतिदापितः।
आदौ पादतले तिष्ठन् करालम्बीकृतस्ततः। अथ चक्षुष्यतां गच्छन्नुत्तमाङ्गाङ्कवर्तितां।
क्षीतोदय्यावखानोऽय कृतघ्नेनेश्वरेण सः। कलानिधिर्हिमरुचिः कौमुदे हि ततोवहन्।

दिनपतिरिव रसातलगं तमः शमयितुं यतते यदवेक्ष्य सः।

अतिलघद्रुचिकालघनाहतेर्वरति तत् प्रतिबिम्बमहोजगत्।

राजा भूभारखिन्नोऽपि खड्गधाराध्वगोऽपि सन्। स्वरक्तं विभवं यस्य दृष्ट्वा विश्राममाप्तवान्। १०००
अस्तं महादखानः स कलानिधिरथागमत्। अत्यन्तरमणीयानां सुचिरस्थायिता कुतः।
प्रत्यब्दं प्रतिहार्य्या धैर्य्यात्व्यधात् प्रीतिमर्थिनां। सत्यप्रतोदिवसगात् महिमश्रीः स ठक्कुरः।
तद्भ्रात्रजेभ्य. स किलागूढं तस्य बधं व्यधात्। चोदूत्यच्छलतो राज्ञा स्वदेशान्निरवास्यत।
राज्ञ. सैन्धवशुक्लादिस्थानेऽथो भिर्षे पुरे। प्रत्यागतः सतीर्थाध्वखिन्नो विन्नो दिवं ययौ।
राज्ञोधर्माधिकारिषु प्रत्येवेचापरो सदा। महाश्रीशिवभट्टोऽपि तस्मिन् काले दिवं ययौ। १००५
गतेष्वेषु धर्माढ्य राज्ञो नैवाल्पतां गत.। क्ष्मां दधानस्य शेषस्य दिग्गजादि परिच्छदः।
एकादश दीनारकोटिरेका महीभुजा। बालेभ्यश्च दत्ताशीत् जय्यभट्टमुखेन यत्।
अद्भुताः पदार्थानां तद्राज्ये संपदोऽभवत्। नारायणावतारोयज्ज्ञायते कथमन्यथा।
येषां हिमांशुपीयूषप्रवाहा नित्यसेचकाः। इक्षवस्तेन मार्त्तण्डदेशभूमिषु रोपिताः।
त्यजता योगमाहात्म्यादश्लोपस्ति विक्रियां। श्रीजैनोल्लाभदीनेन विबुधत्वं प्रकाशितं। १०१०
तदीयराज्यसम्पत्तिरूपसप्रकरीं व्यधात्। ..स..दपरस्य मिस्त्रं भारोमगामिनीं।

इति श्रीजोनराजकृता द्वितीया राजतरङ्गिणी सम्पूर्णा॥

## ॥ अथ श्रीवरपण्डितकृता तृतीया जैनराजतरङ्गिणी ॥

### प्रथम तरङ्गः ।



शिवायास्तु नमस्तस्मै सत्रैलोक्यमहीभुजे । अशेषक्लेशनिर्मुक्तनित्यैश्वर्य्यदशाजुषे ।
प्रेम्णार्द्धं वपुषो विलोक्य मिलितं देव्या समं स्वामिनो मौलौ यस्य निशापतिर्नगसुतावेणीनिशामिश्रितः ।
आस्ते स्वाम्यनुवर्त्तनार्थमिव तत्खला वपुः खण्डितं देयाद्दद्वयभावनां स भगवान् देवोऽर्द्धनारीश्वरः ।
वन्द्यास्ते राजकवयः पदन्यासमनोहराः । ख्याताये सरसैः शब्दैः चौरनीरविवेकिनः ।
अनित्यतान्धकारेऽस्मिन् स्वामिशून्ये महीतले । काव्यदीपं विना कः स्याद्भूतवस्तुप्रकाशकः ।
येषां करोमि वपुरस्थिरमत्र राज्ञां तेषामयं जगति कीर्त्तिमयं शरीरं ।
आकल्पवर्त्ति कुरुते किमितीव रोषाज्जाताहरद्ध्रुवमतः कविजोनराजं ।
श्रीजोनराजविबुधः कुर्व्वन्राजतरङ्गिणीं । शायकाश्विमिते वर्षे शिवसायुज्यमासदत् ।
शिष्योऽस्य जोनराजस्य सोऽहं श्रीवरपण्डितः । राजावलीग्रन्थशेषापूरणं कर्त्तुमुद्यतः ।
क्व काव्यं मद्गुरोस्तस्य क्व च मन्दमतेर्म्मम । वर्णमात्रेण मक्कोलं घनसारायते कथं ।
राजवृत्तानुरोधेन न काव्यगुणवाञ्छया । सन्तः शृण्वन्तु मद्वाचः सुधिया योजयन्तु च ।
अथवा नृपवृत्तान्तस्मृतिहेतुरयं श्रमः । क्रियते ललितं काव्यं कुर्व्वन्त्वन्येऽपि पण्डिताः ।
तत्तद्गुणगणादानात् स्वसम्पत्तिसमर्पणात् । पुत्रवद्वर्द्धितो राज्ञा ग्रामहेमाद्यनुग्रहैः ।
अतो वाञ्छन्नेमयस्य तत्प्रसादस्य निष्कृतिं । सोऽहं ब्रवीमि तद्वृत्तं तद्गुणाकृष्टमानसः ।
एकया तद्गुणग्रामं जिह्वया वर्ण्यते कियत् । रोमवत् कोटिशश्चेत् स्युस्तास्तदा सङ्गिरः क्षमाः ।
सत्यं नृपाम्बरेऽमुष्मिन्विपुले विमलाशये । गुणतारापरिच्छेदे न शक्ता भारती मम ।
तथापि सकलं चित्रपटान्ते त्रिजगत् यथा । श्रीजैनोल्लाभदीनस्य न्यस्यामि गुणवर्णनं । ११
केनापि हेतुना तेन प्रोक्तं मद्गुरुणा न यत् । तच्छेषवर्त्तिनीं वाणीं करिष्यामि यथामति ।
सात्मजस्य नृपस्यास्य प्राप्यते राज्यवर्णनात् । प्रतिष्ठादानसम्मानविधानगुणनिष्कृतिः ।
स्वदृग्दृष्टमृतानेकविपद्विभवसंस्मृतेः । सते कस्य न वैराग्यं नाम जैनतरङ्गिणी ।

॥ श्रीवरपण्डितकृता ॥

श्रीजैनोल्लाभदीनः स हत्वा शत्रून्दिगन्तरे। आगत्य पैतृके देशे राज्यं राम इवासदत्।
इतावशिष्टां कोपेभ्यः स्वप्रबन्धोपयोगिनीं। नानापदार्थसामग्रीं राजा कविरिवाचिनोत्।
तद्राज्यमालिशाहस्य राज्यकालादनन्तरं। अज्ञायि कैर्न शोभान्ते मरौ श्रीखण्डलेपनं।
धर्मराजोपमात्तस्मात्तास्ता नरकयातनाः। अपराधानुसारेण याताः केचिद्द्विषोऽभजन्।
योद्रव्यगुणसत्कर्मसमवायविशेषभृत्। असामान्योऽप्यधाच्चित्रं नानार्थपरिपूर्णतां।
नेत्रोज्ज्वले लसद्धर्म्यशब्दाढ्ये कमलार्चिते। यस्य श्रीरवसन्नित्यं वदने सदनेऽपि च।
वङ्गालमालवाभेरीगौडकर्णाटदेशगा। यत्कीर्तिरागमालेव बभूवामृतवर्षिणी।
भास्वान् राजा सदाचारो बुधः सधिषणो महान्। अधाद्विश्वग्रहाख्यातिमासन्नस्य ग्रहोचितां।
यं सम्प्राप्य गुणाः सर्वेऽप्यलभन्नधिकां श्रियं। गावो कुमुदवृन्दानि चिन्तामणिमिवोडुपं।
षड्दर्शनक्रिया यस्य वृत्तं समन्वरञ्जयन्। सुमनोरञ्जिताह्लादा ऋतवो नन्दनं यथा।
त्रिवर्गं प्रोज्ज्वलं दृष्ट्वा यस्मिंस्तद्दर्शिका इव। अवसच्छक्तयस्तिस्रः सममेकमता इव।
भूपेऽर्थैः पूरयत्यर्थिसार्थं पार्थोपमेऽन्वहं। आज्ञानार्थमिवैतस्य यशः सर्वदिशोऽगमत्।
शिल्पिनो विश्वकर्माणं गोरक्षं योगिनां गणाः। अवतीर्णं रसज्ञा यं नागार्जुनमिवाविदन्।
तस्यार्थे योग्यतादर्शि ये. शिल्पकविकौशलात्। तथा प्रसादमकरोत्तत्पराश्च यथाभवन्।
काव्यशास्त्रश्रुतिर्गीतनृत्यतन्त्रीचमत्कृतैः। आजीवमनयत् कालं कार्य्यानुद्विग्नमानसः।
न्याय्यं कुर्वन्ति शास्त्रज्ञाः कार्य्यभारं सुधीरत। तेभ्यः शिष्टा च स्वे धर्मे तिष्ठतेत्येवमभ्यधात्।
स्वार्थ्यवेगैः सततमाशुगैर्यस्य ताडिताः। आमन्वनदिगन्तेषु मशका इव शत्रवः।
तस्य स्वपरवृत्तान्तं नित्यमन्विष्य तच्चरैः। केवलं स्वप्रवृत्तान्तो बभूवाविदितो विशाम्।
राष्ट्रं स्वदस्वदृष्टस्य ध्यायतो नीतिशालिनः। अन्यायाल्लाभकृद्दूरं तु काकिनीमपि कश्चन।
स्वादिश्य स्वयेर्ध्यामस्याशूपपादीन् स तस्करान्। स्वत्कर्माकारयद्दृष्टपादायःशृङ्खलाबलात्।
स यः प्रवर्तते चौर्ये सोऽसौ वृत्तिकदर्थितः। इति कारुणिको राजा तेभ्यो वृत्तिमकल्पयत्।
स्वशादीन् प्रवराग्र्यस्थान् दुष्टान् ज्ञात्वा स तद्वृत्तं। दत्वा मडवराज्यान्तः सद्वृत्तीन् न्यवेशयत्।
तस्करोपद्रवे राज्ञा शोधिते शमिते सुखं। अद्रिष्वप्यटवीष्वन्तः पथिकाः शेरते स्म हि।
स्नानाग्रहनिमध्यक्षो नित्यमन्नोपबृंहणः। सततं सत्रिभूपालैरेमे शामापुरेषु सः।
मन्दिराभिहितापिशय्यं स भजन् पूर्वाचनार्पितं यो नित्यं कमलाकरेषु रसिको विभ्रन् प्रतापोदयं।
कद्वोषं कुमुदाकरेषु रचयन् यश्चाकलैः पूजितः सत्यः कस्य न दर्शनीयमहिमा भास्वान् यशस्वी विभुः।
यद्वाहकुमाराद्या शिवश्रीमदोद्धताः। स्निग्धस्मिताश्चिरोऽप्यासन् गजा इव निरङ्कुशाः।
श्रीमिन्दतुरुष्कैः स द्विषैपदोन्मदः। तेषां सुसुम्लहृदोऽपि समो धन्यगुणोज्ज्वलः।
कहेन साहवाटं स शाभीरटपदाश्रितः। हिमान्दमन्दरस्यार्हिर्हिमान्धमारमावहत्।
स्विधा मालिक्रदेवादि कान्दृष्टात्मने विभान्। विकटेशं ततः प्राप विशिम्प्रासपरिच्छदः।

तद्देशकालविषमावस्थागतहतोऽपि सन्। स तत्र प्रेष्यवत् सैदपादशौचं समाचरत् ।
उद्गन्धतामयोत्पन्नस्फोटवैकृतशान्तये । वैद्यैर्व्वरत्नावद्धैकपादोऽभूज्जीवितावधि ।
तत्रोपायान् बहून् कुर्व्वन् स्वदेशविभवाप्तये । यथाकथञ्चित्तत्रस्थः पञ्चशः सोऽत्यगात्समाः ।

अतःपरं किञ्चिद्भ्र्ष्टचरितं कालवशाच्छिन्नं ।

स सिन्धुहिन्दुवाडादिदेशान् जित्वा वहिः स्थितान् । प्रतस्थे भुट्टदेशं स जेतुं सकटको नृपः ।
वनमध्ये प्रविश्यैव नरकं कालपञ्जरं । भित्तिस्थदीपमात्रे ते पश्यन्ति स्म सकौतुकं ।
तपसंश्रा चिरं प्राप्य योगसिद्धिमसौ नृपः । फणीव कञ्चुकं पूर्व्वगुहायामत्यजत्तनुं ।
इत्याकर्ण्य निनोऽन्थे वा ये बुद्धा सत्वमूर्जितं । तेषां प्रामाण्यमकरोत्स राजा च सविस्मयं ।
ध्रुवं महानुभावत्वं विना व्यवहितं नृपः । जानीयात्कथमित्याह विद्वज्जनउदारधीः । इत्युपोद्घातः ।

अथ राज्यवर्णनं ।

ज्येष्ठमादमखानञ्च हाज्यखानञ्च मध्यमं । वह्रामखाममनुजं पार्थिवोऽजीजनत्सुतान् ।
ज्येष्ठो लावण्यसौभाग्यसुभगैः प्राकृतैर्गुणैः । जनकं रञ्जयामास चन्द्रमाइव वारिधिं ।
प्रत्यहं हाज्यखानः स कर्पूरइव सौरभैः । वाललीलायितैस्तैस्तैः स्वमुदात्तमजिज्ञपत् ।
तौ सुतौ सम्मतौ पित्रोरक्षणायाक्षिपन्नृपः । स्वधात्रेयतया स्वस्योदयोऽङ्कुरपत्रयोः ।
स्वपक्षस्थापनादत्राः परपक्षैकखण्डनाः । तार्किकाइव तेऽन्योन्यं धात्रेयाऽङ्कुरावभुः ।
सौदर्य्यस्नेहवृक्षस्य मूलच्छेदनकारिणः । तेऽन्योन्यगोत्रजद्वेषात्तयोरासन् समत्सराः ।
राजपुत्रास्त्रयस्तस्य गुणातिशयसुन्दराः । तत्कृतान्योन्यवैरेण समं वृद्धिं समाययुः ।
देहसमोदिशोऽयं तस्यात्मसमोमहीपालः । तस्मिन् ससुखे सुखितो दुःखिनि तस्मिन् सदुःखोऽसौ ।
अन्योन्यं सहपोराजपुत्रयोर्भिन्नदुर्णयात् । अभूज्ज्येष्ठकनिष्ठत्वं प्रक्रियारहितं तयोः ।
श्रुत्वाथ पुत्रयोर्व्वैरमन्योन्यं जातु भूपतिः । आह स्वादमखानं स विद्वेशममनत्वरां ।
युक्तमुक्तं न गृह्णासि कुपुत्र यदि मद्वचः । मानप्राणधनध्वंसी प्रत्यूहस्तेऽन्यथाब्रवीत् ।
श्रुत्वेति पितृसन्देशं स भृत्यानब्रवीदरं । तत्पर्णोत्तमयायामः सुखं तत्रैव नः सदा ।
अथोचुस्ते तव भ्राता दाता जातोऽत्युदारधीः । स्वतन्त्रीं भृत्यसात्कर्त्तुं स क्षमो न भवान् कदचित् ।
वरं मरणमेवास्तु तदर्थे नोऽद्य सेवया । विक्रमादिगुणैर्हीनं न त्वामेवं भजामहे ।
अग्रजानुजयोराजपुत्रयोः सुखदुःखयोः । विपर्य्ययं व्यधाद्वेधाः समातेव विभागिनोः ।
अथाशङ्क्य नृपः पापं तदधात्कतिचिद्दिनैः । वहिर्न्निष्काशयामास भुट्टमार्गेण तं सुतं ।
रुद्धवाणप्रकारांश्च शिल्पिनः समदर्शयन् । यस्योऽस्यापि ध्वनिर्धीरलोकहृत्कम्पकारकः ।
तद्यन्त्रभाण्डभेदांश्च तत्तद्धातुमयान्नवान् । आनीतवान्नरपतिः संहतान् शिल्पिनिर्म्मितान् ।
प्रशास्तिः क्रियतां यन्त्रभाण्डेष्विति नृपाज्ञया । मयैव रचितान् श्लोकान् प्रसङ्गात्कथयाम्यहं ।
यदनुग्रहेण राज्ञां समयो लीलाविलासमयः । समयश्च यन्त्रतन्त्रैः स्थिराम्प्रतिष्ठां क्रियात्समयः ।

रसवसुशिखिचन्द्राङ्के शाके नाकेशविश्रुतो राजा । श्रीजैनोल्लाभदीनः कश्मीरान् पालयन् विजयी ।
वर्षे शशिवेदाङ्के निर्मितवान् यन्त्रभाण्डमिदं । तदिति मौसुलभाषाख्यातं लोके च तत्काण्डमिति ।
दुर्गेषु दुर्गतिपरं छत्स्फोटकरं तुरङ्गदन्तदरं । दूरोन्मुक्ताश्मशरं कटकबलान्यदृष्टचरं ।
सारं सुरीतिबद्धं घनघोषं शिल्पिकल्पितमहार्घम् । नवमिव नगरं नृपतेः कस्य स्यात् यन्त्रभाण्डमिदं ।
धातुविभक्तिस्फारात् पदप्रवृत्त्या प्रयोजिते शब्दे । अर्थोपलब्धिहेतोर्भवलिदं वृद्धिगुणयुक्त्या ।
इति पद्याङ्किता यन्त्रभाण्डाली व्यरचन्नवा । यदुच्चैर्घोषध्वनिशङ्के मेघगर्ज्जिततर्ज्जनं ।
कालेनादमखानेऽथ भुट्टाञ्जिला समागते । हाज्यखानोऽकरोत् यात्रां लोहराद्रौ नृपाज्ञया ।
कथं हि छुरिकायुग्ममेककम्बुनि स्थाप्यते । इति ज्ञात्वा सुतौ राज्ञा कारितौ निर्गमागमं ।
जनकस्यान्तिके स्नानपानलीलोत्सवादिकं । आदमखानः सत्राणोविदधेऽनुदिनं ततः ।

दृष्ट्वा सतीसरसि येन सुखस्थितिः सा भीतः स यद्यपि गतो घनकालदोषात् ।
यावन्न नाशमुपयाति किरातघातैस्तावत् कथं तदवमुञ्चति राजहंसः ।

अथाष्टाविंशवर्षेऽपि रात्रचलनतादिभिः । इतोरितोऽकरोत् खानः कश्मीरागमनस्पृहां ।
स्वामिंस्त्वद्यजीवास्ते कश्मीरसुखभागिनः । क्लिश्यामः परदेशेऽत्र वयमेव गृहोज्झिताः ।
राजानकप्रतीहारमार्गेशकुलजादयः । अस्मत्प्रतीचिणः सर्व्वे तत्र वीरा बलोद्धताः ।
यद्यप्यवचनग्राही भूभुजो निश्चितो भवान् । तावतैव स किं क्रुद्धो हन्यस्मान् करुणापरः ।
युद्धायादमखानस्य निर्यातः स्वबलान्वितः । लक्तः स नश्यति चिप्रं श्येनाघ्रादिव पोतकः ।
अमी राजपुरीयाद्याः सर्व्वेऽस्मत्कुम्भकाङ्क्षिणः । तत्तेनैवाधुना यामोन किं सिद्ध्यति साहसात् ।
मृतेऽरिगप्रतीहारे वीराः के सन्ति तत्पुरे । इति तत्पैठकपदं हन्तुं गन्तुं तवोचितं ।
शिथ्यास्तेऽमी वयं भृत्यावीरास्त्वत्पैठकैः सह । यास्यामः कीदृशं शौर्य्यमेकदा द्रष्टुमर्हसि ।
तथेत्युक्ताय खानेन पृष्टो तन्मन्त्रिणो मतं । सफिर्य्यडामरस्ताजतन्त्रेशश्चेत्यवोचतां ।
देव त्वत्सेवकाः सर्व्वे स्वगृहोत्कण्ठिताशयाः । देशकालावनालोच्य कथयन्त्यसुखप्रदं ।
कथमभ्यन्तरं यामः सति राज्ञि बलोर्ज्जिते । प्रदीप्तं व्योम्नि मार्त्तण्डं कुण्डेन पिदधाति कः ।
यावज्जीवति भूपालस्तावत् कोबाधितुं त्वमः । मनोऽनुवर्त्तनं कर्त्तुं तद्युक्तं तव साम्प्रतं ।
प्रसन्ने जनकेऽस्माकं भवेयुः का न सम्पदः । ईश्वरे च गुरौ भक्तिर्जायते पुण्यकर्म्मणां ।
अस्य कोपेन यत्स्वार्थं परासुग्यहतोऽनु तत् । दुर्द्दिने या रवेर्दीप्तिः प्रदीपाज्ज्वलतो न सा ।
स्वनोत्क्रिया ममालिन्यं सततं भयसेविनः । हृदयादर्शवैपदोत्सुकं नास्य दृश्यते ।
निर्व्वाणगोष्ठीनिष्ठस्य तदिच्छानुविवेकिनः । कृपाम्बरस्य नो किञ्चित् कृत्यमस्त्यसुखप्रदं ।
तद्बुधपिष्टपेषेऽपि स्वामिभक्तिं न सोऽत्यजत् । तेनैवाम्नचणः श्लाघ्यस्तस्याभूत् जैनभूपवत् ।
सौहार्द्दमार्द्दवोपेता योग्या कार्य्यविचक्षणा । जाने तेनैव पुण्येन सन्ततिस्तस्य राजते ।
स पिता त्वं सुतस्तस्य वयं सर्व्वे त्वसेवकाः । गत्वा चेत् कुर्व्वहे युद्धं जयोऽस्माकं भवेत् कथं ।

हताश्चेत् केऽपि तद्भृत्या सङ्कभृत्यस्य का क्षतिः। एकपक्षक्षये किं स्यात् गरुडस्य अचाल्पता।
न शिलाशकुनाः सन्ति देशाः पर्व्वतदुर्गमाः। तथापि जनकस्तेऽस्मान् कालोविग्रहस्य नः।
भजत्वभ्यन्तरं राजा वयं वाह्यं भजामहे। तत्प्रमादादिदैवास्ता राज्यं छत्रं विना न किं।
ते चेद्युद्धार्थमेष्यन्ति न जेष्यन्त्यस्मदन्तिकात्। वयञ्चेदन्तरं यामो न जेष्यामः कदाचन।
इति दर्पात् स श्रुत्वापि स्थानः शूरपुराध्वना। अगाद्राजपुरीं त्यक्त्वा कश्मीरान् पिशुनेरितः।
अस्मिन्नवसरे श्रुत्वा स्वपुत्रं रुद्धमागतं। त्यक्त्वा स्वबलं तूर्णं नगराभिरगान्नृपः।
गच्छन् सकटको राजा मरणे कृतनिश्चयः। सदुःखो निश्वसन् श्लोकमिममेकमपाठयत्।
राज्येऽपि हि महत्कष्टं सन्धिविग्रहचिन्तया। पुत्रादपि भयं यत्र तत्र सौख्यस्य का कथा।
अधर्म्मशङ्का दूरेऽस्तु युद्धे जनकपीडया। वैधेयाति विधेयेन येन स्नेहोऽपि विस्मृतः।
त्वयि कुर्व्वति साधाय्यं यः खेदाय समागतः। स यातु सवलः शीघ्रं त्वद्वीर्य्याग्निपतङ्गतां।
त्वमेवाद्यप्रभृत्येकं राज्यं क्रिया धर्म्मक्रिया भजन्। वैरिणो विमुखा यान्तु रणे लब्धपराभवाः।
सोमपित्यधिकास्तास्ताः शृण्वन्जनपदाधिपः। प्रापत् सकटको राजा स सुरशमनाभिधं।
अथ पर्णशिलास्थाने पितापुत्रबलद्वये। सन्नद्धे नृपतिर्दूतं विप्रमेकं व्यसर्ज्जयत्।
स गत्वा नृपनन्दनमब्रवीदिति निर्भयः। किं वक्षीति क्षणं क्रुद्धैस्तच्चरैः परिवेष्टितः।
राजपुत्र महावाहो दाक्षिण्यामृतसागर। शृणु पित्रा समादिष्टं यत्तत् सर्व्वं ब्रवीमि ते।
फलं संसारवृक्षस्य लाभोऽमुत्र परत्र च। पित्रोर्नैवास्ति यो नित्यं पुत्रः कैर्नाम निन्द्यते।
सर्व्वः सञ्चिनुते सर्व्वं पुत्रार्थं प्रयतो यतः। वार्द्धके वचनग्राही भवेत् पितृसुखप्रदः।
इत्थं लोकद्वयं स्थित्या त्वयि जाते सुते मम। दूरे सर्व्वसुखाशास्तु चिन्ता प्रत्युत वर्द्धिता।
त्वत्कृतोदुर्व्वचनाश्वासैर्निःश्वासोयद्वान्वहं। मलिनीकुरुते शुद्धं मद्राज्यं मुकुरोपमं।
जीवनाशोषिता ये मे स्वसन्युच्छृङ्खलाः खगाः। सुचिरं नैव तिष्ठन्ति सरसस्सारसा इव।
मदादेशं विना देशं किमर्थं त्वमागतः। केन राज्यं वलात् प्राप्तं निजभाग्योदयं विना।
वाह्यदेशावनिः सर्व्वा भुज्यते त्वया न किं। येन मण्डलमात्रं मेऽवशिष्टं हर्त्तुमागतः।
तन्निवर्त्तस्व मा पुत्र पापबुद्धिं कृथाः कृथा। बलद्वयवधात् पापं नैवैतत् परिणेष्यति।
इत्युक्तिः पैतृकी प्रोक्ता किन्तु सत्यमहं ब्रुवे। नश्यन्ति भूपाः ध्वनात् लब्धदायादका इव।
इति स्पष्टाक्षरामुक्तिं श्रुत्वा विप्रस्य ते भटाः। छित्वा कर्णौ व्यधुस्तस्य दायादेषु विशेषकान्।
तं दृष्ट्वा छाज्यलानोऽय सत्रपः पितुरागमत्। अभिमन्युप्रतीहारमुख्यानाख्यदिदं वचः।
वरं पादप्रणामार्थं पितुर्य्यामद्य मुतोदयात्। भूपस्तुष्टोऽथ रुष्टो वा यत् करोतु करोतु तत्।
सर्व्वथा तातपादा मे सेव्या रक्षेत् स नो भुवं। तस्मात् कुरुत युद्धेऽस्मिन् संरम्भं चेन्मतं मम।
किन्तु स्वप्नेऽपि भूपाय नानिष्टं चिन्तयाम्यहं। योऽमे देवाधिकः पूज्यो लोकद्वयसुखप्रदः।
स्वपक्षोऽप्ये समायाति रणायायाति मे नृपः। इत्युक्तं तेन संप्राप्तो नाहं पितृसुखोद्यतः।

श्रुत्वेति मन्त्रिणस्ताजन्निपत्याद्यस्ततः। तत्तुरङ्गान्तबलाग्रा निष्ठुरं तेऽभ्रुवन्निति।
यदोक्तं समयेनायं याम इत्यवधीरितं। आरब्धस्यान्तगमनं तद्युक्तमधुना तव।
यूयं चेत् जातसौहार्दा मार्दवानन्दितापराः। वयमेव हताः कष्टं क्लिष्टास्त्वत्सेवनाश्रया।
भवेत् सन्नतयोः सन्धिर्नित्यं तैलकटाहयोः। तदन्तः पूरणी चिप्ता सैव दन्दह्यते चणात्।
भवान् स्वामी वयं दासाः पौरुषं पश्य साम्प्रतं। जयस्तेऽत्र राज्यात्रिर्निष्ठो याहि यथागतं।
यावत् युद्धं करिष्यामस्तावदेव विलम्ब्यतां। इतोऽस्मासु कर्त्तव्यं यत्पुनस्तत् समाचर।
अस्मदुक्तं न स्मरसि यदि त्वं पित्रवस्थितः। त्वय्येवानुचितं कृत्वा पुनर्यामो दिगन्तरं।
इति निर्भर्त्सनावाक्यजातभीतिर्नृपात्मजः। ततश्चिन्तार्णवे मग्नो युद्धश्रद्धामगाहत।
अत्रान्तरे दिशं तादृगवस्थं वीक्ष्य भूपतिः। मुरारातिरिव क्रुद्धो युद्धसन्नद्धतां दधे।
युद्धप्रयोगजनामर्षपरीचणविचचणः। खपचरचणं स्थापः पृष्ठीकृतरविर्व्यधात्।
राज्ञः पृष्ठगतः सूर्य्यः खड्गान्तःप्रतिबिम्बितः। जयस्ते भवितेत्येव वक्तुं व्योम्नोऽवतीर्णवान्।
कियन्तोऽमीति यावत् सोऽचिन्तयत्तावदग्रतः। अर्कदीप्तिज्वलच्छस्त्रद्युतिद्योतितभूतलं।
निर्धन्वशाहिसैन्यौघपतत्कटतुरङ्गमं। गण्डौघगण्डमौघावत् तत्सैन्यं समवैचत।
कोऽन्योवीरोहाज्यखानाधीरराज्ञा वायजेन वा। गृहीतसर्वसैन्येन धैर्य्यात् कष्टमग्राह्यत।
तत्र मर्म्मप्रहारक्षमङ्गतास्तत्कटा भटाः। खड्गदण्डविदग्धानां मार्गभङ्गिमदर्शयन्।
ववर्ष शरधाराभिः स भूपकटकाम्बुदः। स्फुरच्छस्त्रतडिज्ज्योतिर्स्थैर्य्यगम्भीरगर्ज्जितः।
अन्योन्यमिलिताः कांस्यघनत्वकठिमाघनाः। अन्योन्याघातमहता नदन्तः संहता बभुः।
भटा नयन्ति मां युद्धे मां मा ताडयत द्रुतं। इतीव तारं दध्वान खानस्थानकदुन्दुभिः।
पूर्व्वं मया प्रतीहारमुख्या गुरुतघूर्णिताः। रणे फलतया दृष्टा रवेर्ह्रेत्तेर्घना इव।
ततो भूपपचात् क्रुद्धौ धाविवो भूपतेर्हितौ। ठक्कुरौ निरगातान्तौ वीरौ हसनहोस्सनौ।
सुवर्णधोहनपाद्या राजपुत्रा रणाध्वरे। शस्त्रज्वालावलीलीढे जुहुवुः श्रीफलं वपुः।
ते वीरभ्रमरास्तत्र रणोद्याने मदाभ्रमन्। स्वामिमाधरसासिध्यायमःकुसुमलम्पटाः।
ते वीरमस्तकच्छिन्ना रणभूभाजने स्फुटं। घुत्तमस्य हतान्तस्य कन्याइव रेजिरे।
रणतूर्य्यस्वनैर्धैर्स्थैर्भकोलाहलैस्तया। वीराणां सिंहनादैश्च शब्दाद्वैतमजायत।

तत्कुल्ये क्षणमिवैत्य नृपप्रसादं प्राप्ते चणे जहति ये निजजीविताशां।
तत्कादिदत्तपरिरक्षणधर्म्मलब्धा धन्यास्तएव कतिचिन्नृपसेवकेभ्यः।

राजपादागताश्चोद्धताः शराश्चान्यपपातिनः। स्वयं पातोति भीत्येव सस्तम्भाः समपोदयन्।
ध्रुवमिन्द्रासुता रामपुत्रस्यापि तु सापुना। सकम्पा रणभीत्येव पयाह्रागममियम्।
इहास्त्रताम्पुरदीपसिरःक्षमभिर्भरा। श्रीवनामा सम्तपा नलिनी रणभूरभूत्।
शौर्य्यमत्यद्भुतं दृष्ट्वा हनीसन्कटवच्च च। पुनरांगनिवासाभं रणोत्कीर्णं नृपोऽविशत्।

हत्वा सर्व्वदिनं युद्धं बलाद्भृत्यैर्निवारितः । हाज्यखानः सवित्राणः समरात् स न्यवर्त्तत ।
भग्नं निजानुजं दृष्ट्वा पश्चाद्भग्नो विविग्नधीः । अयजोऽप्यावधीद्भग्नान् मग्नांस्तावार्णवे भटान् । १६६
किमुच्यते नृपबलं येन शूरपुरान्तरे । अन्ययाचागतोमोहाविहतः पथिकव्रजः ।
यशां मन्दप्रभो भास्वान् गणैः सर्व्वैर्विलोकितः । दक्षिणस्यादिशस्तस्याः प्रवासी स नृपोऽभवत् ।

दुर्य्योधनार्पितरसा गुरुमन्त्रविष्टा भीष्मप्रिया परहतिं प्रति दत्तकर्णैः ।

ये धर्मजातिविमनस्कतया क्षपेच्छाले कौरवाइव रणे न जयं लभन्ते ।

अन्येद्युर्हतशिष्टांस्तान् भृत्यानानीय पूर्व्ववत् । हाज्यखानः सानुतापश्चिन्तदेशे स्थितिं व्यधात् ।
खिन्नानाश्वासयन् कांश्चित् सभिन्नान् प्रतिपालयन् । अचयन् क्षुधया क्षीणान्स्वगाये सोऽनयन्त्रियां । १७०
मा वाधिष्ट सुतं कश्चित् मत्परो वातिविक्लवः । इति कारुणिको राजा न्यवर्त्तत रणात् द्रुतं ।
आश्विप्ये सुखितः सुतार्पितभरोवृद्धेति दत्तानिजा राष्ट्रेशावरसेवकाः सतुरगाः सम्वर्द्धिता ये मया ।
तेऽमी राज्यजिहीर्षव सुतरता युद्धाय मय्यागता धिङ्मां येन नयोज्झितेन घृणयानर्थः स्वयं स्वीकृतः ।
इत्यादि विमृषन् राजा स्वपुरं दुःखितोऽगमत् । विरोधादायिनो निन्दन् सेवकान् विधिकर्म्मणा ।
सङ्ग्रामस्थवीरेन्द्रच्छिन्नगलकपङ्क्तिभिः । आनीय राजा नगरे सुखागारमकारयत् ।
इत्थं सेवकपैशुन्यात् पितापुत्त्रविरोधतः । समरे तत्र नद्यै वीरलोकक्षयोऽभवत् । १७५

राज्यस्थितिप्रविकसन्नलिनीहिमौघोलोकक्षयोचितमहाभयधूमकेतुः ।

विप्रमसक्तखलघूकनिशान्धकारः शापः सुखस्य नृपतेः स्वजनैर्व्विरोधः ।

श्रीमान्सिंहनृपते तव नामवर्णाः पञ्चेषुपञ्चविशिखन्ति नितम्बिनीषु ।

प्राणन्ति वन्धुषु विरोधिषु पाण्डवन्ति देवद्रुमन्ति कविपण्डितमण्डलेषु ।

इति पण्डितश्रीवररचितजैनराजतरङ्गिण्यां सङ्ग्रामितायुद्धवर्णनं नाम प्रथमः सर्गः ॥

भ्रमतोनिर्गता प्रेमसरित् मोक्षानुजच्छलात् । प्रत्यावृत्ता कियत् कालं शुद्धाद्यशर्मणिश्रियत् ।

स्नेहभागी सुदशाभिरामोभाति प्रदीपः समुपास्य पात्रं । आशाप्रकाशैकनिधेस्तदारादर्शविधानेन विरोचनस्य ।
• इदावादमखानाय नायकः स चिनेत्तदा । प्रमेयाग् क्रमराज्यस्याननुजीयाच्चिरागतः । १८०
जम्प्हेसं च वित्ताघं स्पृहयामादिदेवगं । हाज्यैहैधरखानीयं पानीयमिव वाडवः ।
ततः प्रभृति ज्येष्ठस्य कश्मीरान्तर्नृपापगः । यौवराज्ये सुखं तदद्भुमे पञ्चषः समाः ।

येषां सुखं वितनुते विधिरप्रहृद्या दुर्भिक्षदुःखमपि सन्तनुते स तेषां ।

वृष्ट्या विवर्द्धयति यानि वनानि मेघस्तान्येव शोषयति भाविं तुषारभारात् ।

सर्व्वशस्यसमृद्धेऽस्मिन् देशे षट्विंशवत्सरे । अकस्मादभवद्वैवे गगणात् पांशुवर्षणं ।
वभूव वर्षः षट्त्रिंश सर्व्वष्टष्पिकृतक्षयात् । भयकृत् सर्व्वजन्तूनां भारतादिति विश्रुतं । १८५
अभवन् पक्वपुष्पौघाधूलिधूसराननाः । भाविदुर्भिक्षपीडार्त्तजनचिन्तावशादिव ।
भविता वत्सरेऽमुष्मिन् दुर्भिक्षं पांशुवर्षणात् । इत्याख्यन्मुखरं दृष्ट्वा भूभुजा दैवविज्जनाः ।

षट्त्रिंशोवत्सरोऽतीतोदुर्भिक्षातिप्रदोऽभवत् । स्थमस्तादृशः प्राप्तोभीतिरित्युदभूद्धृदि ।
पपात मार्गशीर्षेऽथ मास्युपद्रवदर्शनं । देशेऽत्र विलसच्छालिमाले प्रालेयवर्षणं ।
दुर्भिक्षदुस्थितं लोकं कथं पश्यामि साम्प्रतं । इतीव भूरभूच्छन्नमुखी हिमसितांशुकैः ।
छादिताः शालयः पक्वा हिमैर्जनमनोहराः । खलमूर्खसभामध्ये पण्डितैः सगुणा इव ।
क्षुध्यावेगाद्बुभुक्षार्त्तैः क्षपिताक्षः क्षणे क्षणे । आशु दुर्भिक्षयक्षोऽत्र व्यधात् प्रक्षीणलक्षणं ।
प्रविश्य रात्रौ गेहान्तः क्षुद्रक्षद्रोह्यपीडितः । हिरण्यादि धनं त्यक्त्वा भाण्डेभ्योऽन्नमपाहरत् ।
सर्व्वस्मिन् दिवसे रात्रावपि भिक्षुपरम्पराः । शरादलाविशन् देहे गेहे धान्यवहे तदा ।
धान्यवद्गृहसन्दिष्टकण्टकम्बुकदम्बकाः । नीरसापूपभोगेनाप्यरक्षन् कोऽपि जीवितं ।
पालीपालीवताशक्तयष्टङ्कटङ्कितभाजनः । चिराच्चिरास्वादरतः कोऽपि कोऽपि हतोऽभवत् ।
क्षीणा ग्रामेषु वास्तव्याः केचिदन्नाम्बुतात्रये । शाकमूलफलाहारा व्रतनिष्ठा इवाभवन् ।
चिराजाद्धान्तरे क्षिप्त्वा शाकं किमपि तण्डुलं । पक्वाऽन्ये कोऽपि तद्भागादकुर्व्वन् प्राणधारणं ।
सर्पिर्लवणतैलानां तण्डुलेन महार्घता । हता नीचेन साधूनामिव सर्व्वोपयोगिनां ।
बहुधान्यकथानिष्ठो योऽभूत्पूर्व्वं पुरान्तरे । बहुधान्यकथानिष्ठस्तत्कालं स व्यलोक्यत ।
बन्धुजीवस्तदाकन्दोबन्धुजीवइवाभवत् । मन्दान् मन्दारयामास सुभान्धान् योऽन्नमा विना ।
धान्यखारः कृतः पूर्व्वं दीनाराणां शतत्रयं । दुर्भिक्षेनस्तदा सार्द्धसहस्रेणापि नापि सः ।
किमन्यत्क्वचिद्राष्ट्रे धाता निष्किञ्चनोजनः । अभवन्माण्डकुण्डस्य काञ्चिकेनापि वञ्चितः ।
यत्पूर्व्वमकरोद्देशो रसवद्व्रीहिशालिषु । मन्ये तेनैव शापेन भयमापन्नजेदृशं ।
करुणाकुलितोराजा स्वधान्यैः पुत्त्रवत् प्रजाः । पोषयामास मासेषु केषुचिद्यावदाकुलाः ।
तावदस्यैव माहात्म्यात् शस्यसम्पद्व्यजृम्भत । सत्यव्रतानां भूपानां क्वावकाशश्चिरं शुचां ।
मन्येऽथ वारिधिर्भूपकारुण्यमयनेच्छया । दौर्भिक्षरौस्थ्याद्दुर्लोकं यशोकमकरोत्तदा ।
पार्थिवोपप्लवे चौरा अन्धकारेऽभिसारिकाः । दुर्भिक्षे चैव तुष्यन्ति धान्यविक्रयिणोजनाः ।
अतः क्षुधामहार्घाय पदार्थो धान्यविक्रयात् । गृहीतास्तेऽन्यदा पूर्व्वमूल्येन प्रापयन्नृपः ।
दुर्भिक्षभक्षिताचोटलोकदक्षः क्षितीश्वरः । धिया मरकट्टेभ्यस्तलाकर्षणमादिशत् ।
तस्मिन्सम्वत्सरे राज्ञा कारुण्याद्दुर्गमार्गिणी । उत्तमाधमर्णानां व्यवस्था विनिवारिता ।
चतुःषष्टिकलाः शिल्पं विद्या शोभाग्यमेव च । दुर्भिक्षोपप्लवे सर्व्वं तदाभून्निष्प्रयोजनं ।
पदवाक्यतर्कनवकाव्यकथामङ्गीतवाद्यनृत्यकलाः । सुरतप्रपञ्चचतुरा वनिताः क्षुधितस्य नैव रचयन्ति सुखं ।
इति जैनतरङ्गिण्यां पण्डितश्रीवरविरचितायां षड्त्रिंशवर्षे दुर्भिक्षवर्णनं नाम द्वितीयः सर्गः ॥

तुष्टः प्रसादमतुलं कुरुते क्षणाद्यः क्रुद्धः प्रजासु कुरुते भयमप्रतर्क्यं ।
उन्मत्तपार्थिवपतेरिव हन्त धातोर्लीलास्वतन्त्रचरितं भुवि बुध्यते कैः ।

षड्त्रिंशवर्षदुर्भिक्षदुःखविस्मरणं जनः । न यावदकरोत्तावदष्टात्रिंशेऽपि वत्सरे ।

हृष्ट्या सह रजोवर्षमपतद्गगनाङ्गणे । उत्पादीचत शान्त्युत्यभाविदुर्भिचसूचकं ।
अथाचिरेण गर्जन्तो धृतचापाघनाघनाः । जनानुद्वेजयामासुः शरासारैरिवारयः ।
वृष्युपद्रवसन्नद्धा वल्लङ्किहरणाकुलाः । उत्थिता बुद्बुदव्याजादुष्टा नागफणा इव ।
उत्पन्नध्वंसिनीभावान् करिष्याम्यहमञ्जसा । इति ज्ञापयितुं मेघो बुद्बुदानसृजद्बहून् ।
वृचाः सर्व्वत्र पचान्त पतदृष्टिस्खनच्छलात् । असुविन्दूनिवामुञ्चन् रुदन्तो जनचिन्तया ।• २१०
वितस्ताछेदरीसिन्धुचिप्तिकाद्यास्तदापगाः । अन्योन्यस्पर्द्धयैवोघा ग्रामांस्तीरेष्वमज्जयन् ।
सविभ्रमाधृतावर्त्ता वाहिन्युत्थास्तुहेषिताः । नवाद्धावन्नुत्तुङ्गास्तत्तरङ्गतुरङ्गमाः ।
अत्युचापातकल्लोलैरानतिदश्च निरङ्कुशं । आसीदपथगं सर्व्वं तदा जलविजृम्भितं ।
ह्रदो जलस्य तत्कालेऽद्रिद्रुमविटपालिषु । केनापि दिष्टं तत्काले मूलोत्पाटनपाटवं ।
अपायपशुगोप्राणिगृहधान्यादिहारक । भयदोऽभूज्जलापूरः स खेच्छोत्पिञ्जसन्निभः । २१५
तदा मडवराज्यस्था विशोका शोकदा नदी । प्रदक्षिणेच्छयेवान्तर्व्विवेश विजयेश्वरं ।
स्थानात्पापहरी पूर्व्वप्रवाहोपगता नदी । इतीव तज्जले तूर्णं ममज्जुर्ग्रहपङ्क्तयः ।
पुराणेषु प्रसिद्धा या विशोका शोकनाशिनी । तदाभूद्विपरीतार्था प्रजाभाग्यविपर्य्ययात् ।
येभ्यः प्रतिष्ठा प्राप्ता तान् दुःस्थान् द्रष्टुमसाम्प्रतं । इतीव तोये तत्कालं ममज्जुर्नगरे गृहाः ।
शिलादारुमयी मग्नस्तम्भीभूतचतुर्म्महा । चतुष्पादिव धर्म्मीया लोकोत्तरणलक्षभो ।
दारदायामपङ्क्तस्य दर्शनाय विशाम्पतेः । यात्रागतस्य लोकस्य सेतुबन्धइवाभवत् ।
वितस्तायां कृता जैनकदलिः सप्तहोज्ज्वला । जलावेशात्तटोन्मग्ना भग्नाघ नगरान्तरे ।
पादद्वयावशेषापि स्थापितायै भविष्यतां । पादद्वयं पूरयितुं समेत्येव महीभुजां ॥ चतुर्भिः कुलकं॥
क्रमराज्ये तदा कुर्व्वन् कल्लोलैराकुलं जनं । महानप्यसरोवेगाद्गाद्दुर्गपुरान्तरं ।
अन्य सरोवरः कोऽपि पद्मनागसरोन्तिकं । मीत्या किमागतो दूराद्दृष्ट्वा विशङ्किरे । २२५
स्वयमुत्पाटयत्यस्मान् हचवत् सहसागतः । इतीव तत्र वेश्मानि चिचिपुः स्वप्नान्तरे ।
दूरे समुद्रो मर्य्यादां कोऽयं हि समुपागतः । इत्थं वितस्ता तत्रैव प्रतीपमगमत्तदा ।
सीमोज्झिता चतुर्मार्गा पद्मातङ्कलङ्किता । स्थितिः कलियुगस्येव भूरभूज्जलपूरिता ।
तस्मिन्नवसरे धारासारं वर्षति वासवे । नौकामारुह्य भूपालोनिर्गाज्जनचिन्तया ।
पश्यन् जलान्तरे मग्नां कृषिं कृपतरः शुचा । जनकारुण्यपुण्यात्मा विचचार पतिः स्वयं । २३०
दृष्टानि यानि घोषेषु गहनत्वान्न जातुचित् । स्थानानि तानि भूपालो नौकारूढोव्यलोकयत् ।
प्रतापर्श्लिखिनेवाथ शोषितोऽगान्मितैर्दिनैः । शान्तिं क्रूरोजलापूरस्य विसारे समागतः ।
अथाचिरेण तद्दर्पं दानोत्कर्षादिव प्रभोः । दर्पमस्पभवन् सर्व्वे पकया शालिसम्पदा ।
प्रशाचन्द्रकलाहृद्यो कश्मीरेन्द्रपयोनिधिः । तूर्णं पूर्णात्मतं प्राप दयापीयूषभूषण ।

आत्मेव कश्चित् सुकृती क्षितीशः प्रजा प्रियास्य प्रकृतिर्यथैव ।
तत्सौख्यहृष्टा सुखिता यदासीत् तदीयदुःखेन च दुःखयुक्ता ।

वितस्ताचततटे भूपस्तदुपद्रवशङ्कया । पुरं चिकीर्षुर्न्यास जयापीडपुरान्तिके ।
अकरोत्तिलकं भूमेरलकादर्पहृत्पुरं । स जैनतिलकं नाम नदीतीरोन्नतस्थले ।
राज्ञोदिदृक्षयेवात्र राजधानीरुचिस्खलात् । सौधभित्तिगता नूनं चन्द्रिकास्ते सुधासिते ।
मूलोत्पाटे दशास्योऽरिभिर्मेघेन विवर्द्धितः । इतीव खिन्नः कैलासः सौधव्याजादिवागतः ।
सुधासितगृहा यत्र सन्नागारवसुन्धरं । जयापीडपुरं जीर्णं हसन्तीव रुचिच्छलात् ।
तत्कृतारोत्सुकस्यास्य राज्ञः प्रत्यक्षतां गतं । मयासुरपुरं किम्वा यद्दृष्ट्वेत्यवदन् बुधाः ।
यद्वारि कान्तं सङ्क्रान्तं परितः सरितस्तटात् । द्वारिकां हसतीवास्य द्वारिकान्त्या सुधासितं ।
तत्र राजपुरीयाय जयसिंहाय भूपतिः । प्रददौ राज्यतिलकं निजजन्मदिनोत्सवे ।
तत्रोपविष्टः सन्तुष्टः सेवयास्य महीपतिः । भट्टतन्त्राधिकारञ्च प्रददौ ब्राह्मणप्रियः ।
काश्मीरकाश्यदेशीयसर्व्वगीताद्भुताङ्गने । तस्मिन् सम्वत्सरे राज्ञा चक्रे कनकवर्षणं ।
तत्रोपकण्ठे भूपालः स्मृत्यै कण्ठीरवद्विषः । हेलालनाम्नो दासस्य हेलालपुरकं व्यधात् ।
श्मपीठं विधायोच्चैर्जयापीडपुरान्तरे । सरस्तीर्थे मनोहारिराजवासं स्वकं व्यधात् ।
उदीपर्गुडितं जीर्णं निर्लुण्ठ्योपसरोवरं । महाप्रज्ञोऽनुपश्यके तद्द्राजगृहावलिं ।
नागयात्रोत्सवे यत्र प्रत्यब्दं दिनपञ्चकं । गणचक्रोत्सवे राजा योगिनीभोगिनीव्यधात् ।
यत्र कादम्बरीचोष्यभक्ष्यान्नादिप्रपूरितः । कृत्वा पुष्करिणीस्सर्व्वान् स यथेच्छमभोजयत् ।
यत्र योगिसहस्रेषात्यागङ्गानादासकृच्छ्रुतेः । जाने मानसनागोऽपि न्यमीलन्निजचक्षुषी ।
न तदन्नं न तन्मांसं न तन्मत्स्यं न तत्फलं । न ते भोगा न ये राज्ञा भोजिता भोजनक्षणे ।
योगिनां त्रिविधाश्चैवं मद्यमत्तमथोदितं । अघट्टिष्ट नृपो भक्त्या यदसह्यं जनैरपि ।
महार्घ्यपरिधानोद्दामसमानादिलाञ्छनैः । तेषामधिपतिं यत्र मेरं स्वसदृशं व्यधात् ।
सत्कन्या किन्नरामुख्यदण्डाद्यैर्दादशीदिने । भारिकान् योगिनः कृत्वा प्रत्यमुञ्चत्ततो बहिः ।
वितस्ताजन्मपूजार्थं प्रयोत्म्यां ततो नृपः । दीपमालादिदृक्षुः स नौकारूढोऽभ्यगात् पुरं ।
सुभाषितानि संश्रुत्य मङ्गलानि जलान्तरे । समारोहावरोहाभ्यां सपोरान्विषमग्रहीत् ।
पूजार्थं संपुञ्ज्यरदत्तदीपसन्निभ्रमात् । वितस्तान्तरमायाता तीर्थकोटिरिवाद्युतत् ।
पारावारतटप्रत्यादीपमालाचादा दृशः । अर्चनाप्तसुरोत्सुकसुवर्णकुसुमश्रियं ।
वितस्तायनिपूजासमागरोमुद्रनिर्जितः । भक्त्या पश्यतेन्दुरुपेशतः प्रतिमाच्छलात् ।
गर्भेदर्भीहतागतिः सुपर्ण इव सौनया । मध्ये रात्रिं स गान्धर्व्वसर्व्वेरमयत् सुखं ।
वन्द्योऽसौ गुणिनाम्बरोदिनपतिर्वंशोदयानुप्रवाहेश्वा कुत्र स सर्वदर्शनसुखात् सचकर्व क्षितिः ।
निष्ठौ तस्य सुतौ पितुर्मिंदृशौ राजस्थोपादकौ ये कालोऽयमिति प्रयागपगतो कूरयशो निषितौ ।

अत्रान्तरेऽनुजद्वेषवशात् कलुषिताशयः । आदामखानोऽनि.शं देशमाक्रामयद्बलात् ।
यत्रास्मत्रातिकठिनसन्ततन्त्रितयन्त्रिणः । दुर्मन्त्रिणोऽभजन्नाशं तस्मिन् सोऽपि स्वतन्त्रतां ।
स्फीते भोतेन कामोऽस्ति शास्ति न रसिकोऽभवत् । केवलं मृगयासक्त्यमत्कारं स्वभिर्व्यधात् । ९७५
सरसामन्तरेऽरण्ये यत्र कुत्रापि तिष्ठतः । मृगयारसिकस्यास्य रात्रिं दिनमिवाभवत् ।
किमुच्यतेऽन्यन्नीचत्वं यद्भृत्यैर्व्यवहारिवत् । श्येनसंस्वनपचौर्घविक्रेयानगरे छत. ।
अथैकदा विभज्यासौ यौवराज्यमदोद्धतः । क्रमराज्यं नखत्याज्यं ययौ प्राज्यपरिच्छदः ।
यत्र यत्रोपविष्टः स पापनिष्ठोऽप्यनिष्टवत् । अभवन् पोडिताग्रामीणाक्रन्दमुखरा दिश. ।
प्रसादमत्तलोदग्रप्रतिग्रहदृढां चितिं । उपग्रहद्रवात्युग्रः सञ्जहार पदे पदे । ९८०
कचिद्रीत्या कचिद्भीत्या कचिन्नीत्या विलोभयन् । लोभग्रस्तोवलात्कारान्न केषामहरद्धनं ।
स प्राहतद्व व्याजमैत्रीं कुर्व्वन् गृहागतः । लोभादन्यांश्चवत्यांस्तानन्यान्वित्तैरवञ्चयत् ।
नीताचारक्षतायुक्त्या सभयास्ताडयन् स्त्रियः । तदुक्त्वादण्डयत्तस्य ग्रामीणान् सेवकव्रजः ।
तत्तद्विनिग्रहस्थानसावधानमतिस्तदा । स तार्किकद्रवात्युग्रोरात्रिसैर्दुर्जयोऽभवत् ।
जायासुपादुहितृाद्या भव्या येष्वभवन् गृहे । बलात्प्रविश्य सम्भुक्ता निर्लज्जैस्तस्य सेवकैः । ९८५
समाण्डमत्स्यं कुण्डेस्ते पीत्वा गुण्डान्तरे मधु । भाण्डाइव मदोच्चण्डाः स्वाधंभाण्डमवादयन् ।
तण्डुलाय्च कुसूलेभ्यः शालाभ्यः पीनवत्कराः । वीटिकाभ्यः स्वयं मद्यं भुक्तं तैर्व्वलकारिभि. ।
सैव कानोचिती तस्य कियती वर्ण्यते मया । येऽप्यमूर्द्धनि वास्तव्यान् घृताभ्यङ्गमकारयन् ।
हरुन्तीरिव ज्वालाभिस्तैलपूर्णा हर्सन्तिकाः । तान् कारयित्वा ये दीपान्निशास्वज्वलयञ्छठाः ।
इत्यादि कुत्सिताचारं भारार्त्तद्व भूपतिः । विज्ञप्योद्देजितोलोकैर्निर्गन्तुं नाशकद्गृहात् । ९९०
पीडां मा कुरुतेत्यादि राजदूते ब्रुवत्यसौ । अवोचन्निति तद्भृत्या राजा क्रन्दतु पीडितः ।
वैरं वो गुरुभिः करोति सततं पुष्पायुधं दुर्म्मतंक्षेपमात् अस्मरस्मत्तलोव्यनुदिनं तद्वानभे।गोज्झितः ।
दीनान् ग्राम्यजनांश्च पोडयति योनिर्घृतमत्याचिपंस्तस्यामन्नविनाशिनः स्वविभवस्तापाय शापाय वा
कुर्व्वन् स्वसैन्यसामर्षी कुड्डेनपुरे स्थितः । एकदा जैननगरे भूपालं सबलोऽभ्यगात् ।
तद्दिने शङ्कितस्तस्मात् पूर्णकर्णादुरुक्तिभि. । स्वसैन्यमङ्गृह्य राजा राजधान्यां गतोऽकरोत् ।
वितस्तान्तर्व्वसद्दारुसैन्यपूर्णचतुस्तटं । तरदायामपंक्तयश्च द्रमकं नगरान्तरे । ९९५
सेतुबन्धं व्यधाज्जैनकदलाख्यमयं नृपः । स्वकृतं तं तदाज्ञासीत् स्वविशमिव भीतिदं ।
नगरोपप्लवाशङ्की मन्त्रैस्तायत्तमास्थितः । पुराग्निष्कालयामास तं सुतं मन्त्रयुक्तिभिः ।
सन्तापप्रदमुत्तरायणमिहालोक्यापि रम्यं गुणैर्ध्यावाञ्छत्यय दक्षिणायणममुं ज्ञात्वा हिमातिप्रदं ।
लोकानामसुखक्षयार्थमुभयोरायं पुनर्ध्यांभजत्यर्थार्थैव परोपकारनिरत सूर्याय तस्मै नमः ।
क्रमराज्यान्तरं प्राप्ते तस्मिन् दैराज्यशङ्कितः । स्वाचरैर्हाज्यखानं स प्राहैषीत्पत्रमित्यदः ।
पुत्र मेऽवसरोदृष्टस्तादृक् प्राप्तादुरुत्तरः । यत्र मत्प्राणसन्देहे गतिर्नान्या त्वया विना । १००

मत्पश्चावेक्षणे युक्तं शयितस्य तवासनं। आसीनस्य समुत्थानमुत्थितस्य च धावनं।
किमन्यत् सत्यमेवोक्तं त्यक्तापि श्रुतयन्त्रणां। यद्यागच्छसि तत्तूर्णं पूर्णं प्राप्स्यसि वाञ्छितं।
अतितूर्णं न चेत् प्राप्तो मयि जीवति विह्वले। गते मयि मदभ्यर्णं पुनरागमनेन किं।
तावत् स्वय्यपुरं प्राप्तः सोऽभूत्तीर्णो नृपात्मजः। राजानीकैः समं युद्धमुद्धतं सवलोव्यधात्।
अथोदतिष्ठत्तुमुलस्तत्कालं सैन्ययोर्द्वयोः। उन्नद्धखानसन्नद्धयुद्धेक्षणसुदुस्सहः। १०५
अष्टाविंशाब्दवदस्मिन् पञ्चत्रिंशेऽपि वत्सरे। वैरं नीत्वा पितापुत्रौ पिशुनैः कारितोबधः।
तत्रत्यादरदावान्ये परितः सरितोजले। ममज्जुस्तद्भयाद्येन शवपूर्णमभूत्सरः।
हत्वा मृत्युरिवात्युग्रां तद्दिने नृशतत्रयीं। नौसेतुबन्धमुच्छिद्य नदीपारं समासदत्।
धिक् यः पैतृके देशे रक्षणीयेऽपि निष्कृपः। परदेशजयं त्यक्त्वा तादृङ्निन्द्यं समाचरत्।
पापास्ते शिखजाद्याद्या म्लेच्छोल्लाभयवेतनं। भूपमुद्वेजयामासुः फलं यैरनुभूयते। ११०
उच्चः सत्फलदोयथायमहमप्येतादृगेतावता स्पर्द्धां यावदियेष हन्त जनकेनैकेन मन्दः सुतः।
भास्वानभ्युदितः स तावदतुलः सर्व्वप्रकाशोद्यतोयन्माहात्म्यवशेन वक्रगतयोध्वस्ताभवन्ति स्वयं।
तद्देशकष्टदैर्दुष्टैः प्रजानां नाशहेतुना। आदमखानोविद्राणैलक्ष्म्या भागैश्च तत्यजे।
इत्यातङ्कादिभिर्दुःखैर्व्वरं देशेऽत्र जीव्यते। सर्व्वनाशकरी मास्तु भूभर्त्तुर्व्विङ्कपत्यता।
मा चेत्तेषां स्वभेदोमा भूयादैरात् परस्परं। मा जायेताथ वा दुष्टः सुतः कस्यापि दुःखदः।
प्रजान्तकारिणौ क्रूरौ राजपुत्रावुभावपि। सूर्य्यस्येव महीभर्त्तुः पङ्गुकालाविवोदितौ। ११५
अपकर्तॄन्विपन्नशान्दयमानः परानपि। क्षमी दाता गुणग्राही स्वामीदृग्लभ्यते कथं।
व्यथितोयत्सुतैर्दुष्टैः सोऽस्मद्भाग्यविपर्य्ययः। शृण्वन् स रुदिताक्रन्दमिति पौरगिरः पथि।
पाददाहव्यथार्त्तोऽपि नगरान्निरगान्नृपः।
पुत्रोत्पत्तिमवेक्ष्य तुष्यति नृपोवोढा धुरःस्यादिति स्नेहात् सम्पदमस्य यच्छति निजामुल्लङ्घ्य नीतिक्रमं।
ज्ञात्वा तं मलवत्स्वमात्ससदृशं तादृग्भियाशङ्कते येनासन्नसुखो न जातु लभते निद्रां सचिन्ताज्वरः।
यद्वा मल्लिकजसयेन स यदा राजाभिशाहिर्हतोभ्रातृद्वेषवशादभूव कदनं काश्मीरिकाणां महत्।
तदन्येनमहीभुजोऽस्य तनयद्वेषात् किमालोक्यते तस्माद्भवहसन्ततिर्नृपगृहे देशे विनाशप्रदा।
इति मार्गे कथाः शृण्वन् ग्राम्याणां जैनभूपतिः। वधात् कुतनयं निन्दन् प्राप स्वय्यपुरान्तरं। १२०
तीरद्वये वितस्तायाः पितापुत्रबलद्वयं। न्यवीविशत् समासन्नं परस्परजयोद्यतं।
अथान्तरे हाज्यखानः पर्णोत्सत्तूर्णमागतः। सुपर्णइव सद्वर्णदेशाभ्यर्णं समासदत्।
श्रुत्वा वराहमूलान्ते पुत्रं प्राप्तं बलान्वितं। अग्रे वह्रामखानमानेतुं सत्कर्तुं व्यसृजन्नृपः।
कार्यापेक्षी हाज्यखान. सेवायैव कृतादरः। प्रीतिनिष्ठं कनिष्ठं तं भ्रातरं स्वं समानयत्।
अन्येद्युर्मानितं दृष्ट्वा जनकेन निजानुजं। आदमखानो विषाणद्धिंपक्षोऽगाद्दिगन्तरं। १२५
शाहिभङ्गपथा सिन्धुं समुत्तीर्य्य बलान्वितः। प्राप सिन्धुपतेर्देशं तथा कष्टपरिच्छदः।

इत्थं त्रिचत्वारिंशे वर्षे ज्येष्ठे निष्कास्य युक्तितः । हाज्यखानान्वितस्तुष्टो नगरं प्राप भूपतिः ।
शिशिरसमये योऽभूच्छ्लिष्टश्चिरं धुतपक्षतिर्धरणिकुहरेष्वन्तः कालं निनाय शुचाकुलः ।
कुसुमसमये प्राप्योद्यानं विकाशिलतोज्ज्वलं किसलयरतः सोऽयं भृङ्गः सुखं रमते पुनः ।
अस्मिन्नवसरे तुष्टाद्धाज्यखानो धृतं चिरात् । यौवराज्यपदं प्रापज्ज्ञात्काञ्चनकोपमात् । ११०
पितुः प्रेमसर्वस्वं प्राप्य स्वच्छं भक्तिपरायणः । हृदयान्नात्यजज्जातु श्रीमान्कृष्णइव कौस्तुभं ।
विनयक्षिप्तदेवाग्रजानुसङ्कुचिताकृतिः । ह्रकार इव सद्वर्णस्तोस्या सर्व्वावधिर्व्वभौ ।
न तत्तीर्थं न सा यात्रा न सा लीला न चोत्सवः । तदाभून्नैव यत्रागाद्धाज्यखानान्वितो नृपः ।
यो नित्यं परितोषितोगणशतैरत्यर्थभक्त्युज्ज्वलैः पुत्राभ्यां सहितो हितस्त्रिजगतां नानाविलासान्भजन् ।
कालो गच्छति यस्य लास्यललितैर्गीतैश्च यच्छृण्वतः शस्यः कस्य न तन्नमस्यविभवः कोऽनारसवाशोभरः ।
इति जैनराजतरङ्गिण्यां आदमखाननिर्व्वासनं हाज्यखानसंयोगवर्णनं नाम तृतीयः सर्गः ॥

अत्रान्तरे मदनबन्धुरयादवन्तः शृङ्गारसारकुमुदाकररोहिणीशः ।
मानान्धकारविनिवारणभानुमूर्त्तिः स्फूर्जल्लतान्तिललनानवयौवनश्रीः । ११५

ततश्चैत्रोत्सवे राजा पुष्पलीलाचिकीर्षया । ययौ मडवराज्योर्व्वीं नौकारूढः सुतान्वितः ।
तरण्डामण्डली राज्ञो वितस्तान्तरगा बभौ । शक्रस्येव विमानाली छायापटविभूषिता ।
स्वकीयराजवासस्थो राजावन्तिपुराङ्गनं । विजयेशादिदेशेषु नाट्यं द्रष्टुमुपाविशत् ।
हरांशभूभुजं जेतुं यत्र राजसभानिभात् । भवासक्तो ऽभवत्कृत्वा बहुधा स्वं मनोभवः ।
सालङ्कारप्रबन्धज्ञाः सिद्धान्तश्रुतविश्रुताः । यत्रान्तःकरणोद्युक्ता द्रष्टारो गायना अपि । १२०
नानाग्रामगताश्चारुस्वररागमनोहराः । यत्र गीतारसस्फीताबभुर्युवतयोऽपि च ।
कलाकलापवेत्ता सोन्मानमानससौख्यभृत् । रङ्गरङ्गद्रुचिर्नीको विद्याविख्यातसंश्रयः ।
प्रतितालैकतालादिबहुतालविभूषितं । तत्र तारा च नाराचसंज्ञासं विदधुर्नटाः ।
उत्सवानामकामास्त्वं गायनी नयनोत्सवा । लास्यताण्डवनृत्यज्ञा न केषां रञ्जिकाभवत् ।
भावानेकोनपञ्चाशत्सङ्ख्यांस्तानांश्च तावतः । दर्शयन्त्योबभुः पात्र्यस्ता मूर्त्ताइव मूर्च्छनाः । १२५
यासां नृत्ये च गीते च लक्ष्मीमेऽस्त्यधिकं सुखं । इति वादोऽभवच्छ्रोत्रनेत्रयोः प्रेक्षणक्षणे ।
पात्रीगानपिकध्वाने रङ्गोद्याने तदाद्युतन् । दीपचम्पकमालास्तामधुपैः परितोऽस्रताः ।
राज्ञि राज्यक्षणात्तुष्टैर्नृत्यमेवागतैः सुरैः । दीपमालाच्छलान्मुक्ता नूनं हेमाम्बुजस्रजः ।
जलान्तर्ब्बिम्बिता कापि दीपाली नागलोकतः । वरुणेन नृपप्रीत्या दापितेवाद्युतत्तदा ।
ता दीपिता दीपमाला द्विधा रङ्गे चकाशिरे । दिदृक्षागतनागानां फणामणिगणाइव । १३०
किं राज्यालोकभावात्तटभुवि मिलिताः पूर्व्वभूपालजीवाः किं व्योमस्तारकौघः शशधरविमुखः सेवनायावतीर्णः ।
किम्वा सिद्धाः सुरेन्द्रा निजरुचिरुचिराः प्रेक्षणायोपविष्टाः किम्बै ता दीपमाला इति जनमनसामास्त दूरादितर्कः ।
साक्षादेव पुरन्दरः कविबुधाविद्याधराः सेवका अन्ते देवसभासदः सवपुषः सिद्धा अमी योगिनः ।

एताश्चाप्सरसोरसोज्झितगुणा गन्धर्विका गायना रङ्गोऽयन्ति दिवस्थलीति जगदुः सर्व्वे जनाः प्रेक्षकाः।
अङ्गारचारचूर्णादिगन्धकौषधयुक्तिभिः। रागैः शिल्पिकृता लीला क्रीडालोकमरञ्जयन्।
तथा ह्यौषधसम्पूर्णान्नालादङ्किकणाघनाः। निर्यत्कुसुमसम्पूर्णस्वर्णवल्लीभ्रमं व्यधुः।
सर्पाकारानलज्वाला निर्गता सलिलान्तरात्। चक्रे प्रेक्षकलोकानां त्रासाश्चर्य्यभयोदयं। १८५
नालकादुत्थिता व्योम्नि ज्वाला गोलकपंक्तयः। राजद्राजतरोचिष्का औवरङ्कोपमां व्यधुः।
रज्जुबद्धागमद्दूरं ज्वलन्त्यौषधनालिका। आहूतये तथा नीतास्ताद्दृश्योऽद्भवोगताः।
गतागतानि कुर्व्वन्त्योदीप्ता उल्कादवोल्बणाः। प्रेक्षकाणां मिथा दृष्टीरहरन्नद्भुतावहाः।
अत्र पात्रीकरस्यापि ज्वलन्त्यौषधनालिका। द्युलोकोन्मुक्तसद्वर्णस्वर्णपुष्पश्रियं व्यधात्।
वह्निक्रीडनलीलाया युक्तिज्ञेन महीभुजा। शिक्षयित्वा हभेभाख्यं तास्ताः सर्व्वाः प्रदर्शिताः। १९०
चारस्तदुपयोग्योऽत्र दुर्लभो योऽभवत्पुरा। तद्युक्तिशिक्षया राज्ञा स्वदेशे सुलभः कृतः।
प्रश्नोत्तरमयी स्वोक्तिर्हभेभं प्रति या कृता। पारसीभाषया काव्यं दृष्ट्वाद्य कुरुते न कः।
ते शिल्पामतिकल्पितास्तु च सदा सङ्गीतवाद्योरसः सालङ्कारविचारचारुधिषणा काव्ये च तत्कौशलं।
सच्छास्त्रश्रवणादरः स च नवप्रोत्पादनायोद्यमः श्रीमज्जैनमहीपतेर्विक्रमतेस्तस्यैव कस्याधुना।
खुज्याब्दोल्कादराख्यस्य शिष्यः सर्व्वगुणाम्बुधे। भूभुजश्चित्तमनयद्रागतालादिभिर्मुदं।
खुरासानागतोमल्लाजादकाख्योमहीपतेः। वादनात्कूर्मवीणायाः प्रापातुलमनुग्रहं। १९५
मल्लाज्यमालनामापि म्लेच्छवाग्गेयकारकः। नारदोवासवस्येव राज्ञोऽभूदतिरञ्जकः।
तुम्बवीणाधरः सोऽहं सर्व्वगीतविशारदः। उदद्भुतनवगीताङ्ककौशलं समदर्शयं।
अन्येऽपि जाफराणाद्या मया सह नृपाग्रगाः। तौरुष्कान्दुष्करान् रागानगायन्वीणया समं।
गीतं द्वादशरागाङ्कं गायतां नः सभान्तरे। प्रीत्यैवैक्यमिवापन्नास्तन्त्रीकण्ठोत्थिताः स्वराः।
देशसंस्कृतकाव्यज्ञो राज्ञोनिकटवास्यभूत्। पण्डितोनोत्यसोमाख्योदेशजैनचरित्रकृत्। २००
देशभाषाकविर्योधभट्टः शृङ्गार नाटकं। चक्रे जैनप्रकाशाख्यं राजवृत्तान्तदर्पणं।
भट्टावतारः शाहनामदेशग्रन्थाब्धिपारगः। व्यधाज्जैनविलासाख्यं राजोक्तिप्रतिरूपकं।
वीणातुम्बीरवावाद्याः सर्व्वान्तुष्टेन भूभुजा। सुवर्णरौप्यरत्नौघैर्घटितास्तास्तकाशिरे।
तदा चिकाङ्किकाद्यार्य्यसात्त्विकाभिनयोज्ज्वलं। नाट्यं दृष्ट्वा जनः सर्व्वश्चतुर्मुखमशंसत।
इत्थं त्रिवर्गविद्राजा त्रिजगत्ख्यातपौरुषः। चियामास्त्रिविधैर्नृत्यैरनयत् त्रिदशोपमः। २०५
स्फुरद्दिक्किलोकाश्चघामं स भवमान्तरं। श्यामदत्तारकापूर्णं पूर्णचन्द्रद्यवाम्बरं।
ततोविमलकुण्डान्ते पानक्रीडां महीपतिः। कर्त्तुं प्रचक्रमे तत्र पुत्त्रमित्रविभूषितः।
पिहप्रमात्मनो त्रिकोहाज्यखानोऽथ भक्तिमान्। वसन्तवर्णनोग्गिरश्री घाटूक्तिमवदद्विभोः।

सङ्गीतनादनिपुणात्कलकण्ठभृङ्गात्फल्वानिलं प्रततिवाद्यविधा मदघम्।
गीतमियं नरपते किमु सेवितुं त्वां प्राभोवसन्तऋतुचारणचक्रवर्त्ती।

मेघाडम्बरमम्बरं यदि तदा निर्नष्टशोभावयं नित्यं तीव्रकरेण तेन दिवसे तत्राप्यहो बाधिताः।
स्वामी नः प्रथमत्वयोदयहतोदुःखादितीवागता उद्याने नरदेवसेवनपराः पुष्पच्छलात्तारकाः।
पङ्कातङ्ककलङ्कितां जलमया ये भोगिदेहार्त्तिदास्तद्देशे विलसन्तु पात्रविषयाः सन्मार्गविघ्नोद्यताः।
ये याताः स्वयमेव देव विलयं श्रीमत्प्रतापोदयादस्मिन् हर्षमये वसन्तसमये प्रालेयपूरा यथा।
श्रुत्वेति भूपतिर्हृष्टोद्याख्यखानाय सत्वरं। सौवर्णकर्त्तरीबन्धमममेयं समार्पिपत्।
यैर्यैः सेवा कृता तस्य शाह्मादेशे विचार्य्य तान्। पुत्रस्नेहेन भूपालो घोषराष्ट्राधिपान् व्यधात्।
प्रेष्याद्याचेपसिन्ध्वाघमभ्रांस्तान् सेवकमजान्। प्रसादपट्टपोतेन समुत्तीर्णान् व्यधान्नृपः।
विदग्धीताङ्गिस्त्येभ्यस्तस्मिन्नवसरे नृपः। सुताश्वानन्दवाप्याख्योव्यधात् कनकवर्षणं।
दत्तमार्गोपचारार्था राज्ञिया दर्शनागताः। प्राप्तपट्टपरीधानमानतुष्टा न केऽभवन्।
तान्विलोक्य भवनोपवनादीन् पुष्पपूरपरिपूरितनाक.। स्वं सुवन्मउवराज्यनिवासान् प्राप जैननृपतिर्नगरं स्वं।
इति जैनराजतरङ्गिण्यां पुष्पलीलावर्णनं नाम चतुर्थः सर्गः॥

अत्रान्तरे सुतप्राप्त्या निश्चिन्तः सुकृतोद्यतः। कुल्यानवनवाः कर्षन् प्रतिष्ठारसिकोऽभवत्।
कविः श्रीजोनराजोयं स्वसन्दर्भान्तरेऽब्रवीत्। ग्रन्थविस्तारभीत्या तद्वर्णनं न मया कृतं।
एकैवास्त्यमरावती ननु पुरी साज्ञातनिर्म्माणका तत्राप्यत्र सदा विमानवसतिर्देवादिषु श्रूयते।
सोऽभूद्भूमिपुरन्दरः पुरशतं कुर्व्वन्नवं सर्व्वतोयत्रैते निवसन्ति मानसहितास्ते भूमिदेवादयः।
श्रीजैननगरे पञ्चदशेऽब्दे या कृता पुरा। राजधानी नवात्युचा विद्धा देवगृहोपरि।
तस्याः समीपे नृपतिश्चत्वारिंशेऽथ वत्सरे। दृष्टिकादारुसम्बद्धं राजवासं नवं व्यधात्।
यत्पृष्ठे स्वर्णकलसोभाति भातिमनोहरः। हेमपद्मइवोन्मुक्तः शक्रेण श्रुतकीर्त्तिना।
द्वारार्थनियुक्तेभ्यस्तत्तत्कर्म समादिशन्। आजीवं सोऽवसद्राजा राजधान्युज्झितस्थितिः।
यत्र वापीगता हंसागीतशंसां स्तनच्छलात्। कुर्व्वन्तीव समीपस्था गायद्गीताङ्गिसंस्कृतैः।
यत्र खर्व्वीकृतारातिः सुपर्व्वाधिपतिर्यथा। सर्व्वाहः सुखगन्धर्व्वचर्व्वणैरनयत् सुखं।
यदन्तरे सुविस्तीर्णः सर्व्वदर्शनमण्डपः। काचभित्तिमयोभाति व्यश्रसिंहासनोज्ज्वलः।
यद्गर्भाद्युपसन्दर्भनिर्भरान्नृपसंश्रिनात्। वातोऽपि सफलोयातः सातर्वाणसुखप्रदः॥ कुलकं॥
कदाचिद्वाहरं दुर्गं यात्रां द्रष्टुं गतोनृपः। राजवासं नवं कृत्वा जीर्णोद्धारमकारयत्।
समुद्रकोटादारभ्य यावच्छ्रीद्वारकावधि। तत्तत्स्ववनवावासवासवालयसुन्दरान्।
जैननामाङ्कितान् ग्रामानकरोन्नगभूषितान्। उपतीरं महापद्मश्रीमत्पन्नगभूषितान्।
तदन्नसत्रप्रस्नानामर्थिनां त्रिपुरेश्वरे। उदरं मेदुरं चास्तीराजा लम्बोदरः कथं।
अन्नसत्रे चितीशानैर्व्वराहक्षेत्रभूमिषु। अस्तु नसमिराः शेषश्चित्रसिन्धोऽपि चाभवन्।
मत्स्येभ्योनित्यवध्येभ्यः स प्राणानामभयं ददौ। मत्स्यानामभयत्रेण वितस्तासिन्धुसङ्गमे।
अर्थिनामतिवृष्टानां श्रीपद्मरपुरे नृपः। अपेक्ष्य विदधे च्छायां न फलानि महीरुहां।

अश्नमायां व्यधादन्नसत्त्रे व्यञ्जनसौरभैः । कथं न कुङ्कुमस्याभूत् गन्धभेदकदर्थनः ।
अच्छिन्नेनान्नसत्त्रेण विजेयश्वरवासिना । उदरे मेदुरे सिद्धमणामो यन्नतोविभोः ।
अन्नसत्त्रमविच्छिन्नं कृत्वा शूरपुराध्वना । शुल्कस्थाने व्यधाद्राजा भारिकानाभिसारिकान् ।
गुणी मूर्खो निराचारः साचारो यवनो द्विजः । नापोऽपि यस्तदन्नेन कश्मीरेषु स नाभवत् ।
शम्भुश्रीपतिधातृजह्नुमुनिभिः पूर्वं रवेरन्वये जातेनापि कृतः श्रमस्त्रिपथगा गङ्गैव जाता नदी ।
तेषां स्वार्थमभूद्भसेनरपतिः सोऽयं परार्थे पुनर्देशेऽस्मिन् स्वधिया नदीर्नवनवा नाना पथः कृष्टवान् । ११०
नवीनोदारकेदारभूम्युत्पन्नप्रतिस्थलं । कूटाधान्यफलैः पुष्टाद्दृष्टाः पर्व्वतसन्निभाः ।
धान्यकूटच्छलान्नूनं साभूद्धान्याः कुचस्थली । आशोपाया प्रजा यस्याद्वृद्धिमापद्दिने दिने ।
दुर्लभोपद्रवानिष्टा यत्र यत्राभवत् चितिः । समुद्यद्वव शस्याढ्या तत्र तत्राकरोन्नृपः ।
न तत्स्थलं न कान्तारो न स देशो न साटवी । यत्र नानीय कुल्याः स्वाः स्वनामाङ्काः पुरीर्व्यधात् ।
न सा नदी न तत् चेत्रं न स ग्रामो न सा पुरी । न तत्स्थानं न यद्राज्ञा जैननामाङ्कितं कृतं । ११५
यत्र यत्राभवन्निम्नाः प्रदेशास्तत्र कुल्यया । व्यधाद्राजा सरः पत्त्रिविसशृङ्गाटभूषितं ।
धन्योवारिधरोधरोपकरणोद्युक्तः सदा जीवनैर्यः सिन्धोः सलिलं निरर्थकतया निम्ने निरुध्यान्वहं ।
कान्तारेष्वफलेषु केषु रुचिरं मुञ्चन्त्यभीष्टं यतस्तत्संकोदितसर्व्वसस्यविभवो लोकः सुखी जायते ।
लोके डलदति ख्यातं यदगाधं सरोवरं । तस्य प्रतिष्ठाप्रस्तावाद्वर्णनं क्रियते मनाक् ।
आराजधान्या यद्दीर्घं सुरेश्वर्य्याः सरोवरं । नौकारूढोऽचरन्नित्यं व्योम्नीवेन्दुः सुनिर्मले ।
अरित्रपचा यत्रान्तः सोड्डीनाः पटसुन्दराः । पोतादवारुचन् पोताराज्ञः शाकुनिकान्विताः । १२०
तिलप्रस्थागता यत्र तटिनी त्रिपुरेश्वरात् । सङ्गच्छते सटाङ्कां यस्तङ्काद्रष्टुमिवोत्सुका ।
श्रीपर्व्वतोऽपि पद्क्रोशस्तीर्थस्नानफलेप्सया । स्वसङ्गातिच्छलाद्यत्र मज्जतीव दिवानिशं ।
शैवलन्ति द्रुमायत्र कमठन्ति च पर्व्वता । पुर्य्यश्च नागलोकन्ति जलान्तर्य्यत्र विम्बिताः ।
यत्पत्त्रभृङ्गालिकुलानि सरसीरुहां । तत्सौगन्ध्यमिवाघ्रातुमानतानीचते जनः ।
यत्र हंसयुगलोत्प्रेक्षासोदयदयसम्भ्रमात् । जाने याति रविः कुर्व्वन् प्रत्यब्दमयनद्वयं । १२५
यत्र तीरे सुरेश्वर्य्याः चेत्रं भुक्तिविमुक्तिदं । वाराणस्यधिकं भाति तीर्थराजिविराजितं ।
विहारैरग्रहारैश्च मठैः सुकृतकर्मठैः । आश्रमैरश्रमैराजवासैः स्वर्गोपमां व्यधात् ।
दीर्घवर्तुलिकाव्यासैर्नृत्यन्त्यद्रव स्मृताः । दृश्यन्ते ये जनैर्दूराद्धैमच्छत्रवरोदराः ॥ मध्ययुगलं ॥
येषां सिद्धपुरीनाम प्रसिद्धं नृपतेर्गृहं । स्वसिद्धौ कुरुते सिद्धविमानावलिविभ्रमं ।
जीर्णादेवानया यत्र राजधान्यन्तरीकृताः । धृत्यान्यत्या निरस्थित्या सत्यार्था भूभुजा कृता । १३०
यत्र सर्व्वदलच्छेदनिर्भेदोत्पन्नभूस्तनी । सस्यारिष्यूर्व्वरा राज्ञां सफला विहिता धिया ।
एकत्र देशे यत्रामात्यसर्वं श्रीजैनवाटिका । योगिनां पात्रपूजार्थं कृतं भोगाश्रनस्थानं ।
मध्युपुष्करिणीमध्येऽम्भकामस्वादलिप्सया । यत्रेति द्विजराजोऽपि योगिचक्रान्तरे ध्रुवं ।

भूपतिर्भोजयन् योगिसहस्रं मौलदीचणं। निष्कम्पमकरोन्नित्यं किं तपसा किं समाधिना।
आहारमनुतीत्रोयत्कौर्त्या रसवती श्रिया। देव्याय क्रियते यत्र सर्व्वा रसवती प्रजा। ११५
पक्वान्नराशयोऽदभ्रायनाभ्रमुभ्रमप्रदाः। विभ्रत्यभ्रमभ्रकुभ्रमरदर्भ्रशिखोपमां।
यत्राधर्म्मस्टगं हन्तुं शृङ्गनादमिपाङ्कुवं। सफिलसारधारावं श्रूयते मृगयारवः।
सामोदकामनिर्म्मुक्तमोदका यत्र योगिनः। श्रमघर्म्मोदकाजर्थेजाता राज्ञः प्रमोदकाः॥
योगिस्फुरत्कर क्लिष्टदधिदिग्धासनच्छलात्। योगाच्छशिकलाखावास्तत्र वान्ना द्रवाद्युतन्॥ कुलकं॥
मारी नाम नदी तस्मादिनस्थान्तरमागता। केवलं याभवत्पौरस्नानपानप्रयोजना। १२०
हस्तिकर्णाभिधे चैत्रे युक्त्या राज्ञा प्रवेशिता। सिन्धुसङ्गमपर्य्यन्तं निर्म्मिता शालिनालिनी
मृतानां देहदाहेन स्वर्गदो नगरान्तरे। स मारीसङ्गमः ख्यातो जातः सङ्गादितस्तया।
यत्स्वेनपालाः कालेन किङ्कराः पञ्चवारिकाः। पौरेभ्यः शवदाहात्यमगृह्णन् शुल्कमन्वहं।
सपिद्रसमये राजा विज्ञप्तः स मयैकदा। दण्डयित्वा किरातांस्ताञ्छवशुल्कं न्यवारयत्।
ततः प्रभृति तत्स्थाने विमाना नगरान्तरे। दह्यन्ते दर्शनदेषिषिच्छानां हृदयैः समं। १२५
निरर्गलां वयं जाता इतीव शिविकारकैः। छत्रहस्तैः प्रनृत्यन्तो दृश्यन्ते वाद्यनिस्वनैः।
दिगन्तरीयया रीत्या यत्र राज्ञाप्यवारिताः। प्रियानुगमनं नार्य्यं श्रिताभारुह्य कुर्व्वते।
अर्थिसङ्घोपकारार्थं पौराणां सुकृती नृपः। विहारं बहुविस्तारं तत्सङ्गमतटे व्यधात्।
स च हान्थे विहारस्य पारावारे पुरद्वये। स्वहर्म्येणिमणिप्रातनायकश्रियमापतुः।
अन्याः प्रतिष्ठास्तत्कालं राज्ञा स्वस्येन कारिताः।
श्रीहर्षानृपतिर्ब्बभूव कविताराज्ये तदा येऽभवन् सर्व्वे ते कवयः किमन्यदपि ते सदाः श्लेषाभारिकाः।
सत्यद्यापि कृतानि तैः प्रतिस्टहं पद्यानि विद्यानिधेराजा चेद्गुणवान् गुणेषु रसिकोलोकोभवेत्तादृशः। १३०
छत्रमाला विशालास्ता धर्म्मार्थं गुणशालिना। कृता याभ्यः श्रुतः सन्दस्तर्कव्याकरणोद्भवः।
आचार्य्यपुस्तकावाससहायान्नसमृद्धिभिः। पाठयन् सर्व्वविद्यानां सङ्ग्रहयामास मण्डलं।
न विद्यासुखयोः सन्धिस्तेजस्तिमिरयोरिव। इतिं व्यर्थं वचश्चक्रे मुनीनामभयप्रदः।
धीराज्यसुखिते देशे विद्याभ्यासपरायणे। अकाङ्क्षीत् सर्व्वदारोग्यं नृपतेः स्वस्य चान्वहं।
राज्योत्पत्त्या नृपस्तादृक्तुष्टोऽभूत्स प्रतिष्ठया। यथा पण्डितसामग्र्या सामग्र्यामविदद्गुणैः। १३५
येषां स्वप्नेऽपि पाण्डित्यं नाभूत्क्वापि चिदन्वये। तेऽपि भूपप्रसादेन जाताः पाण्डित्यमण्डिताः।
यद्भूता जीवनोपायैर्द्देवेन फलदाः सदा। याताः सहस्रशाखत्वं विद्याः कल्पलता इव।
न सा विद्या न तच्छिल्पं न तत्काव्यं न सा कला। श्रीजैनभूपतेराज्ये नाभूद्या प्रथिता भुवि।
विदुषां मान्यतां दृष्ट्वा भूपतेर्गुणिबान्धवात्। काङ्क्षन्ति क्वापि धामन्ताः पाण्डित्यं नित्यमादरात्।

निदाघकाले विषमः प्रतापोदेहद्रविर्व्या तृणगुल्मपूगान्।
वन्द्यो न केषां घनकालरको यो जीवनैस्ताप्चितताम् करोति। १४०

श्रीकन्धरधरानाथो यवनैः प्रेरितः पुरा । पुस्तकान् सकलान् सर्व्वांस्तृणान्यग्निरिवादहत् ।
तस्मिन् काले बुधाः सर्व्वे प्रोत्सुलोपद्रवाज्जवात् । गृहीत्वा पुस्तकान् सर्व्वान् ययुर्दूरं दिगन्तरं ।
किमन्यद्द्विजवद्देशे सर्व्वे ग्रन्था मनोरमाः । कथावशेषतां याताः पद्मानीव हिमागमे ।
सुमनोवल्लभेनाथ राज्ञा भूषयता चितिं । नवीकृताः पुनः सर्व्वे मधुनेव मधुव्रताः ।
पुराणतर्कमीमांसाः पुस्तकानपरानपि । दूरादानाय्य वित्तेन विद्वद्भ्यः प्रत्यपादयत् ।
मोक्षोपाय इति ख्यातं वाशिष्ठं ब्रह्मदर्शनं । सन्मुखाच्छ्रीवरान्नृपः श्रीमद्वाल्मीकिभाषितं ।
श्रुत्वा शान्तरसोपेतां व्याख्यां स्वप्नेऽपि नो नृपः । अस्मार्षीदभिकाः कान्ताहावभावक्रिया इव ।
यो यद्भाषाप्रवीणोऽस्ति स तद्भाषोपदेशभाक् । लोकेन हि जना नानाभाषालिपिविदोऽखिलाः ।
इति संस्कृतदेशादिपारसीवाग्विशारदैः । भाषाविपर्य्ययात्तत्तच्छास्त्रं सर्व्वमचीकरत् ।
धातुवादरसग्रन्थकल्पशास्त्रोदितान् गुणान् । यवना अपि जानन्ति स्वभाषाक्षरवाचनात् ।
दशावतारपृथ्वीशग्रन्थराजतरङ्गिणीः । संस्कृताः पारसीवाचा वाचनार्थोऽस्त्वकारयत् ।
ब्रह्मैवर्त्तकथासारं हाटकेश्वरसंहिताः । पुराणादि च तद्युक्त्या वाच्यते निजभाषया ।
कश्चिच्छ्रुत्वा शुचिर्वाचि चिरं धर्म्मशास्त्रं पवित्रं धत्ते चित्ते पट इव सितो रञ्जनं तत्क्रियां यः ।
आकर्ण्यान्ये प्रतिदिनममुं पद्मिनीपत्रतुल्याः कुल्याधारा अपि घृतगुणा गृह्णते तन्न किञ्चित् ।
नौबन्धनगिरेर्यात्रामाकर्ण्यादिपुराणतः । तीर्थयात्रोत्सुकं राज्ञः कदाचिदभवन्मनः ।
एकोनचत्वारिंशेऽब्दे पितृपक्षानुवासरे । यात्रादिदृक्षया भूपो जगाम विजयेश्वरं ।
नानावर्णांशुकच्छन्नैः प्रेक्षकैः परिपूरितं । पुष्पाकीर्णमिवोद्यानमद्राक्षीद्रङ्गमण्डपं ।
यत्र वान्दरपालाद्या राजानो वीक्ष्य सद्रसाः । तद्दर्शनायाता हर्षमन्वभवन्निति ।
गगनं तारकापूर्णं दीपाढ्यं रङ्गमण्डपं । यत्रान्योन्यं तुलाशङ्के रात्रौ कविबुधार्च्चितं ।
अमावस्यादिने प्राप्तैर्नानानागरिकामुखैः । शुशुभे शुभदं यत्र शतचन्द्रं भुवस्तलं ।
दीपवृत्तोन्नतो क्वोऽपि यत्र रङ्गान्तरे स्फुरन् । दधे तारकमध्योद्यत्कृत्तिकर्क्षचयोपमां ।
विजयेशादथोत्थाय भूपः पुत्रदयान्वितः । पद्मामुत्कण्ठ्य दुर्मार्गं प्रपेदे वासरैस्त्रिभिः ।
दृष्ट्वा क्रमसरो विष्णुपादमुद्राकृतिं प्रभुः । पादमग्नामजानन्दमविन्दद्भक्तिसुन्दरः ।
महाच्युतशिरयः पतत्तोयरवच्छलात् । अकुर्व्वन् कुशलप्रश्नं हरांशजमहीभुजे ।
कस्तूरीकुसुमश्यामोद्दामागारावनिं गिरेः । दृष्ट्वा तुष्टो नृपश्रेष्ठो योगीवेष्टां हरेस्तनुं ।
अथ नौकां समारुह्य धीवरैः पश्यवेष्टितां । कृत्वा मां सिंहभट्टञ्च चचार सरसोऽन्तरे ।
गीतगोविन्दगीतानि मत्तः श्रुतवतः प्रभोः । गोविन्दभक्तिसंसिक्तो रसः कोऽप्युदभूत्तदा ।
कुञ्जप्रतिश्रुतोमञ्जुर्गीतनादस्तदावयोः । अनुगीत इवात्रेष्टः किन्नरैरागगौरवात् ।
क्षणं सरोऽन्तयरतो हिमवृष्टिनिभादिभोः । भक्तिप्रीतैरिवोन्मुक्तं देवैः कुसुमवर्षणं ।
दृष्ट्वा सरोऽन्तरे श्वेता हिमान्योभ्रमणाकुलाः । तीर्थधामाप्तकैलासाट्टभङ्गिभ्रमं व्यधुः ।

सत्यं विख्यवतारस्य येन भक्त्या प्रदक्षिणं । चौन्यारानकरोन्नूनं ज्ञातुं स्वक्रमविक्रमं । १९०
योऽभूदागमसिद्धार्थो नौबन्धनगिरिस्तदा । प्रत्यक्षतः कृतो राज्ञा बद्धा नौकां यदागतः ।
सुकुमारसरोयावत् सुकुमारः स्मरन् पथि । सुकुमारोऽम्बुपानेन सुखं पुण्यमिवाप्नुवत् ।
शृण्वन् स्थानाभिधाः पुण्याः स्पृशंस्तीर्थजलं शुभं । पिबन् प्रतुदिनं तोयं पश्यन्घनतरुश्रियं ।
जिघ्रन्नोपधिपुष्पाणि पञ्चेन्द्रियसुखप्रदां । तीर्थयात्रां विधायेत्थं नगरं प्राप भूपतिः ।
इति जैनराजतरङ्गिण्यां क्रमसरोयात्रावर्णनं नाम पञ्चमः सर्गः ॥

ततः क्रमसरस्तुल्यं राजा पद्मपुरान्तरे । तत्कौतुकापनोदाय चक्रे जैनसरोनवं । १९५
फुल्लत्कुङ्कुमपुष्पाघस्थामीभूतस्थलच्छलात् । शरदीवागता प्रीत्या यमुना यत्सरोवरं ।
कुलोद्धरणनागाख्यमण्डिते यत्तटे नवं । राजद्राजगृहं राजा राजराजोपमो व्यधात् ।
उच्चैःपदस्थममलं रुचिरञ्जिताशं सम्पूर्णमण्डलमखण्डकलाकलापं ।
राजानमीशमवलोक्य हृतोपतापं काङ्क्षन्ति के न नितरामपि दूरसंस्थाः ।
दिगन्तरीया भूपालाः श्रुत्वैतद्गुणगौरवं । नानोपायनवैधौघैर्ववृधुर्नितराममुं ।
वेगेन जितवायुं स्वं ताजिकाख्यं तुरङ्गमं । उपदां व्यसृजत् सख्यादुच्चं पञ्चनदप्रभुः । २००
किन्नरोऽश्वमुखः ख्यातः कण्ठानृत्यं न वेत्त्यसौ । इतीव नाव्यं योदर्पाद्वराह्वोऽकरोत्पथि ।
प्रवालहस्तः षड्रश्मिः सुखलीनः सुलक्षणः । यथासावहमित्यन्तु नामदिष्टास्य ताडनं ।
पादैश्चतुर्भिः शुद्धो योऽसुखमध्येन चावहत् । कल्याणपञ्चकख्यातिं कल्याणाभरणोज्ज्वलः ।
माण्डव्यगौडभूमीशः खलश्चेयोमहीपतिः । अहतुपन्दरन्दामनामवस्त्रैरुपाहितैः ।
इतोऽस्मै नृपोऽभव्यं काव्यं कृत्वा स्वभाषया । प्राहिणोद्रूव्यसंयुक्तं सव्यसाच्यपजोपमः । २०५
सोऽप्यनर्घैः पदार्थैर्न तथा तुष्टो महीपतेः । सालङ्कारैर्यया भूपकाव्यस्यातिमनोहरैः ।
यच्चं नारीकुञ्जराख्यं कुम्भराजो विसर्जयन् । अहरद्धृदि तच्क्षेपनारीकुञ्जरकौतुकं ।
राजा तुगरसेहाख्यो गोपालपुरवल्लभः । गीततालकलावाद्यनाट्यलक्षणलक्षितं ।
सङ्गीतचूडामण्याख्यं श्रीसङ्गीतशिरोमणिं । राज्ञे गीतविनोदार्थं गीतग्रन्थं व्यसर्जयत् ॥ युग्मं ॥
तस्मिन् राज्ञि दिवं याते कीर्त्तिसिन्धो महीपतिः । तत्पुत्रः पितृवत्प्रीतिमरचत् प्रहितोपदः । २१०
मण्डलीकाधिपो राजा स्वराष्ट्रनगराधिपः । प्राहिणोन्नृपते. प्रीत्या स्वलामकमनीयकं ।
चित्रवर्णाक्षसत्पत्रवल्ल्यशोभान् महीपतेः । पक्षिणोऽमुचुकुन्दाख्यान् प्राहिणोदक्षिसुन्दरान् ।
जिघांसया चरन् सोऽपि भूपतेः प्राक्तनैर्गुणैः । बद्धो हिंस्रोऽपि डिम्भो वश्योरसकोपमः ।
कश्चिच्छ्रीराजहंसस्य राजहंसयुगं ददौ । अन्ये हंसा यदुत्पन्ना राजहंसमरञ्जयन् ।
सरस्वन्तमेमन्तस्ते निर्दाराः पंक्तिपावनाः । तरङ्गतरलोत्तुङ्गश्वेतोत्पलतुलां दधुः । २१५
सुरत्राणमहीपस्य यश्चिवाज्ञा स्वयम्भोः । मूर्ध्ना मन्दारमालेव भ्रियते दिगधीश्वरैः ।
यस्यायुधोर्जितकराः किङ्कराः प्रभयङ्कराः । यमस्य पार्पितकरा यचरन्स्मरणोत्तवे ।

उत्तराशाधिपोमेच्छोभीषैदः स महीभुजे । उपायवेषरीयुक्तं व्यस्टजत्तोपधिस्थरं ।
कतेहयोहसम्नातस्यातवस्त्राद्युपायनैः । महम्मदसुरत्राणोगूर्जरीशोऽप्यहृतुपत् ।
गिलानमेसमक्रादिदेशाधीशा हितेच्छया । दुर्लभोपायनैस्तैस्तैर्न के भूपमरञ्जयन् ।
अनन्याः शिल्पिनः कल्पवृक्षकल्पसमं न के । भङ्गाद्वायसुर्दूराच्छिल्पकल्पितकल्पनाः ।
काश्मीरिका श्रयन्त्यस्य तुरीवेमादिचातुरीं । कौशेयकं वयन्त्यद्य बहुमूल्यं मनोहरं ।
और्णक्षौमादयोवस्त्रविशेषादूरदेशजाः । काश्मीरिकाश्च भान्त्यद्य समर्थास्ते नृपोचिताः ।
विचित्र वयनोत्पन्ननानाचित्रलताकृतीः । दृष्ट्वा चित्रकरा येषु जाताश्चित्रार्पिताइव ।
अनन्ततन्तुसन्तानवर्णविच्छित्तिसुन्दरः । बभौ कौशेयकख्यातो देशोवेशश्च भूपतेः ।
नानावर्णविशेषचित्रकटकालङ्कारसारोचितोविद्यामानवराजितोऽतिसुखदः कौशेयताख्यातिमान् ।
श्रीमान्नित्यमहोज्ज्वलोऽतुलगुणः सत्तन्तुसम्पत्तिभृद्राज्ञा तेन विशेषितोनिजधिया वेशोऽपि देशोऽपि वा ।
इति जैनराजतरङ्गिण्यां चित्रोपचयशिल्पवर्णनं नाम षष्ठः सर्गः ॥

दाता भवेत् क्षितिपतिर्यदि सादरोऽयं लोकोऽपि दर्शयति तत्वकलाकलापं ।
वर्षासु वर्षति घनो यदि चातकोऽपि नृत्यन्मुदा भवति तज्जनरञ्जनाय ।

अथोत्तरपथाद्दानख्यातकीर्त्तेर्महीभुजः । रज्जुभ्रमणशिल्पज्ञः कोऽप्यगाद्यवनोऽन्तिकं ।
विंशप्रस्थाभिधे स्थाने कदाचिद्यवनोत्सवे । तं द्रष्टुमगमद्राजा परिवारविभूषितः ।
धनुर्दण्डशतायामान्तरस्थान्दीर्घरज्जुभिः । उच्चान् स्तम्भानबध्नात्स स्वशिल्पप्रथनोद्यतः ।
अभवन् कलुषास्ते ये नागा रज्जुपुरादिषु । भाविस्तम्भकभूपालदेहानिष्टेक्षणादिव ।
अथो भूभागलग्नैकरज्जुमार्गेण निर्भयः । आरोहमकरोत्तत्र पतत्रीव नभोन्तरे ।
निपातास्खलितां तत्र लोकचित्तानुरञ्जिकां । कवितामिव शिल्पज्ञाचित्रां पदगतिं व्यधात् ।
अनीचवर्त्तिनस्तस्य ग्रहस्येव फलप्रदा । सुरशिराशिगस्याले बभूवाश्चर्यवत्तृणां ।

कृत्वा सुखं सुरुचिरं सुचिरं विधाता दुःखं पुनर्जनपदे जनयत्यसह्यं ।
वर्षं प्रदर्श्य जलदः कृषिकर्षहेतुं नेतुं फलं वितनुते करकाविकारं ।

सौराज्यसुखिते देशे नरेशे निरुपद्रवे । अकस्माद्दुःसहान् जातानुत्पातान् ददृशुर्जनाः ।
इत्यातङ्कागमे सेतुर्हेतुः सर्व्वजनक्षये । अथोत्तरदिशा रात्रौ धूमकेतुरदृश्यत ।
दीर्घपुच्छोच्छलत्कान्तिस्तत्केतुकपटाद्ध्रुवं । कालेन क्षुधितं क्षिप्रं क्षयायेव महीक्षितां ।
मासद्वयं स्फुरन्नाशोत् स व्योम्नि विमले सदा । सदये हृदये राज्ञश्चिन्तोघोऽनिष्टशङ्कया ।
अदृश्यन्त सदा श्वानो विक्रोशन्त. पुरान्तरे । शुचेव रुदिताक्रन्दा भाविविभ्रेक्षणादिव ।
एकपक्षेऽभवच्चन्द्रसूर्यग्रहणसंस्थितिः । एकपक्षमिवादातुं राज्यं राजविपर्ययात् ।
सूर्यसङ्क्रान्तयः क्रूरदिनेष्वासांस्तदा विशां । भाविक्रूरहलोत्पादसादचिन्तनभीतिदाः ।
मन्निर्माता क्षयं यास्यत्ययं किमिति दुःखिता । राजधान्यहदच्छत्रतलोलूकध्वनिच्छलात् ।

दृष्टोऽम्बरे द्वितीयस्यां सुधांशुस्तत्र तैर्जनैः । उत्पातइव भूपेशमन्यं सूचयितुं विशां ।
अत्रान्तरे महाघोरमनाहूतिकृतं भयं । उदभूदन्यदेशेषु दुर्भिक्षोपद्रवावहं ।
भिक्षुकानन्यदेशीयान् प्रेतरूपानिहागतान् । दृष्ट्वा पृच्छन्नृपस्ते च वार्त्तां तस्याब्रुवन्निति ।
राजन् देशेष्वनेकेषु दृष्ट्यभावात्समन्ततः । सर्व्वान्तकृत् कालइव दुष्कालः समुपस्थितः ।
दुर्भिक्षेण प्रभवतां मणीनां सा महार्घता । गता नीचैन साधूनामिव सर्व्वोपयोगिनां ।
भुञ्जते स्वादयोऽन्योन्यं पिशितं क्षुदुपद्रुताः । तत्तच्छून्यमहान्तःस्थानि शोषितशवप्रजाः ।
स्पृष्टोच्छिष्टतया दृष्टप्रायश्चित्तादिनिष्ठिताः । क्षुधा द्विजवरादेवमयाताः सर्व्वभक्ष्यतां ।
क्वापि विप्रस्त्रियस्तत्तदभक्ष्यान्वीक्षणक्षमाः । पक्वान्नं सविषं भुक्त्वा स्वमन्योन्य व्यसून्व्यधुः ।
अनिच्छ्या वसतिं त्यक्त्वा गते क्वापि मृते जने । शून्याः केन पुरग्रामा दृष्टा राजन्पदे पदे ।
प्रीतिं स्नेहञ्च दाक्षिण्यं पत्न्यां पुत्रे पितर्य्यपि । कुक्षिम्भरिः क्षुदुत्तप्तोविसस्मारत्वयनो जनः ।
खुरासानावनीशक्रं विक्रान्त्या प्रचुभूमिगं । अन्नाभावाङ्गवान् मित्रमभिषेणेन निर्गतं ।
मेर्जोभीषिदनामानं सुरत्राणं रणान्तरात् । दराकभूपतिर्बद्धावधीत् कोटिबलान्वितं ॥ युग्मं ॥
तस्य दुर्य्योधनस्येव वद्धस्य हरणक्षणे । अभूसंख्यान्तरेऽसङ्ख्यातुरुष्कनृपतिक्षयः ।
देशेषूकृतदुष्कालबलाबलविपर्य्ययात् । अन्योन्यनृपयुद्धेन विन्निदेव पदे पदे ।
सुखप्रदं भवद्देशं श्रुत्वाप्यादिसमृद्धिभिः । आगतांस्त्वद्वमापाल रक्षास्मान्विक्षतान् क्षुधा ।
श्रुत्वेति वार्त्तागार्त्तांस्तां जानन्निव निजां प्रजां । द्रव्यकोटिं ददौ राजा तदर्थे करुणाकुलः ।
अत्रान्तरे स्वयं सिद्धकृतं स्वय्यपुरं महत् । समस्तं वह्निना दग्धं शून्यारण्यमिवाभवत् ।
क्रमराज्यस्फुरत्राज्यराज्यतन्त्रक्रियाङ्कितं । भूर्जभाण्डादि तत्रस्थं समस्तं भस्मसादभूत् ।
प्राक्षो जैनगिरिश्चेत्रे सप्तमांशोऽत्र भाविभिः । इति ताम्रमये पट्टे कल्पं यस्यां व्यधान्नृपः ।

श्रीमाञ्जैनोल्लाभदीनोययाचे सर्व्वान् भूपान् भाविनोजैनगिर्य्यां ।
छष्टोत्पाद्यं स्वैर्धनैर्भूमियाच तस्याः प्राञ्चः सप्तमांशो भवद्भिः ।

जलावतरणं कृत्वा गिरौनुल्लङ्घ मल्लनः । पुष्पकेतुरयं सेतुर्व्वर्द्धनीयः शुभेच्छया ।
इत्थं ताम्रमये पट्टे श्रीवत्काशीप्रनिर्म्मिता । प्रशस्तिराशीत्ता राजधानीवक्त्रेरस्व च ।
प्रदीप्त सुकृतोत्कर्षदवाश्वैव महीपतेः । अरचद्राजधानीं तां मध्यस्थामपि पावकः ।
श्रुत्वा दग्धं पुरं राजा शुचा दग्धो विदग्धधीः । अचीकरन्नवं तूर्णं चारु दारुमयैर्गृहैः ।
राजा वराहमूलीयां राजधानीं पुरा कृतां । आनीय विदधे तत्र राजवासं नवं महत् ।
तन्वायकनृपागारं सेतुमत्तोम्भितं नवं । क्रमराज्यश्रियो हारं सारं स्वय्यपुरं व्यधात् ।
सेतुमत्तोम्भिते तत्र गृहश्रेणिगणोल्लसे । राजधानी स्फुरच्छ्वा धत्ते मध्यमणिश्रियं ।

मानुष्यकं नववसन्तनिवाप्य चञ्चं लोकालताइव लसन्ति नरे वनेऽस्मिन् ।
तदात्मवायचिकराइव पुष्पपूगाः खिन्ना दिनानि कतिचित्तरुं प्रयान्ति ।

विहगेष्विव जातपक्षपूगः पुरुषेषु प्रभवेत्कुटुम्बवर्गः ।
सुखगत्युचितोऽपि तत्प्रतिष्ठो न चिरन्तिष्ठति कायकष्टदायी ।

अत्रान्तरे दिवं याता सर्वोधाख्यातनामिधा । श्रीमत्सैदान्वयोद्व्योमचन्द्रिका नृपतिप्रिया ।
यत्संयोगसुखं प्राप्य सोऽभ्यासीत्सफलस्मयः । तद्वियोगाद्विदग्धाङ्गः सर्वं शून्यमिवाविदत् ।
न्यस्तो राजेन्दुना सिन्धुदेशे योगुणसुन्दरः । स्वत्राणेन सुरत्राणपदे प्राणाधिकप्रियः ।
श्रीक्यामदेनं सिन्धीशं भागिनेयं सुतोपमं । सम्बताद्विमनामा तं हतं युद्धेऽशृणोन्नृपः ।
परमाश्वासनोपायः सुखे दुःखे च योऽभवत् । तदा तन्मरणं राजा भुजच्छेदमिवाविदत् ।
दर्याखानादिस्तो याभून्मन्त्रिसभा नवा । सीतामित्रैः समं सर्वा सा ययौ स्मरणीयतां ।
समन्तादेव विभुप्रश्नकार्य्योत्पादितसौहृदः । तत्कालं प्रमयं यातो दाता मेरखुराह्वदः ।
दुर्व्वार्त्तामन्वहं शृण्वन्नार्त्ता जानन्निजां प्रजां । स्वसुतान्योन्यवैरेण चिन्तातप्तोनृपोऽभवत् ।
अतीतान् बान्धवान् भृत्यान् सखीन् प्राणसमान् स्मरन् । स्वात्मानमविदद्राजा यूथभ्रष्टमिव द्विपं ।
अत्रान्तरे राजसूनोर्हाज्यखानस्य रुक्जं । अस्वास्थ्यमुदभून्नित्यं मद्यपानातिसेवनात् ।
शौर्य्यौदार्य्यनिधेः सूनोरतिप्रियतया तया । राज्ञ्यैवोद्यता राजहृदुद्याने फलाचिता ।
तदाभून्नीरसप्राया तदस्वास्थ्यदवाग्निना । अथानीयान्तिकं दृष्ट्वा सविकारं भृशं कृशं ।
स्नेहादित्यब्रवीद्राजा पुत्रं मन्त्रिसभान्तरे । अहो पुत्रफलं लब्धं दोषासक्तेन पानजं ।
येनेदृशी दशा प्राप्ता चन्द्रेणेव क्षयावहा । स्वार्थोपेक्षी हितः कोऽपि भृत्यस्ते नास्ति रक्षकः ।
पानव्यसनसंसक्तं यस्त्वामुपदिशत्यलं । कियन्तोऽद्यतना भोगाश्चमत्कारकरास्तव ।
किमेकेन भवान् ग्रस्तो विषयेण पतङ्गवत् । अस्मिञ्जन्मनि सामग्री येयं प्राप्तान्यदुर्लभा ।
प्राप्ता नैवेदृशी भूयो यदि दुर्व्यसनो भवान् । किं चिरन्तनवृत्तान्तैर्हस्यादीनां समीरितैः ।
मद्येनातनु भूपाला दृष्टनष्टा विचार्य्यतां । तथाहि सवलारातिगणतूलसमीरणः ।
मल्लिकजसथा योऽभून्मद्राज्यादिनिधानभूः । तेनापि दृष्टं दुष्टं प्राङ् सोऽत्यर्थी तत्सुवञ्चकः ।
तस्य पुत्रोऽभवच्छाद्विमसोदः प्रमये पितुः । सर्वं स्वारितवान् क्षीवः कुर्वन्कर्म तु चेष्टितं ।
मन्न प्रकृतिधात्वाढ्यं तन्मल्लिकपुरं महत् । कुपुत्र व्यसनाद्यातं देहवत् स्मरणीयतां ।
मद्यं यत्नोद्धितं वर्णं विभर्त्ति चषकान्तरे । जाने पापप्रवृत्तानां रुद्रकमिव जायते ।
न मद्येनामुना तुल्यः शत्रुरस्ति हि देहिनां । सेवितोहितकृच्छत्रुर्मद्यं हन्त्यति सेवितं ।
मैरेयमदमत्ता यां कुर्व्वन्त्यनुचितां क्रियां । उन्मत्तोऽपि न तां कुर्य्याद्यस्य तस्मात्पलायते ।
मद्यरूपेण वेतालः प्रविश्य हृदयं क्षणात् । न केषां हरते प्राणान् सदासंहृदितक्रियं ।
विषेण वामुना पुत्र पीतेनासीदृशी दशा । पाहि स्वं त्यज सावद्यं मद्यमद्यप्रभृत्यतः ।
न चेत्त्यजसि मूढस्त्वं व्यसनार्पितमानसः । अचिराद्दूषितो लक्ष्म्या प्रक्षीणायुर्भविष्यसि ।
श्रुत्वेति राजपुत्रस्य स्वपितुः सम्मतागिरः । त्वदाज्ञां न विना मद्यं पिवामीत्युत्तरं व्यधात् ।
दीप्त्युज्झितं क्षीणदशं मन्दमस्नेहभाजनं । सुतं दीपमिवैक्ष्याभूद्भूपो मोहतमोहतः ।

उपदेशगिरः प्रियाः श्रुतौ गतभाग्येषु भवन्ति जन्तुषु। विपदभ्युदये पुनः स्थिता न मयात्रापि किमित्यहन्तुदाः।
अथ खावषयं गत्वा सोऽपिवचन्त्रितोऽपि सन्। विपवद्भ्यवनात्मानामुपदेशो निरर्थकः।
तावत्ता स्नेहमाशङ्क्य राजपुत्रेति मन्त्रिणः। आदमखानमोनिस्पृहढचेदैर्दिगन्तरात्।
अनुजागमनत्रासाधया यातोऽग्रजः पुरा। तथाग्रजागमत्रासादनुजो याति देशतः।
एतत्कलहनिश्चिन्तः प्राग्वत्स्यां निजमण्डले। इति बुद्ध्या सदैवेऽस्य कृतोपेक्षो नृपोऽभवत्।
हाज्यखानात्मजः श्रुत्वा तं पितृव्यं समागतं। युयुत्सु प्राप पर्षात्मन्यत्क्वा राजपुरीं ततः।
आर्द्रीढकोटमाश्रित्य भ्रातृपुत्रपितृव्ययोः। कश्मीरागमनद्वेषादभवद्युद्धमुद्धतं।
दृष्टं हसनखानस्य चमितं बलशालिनः। विना पैतामहीमाज्ञां नागाद्देशोत्सुकोऽपि सन्।
अग्रजेऽभ्यन्तरं प्राप्ते द्वारस्थे लघिते पितुः। हाज्यखानोऽनुजयुतो युक्त्या साम प्रयुक्तवान्।
दिव्यं सौसुलदेवेन ते कृत्वापि परस्परं। नात्यजन् हृदयादेवं कार्पण्यमौर्णादिवांशुकाः।
अहो गुहायामेकस्यां प्राप्ता सिंहचतुष्टयी। एतदन्योन्यवैरोत्थानाशोऽयं समुपस्थितः।
राज्ञोदेशस्य खानानां परिवारस्य मण्डले। सर्व्वांस्तान् मिलितान्दृष्ट्वा प्रोवाच सकलो जनः ॥ युग्मं ॥
अथान्तरे दयोर्दिष्टं कनिष्ठं श्रेष्ठमात्मजं। विचार्यानीय बह्रामखानं सविजनेऽब्रवीत्।
बह्राम ज्येष्ठोभ्रातायं दिष्टोद्येष्टितैः कृतः। स्वतपूर्व्वापकारोऽयं हितो जातु न ते भवेत्।
अन्ये यं सेवसे भक्त्या दुराशायस्तमानसः। स कथं स्वं सुतं त्यक्त्वा कार्य्ये त्वां समपेचते।
तस्मात्त्वं पैशुनाचारं मा कृथा भाविदुःखदं। मदेकशरणो भूत्वा कालं नय ततोऽचिरात्।
प्राप्स्यन्ति सम्पदः सर्व्वा न्यायमार्गस्थितस्य ते। अन्यथा तैलतप्तायःकटाहकरणीनिभः।
तद्वैरानलमध्यस्थो मुग्धदग्धो भविष्यसि। श्रुत्वेति स पितुर्वाक्यं मुग्धधीरब्रवीदिदं।
देव मे पितृवत्स्नेहं हाज्यखानः करोत्यलं। सेव्यः स एव मे भाति तं त्यजे नैव जातुचित्।
रचिष्यति स मां काले कोऽन्योऽस्मादधुना बली। श्रुत्वेति भूपः प्रोवाच क्रुद्धस्तं कृतनिश्चयं।
हा धिक् मां परित्यज्य पितान्योऽङ्गीकृतस्त्वया। दृष्टिर्यो विहिता मूढ मोऽसहज वचने मम।
तस्यानाशोऽचिरेणैव भविष्यति न संशयः। इत्युक्त्वा प्रतिमुच्यामुं स्वान्तरेवमचिन्तयत्।
अहो प्रदीप्तामत्तोऽमी जाता विषदृशाः सुताः। चयोऽमी दहनागारादिव हा भस्मपुष्टयः।
अयोग्या दीप्तिरचितौ काष्ठाः कष्टावनिष्ठिताः। कदाचिद्विजने राजा सुतानिष्टाविशङ्कितः।
अधुना करणीयं किं मयेति व्यक्तमब्रवीत्। तत्समचं बुधा येऽपि तत्प्रसङ्गादभाषिरे।
राजसुतायते देशोराज्यलुब्धैः सुतैस्तव। एकस्यैव निजं राज्यं किं नार्पयसि योचितः।
व्याकुलत्वं विशो येन तव न स्याच्च भूपते। तथापि माणिक्यदेवः श्रुत्वामुं सबलं स्त्रिया।
वैरी स्वाधिन देशस्य सर्व्वनाशोऽचिराद्भवेत्। इति श्रुत्वाब्रवीत् पुत्रस्वभावेचणदचधीः।
स्नेहः श्रेष्ठोऽस्ति किन्त्वस्य कार्यज्ञो येन सेवकाः। न सन्ति तादृशा येषां राज्यं दार्ढ्यमवाप्नुयात्।
मध्यमोऽतीव दातास्य प्रभुपायसमन्निभे। युधं चेत् स्याद्व्ययात्मास्य कर्षमात्रोऽवशिष्यते।

कनिष्ठोदुष्टधीः पापनिष्ठोऽस्मादचिरात् सभा। नष्टा स्यात्सुतं श्रेष्ठं जाने कमपि नोचितं।
मया तावत् स्वयं राज्यं कस्मात्रपि न दीयते। गते मयि बलं यस्य स प्राप्नोत्विति मे मतं।
सहवो न मरिष्यन्ति यदि तन्मम कोगुणान्। गणिष्यति यतः स्थित्या द्वयोर्भेदोहि लभ्यते॥ कुलकं॥
ध्वान्तं पतेद्यदि न दिक्षु जनस्य दृष्टिर्निःश्रेण चेद्यदि मुषन्ति न तस्कराद्याः।
सङ्कोचमेति गुणवान् यदि नाम नासौ जानाति यो दिनमणिं परलोकयातं। ११
स्ववीर्य्येणार्ज्जितं राज्यं योजितं स्वधिया मया। कुपुत्त्रैर्नाशितं सर्व्वं परस्परविरोधिभिः।
सप्ताङ्गन्धातुसम्बद्धं राज्यं देहमिवोर्ज्जितं। दोषैरिवैतैः पुत्त्रैर्मे त्रिभिस्संदूषितं नु यत्।
तत्स्वास्थ्यमासादयितुं शक्ताः पथ्यचिकित्सया। सन्मन्त्रिणोऽगदङ्कारा न सन्त्यद्यतने क्षणे।
भुक्ता भोगाश्चिरं शास्त्रगीतकाव्यविनोदनैः। वयः सफलतां नीतं कार्य्यं किमपि नास्ति मे।
देशस्य यावत्युत्पत्तिर्नवा तत्त्रिगुणा मया। सम्पादिता प्रजास्नेहात्कुल्याकर्षणयुक्तिभिः। १२
सर्व्वदर्शनरक्षायै पात्राण्यालोच्य सर्व्वतः। प्रतिपद्य शुभे काले भूर्नवा धर्म्मसात्कृता।
सच्छिद्रमधुना राज्यं वदने रदनोपमं। तुदति प्रत्यहं तस्मात्तत्यागेन सुखं मम।
चौराणामिव दीपोऽहं येषामस्थिगतोऽस्म्यहं। अचिरात् सगुणस्थित्या ते स्युरनुशयार्दिताः।
शाम्यन्ति न चिरं तेऽपि मद्विष्टा ये सुतादयः। सकलाः प्रलयं यान्ति भुक्त्वा धान्यफलं न किं।
युक्त्या निर्य्याणमेवास्य जीवस्येच्छामि साम्प्रतं। येन सर्व्वे भविष्यन्ति पुत्त्राः पूर्णमनोरथाः। १३
श्रुत्वेत्युक्तिं सदुःखस्य नृपतेस्ते ऽब्रुवन्पुनः। देवेदं चेन्मतं तत्किं कोषोऽयं रक्ष्यते महान्।
परलोकस्य पाथेयं कुरु जीवन्नमुं व्ययं। तदाकर्ण्याब्रवीद्राजा युक्तमुक्तमिदं वचः।
किन्तु शृण्वन्तु मे हेतुं यत्कोषोऽयं स्थितोऽस्ततः। मयि प्रमीते मद्राज्यं मत्पुत्त्रः कोऽपि चेल्लभेत्।
मत्सञ्चयेन तृप्तः स प्रजायाः स्वन्नर्जयिष्यति। पुत्त्राधिका प्रजेयं मे रक्षणीया विभाति या।
तस्याः पीडां भविष्यन्तीं हरिष्ये सञ्चयादतः।
पूर्णो विलासान् कुरुते प्रजेशोरिक्तः प्रजापीडनमातनोति। तृप्तो मृगेन्द्रो रमते गुहान्तं भुङ्क्ते क्षुधार्त्तो वनजन्तुवर्गं। १४
मत्सञ्चयोपकारेण भाविभिः पीडनोज्झितैः। आयतिज्ञं वदद्भिर्मां करिष्यन्ते न गर्हणाः।
पूर्णाद्राजगृहादन्ये पूर्णाः स्युरुपकारकाः। नयन्त्यब्धेर्न चेत्तोयं भूमौ वर्षन्ति किं घनाः।
इयं या सामग्री भवति नृपतेः सर्व्वरुचिरा धनेनैकेनैव प्रभवति चिरं सा प्रभवता।
फलं पत्रं पुष्पं समदयति यद्विटपिनोधरस्थस्तम्भूतो जनयति तदेकोरसगुणः।
स दीर्घदर्शिनोवाक्यं श्रुत्वेति पृथिवीपतेः। आसंस्तेषां कर्णोरस्तद्द्वये ते निरुत्तराः।
राजवेश्मनि पयोनिधौ च या वाहिनीभृति पदार्थपूर्णता। जीवनात्मजनयाचकाचिता सैव तस्य सुषमा समाहिता। १५
यद्यदुक्तं नरेन्द्रेण स्वला तत्तत्फलेक्षणात्। न कः प्रशंसति स्मोकास्तदीयां दीर्घदर्शितां।
सचिवाः सेवकाः पुत्त्रमित्रसम्बन्धिबान्धवाः। दुःखापनोदं कुर्वाणाः केऽपि नासन्महीभुजे।
राजा गर्भगृहान्तस्थः शृण्वन् पुत्त्रस्थितिं मिथः। स्वतकप्रेमवैराभ्यां न वहिर्निर्ययौ क्रिया।

संसारदुःखशान्त्यर्थं मत्तोव्याख्यानवेदिन । अष्टाणेन्द्रणरात्रं स श्रीमोचोपायसंहितां ।
स्वकण्ठस्वरभङ्गाद्यमुदृत्तपरिवर्त्तनैः । व्याख्यामकरवं येन निःशोकोऽभूत्तदाणं नृपः । १६०
भ्रमस्य जाग्रतस्तस्य जातस्याकाशवर्णवत् । अपुन.स्मरणं साधोर्मन्ये विस्मरणं वरं ।
दीर्घस्वप्नोपमं विद्धि दीर्घं वा प्रियदर्शनं । दीर्घं वापि मनोराज्यं संसारं रघुनन्दन ।
यदि जन्म जरा मरणं न भवेद्यदि वेष्टवियोगभयं न भवेत् ।
यदि सर्व्वमनित्यमिदं न भवेदिह जन्मनि कस्य रतिर्न भवेत् ।
यतोयतोनिवर्त्तेत ततस्ततोविमुच्यते । निवर्त्तनाद्धि सर्व्वतो न वेत्ति सुखमण्वपि ।
मद्व्याख्याश्रवणाभ्यस्तान् स्वावस्थासूचकान्बहून् । इत्यादिकान् स्वयं श्लोकानपठत्स महीपतिः । १६५
मोचोपाये श्रुते मत्तस्तत्तत्पद्यार्थभावनात् । अथैकदाब्रवीद्राजा विबुधानन्तिकस्थितान् ।
किमर्थं स्वसुतस्नेहं करोम्येकोन ते हिताः । इत्येव वक्ति मे नूनं कर्णोपान्तागतोजनः ।
अस्थिदन्तादिभिर्भुक्ता मांसं मांसेन भुज्यते । रक्तबीजमये भोगे भ्रमोऽयं न व्यपैति मे ।
अहो मयि स्नेहो सर्व्वसुखदे च्छिद्रकारिणः । नाशायामो सुताजाताराह्नवे क्रिमयोयथा ।
येस्समं स्ववयोनीतं तेऽवशिष्टा न केचन । आजीवनं चरत्येषा तद्वियोगविषव्यथा । १७०
देहोटजमिदं जीर्णं केशतृणगणावृतं । सच्छिद्रं रोचते नाद्य दुर्दिने मन्मनोमुनेः ।
भुजगैरिव दष्टानि राज्याङ्गानि सुतैर्मम । तत्त्यागोपायएवैकोयुक्तोमे नान्यथा सुखं ।
इत्यादि चिन्तयन्राजा पारसीभाषया व्यधात् । काव्यं श्रीकाथताख्यं स सर्व्वगर्हार्थचर्व्वणं ।
राज्ञोधात्रेयपुत्राद्याः प्रमेयैरपि सत्कृताः । भूपपक्षं परित्यज्य हाज्यखानमुपागमन् ।
किमन्यद्भक्तसेवाक्ति ये दृष्टा नृपसन्निधौ । अलब्ध्वन्तु निशि स्वैरं ते खानाये गतत्रपा. । १७५
तादृश्येन स्थिते राज्ञि तद्भृत्यानां परस्परं । तत्तदाक्षेपतो देशे कोऽप्यजृम्भत विप्लवः ।
भविष्यन्निव सायाज्यस्यार्द्धभागो न कस्तदा । नृपुत्रेषु नु रक्तोऽभून्नतु राज्ञि सुखस्थिते ।
इत्थं स्वमृत्यसञ्चारदुराचार विचारणात् । परिवारान्निजान् सर्व्वान्निर्व्विषोऽभून्महीपतिः ।
अद्य ये स्वान्तिके दृष्टाः प्रातः खानान्तिके श्रुताः । दार्ढ्यं कुत्रापि नो प्रापु. सारसादव सेवकाः ।
इदृशो वर्ण्यते यस्मै तादृगाश्वासभाजनं । तत्कालं सेवको भक्तो दृष्टः कोऽपि न भूभुजा । १८०
यश्लोकं यच्च नो दृष्टं यच्छ्रुतं वा कदाचन । निर्यन्त्रणो जनः प्रोचे प्रत्यहं राजमन्दिरे ।
स्वभ्रातृकलहकापस्तत्तत्पैशुन्यकर्मणा । बहामखानेऽनर्थानां कर्णो मूलमिवाभवत् ।
स्निग्धोऽयमित्यवगते यदि काष्ठखण्डे दण्डे प्रदीपपदवीपरिदीपिताग्रे ।
किं स ज्वलन्नपि करोति चिरं प्रकाशं दीपं न कं वितनुते निजकज्जलौघैः ।
प्राणत्राणाय राज्ञोऽमात्यैस्तथा पर्यवेक्षिता । अभूदादमखानः स विचार्णोऽप्यात्मरक्षणे ।
भ्राता मम जिघांसुं मां बहामोद्वेषनिष्ठुरः । अहमेकोऽवनस्तन्मे गतिः कान्या त्वया विना ।
नात्यसाम्भ स्वजीवाशा तत् स्वात्मा रक्ष्यतां विभो । त्वयि जीवति राज्यस्थे भयं मम न विद्यते ।

कुर्व्वन्त्यन्ये तदास्कन्दमन्योन्यरणोद्यताः । इत्यादि वार्त्तां श्रुत्वास्य बभूव भयविह्वलः ।
इत्यप्रमादमत्तानेन कदाचित् ज्ञापितो नृपः । ऊचे तं नास्ति मे लोभो राज्ये वा निजजीविते ।
गच्छ कापुरुषाव त्वं विप्रार्थं किमिहागतः । इत्थं निर्भर्त्सितः पित्रा कुद्रदीनपुरीं गतः । *
अनुजास्कन्दभीतोऽभूत् स्वरक्षणकृतक्षणः ।
लुब्धेऽमुष्मिन् भवति हि सुखं सर्व्वदेवेति बुद्ध्या यः संहर्त्तुं रिपुकृतभियो रक्षणीयोऽत्र भाति ।
तत्तन्त्रस्थो यदि भवति स स्वात्मरक्षाक्षमश्रीभाण्डग्रामादिव तुरगतः प्रस्तुतोपद्रवः स्यात् ।
पित्रास्मदर्थमानीतो ज्येष्ठो दिष्ट्या भयाय नौ । इति क्रुद्धौ सुतौ श्रुत्वा चकितः स नृपोऽभवत् ।
राजा च राजपुत्राश्च तदमात्यपुरोगमाः । अन्योन्याशङ्किताः सर्व्वे न निद्रामुपलेभिरे ।
भोगोपचारं सन्त्यज्य तत्कालन्तेषु सेवकः । यत्तज्जिह्वोपकारेण रञ्जयन् स्वामिनो निशाम् ।
कर्त्तव्यमादिशत्किञ्चित् यत् स भृत्यान् क्षणान्तरे । अवोचत्कृतकर्त्तव्यान् किमुक्तं न स्मराम्यहं ।
स्वहस्ताक्षरसम्पत्त्या त्यक्त्वा रीतिं पुरातनीं । ज्ञात्वा प्रकृतिवैगुण्यशङ्की तत्त्वं स मन्त्रिणात् ।
यैरस्मत्सदनोत्क्षिप्तः सोऽयं वैरानलः खलैः । तच्छमाय कृतोपेक्षा तैस्तैरुभयवेतनैः ।
मदङ्किताः ते नश्यन्तु मन्त्रिणस्तनयाश्च मे । ये मन्नाशेन तुष्यन्ति राज्यलुब्धा जिघांसवः ।
इत्युद्विग्नो महीपालः श्वसञ्जपपरायणः । प्राप्तदुःखोऽशपत् सर्व्वं यास्यति क्षतिमेषतां ।
स्वामी विरक्तस्तत्पुत्रा मिथो वैरपरायणाः । किमुक्तीवविधेयं नः कष्टमापतितं महत् ।
इत्थं पौरजनः सर्व्वेष्वक्रोशत्तितरां तदा । यवनव्रतमाश्रित्य त्यक्तमांसाशनो नृपः ।
सन्दिग्धा च कुपुत्रोऽयं यैरानीतो दिगन्तरात् । तैः स्वात्मरक्षिभिस्सर्व्वं राज्यं मे बत नाशितं ।
एकतः सबलौ पुत्रौ नगरे मिलितौ मिथः । एकतः पुत्र एकाकी तन्निष्ठा मन्त्रिणः शठाः ।
पुत्रा युद्धं करिष्यन्ति कष्टमापतितं महत् । किन्तु दूये पुरी सेयं पाल्या कुलवधूरिव ।
मयि जीवति नश्येच्चेत्किं कार्य्यं जीवितेन मे । भक्ताः शक्ता गता भृत्याः किं पृच्छामि करोमि किं ।
इत्यादिचिन्तासन्तापजाताधिव्याधिबाधितः । किमुकराज्यनिर्ब्बन्धः सनिस्पन्द इवाभवत् ।
सबालवृद्धं नगरं क्षुभ्यत्तत्कुवार्त्तया । सोऽभूदब्धिमिवोद्धृत्तं समास्थापयितुं क्षमः ।
भोक्तव्यं यन्मया भुक्तं किं भोक्ष्येऽद्य नय द्रुतं । आनीतभोज्यसन्देहः शिवभट्टं क्रुधाब्रवीत् ।
अतिचिन्ताकुलो राजा क्षायायामथ विश्वसन् । बुभुक्षून् सचिवान् श्रुत्वा अद्वैधे न स्वजीवितं ।
गतसंविदिव स्थित्वा दिनानि कतिचिन्निजैः । स पृष्टोऽप्युत्तरं राजा न कञ्चित्समुदैरयत् ।
पृष्टः प्रकृतिभिः कार्य्यं सम्भाव्यानर्थकं वचः । रुजार्त्त इव शय्यायां स सुष्वाप कदालसः ।
नाविदंस्तद्रुजो हेतुं लक्षणं वा चिकित्सकाः । जाने वार्च्यां शुचं हर्त्तुं बभूवानशनव्रती ।
अत्युन्नतान् सुफलदान्विततोच्चशाखान् ख्यातान् द्विजप्रियतया शुभमार्गसंस्थान् ।
धाता निपातयति सर्व्वजनोपयोग्यान् पृथ्वीधरांस्तरुवरानिव दुष्टवातः ।
अत्रान्तरे त्रयः पुत्रा दोषा इव महोल्बणाः । धातुवद्दूषयामासुर्देशे प्रकृतिधारकं ।

मूकप्रायं नृपं तादृगवस्थं द्रष्टुमन्वहं। सशङ्कास्तमुपाजग्मू राजपुत्रा भटोत्कटाः।
गजांस्तुरङ्गांस्तत्पुत्रभीत्यै तादृग्दशान्नृपं। द्वाराग्रे स्थापयामासुः सर्व्वदर्शनदित्सया। ०१५
स्वस्तिवादध्वनिं श्रुत्वा सबाह्याभ्यन्तरा जनाः। द्वितीयेन्दुमिवाद्राक्षुः सानन्दा दर्शनागताः।
श्रुत्वा बह्रामखानोऽथ चकितोऽनिष्क्रमागतः। गत्वरं लघु शैलाद्धा दूरं भ्रात्रेऽब्रवीदिति।
जीवत्यस्मत्पिता नैव मिथ्यैवोत्थाप्यते विटैः॥ द्वाराग्रात्पतितो भूमौ मूकप्रायो विचेतनः।
तदुत्तिष्ठ वयं यामः सवन्नाहानुपाङ्गनं। हरामस्तत्तुरङ्गादि वद्धा दुष्टांश्च मन्त्रिणः।
नोपेक्षणीयं छेत्स्यामस्तेन नश्यति तेऽग्रजः। श्रुत्वेति सोऽभ्यधात्नैवं वक्तुं युक्तं ममाग्रतः। ०२०
स्वप्नेऽप्यनिष्टं यस्याहं नेच्छामि स्वामिनः पितुः। तच्छ्रुत्वैकां निशां यावत्तदग्रे सोऽनयच्छुचा।
तावन्मुमूर्षुं तं श्रुत्वा पितृराज्यजिहीर्षया। आदमखानः श्रीजैननगरं सबलोऽभ्यगात्।
भटसन्नाहसामग्रीं प्रापय्य पथि गोपिता। अत्रमत्तनिशामेकां राजधान्यन्तरालये।
तावद्धुसनकोपेशः स्वार्थान्मोमोहयन् परान्। गृहीतदिव्यः श्रीहाज्यखानपक्षं समाश्रयन्।
अथ निष्कासितोऽन्येद्युः सचिवैः सबलोऽग्रजः। कुत्बदीनपुरीं गत्वा धिया भाग्यश्रियोज्झितः। ०२५
ज्येष्ठोऽप्यभूत्कुशलधीरपि भृत्ययुक्तः शूरोऽप्यनन्यसदृशोद्यमधैर्य्ययुक्तः।
प्राप्ते क्षणे किमपि साधु न कर्म कुर्य्यात्पुण्यैर्विना न हि भवन्ति समीहितार्थाः।
स चेत्तन्निशि हस्तैकमहरिष्यत्तुरङ्गमान्। अभिलप्स्यद्वरं राज्यं बुद्धिः कर्मानुसारिणी।
अत्रान्तरे हाज्यखानः कोपेशानुजचोदितः। राजधान्यङ्गनं गत्वा तुरङ्गाद्यहरत्पितुः।
यद्वार्त्तया विनिर्धेर्य्या ये ऽभवन् सुतसेवकाः। विविशुस्ते ससन्नाहाः ससदाः कालपर्य्ययात्।
अभिमन्युप्रतीहारमुखानिन्द्यं यदसुवन्। तदुत्पिञ्जे तत्फलन्तैरचिरेणानुभूयते। ०३०
तद्दिने हाज्यखानः स सवेगावहिरास्थितः। नाशकज्जनकं द्रष्टुं सोत्कोऽपि द्रोहशङ्कया।
तद्वार्त्ताकर्णनाद्भीतो निराशः सपरिच्छदः। आदमखानो विनाणो विपुलाटाध्वना ययौ।
स तारवलमार्गेण गच्छन्निजजनाहृतः। अन्वागतानुजन्माढ्वीरलोकचयं व्यधात्।
अभिमन्युप्रतीहारमुख्याः शौर्य्यमसानुपं। दृष्ट्वादमखानस्य सान्वर्याभिधमूचिरे।
यावान् स्वप्नपुरे तेन हतो लोकचयः क्रुधा। तावानिव हतस्तत्र सङ्कटे गिरिगह्वरे। ०३५
तावद्धुसनखानोऽपि राजपुत्रो गुणोज्ज्वलः। दृष्ट्वा पर्वतसमुल्लङ्घ्य कश्मीरान्तरमाययौ।
ग्रीष्मातपेऽपिततनुर्भ्रिरमश्चिरं यश्छाययाश्रितोऽमरतरुः पथिकैर्निरस्तः।
वर्धाप्रसेकमहिमा जनतापशान्त्यै सेव्यः स एव वन पुष्पविचित्रशोभः।
रुद्रशैवावहमध्ये या दयोस्तटयोरिव। एकपार्श्वगता सर्व्वा तदाभूद्राज्यनिम्नगा।
इत्यं भावदयन्चित्या विजयावजयक्रमः। अन्यथा कल्पितः सर्व्वैरन्यथाभूद्विधेर्व्वशात्।
पुत्रः स्वास्त क्वेति शोचति पिता जातेति हर्षाकुलस्तद्दृष्ट्वा पततेऽस्मद्दं विधिशतैश्चिन्तास्तदीयावहन्।
दृष्ट्वा विघ्नमिव स्वकं स्वजनकं जानाति शोभान्वितस्तद्वित्ताप्तिधिया मरिष्यति क्वेत्यन्तः सदाचिन्तयन्। ०४०

अस्मिन्नवसरे राजा कियद्भिः सेवकैर्वृतः। श्रुतमश्रुतवत्कान्तं स निश्चिन्तइवाभवत्।
दर्शिताखास्थ्यवाग्वन्धस्त्यक्तपेयाद्युपक्रमः। नृपेन्द्रो विरुचिः क्षीणकालचन्द्रइवाभवत्।
प्रजाभाग्यविपर्य्यासात्सर्वोपायाप्तये विच्छविः। कल्पान्तरविवल्लोकं गन्तुं प्रावर्त्ततातुरः।
कम्पितौष्ठपुटज्ञातमन्त्रपाठः कवेर्दिने। द्वादश्यां ज्यैष्ठमासस्य मध्याह्ने जीवितं जहौ।
प्राणप्रयाणसमये नृपतिः स समेचितः। सर्वाङ्गनिर्यल्लोभाग्यभाग्याद्दृतमुखच्छविः। ७४५
जाने तद्वदनं लक्ष्मीसदनं खेदसन्ततिः। निर्यन्नागयतरङ्गिण्याः प्रवाहइव दिद्युते।
तज्जीवरत्नहरणाज्जातभीतिरिव ध्रुवं। प्राणवायुर्हरस्त्वायुः क्षणं तूर्णगतिं व्यधात्।
प्राणान्ते विगलत्सूर्य्यसोमनेत्रजलच्छलात्। निरगान्नरदेवस्य प्रजास्नेहरसोध्रुवं।
द्वापञ्चाशतमब्दान् स राज्यं कृत्वा सुखप्रदं। पट्चत्वारिंशवर्षेऽगाद्दिवं श्रीजैनभूपतिः।
कर्णीरथ्यग्रयोग्यच्छत्रचामरकैतवात्। शुचेव पतितौ नूनं सूर्य्याचन्द्रमसौ दिव.। ७५०
तत्काले मन्त्रिणामृत्यादासाजनपदाश्च ये। रुदितास्तुस्तुतियाजाश्रिवापाञ्जलिमचिपन्।
राज्यं पञ्चवते वर्षे ज्यैष्ठे मास्यग्रहीन्नृपः। उत्तरायणकालान्तस्तेनैवान्तरमासदत्।
अतीतगणितैकोनसप्तत्यब्दायुषं नृपं। वदनावगतप्रोद्यत्लक्षणकूर्चकचच्छटं।
सबीभूतं शिवीभूतं शिविकायां शवाजिरं। रुदन्तोमन्त्रिणोनिन्युश्छत्रचामरराजितं।
यत्र सुप्तादिवैकत्र भान्ति पूर्व्वे महीभुजः। भर्तृप्रेम्णा धरण्येव निहिता हृदयान्तरे। ७५५
रुदत्पौरजनप्रोद्यत्तारोरोदननिःस्वनैः। वभूवुस्ताच्छुचेवारं साक्रन्दमुखरादिशः।
क्व प्रयासि प्रजास्त्यक्त्वा हा देव नरजीवित। इत्यसाद्परः शब्दोनाश्रावि नगरान्तरे।
तत्तदाक्रन्दितैः शश्वत्कर्णसञ्जातसंस्तवाः। शून्येऽप्यगृहत्तशोकानामाक्रन्दितमयाभवत्।
कर्णीरथादथोत्क्षिप्य पितुः पार्श्वे नरेश्वरं। कृत्वा पटैकसंवीतं भूगर्भाभ्यन्तरे न्यधुः।
नेत्रनालस्रवद्वाष्पधाराः खाचारकारणात्। मुखावलोकनं कृत्वा सर्व्वे मन्मुष्टिकाजकः। ७६०
भूपतिर्भविता नान्यस्त्वत्समोभूरियं गता। इतीव भावनां चक्रुर्मन्मुष्टिपदणच्छलात्।
जित्वारीन् प्रबलान् रणे क्षितिमिमां हृत्वा धनैः सर्वतो दत्वा कोपमशेषदेशविदिताः कृत्वा पुरीः स्वाभिधाः।
सम्राङ्गोर्जितभङ्गिषड्गिसुभगं कृत्वापि राज्यं चिरं हित्वा सर्व्वमहो पटैकरचनामन्ते लभन्ते नृपाः।
स वैरराज्यदावाग्निसन्तप्तइव शीतलं। तद्गृहान्तरमासाद्य सुखनिद्रामिवाभजत्।
मुखं निद्राहृतस्येव दृष्ट्वा सौभाग्यसुन्दरं। हाज्यखानोऽकरोत्पित्रे मस्तकं स्वमराविकां।
अपराद्धं मया तात यद्भ्रमः पापबुद्धिना। मन्ये तेनैव रुष्टस्त्वमसह्ययोगतोदिवं। ७६५
शोकान्धरमुपाध्यायस्त्वां पश्यति नाकग.। धिङ्मां येनस्थितोराजन्दर्शनास्त्ववर्पणे.।
विद्वत्तं सापि नो तात मां विना सौख्यवर्चणे। वदाद्य कथमेकाकी भजसे स्वर्गसम्पदः।
यात्वं कोमलशय्यासु मागा निद्रां गणावृतः। स कथं भूगणस्यान्तस्तिष्ठस्येकः सशर्करे।
प्रतिमुच्य भवन्तं मे प्राप्तस्य स्वगृहं म कः। अम्बप्रमास्तु मे सापोभूयोवामिति कोपितः।

श्रोनिद्रं कारितोऽस्माभिः कुपुत्रैः सततं भवान्। अथावसरं प्राप्य दीर्घनिद्रां करोषि किं। ७०
स्खलिताभूत्तनुर्नित्यं सततोदितया यया। साद्य किं चलिता राजंश्चिन्ता ते मानसान्तरं।
चित्रे वाथय सङ्कल्पे पश्यामि वदनाम्बुजं। शृणोमि ताः कथाः कुत्र तात ते यक्षपातकी।
राज्यं विपद्दिनं रात्रि. स्मशानं पितृकाननं। जीवनं मरणं नाथ त्वां विना मम साम्प्रतं।
कुपितोवा प्रसन्नोवा कुतोऽप्यागत्य तात मे। दर्शनं देहि नो सोढुं क्षमो विरहवैशसं।
विहाय क नु मां तात गतः पादैकसेवकं। द्युतिं न लभते पद्मकोरको भास्करं विना। ७५
किं रुष्टोऽसि महीपते त्वमधुना दासोऽस्मि सेवापरो मानं मा भज देहि वाक्यमधुनाप्येकं ममात्यादरात्।
नो जीवामि विना त्वयेति विलपन् कुर्व्वन् भुजाराजिकां साक्रन्दं रुदितं चकार सुचिरं दृष्ट्वा मुखं भूपतेः ॥
इति प्रलापमुखरं हाज्यखानं शुचार्द्दितं। राजधानीं ततोनिन्युर्दिनान्ते मन्त्रिणो बलात्।
पितुर्लोकान्तरस्थस्य प्रीत्यर्थं तत्क्षणं सुतः। सालोरग्राममात्मीयं न्यधात्तत्र शशाजिरे।
ग्रीष्मपानीयदानेन तृप्त्यर्थं तत्प्रदायिनां। बहूनां प्रददौ चोणीमहार्घ्यां धर्म्मशालतो।
राज्ञानेन विना शून्यं नास्मिन् स्थामीचितुं क्षमः। इतीव दुःखात्तत्कालं खमध्यौ रविरविपत्। ८०
सन्ध्याभ्रशाटीमुत्सृज्य रोदनार्थमिवेशितुः। शुचेव विस्तृतं चक्रे तमःकचचयं चितिः।
आशाप्रकाशकेश्चन्द्रदर्शने गुणिवान्धवे। परलोकं गते तस्मिन् मण्डले प्रोद्भूत्तमः।
तद्दिने रन्धनाभावाद्गृहधूमविवर्ज्जिता। शोकमूका निरुच्छ्वासा निर्ज्जीवेवाभवत्पुरी।
शवागारोपरि शिलां स्फाटिकीं रचनोज्ज्वलां। दीर्घां सर्व्वोन्नतां राज्ञोमूर्त्तिं परिणतामिव।
घनोत्कण्ठदिदृक्षाप्तहृच्छोकाम्बुबिन्दुभिः। यत्र मुक्ताफलैः पूजा समतीवोपरि प्रभोः। ८५
पौराः शुक्रदिने भान्ति यत्रान्तःप्रतिबिम्बिताः। राज्ञेव निकटं नीताः कुतूहलतयात्मनः।
कवाटविकटं वक्षोमुखं पूर्णेन्दुसुन्दरं। शुकवद्दीर्घनासाग्रं नेत्रे कमलकोमले।
भ्रूलेखे लोमशे भालं प्रभालम्बितलक्षणं। सा वुद्धिस्ते गुणास्ताश्च राज्यकार्य्यावधानताः।
स्मारं स्मारं जनः सर्व्वो राज्ञः पुरइव स्थितः। पश्यंस्तनोरसाधारं संसारं निन्दति न कः।
ज्योत्स्नापूर्णसुधाकरस्य कुसुमोत्कर्षोनिसन्तस्य यत् सौभाग्यं शरदि प्रसन्नमभिषानाय्यां नवं यौवनं।
राज्ये चैव विवेकिनो नरपतेर्यत्सर्व्वसौख्यप्रदं धाता तत्कुरुते स्थिरं यदि जने स्वर्गार्जने न स्पृहा। ९०
बाल्ये पित्रा वियोगोवरसचिवभिषोभ्रातृभृत्यैर्व्विरोधः प्राप्ते राज्ये प्रवासोवहिरथ समरोऽप्यग्रजेनातिकष्टः।
चैयेभ्योऽथ चिन्ता तदनु निजसुतेर्शावदायुश्च वाधा संसारे सर्व्वदासुस्थितिरिति भविनां नित्यदुःखां स्थितिं धिक्।
नूनं जातकयोगेन पुत्रेभ्योदुःखमन्वभूत्। अभूदस्य सुतस्थाने भोमोयत्पापवीचितः।
पण्डिताः करयत्नस्य वाचाला येऽभवन्सदा। तएव तं विना दृष्टाः पौषे मूकाः पिका इव।
पाण्डित्यसरसी नेत्रनिभा विकसिता सदा। यन्व्या संकुचिता साभूद्बुधपुस्तकसन्ततिः।
तर्कव्याकरणादीनां शास्त्राणां ये श्रमं व्यधुः। ते राजरञ्जनायाथ देशभाषाश्रमं व्यधुः। ९५
राज्ञा ये बहु मानिता गृहसुखश्रीमण्डिताः पण्डिताः शास्त्राभ्यासमहर्निशं प्रविदधुर्धन्यार्जनाद्युत्सुकाः।

॥ श्रीवरपण्डितकृता ॥

पृष्टाः किं पठतेति ते प्रतिजगुः श्रीजैनभूपे गते कुत्र व्याकरणं क तर्ककलहः कुत्रापि काव्यश्रमः।
योऽभूत् सर्व्वकलानिधिः शुभविधिर्दाताभिगम्यो गुणी काव्यज्ञो धर्म्मभाषया गुणिरतः कारुण्यपुण्याकुलः।
सोऽयं हन्त समीक्ष्यतेऽवनितले धिक् पापिनोऽस्मान्छठान् ये जीवन्ति शुचा न यान्ति विपिनं संसारतृष्णाजिताः॥
हारेणेव विनाङ्गनाकुचतटी शास्त्रेण हीनेव धीः सूर्य्येणेव विना प्रफुल्लनलिनी तारुण्यहीना तनुः।
चन्द्रेणेव विना यथैव रजनी पत्या विना भामिनी येनैकेन विना नृपेण न बभौ कश्मीरराज्यस्थितिः।
श्रीमत्तर्कादिविद्याभ्यसनरसलसद्भव्यसर्व्वप्रवीणप्रेक्षोपद्रावमानोर्जितविचितयशोभूषितायेषदेशः।
श्रीजैनोल्लाभदेनो नरपतितिलकः सर्व्वशास्त्रप्रवीणः कश्मीरान् योजयित्वा दिवमपि स गतो योजनायेव नष्टा।
इत्यादि सन्ततं सन्तो वदन्तोऽत्यन्तचिन्तया। नितान्ततान्तहृदया विश्रान्तिं नाभजन्त ते।
दृष्टो रम्यश्चिरमुपवने वंशवाटो जनैर्य्यो नानावर्णैर्नवलवणगणैर्भूषितो भूरिपत्रः।
तत्रान्योन्यस्वजनहननात्तादृगभ्युत्थितोऽग्निर्य्येनैकान्तादुपवनगतं सर्व्वमेव प्रनष्टं।
या कारकसभा भव्याऽभवच्छ्रीजैनभूपतेः। वर्षेणैकेन तच्छापात्स्वा स्वप्नोपमाभवत्।
क्षुब्धे राज्यमहाम्भोधौ भूपप्रमयवायुना। तत्तत्सेवकरत्नौघ शतेक्षो योऽवशिष्यते।
प्रभवतु उत यावत्स्वप्रभुः सौख्यदाता विदधति खलु तावत्सेवकास्तस्य मानं।
इह वसति वसन्तो यावदेव स्तुवन्तो मधुकरपिकभेकास्तावदेवाद्रियन्ते।
केचिदप्यवशिष्टा ये सेवकास्तस्य भूपतेः। तेऽप्यनन्तरविज्ञानात्तृणतुल्योपमां गताः।
इति पण्डितश्रीवरविरचितायां जैनराजतरङ्गिण्यां जैनशाहिवर्णनं नाम प्रथमस्तरङ्गः।

## ॥ अथ श्रीवरपण्डितकृता तृतीया जैनराजतरङ्गिणी ॥

### द्वितीयस्तरङ्गः ॥

वन्दे विश्वमयं देवं सर्व्ववाङ्मन्त्रनायकं । यदंशवर्णनस्तुत्या तत्पूजाफलभाङ्ग कः।
पादोदक्षिण एष यच्छति पदं यत्रैव नाथ्येच्छया तत्रैवेच्छति नाम वामचरणः सञ्चारसंस्कारतः ।
इत्थं मण्डलमण्डितं समपदं चारी नरीनर्त्ति यः सन्ध्यायां स सदा ददातु सुखितां देवोऽर्द्धनारीश्वरः।
अथ हैदरशाहाख्यां ख्यापयन्मुद्रिकार्पणैः । हाज्यखानोऽग्रहीद्राज्यं स ज्यैष्ठप्रतिपद्दिने ।
ऋण्यार्चादक्षिणानन्दी तत्तत्कुशलसूचकः । बभावर्थिजनानन्दो स राज्यग्रहणोत्सवः ।
शङ्खाशङ्कचितैराजवल्लभैः सुखशालिभिः । बभौ श्रीकन्धरपुरी पूर्णा द्यौरिव तारकैः । ५
राजधान्यङ्गने हैमं सिंहासनमशिश्रयत् । क्षितितीक्ष्णनवोराजा मेरोस्तटमिवांशुमान्
सभर्तुर्भूपतेरग्रे स्थितौ तस्यानुजात्मजौ । इन्दोः पुरस्तादुद्यन्ताविव शुक्रबृहस्पती ।
राज्ञोऽहस्तनकोपिशस्तद्राज्यतिलकं ददौ । सौवर्णपुष्पपूजाढ्यं यदृच्छाविहितव्ययः।
स हाज्यैदरनृपोघनकालोर्जितप्रभः। धाराधरइव धरां दधार धरणीधरः।
सोऽनुजं स्वसमं भूमिनायकः सुचितेरसात्। वहामखानं नाम्नामदेशे तं स्वामिनं व्यधात् १०
चिराज्निजसुतप्राप्या यौवराज्यसुखादपि। पितृशोकहतोऽप्यन्तर्विश्रान्तिमभजन्नृपः।
तस्मादिहितमेवास्तु देशाधीमलराजिताः। प्रसादमतुलं प्रापुरावत्रजवकादयः।
अन्येऽप्युच्चावचान् यःमान् सेवकानवभूपतेः। पूर्व्वसेवानुसारेण प्रसादं प्रतिपेदिरे।
राजा राजपुरीसिन्धुपत्यादीन्दर्शनागतान्। सत्यमुत्सवदन्नकृत्य पार्थिवोचितया श्रिया
सौवर्णकर्त्तरीवन्धसुन्दरान्नृपमन्दिरे। ननन्दुर्मन्त्रिसामन्तसेनापतिपुरोगमाः। १५
पितृशोकार्पितानर्घपट्टांशुकविभूषणाः। विचेरुस्तेनकास्तस्य तदन्तिकगताः सदा।

आसीद्राजा च सततं प्रजामन्दोयनिष्क्रियः । स्वरक्षपालने दक्षः सन्ध्याघणढवोडुपः ।
पक्षपातोघणापत्यप्रतिपालनतत्परः । लोभक्रोधविरक्तात्मा मोहान्धक्षपणक्षमः ।
सैदनासिरपुत्तोदः स मेर्जाहस्सनाभिधः । अहो तत्पितृवत् पूज्यो बक्कलपादिराष्ट्रभाक् ।
उत्सवादिसदाचारसत्कारेषु सभान्तरे । तएव प्रथमं मान्यास्तद्राज्ये सर्व्वदाभवन् ।
एतान् पक्षाश्रयान्मद्धाव्ययं बलवानिति । मेर्जाहस्सनपुत्र्याः स पाणिं पुत्त्रमजिग्रहत् ।
कृत्वा ज्यंबरमार्गेशात्मज्यहाङ्गिरमार्गपे । वाञ्छितं प्रददौ राजा तद्गुणाकृष्टमानसः ।
चक्रे कृतापकाराणामप्यनुग्रहमेव सः । प्रणम्य सिंहः पूर्व्वं हि हन्ति दन्तिगणन्तनः ।
गूढभावोमहीपालस्तत्तच्चेष्टाचरैर्व्विदन् । तदा हस्सनकोपेनं सन्नान्याधिकृतं व्यधात् ।
प्रतापतापितारातिस्छन्नकोपोमहीपतिः । भक्षान्तरगतोवह्निरिवासीत्परम्हत्युदः ।
कांश्चित्तन्त्रभयान् कांश्चित्सन्धाय प्रतिपालयन् । कांश्चिदुन्मोलयन्नीत्या नानावृत्तिरभून्नृपः ।
प्रसादकृत्स भृत्यानामभूद्देश्वरणोपमः । मनागप्यपराधेन बभूवान्तः कमन्निभः ।
पद्मःपिलकृतामात्यफिर्य्येडामरकादयः । विचार्य्यासहनं कोपं बभूवुर्ह्तयन्त्रणाः ।
चौराजाराश्च रिपवोभृत्यादुर्णयकारिणः । अक्षौत्र जम्बुकाश्चैरस्तद्राज्ये भयविह्वलाः ।
श्रीजैननृपतौ शान्ते मूढ़गूढशिलोपमे । अत्राधन्त पुनर्लोकं व्यालाइव नियोगिनः ।
विशुद्धपक्षोरुचिरं जिताशः कलाकलापोविबुधोपजीव्यः ।
पूर्णेन्दुनानेन समोऽस्ति कोऽन्यः कलङ्क एकोयदि नास्ति दोषः ।
श्रुत्वास्मद्रूपणाः सोऽयं सर्व्वान् हन्तीति कद्धिया । श्रेकं परप्रवेशार्थं मिथस्तद्रूपका व्यधुः ।
कुकृत्यप्रेरकः पापश्चान्यायोत्कोचहारकः । शिशोऽभवद्द्विवाकीर्त्तीराज्ञोरिकेतराभिधः ।
कामीव व्यसनं नित्यमुपालब्धोऽपि भूभुजा । यं त्यक्तुं नाशकद्राजा मैत्तवाद्धृदयङ्गमं ।
सञ्चितार्थः प्रजायाधैर्मुद्रादानादिकर्म्मभिः । आसीत् स्वकार्य्यकुशलः ख्यातोधूर्त्तः स नापितः ।
रुद्धं चित्तेन काठिन्यं माधुर्य्यं जिह्वया धृतं । शठस्य यस्य सततं लोकोद्वेजनकारकं ।
येनाधिकाराद्देशेऽस्मिन् प्रजाः कुकर्म्मभिः कृताः । दुःखिता रक्षिताः पूर्व्वं पुत्त्रं क्षोनहीभुजा ।
भेरभाखारनामापि बुद्धिमान् प्रथितो भुवि । नितरामपकोपाशेराज्ञः सा विव्यमादधे ।
वात्सल्यादिहितोराज्ञा मचुर्य्यागणनापतिः । समस्तकार्य्यस्थानेभ्योभुक्त्ं राजोपजोविकां ।
योवर्धणैकनिरतः शिखिहर्षहेतुः सन्दर्शितातुलफलः कृतकर्षणेषु ।
जातोऽपि यः प्रतिदिनं कृतसर्व्वतापः सोऽयं घनस्तुदति दुःसहवज्रपातैः ।
दुर्मन्त्रिप्रेरितोराजा व्यधात्मदविचिन्तनः । प्रजाभाग्यविपर्य्यासाद्विवेकविगुणाः क्रियाः ।
श्रीकन्धरपुरीपार्श्वसनिर्म्माणचिकीर्षया । अस्तोपवने प्रांशुतरुच्छेदनमादिशत् ।
छिन्नांस्तान् पुष्पितान् वृक्षान् समीक्ष्योत्तत्समुत्थिताः । तच्छुचेव व्यधुस्तत्र रोलम्बारोदनध्वनिं ।
तन्निर्म्माणप्रदोऽन्येषां न केषां मत्यभाद्धृदि । श्रये दिनपतेर्द्दीप्रप्रकाशनरसोपमः ।

तद्भूमः चौव एवैष करोतीति विनिश्चितं । स्वाहितापि क्रिया हेतोः पूर्णितं तं नृपं व्यधात् ।
बहुनामय लोकानां नापितोऽवयवच्छिदां । भूपालादाप्तनिर्देशः चौवतोऽपि तथाकरोत् ।
नापितोनिर्घृणः पापी क्रोधी क्रकचपाटितान् । पैटकांठक्कुरादींश्च कारयामास भूपतेः ।
चलितानग्रजभ्रातुः स्वावनायान्तिकं पथि । रुद्धा शूलेऽधिरोप्यान्यान्पश्चपानथघातयन् ।
जीवन्तोगणरात्रन्ते स्वकुटुम्बोक्तवेदनाः । पौरैः सास्रुजलैर्दृष्टाः शूलपृष्ठे पुरान्तरे ।
वैदूर्यभिपजं ज्ञात्वा दूषकं परपक्षगं । अमुचद्बन्धनात्छिन्नभुजनाथोष्ठपल्लवं ।
तथैव नोनदेवादीन् शिवजादादिसंयुतान् । पञ्चपानकरोत् छिन्नजिह्वानासिकहस्तकान् ।
विरुद्धावयवच्छेदशूलारोपणकर्म्मणा । स पूर्णनापितः पापी बभूव नरशौनिकः ।
आचार्यपुत्तोजय्याख्यस्तथा भीमाभिधोद्विजः । छिन्नाङ्गौ स्वं यथाशक्तौ वितस्तायां समौज्झतां ।
मध्यलीलाव्यसनतस्तद्राज्ये वाद्धदेशवत् । आसीन्मार्द्दीकवद्गौडीदेशेऽत्र प्रचुरा सुरा ।
तन्मध्यरसिके राज्ञि सर्व्वभोगपराङ्मुखे । खण्डादीक्षुविकारास्ते सुलभान गुडोऽभवत् ।
खुज्याब्दोल्कादिर्यस्यान्तेवासी गीतगुणाम्बुधेः । मल्लाडोदकनामासीत्तन्त्रीवाद्यगुरुर्नृपे ।
कूर्म्मवीणादिवाद्यानां प्राप्याप्तङ्गीतकौशलं । आजीवं क्षणमप्यासीन्न तन्त्रीवादनं विना ।
तन्त्रीवादविशेषज्ञोराजा व्यञ्जनधातुभिः । स्वयं वादननिष्णातो वैणिकानप्यशिक्षयत् ।
रवाववाद्यरचनैर्व्वङ्कोलाद्यैश्च गायनैः । राज्ञः प्रसादात् किं नाप्तं तत्तत्कनकवर्षिणः ।

शौचालयस्थैः सुरतालयश्चैर्भूतैरिवान्तस्खलनप्रवीणैः ।
वशीकृतोयः पिशुनैर्न्नरेशोबिभेति तस्मान्ननु कोनु मर्त्यः ।

रहः स्थितं नृपं जातु पिशुनः पूर्णनापितः । अपृच्छन्प्रेरितोऽमात्यैश्चिकीर्षा पूर्व्वमन्त्रिषु ।
भवत्पक्षविनाशेच्छैः छतस्त्वत्पिष्टमन्त्रिभिः । प्राप्तराज्येन भवता तएव प्रवलीकृताः ।
अमी हस्सनकोपेशमुख्यास्त्वदनुजादृताः । सोऽपि धूर्त्ताधिया तत्तद्वशीकारसमुद्यतः ।
असमर्थशरीरस्त्वं भ्रातर्पितभरस्तद्रा । तत्ते सपुत्तभृत्यस्य न नाशोभविता चिरात् ।
श्रुत्वेत्यवोचन्नृपतिः सत्यं मदनुजाप्रियः । किन्तु ब्रवीमि येनायं रक्ष्यते कुटिलाशयः ।
उग्रोमदनुजस्तीक्ष्णोमत्पदाक्रान्तिसद्यतः । अनेन क्रष्टुमिच्छामि कण्टकेनेव कण्टकं ।
कार्य्यापेक्षावशादेतं रक्षामि न तु गौरवात् । श्रुत्वेति दिनान्यहनोप्यधाज्ज्ञातचिकीर्षिताम् ।
अत्रान्तरेऽयशो राश्चामद्रदेशाद्बलान्वितः । भ्रातृराज्यजिहीर्षायै पर्णोत्सं प्राप दर्पितः ।
तच्छ्रुत्वा नृपतिः क्रुद्धस्तान् समानीय पैटकान् । अवोचत् किं नु कर्त्तव्यं ते तमित्यूचुरुत्तरं ।
तदिकाभेतुबन्धनाच्छेत्तुं यामोऽस्य तिष्ठतः । अन्यथा दुःसहः प्राप्तस्तदाज्ञा दीयतां विभो ।
श्रुत्वेति कातरं वाक्यं तेषां दुर्लक्ष्यचेष्टित । तत्पक्षपातिनो ज्ञात्वा तथेति प्रत्यपद्यत ।
प्रतिमुच्य नृपस्तान् स राजाविच्यप्रवीरनिजान् । आनीय फिर्य्यडारादीन्मन्त्रिणः कार्य्यनिष्ठुरान् ।
इयं हस्सनकोपेशपक्षिका यत्समागतः । एतद्बधेन मत्तः स्यादन्यथाभ्यन्तरे विभेत् ।

तस्मात्तरेते हन्तव्या युक्त्यानीयेति तान्नृपः। छन्नकोपः सेवकान् स्वानकरोत्सत्रयम्विदः।
राज्ञा प्रातः समाहूय विसृष्टानुचरा गृहात्। सर्व्वे हस्सनकोपेशमुख्यास्तूर्णं समाययुः।
कम्पते तुरगस्तस्मो ज्ञातवृत्त इवाचलः। तोडनैर्बकुश मास्तः प्राप कष्टान्नृपाङ्गनं।
महादोसरणस्यास्तान् राजकर्त्तव्यताकुलान्। कोपेशहस्सनमेरकाकादीन् पञ्चपान्नृपः
भृत्यैर्ज्येष्ठरमेराधैराज्ञेमण्डपान्तरे। छलादिन्याहमुत्पाद्य राजधान्यन्तरेऽवधीत्।
किं द्रोहहदति यावत्स कोपेशोऽभ्युत्थितोऽब्रवीत्। द्रुघणैकप्रहारेण तावत्प्राणैर्व्ययुज्यत।
शस्त्राघातैर्मुमूर्षुः सन्नुत्थितो मेरकाककः। राज्ञ एवाभिष. कुर्व्वन् पुन. परशुना हतः।
लिखन्नह्मदमेराख्यः स विद्याव्यसनी गुणी। हतो जनमन.कान्तो ययौ कस्य न शोच्यतां।
जीवतां मनसा चैक्यं तेषां नित्यमभूद्यथा। शस्त्रकृत्ततनूद्रच्छच्छोणितैक्यमभूत्तथा।
वर्णकम्बलपृष्ठस्थाजीवन्तस्ते यथाभवन्। निद्राणाइव ते तत्र मृता अपि तथेक्षिता.।
क्षणमात्रान्तथा शस्त्रैर्मरणं राजवेश्मनि। अनन्यसुलभं तत्र तेषां श्लाघार्हतामगात्।
न वित्तं न च दारास्ते न भृत्या न शवाजिरं। तेषां तथा प्रमीतानां ययावन्त्योपकारितां।
निजपरिभवभीत्या बन्धवो यान्ति दूरं त्यजति च निजपत्नी का कथा सेवकानां।
प्रतिदिनमृणदैतोस्ताडनं बन्धनं वा भवति हि यमभङ्गाद्राजभङ्गोऽतिकष्टः।
स्फुलिङ्गालिङ्गनात् क्रुद्धकृष्णसर्पापसर्पणात्। मकराकरपाताच्च कष्टं नृपतिसेवनं।
प्रद्युम्नगिरिपादान्ते चण्डालैर्निश्यनाथवत्। दृष्टिकाभिस्ततो नीला भूगर्त्तेषु निवेशिता।
कुर्व्वन्ति मौसुलजनाः स्वशवाजिरार्थं यत्नं सदैव वडकालषु दत्तचित्ताः।
नो चिन्तयन्ति परमेश्वरमन्तरेण जानाति को मम कदा मरणं कथं स्यात्।
यः स्वायुषोऽवधि भवेति स्वदेहनिष्ठां यन्यान्तको भवति सिन्नतथातिवद्य.।
युज्येत तं प्रति शवाजिरकर्म कर्त्तुं म्लेच्छेषु दुर्व्यसनमात्रमिदं मतं मे।
ते वैश्रवणभट्टाद्याः क्वापि स्वशवाजिरं। अन्ते यत्र मृता यामे भुवि तत्रैव शायिता.।
एक एको भुवोहस्तशतमानाहतो रतः। परार्थे शवदोषस्तमाशतेनालभ्यते न किं।
श्रुतं यच्छावनः स्वकर्मिलार्थे स्वदभूतले। स्वयन्ते तत्सुखं तस्मिन् परलोकगते भवेत्।
अहो लोभस्य माहात्म्यं जीवद्यन्मृता अपि। शवाजिरापदेशेन कुर्व्वन्त्यावरणं भुव.।
महान्तो हन्त कुर्व्वन्तः शतयवा. शवाजिरं। तन्निर्माणेन जीवन्ति कियन्तोऽपि बुभुक्षिताः।
वन्द्योऽन्यदर्शनाचारो हस्तमात्रे भुवस्तले। दग्धा यत्कोटिशो नित्यं शवकार्थं तथैव तत्।
इत्याद्यनुचिता निन्दा मत्तावादिषिताच यत्। चान्तव्या भोसुलैर्व्याजात् कविवाचो निरर्गलाः।
ये शाश्वभरमवाप्य निपीय लोकं कुर्व्वन्ति सञ्चयमतो न च दानभोगौ।
अत्युत्कटापभरतप्तशरुन्ध्रदुःखास्ते कीपरचणनिभा दिवरन्ति गात्र।
इत्थं मस्ताद्य रहादि तेषां तद्राजमादगात्। तत्कुटुम्बैर्भिराबम्बैनाप्राप्येका वराटिका।

कोषेशसञ्चितं स्वर्णपूर्णं रूपकभाजनं। दृष्ट्वा धिक्कृत्य कृपणं थुत्कारं नृपतिर्व्यधात्। १००
तत्पत्रान्वह्मरागादीन् हृतसर्व्वस्वसञ्चयान्। कारायामक्षिपद्राजा मुक्तैकं मेदहोसनं।
अन्ये पित्रपराधेन तस्माद्गुरुसुतोपमान्। चक्रियादव ते सर्व्वे नाशं प्रापुः पुरातनाः।
यासीत् पितुः सभायोग्या तत्तकार्य्यविशारदा। स्वतपूर्व्वोपकारेण तेन सर्व्वावसादिता।
अन्तरङ्गान् हभेभादीन् पञ्चपानधिकारदरैः। अरचत् प्राक्तनं स्वत्वा प्रेम सेवाञ्च पैतृकीं।
आदमखानः पर्णोत्सि श्रुत्वा कोषेशनाशनं। स्वनामान्वर्यतां विभ्रद्ययो भीतो ययागतं। १०५
बह्रामखानो विश्वासस्तद्धाच्छङ्कितोऽभ्रशं। गृहमेत्य नृपेणाश्वासित. कार्य्यावलोकिना।
अस्मिन्नवसरे मद्रमण्डले सुभटव्रयः। अभून्माणिक्यदेवस्य तुरुष्कै. सह संयुगे।
मातुलेन समं यातो योद्धुं तत्रैव सङ्गरे। आदमखानः स प्रापच्छरभिन्नमुखः क्षयं।
केऽप्यूचुः स निजैरेव हतस्तत्र भयाश्रितैः। केऽपि शणशलाकायाकृष्टिमर्म्मविदारणात्।
श्रुततन्मरणो राजा दूतैरत्यन्तदुःखितः। तद्देशाच्छवमानीय जननीसन्निधौ न्यधात्। ११०
ज्येष्ठोऽपि शौर्य्यनिलयोऽपि बलान्वितोऽपि प्राप्तोऽपि जन्मभुवमात्तधनप्रपञ्चः।
नैवाप राज्यमुचितं स कृतप्रयत्नो भाग्यैर्विना नहि भवन्ति समीहितार्थाः।
अथवा पितृशापस्य तस्यापि फलितोऽभवत्। यदाप्तोऽपि निजं देशं परदेशे क्षयं गतः।
अत्रान्तरे महोत्पाता दिव्यभौमान्तरीक्षगाः। अहंपूर्व्विकयेवापुर्नृपतेर्जनकास्पदा।
तथा हि प्रथमं राज्ञि पुष्पलीलाचिकीर्षया। गते मडवराज्योर्व्यां भूमिकम्पोऽभवन्महान्।
अस्मत्कल्पजनः कोऽपि सुखी नैवाधुना स्थितः। इतीव देशे तत्काले चकम्पुर्भवनद्रुमाः। ११५
उदभूत् पूर्व्वदिक्पुच्छः केतुर्नभसि विस्तृतः। पूर्व्वं बह्रामखानेन दृष्टोऽरिष्टस्य सूचकः।
स दूरविस्तृतः पुच्छः कालकुन्तोपमो दिने। स्फुरन् प्रतीचीं प्रत्याशान्तस्थैव ददृशे जनैः।
युग्मसर्व्वंडरा राजमन्दुरान्तर्गताभवत्। देशात् क्रष्टुं दंष्ट्री राजा यां भिया यवनव्रजे।
षिहाद्द्यो दिने चेदवन्याः श्रीनगरान्तरे। विडालपोतं सुषुवे शुनी च प्रसवक्षणे।
निष्फलोयः सदानन्दो तरुः स सफलोऽभवत्। उपराजगृहे मूलाद्दाडिमीकुसुमोद्गमः। १२०
सुगनोवाटशाटान्तर्भवं शोणितवर्षणं। इति दृष्ट्वा जनः सर्व्वः क्षते क्षारमिवाप्नभूत्।
अत्रान्तरे वहम्मेदखानागाहादिपीडनं। हिन्दुका विदधुः पूर्णनापितादलितक्रुधा।
तच्छ्रुत्वा यवनाः सर्व्वे गत्वा क्रुद्धा नृपान्तिकं। चुक्रुशुर्येन राजापि द्विजपीडनमादिशत्।
अजरामरमुद्रादीन् ब्राह्मणान्स्वत्रकानपि। तत्कोपेनाकरोद्राजा निकृत्तभुजनासिकान्।
त्यक्तस्वजातिवेशास्तद्दिनेषु ब्राह्मणादयः। न भट्टोऽहं न भट्टोऽहमित्यूचुर्भटलुण्ठने। १२५
यज्ञखादकमुख्या ये पुरे सन्तीष्टदेवताः। तन्मूर्त्तिलोठनं राजा चेच्छमेरण्यादिशत्।
दत्ता भूर्जेनभूपेन येषां गुणपरीक्षया। तेभ्यस्तां निर्निमित्तेनाप्यहरन्नधिकारिणः।
समाहिसफरीमासः प्रसिद्धो विच्छर्दने। सर्व्वदर्शनविज्ञाय न केषां भयकार्य्यभूत्।

भूपं नित्यमदोन्मत्तं सतन्त्रं मन्त्रिमण्डलं । उत्कोचहारिणः सर्व्वानन्तरङ्गांस्तरङ्गिताम् ।
दर्शितावलपीडार्त्तिपण्डितानवलोक्य च । स्मतश्रीजैनभूपालगुणमालस्तदा जनः ।
देशे सदर्दिताक्रन्दं शृण्वंश्चात्यन्तदुःखितः । सर्व्वस्तुष्टियिराह्वद्धोपसोदिष्टपराभवः ।
सर्व्वकार्य्यान्तरज्ञोऽयं चयं याति कदा नृपः । इति येऽप्यवदन्दुष्टास्तत्सुनाविभवार्थिनः ।
पारसीभाषया काव्ये यदूचे दूषणं विशां । स शापः फलितो देशे श्रीमज्जैनमहीपतेः ।
सेवकाः कितवप्राया भुक्तप्रेष्या नियोगिनः । तच्छापादिव कालेन प्राप्तात्यन्तनिपीडनाः ।
किमसद्व्यकोदैवहतोऽद्ध्वोमहीपतिः । इत्यादि सास्रमाक्रन्दाः शृण्वन्तुत्तेऽपि पार्थिवं ।
स्वल्पोऽपि राज्यकालोऽभून्नानाबाधैः सुदुःसहः । निदाघरात्रिसन्दृष्टदीर्घदुःस्वप्नसन्निभः ।
लोत्त्रराशिग्टहद्रव्यहरणैः परपीडनैः । तुतुषु तस्य भृत्यौघाः कौशिकास्तिमिरैरिव ।
शय्यारूढोमधुक्षीवः प्रजाकार्य्यपराङ्मुखः । सर्व्वं दिनं निनायान्त. स्वपार्श्वपरिवर्त्तनैः ।
कुलालगायनोद्गीतं गीतं शृण्वन्दिवानिशं । गुणिभ्योराजयोग्येभ्योनादाद्दर्शनमात्रकं ।
शाहाभदेनराज्ये या सम्पन्नातिमनोहरा । लक्ष्मीपुरे राजधानी तां पुलोपोदितः शिखी ।
या बलाढ्यमठस्थाने वेश्माली विपुलाभवत् । सापि दग्धा समं तत्र तत्तत्पौरजनश्रिया ।
इत्याद्युपद्रवान्देशे दृष्ट्वा वास्तव्यनाशकान् । एतन्नाशाद्गवेदिन्नशान्तिरित्यवदज्जनः ।
राजा पश्चग्टहवासं स्वं ज्वलन्तं समीक्ष्य च । हर्म्यमारुह्य सन्तुष्ट पानलीलां व्यगाहत ।
अस्मिन्नवसरे नेयधिपणः पिशुनैरितः । याचार्थं सबलं पुत्रं वहिर्देशे व्यसर्जयत् ।
यत्सैन्यं वीक्ष्य दैन्यन्ते ययुर्वाह्यमहीभुजः । प्रदोषं रविरस्योघं दिवसे तारका इव ।
पूर्व्वं राजपुरीराजोजयसिंहोनृपात्मजं । स्वसारञ्च स्वसारञ्च दत्वा तोषयति स्म तं ।
कालीधारामसिलतामिव वीक्ष्य नदाश्रितां । कम्पं के नात्र वेशस्थाः प्राप्तास्तद्भयतोजनाः ।
सेनादीन्नारकोटीयाः श्रिश्रियुस्तां भयच्छिदः । वलिभिर्मङ्गला देवीमिवोन्नतभुवि स्थितां ।
मद्रगकखरचित्तेशा राजहंसास्तमाययुः । सरोवरमिव प्रोद्यत्फुल्लपद्माविनिर्म्मलं ।
राजस्थानान्तरोधेन स्वपदार्थोपपादकैः । मातुलैरपि तस्याग्रे सुहृद्भिः कहणायितं ।
कौमारोर्द्धंसिकं वीक्ष्य कटकावकृता अपि । अभूवन्धैर्य्यरहिता माहिला महिलाइव ।
वद्धपङ्क्तिस्वरन्तो सा ज्वलभेस्तन्नदीतटात् । तत्सेना रामवद्वाब्धिसेतुकौतुकमातनोत् ।
कुटोपाटीश्वरीप्रान्तं तत्सैन्यं दैन्यवर्जितं । नारायणोदरोद्गच्छद्विश्वलोकभ्रमं व्यधात् ।
संश्रुते भोगपालानां पुरे मद्राधिनान्यपि । सुचिरं धूमितान्यासन् ग्टहाणि हृदयाणि च ।
उन्नादहृदसंघस्तन्तुरङ्गतरङ्गिता । वाक्येश्वरगिरेः पादमूलं प्रापास्य वाहिनी ।
तदीयकटकोदोपलत्तुरङ्गतरङ्गितः । तं तमेव नतं चक्रे येन येन पथावहत् ।
निस्तृणं भूतलं सन्तु सिप्पानीयाजलाभयाः । निरिन्धनान्यरण्यानि तत्सैन्ये चलितेऽभवन् ।
कोऽहं समान्य राज्ञासि दत्तसाक्षमयोऽस्वहं । कुर्व्वन् हृहत्कथाख्यानमभूवं एतपुस्तकः ।

करदीकृतभूपालः स पञ्चाममकृतस्थितिः । अभवच्चैत्रमासान्ते कश्मीरागमनोत्सुकः ।
तावद्भ्राम बहामखानोद्दामनिरर्गलः । आक्रान्तमन्त्रिधामन्तोद्गाला व्यसनिनं नृपं ।
अथ सन्ततपानेन घोणदेहबलच्छविः । स वातशोणितव्याधिबाधितोऽभून्महीपतिः ।
प्राप्तोहस्सनखानस्य पूर्णचन्द्रइवोदितः । तान्दुष्टमन्त्रिणः पद्मानिव संकुचितान् व्यधात् ।
किं नैतेन समानीतो बहूापि दुर्जनस्वराः । इति रोषं सुते राजा पिशुनप्रेरितोऽग्रहीत् ।
पश्चिमाशागतं श्रुत्वा तमपूर्व्वाद्रिसन्निभं । बहामखानोऽमन्देहोमन्देह इवसोऽभवत् ।
प्राप्ते सुतेऽधिकं सोऽभून्न तदत्यधिकादरः । प्रत्यासन्नविनाशानां धीर्भीत्येव पलायते ।
अन्याभ्यर्थनया मन्त्रिणामन्तानां महीपतिः । यात्रागताय पुत्राय ददौ दर्शनमात्रकं ।
नूनं स्वानुजभीतोऽभूत्तत्कालं सोऽन्यथा कथं । परिधानादिसत्कारं नूनमेवाकरोत्सुते ।
बहामो बाधते नूनं मत्पुत्रमिति शङ्कितः । स तस्मिंश्छन्नकोपाग्निः शमीतरुरिवाभवत् ।
पानार्थं राजधान्यग्रं तस्मिन्नेव परे नृपः । आरुरोह सनं मृत्योर्मृत्युनेव प्रचोदितः ।
तत्र दुष्करसौधान्तर्लीलया काचमण्डपे । धावन् पपात नासाग्रस्रवदस्रुविसंष्ठुलः ।
कथाञ्चित्तभुजैर्मध्ये नीतः शयनमण्डपं । ध्वस्तच्छायइवादर्शः संमूर्च्छन् शयनेऽपतत् ।
भिषजोऽस्यावमन्याप्तान् कोऽपि योगी चिकित्सकः । विषोत्कटौषधस्तस्य शमने स्म ह्वाययः ।
तस्यौषधप्रयोगेन प्राप्तदाहो दिवानिशं । काङ्क्षति स्म स्वमरणं यत्नार्थं न जीवनं ।
राजधान्यन्तरे राजसुताः स्वजनकान्तिके । आयुक्ताश्चदर्थयुक्तास्तद्दिनेषु स्थितिं व्यधात् ।
मुमूर्षौ पितरि ज्ञात्वा महतो दर्शनागतान् । तन्निर्गमनिरोधाय द्वारधान्यां भटान् व्यधात् ।
स्वालयस्थोऽनुजो राज्ञा भयहर्षाप्तसम्भ्रमः । करानिव रविस्तीक्ष्णांश्चारान् सञ्चारयन्नभूत् ।
तत्कालं राज्यलक्ष्मीः सा पितृव्यभ्रातृपुत्रयोः । द्वयोरासीत् समारूढा चित्ते संशयधीरिव ।
अत्रान्तरेऽद्दायुक्तस्य मन्त्रिणः सह । बहामखानमागत्य युक्तमित्यब्रवीद्वचः ।
स्वामिदेहे धरमाद्यद्य दुर्गमं स्वत्वयि । ह्युग्दीताभिधो भ्राता प्रयातः कीर्त्तिशेषतां ।
ज्येष्ठोऽधुनावशिष्टस्त्वत्त्वान् भज नृपासनं । स्वयं हस्सनखानाय यौवराज्यं प्रदीयतां ।
त्वत्पित्रा महतोद्यमाद्रक्षिता पालिता सती । सेयं त्वयाद्य नगरी पाल्या कुलवधूरिव ।
विमन्यन्तु पुरलुण्टाकाः काकाइव बलिप्रियाः । यथागतं प्रयान्त्वेते कुमन्त्रा मलिनाशयाः ।
श्रुत्वेति भाषितं तस्य कोपरूक्षाक्षरोऽब्रवीत् । सचिवोजनकस्यैकस्ताद्यकल्पद्रुनोपमः ।
सदैवादमखानस्य बाधितस्तदुपाधिभिः । परलोकमनालोच्य स्वार्थं सन्त्यज्य दूरतः ।
असत्स्यस्य यथा भ्राता सेवितस्तनतं मया । जानात्येवं न कोऽराज्यं यथा तस्य मयार्जितं ।
कोऽयं मद्भ्रातृपुत्रोऽद्य वद कैवास्य योग्यता । अस्मिन् सत्पैतृके राज्ये योग्यो मदपरस्तु कः ।
स कनीयानहं ज्येष्ठो वयसा च गुणेन च । पृथिव्यां वीरभोग्यायां साधुः कोऽत्रपरोऽधुना ।

इत्याद्यनुचितं यत्तैरोक्ता तं प्रत्यमोचयत्। यैः संघटितकन्योऽभूद्राज्यार्थं कृतभावनैः।
असाध्यैतांस्तदा मत्वा निराशस्तमपश्यत।
प्रत्यासन्ने नाशे सद्गुजलौघस्य बद्धमूलस्य। कुपथाश्रयणाद्यादौ धृतिरिव सेतौ मतिर्गन्त्री। १९०
युक्तमयुक्तवाक्यैर्भेदयद्धीयवशान्वितः। तुरगाद्यर्जितं सर्वमदास्यत् स्वयं गतः।
अथवाहं तमेवाद्यैवहनिष्यद्दलोन्नतः। कोपं हन्तुमयास्येत् स्थितं पितृपुरान्तरे।
अथवा बाह्यदेशस्थैरागमिष्यत्तदम्बना। निवृत्तकमराज्ये चेदाक्रमिष्यद्धनैर्महीं।
क्रमात्प्रबलस्यास्य किं नु स्याद्विलम्बतः। बालबालिशमन्त्र्युक्तायुक्तशास्त्राविनिश्चयात्।
अनभिज्ञतया तेन बत किं किं न कारितं। नाभूत् कोऽपि चिरं भोक्ष्यतितोत्कणया धिया। १९५
वरमद्य सुते राज्ञा राज्यं दत्त्वास्ति नः सुखं। इत्येकमेत्य सम्बोध्य बलिनं नृपवल्लभं।
आयुष्मन्नादमल्लेकसंमन्त्र्य सचिवैः सह। चक्रे सम्भावनां राज्यनिश्चये राजसूनवे।
गत्वा स्कन्दं प्रदास्यामि बद्दाममिति दर्पतः। अभिमन्युप्रतीहारो निर्सिकायाभिषेणनं।
अथ स्वच्छन्दवार्तां स श्रुत्वा हर्षं सुतान्वितः। बद्दामखानो विज्ञाणो निरगान्नगरान्तरात्।
दृष्ट्वा महार्घमणिमौक्तिकविद्रुमौघारत्नाकरं श्रयति लुब्धमतिस्स एकः। २००
तत्तन्महाभयकरान्मकरांस्तदोत्थान् वीर्येण यः शमयितुं गतभीस्समर्थः।
श्रुत्वा स्वभ्रातृपुत्रस्य चरितं चित्रमत्र सः। मिशासितबलः पुत्रयुतोऽध्वाराध्वगाचरत्।
यथैव दमखानस्य निष्कासनमर्थं व्यधात्। तथैवास्याभवद्राज्ञो न चिरेण फलत्ययः।
राज्यस्य दशनाधाब्दे कृत्वा मासि च माधवे। वर्षेऽष्टचत्वारिंशेऽगाद्दिवं श्रीपञ्चमीदिने।
वेतालोऽवसदुद्दण्डस्तम्भमण्डितमण्डपे। तेनैवोच्चण्डकोपेन खण्डितोऽक्रियया नृपः। २०५
इत्यूचुः केऽपि केऽप्यूचुर्योगिनोऽप्रसहस्ततः। न्यस्तत्वक्दोषधैर्व्यंसनचिरस्तमगान्नृपः।
केचिद्विषैव दुष्टेन केनच्यात् सुतवर्जितं। भूपतेर्दुश्चिकित्सार्थं कारिताभिषजस्त्वरं।
दिव्यं भैषज्यवेदेन कृत्वा श्वस्ततया तथा। बहिः सौटालदेशादौ क्षत्वा द्रोहेण पार्थिवान्।
येभ्यश्च राज्यतिलकं सिंहासनगतोऽग्रहीत्। पित्र्यांस्तान् सचिवान्हत्वा प्रमोदरति केचन।
नूनं स पितृशापेन तत्तत्पापेन दूषितः। हिमोघदवतापेन विलयं प्रापदञ्जसा। २१०
निष्कण्टकं पुरं ज्ञात्वा निःशङ्कोऽनृपनन्दनः। जनकं शिबिकारूढं स निनाय शवाजिरं।
मञ्जूषिकान्तराक्षीवा तं पटेकाहतं शवे। पितुः पादतले तत्र भूगर्भाभ्यन्तरेऽविशत्।
सर्वं स्वमुद्रिकामाचमेतद्देवेति संसिनः। मुखावलोकनं कृत्वा तस्मिन्नङ्गुष्ठिकं जडः।
गर्भं तत्र समापूर्य शिलां मध्योन्नतां न्यधुः। कठिनोऽयमभूच्छुद्धे जनानित्येव सूचितं।
अरुदन्सेवकास्तस्य कृतवेलावदारुणाः। स्मृत्वा स्वामिप्रसादांस्तान्मुखरीकृतदिङ्मुखाः। २१५
तद्राज्यं स्वल्पकालीनं प्रमादप्रभवोर्जितं। अविन्दन्सेवकास्तस्य स्वप्नसर्गास्थिरंश्रियं।
पारसीभाषया हिन्दुस्थानवाचा च भूपतिः। काव्यं गीतं यथा येन प्रबन्धन्ति न कोऽनगाः।

पुराणधर्मशास्त्राणि श्रोचापायादिसंहिता । शृण्वतोऽभूपनेराशीद्यामिनीषु प्रजागरः ।

दोषाकुलाः परग्रहाग्रभपकदा ये घूकादयो दिनपतेरुदयं द्विषन्ति ।

तस्मिन् समुद्यति महारुचिरप्रकाशे निष्ठाश्रमन्ति विपिनेषु गुहासु दुःखाः ।

दुष्टान् भेरेभकारादीन् कृत्वा निष्ठान्विश्रिष्टधी । स्थानेऽन्येषु सद्गोऽसि कारागारान्तरे न्यधात् । ९०

निर्वर्त्यान्यक्रियां सर्व्वां स पितुर्व्वंशशालिनी । राज्याभिषेकसम्भारं चक्रे षोडशभिर्दिनैः ।

घूकादयो नभसि सन्ति पराभ्रमत्ताजावत्प्रदोषसमयात्सुखप्रचार ।

आशाप्रकाशविपदोविलसत्प्रकाशोभास्वान्न यावदुदयं कुरुते सुचण्डः ।

इति जैनराजतरङ्गिण्यां पण्डितश्रीवरविरचितायां राज्यदेवशाहराज्यवृत्तान्तवर्णनं नाम द्वितीयस्तरङ्गः ॥



## ॥ अथ श्रीवरपण्डितकृता तृतीया जैनराजतरङ्गिणी ॥

### ॥ तृतीयस्तरङ्गः ॥

शिवायास्तु नमस्तस्मै त्रैलोक्यैकमहीभुजे । अशेषक्लेशनिर्मुक्तनित्यैश्वर्यदशाजुषे ।
भूतं यद्राज्यवृत्तान्तं वर्त्तमानं करोत्ययं । स्वयोगयोग्यप्रकारेण वन्द्यो योगेश्वरः कविः ।
प्रतिग्रहानुग्रहाभ्यां भुक्ता यन्नृपजीविका । तद्वृत्तं स्वस्य निष्कृत्यै वच्मि श्रीवरपण्डितः ।
स्वदृग्दृष्टसतत्त्वार्थविपद्विभववैकृते । सेयं कस्य न वैराग्यं सूते राजतरङ्गिणी ।
राज्यवृत्तानुरोधेन न काव्यगुणचर्चया । सन्तः शृण्वन्तु मद्वाचं सुधिया योजयन्त्वपि ।
काव्यस्योक्तिरदेवेयं कृता स्मृत्यै भविष्यतां । दृष्ट्वेदं ललितं काव्यं कुर्वन्त्वन्येऽत्र पण्डिताः ।
यतः श्रीहस्सनो राजा व्यसनोज्झितशासनः । सिकन्धरपुरीं त्यक्त्वा पित्र्यां प्राशस्त्यसुन्दरे ।
अगमज्जैननगरं पितामहविनिर्मितं ।
सिंहासनोपविष्टस्य निर्मलाम्बरभूषणः । बभौ कुवलयानन्दी शशीवोदयपर्वते ।
मल्लेकोऽह्मदनामाग्र्यो विधाय तिलकं स्वयं । सौवर्णकुसुमैः पूजामकरोन्नवभूपतेः ।
रौप्यासनसमुत्क्रान्तः कृत्वा छत्रपिधानकं । एकशेषतयैव श्रीरस्य चन्द्रांशुभूषणं ।
चित्रं नवनृपस्यास्य मुखचन्द्रावलोकनात् । नगराननपद्मानां विकाशः समपद्यत ।
अभिषेकक्रियारब्धहोममधूममिषाद्ध्रुवं । हर्षेणेवोद्गतो राज्ञो मुखोच्छ्वासद्रवो बभौ ।
वाद्यमानाततातोद्यघोषप्रतिरवच्छलात् । सुप्रसन्ना स्तदेवास्य प्रोचुः पूर्णाशिषो दिशः ।
ध्वजमालासमुद्धीप्तस्फुरद्रक्तपटाञ्चलाः । ज्वाला इव प्रतापाग्नेर्निर्गता नवभूपतेः ।
छायाकुसुमकार्पासायसुमाः प्रविसृताः । चिरात्तद्गणराज्याप्त्या हर्षहासा इव श्रियः ।
कौशेयकाश्मवत्रांश्च सेवका नवभूपतेः । स्फुरद्भाग्यतरङ्गस्य तरङ्गा इव तेऽरचन् ।
कार्पासकपरीधानं यत्र यत्राभवत् पुरा । तत्र तत्रास्त तद्राज्ये कौशेयक्रयणं महान् ।
राज्यलाभे वसन्ताभे स्वर्यस्येव महीपतेः । प्रत्यापहारकाक्षर्मे दुष्टमेघात्ययं ययुः ।

रविः प्रदीप्तः कुरुते प्रकाशं विभाति चास्मिन् सति सूर्य्यकान्तः ।
तस्मात् समुत्थस्य च पावकोऽन्यस्तमोपहः किं न करोति कार्य्यं ।
आसन् पितृपितृव्याद्या यत्कृते विफलश्रमाः । पौत्रेण हेलया प्राप्तं तद्राज्यं गतकण्टकं ।
पितुः पितामहस्यापि पितृव्यस्य च सम्पदः । भाग्यभाजं नृपं प्रापुस्सर्व्वाः सिन्धुमिवापगाः ।
षड्दर्शनपरिचयं सोऽग्रहीत् मत्सरोज्झितः । षड्दर्शनक्रिया यस्मिन्नैकमत्यमिवाययुः ।
भूपतेरह्मदायुक्तो नियुक्तस्सर्व्वकर्म्मसु । साचिव्यं पुत्त्रसंयुक्तः पुण्याद्युक्तस्सदाकरोत् ।
अथ प्रथममेवाह्मदायुक्तं मल्लिकं नृपः । सग्रामग्रामनाथाममप्रमेयस्वामिनं व्यधात् ।
पुत्त्रोऽस्य नौरुजा युक्तो द्वारपालादिकार्य्यभाक् । दक्षिकाममजद्राष्ट्रं सग्रामविभवोर्जितः ।
पानलीलान्तरे तत्र प्रसादाम्टतवर्षिणा । येन दारिद्र्यदावाग्निः केषां न क्षपितः क्षणात् ।
वहिर्देशस्थिते राज्ञि बाल्ये यस्सेवकोऽभवत् । स ताजिभट्टोमल्लेकमतः प्रापान्तरङ्गतां ।
निग्रहानुग्रहव्यग्रः समये राज्यविग्रहे । दत्तदूत्याधिकारेण राज्ञोजिह्वेव सोऽभवत् ।
अधिकारनदी पूर्व्वं स्फुरन्ती शतधाभवत् । तदा द्वितीयया वृत्त्या तस्मिन् शतपदा वभौ ।
अन्येऽप्युच्चावचान् ग्रामान् जोनराजानकादयः । पूर्व्वसेवानुसारेण प्रसादं प्रापुरञ्जसा ।
श्रीमल्लेकाह्मदस्सर्व्वकार्य्ये यां स्थितिमब्रवीत् । तां नोदलङ्घयद्राजा वेलां सिन्धुरिवोल्वणः ।
पित्र्याः पैतामहावापि विरुद्धा वन्धनेऽवसन् । भुट्टदेशं धिया तस्य तेषां निष्काशनं व्यधात् ।
सर्व्वदर्शनसंयुक्तोनृपो मन्त्रिविधेयधीः । पितामहसमाचारं प्रावर्त्तयत मण्डले ।
स्वामी क्षमी कृतज्ञश्च मन्त्री भक्तः स्मयोज्झितः । संयोगोऽयं प्रजापुण्यैः सुचिरेण निरीक्षितः ।
उच्चासनेषु मार्गेशठक्कुरादीन्निवेशयन् । तद्भूतद्भव राजाग्रे स निषण्णोऽभवत्तदा ।
हितं प्राणपणेनापि प्रभोस्सम्पादयन्स्वयं । मेहेश्वरवदेतस्मिन्नाभवद्भक्तिखण्डितः ।
मठाग्रहारसदननिर्माणातिथिपूजनैः । नृपोपचारैस्साफल्यमनैषीत् सर्व्वसम्पदः ।
कमलममलं दृष्ट्वा श्रीमत्स्वकोषविभूषितं प्रथयितुमथ प्राप्तोयावन्मदान्मदवारणः ।
प्रकृतिमलिनस्तावत्सप्रस्य पद्मसरोवरे श्रवणचपलोवद्धो याति क्षयं मधुपैस्सह ।
अत्रान्तरे स वह्रामखानः पिशुनमोहितः । देशान्तरोद्यमं त्यक्त्वा युद्धायागान्मदोद्धतः ।
तदद्यान्तरमेष्यामीवयन्तत्र रणक्षणे । इति लेखैर्धृताशस्तमकुर्व्वन्राजपूरुषाः ।
कर्णाभ्यन्तरतः सैन्यानुमद्य कटकोत्कटः । क्रमराज्यपुरं प्राप्तः क्रमराज्यजिहीर्षया ।
तावन्मन्त्रियुतोराजा स्थितोऽवन्तिपुरान्तरे । तत्प्रत्यावृत्तिवार्त्तां तां श्रुत्वा तूर्णं न्यवर्त्तत ।
राजा स्वय्यपुरं प्राप्तः पितृव्यागमविक्लवः । आनीय सचिवान् सर्व्वान् सभान्तरिदमब्रवीत् ।
पितुः क्रमागतं राज्यं पुत्रस्येत्युचितं मम । कोऽयं पितृव्योज्येष्ठोऽपि कनिष्ठोनिर्मितोद्यमः ।
अथवा वीरभोग्यायां भुवि कोऽयं नयोदयोः । युद्धेन विजयी यः स्यात्राज्यभाक् सोऽस्तु मण्डले ।
श्रुत्वेति नृपतेर्वाक्यं प्रत्यूचुर्मन्त्रिनायकाः । ये तेऽप्यादमखानाद्यास्तदैव विधिना हताः ।

कोऽयमल्पबलस्तेन खोयाद्भा स्थानपरिच्युतः। किन्त्वद्यावधेरेनास्ति समित्युभयचेतनाः।
अमुमेव मिलन्त्येते यदि किं क्रियते पुनः। तच्छ्रुत्वा कोशसामयोमितो गत्वा बहिस्ततः।
देशमाक्रम्य नः कार्य्यं सिध्यत्येवाचिरादिभो। श्रुत्वेति मन्त्रिणः प्राह भूपं तत्र सभान्तरे।
तिष्ठत्वत्र भवांस्तावन्मौनं मन्त्रिसभान्वितः। स्वकीयादमखानीयां जेतुं तं विहृगामहे।
ते चेज्जिता वयं श्याम. पुनस्सर्व्वबलान्विताः। कोऽयं तत्सम्भ्रमः कस्य सहायः किं करोत्यसौ।
श्रुत्वेत्यादि मतं तेषां विविधं निश्चयोज्झितं। मन्त्रिकाह्लादमन्त्रेण कर्त्तव्ये प्रत्यपद्यत।
पितुः पितामहस्याथ सैन्यं हृत्वा निजान्तिके। पैतृव्यान् सेवकान् स्वांश्च दत्वा तत्तद्बलान्वितान्।
सफिर्यडामरांस्ताजिभट्टादीन् व्यसृजन्नृपः। योद्धुं बह्रामखानाय मावरीदेशवासिने।
अथ स्वल्पबलानेतान् जेष्यामीति त्वराकुलः। तावद्बह्रामखानस्स प्राप दुलपुरान्तरं।
अनागतैः कृताश्वासैरपि राजमहत्तमैः। स्वात्मानं वञ्चितं मेने तन्निराशो नृपात्मज.।
तद्दिने राज्यलक्ष्मीस्सा पितृव्यभ्रातृपुत्त्रयोः। दयोरासीत् समारूढा कोट्योस्सन्देहधोरिव।
चौरादवान्धकारौघे दैराज्योपप्लवप्रियाः। तुतुषुस्तक्रमावाद्यास्तं श्रुत्वा क्रमराज्यजाः।
अथ जैनगिरिं यावद्राययौ तद्रणाकुलः। दूतस्तावत्समागत्य भूपतेरिदमब्रवीत्।
देव बह्रामखानस्य तनयोनयविच्युतः। युयुत्सुस्समरे बद्धः करीव मदनिर्भरः।
पतिते तद्रणोद्याने त्वद्बलोद्धतमानसे। तत्यजेऽनुचरैः खानः पौषे पर्णैरिव द्रुमः।
ततस्सञ्चरमेराद्यागर्ज्जन्तस्सैन्यनायकाः। दुष्टमेघादिवायातास्सकुतच्छरवर्षणं।
धन्यास्ते श्लाघ्यमरणास्सुरणाः स्वामिनः पुरः। स्वलामितप्रसादानां जीवं यत्तृणवज्जहुः।
तच्छुद्धये स्वणमवेत्य मितप्रसादं प्राप्ते रणे जहति ये निजजीवरत्नं।
शस्त्राणि पुष्पनिकरानिव संविदन्तोधन्यास्तएव कतिचित् प्रभुसेवकेभ्यः।
अयो देवस्य माहात्म्यं यत्तस्यैव रणे भटाः। शिरालमार्गपाद्या ये तद्भृत्याः प्रलयं ययुः।
इदं चित्रतरं यत्रः कटके कोऽपि नो मृतः। किन्त्वसङ्कटनिर्मुक्तशरादयफलसन्धिजात्।
निष्कष्टुं मायकत्कोशात् खड्गं खाने। रणोद्यतः। तेनापकृतायुधः खानोदीनस्सङ्कटवेष्टितः।
चितानलदवामारैर्मिथोपा ममपद्यत। यावत्समेत्य हन्तुं तं प्रारभन् कृपया द्रुतं।
तं फिर्यडामरस्तावद्रचदाङ्कपञ्जरे। भूः पङ्किलानिष्टिष्टिय दिजोऽपे निस्सहायता।
मृत्युभीतिरिति प्राभूत् किं किन्त्वस्म दुःखदं। शीतवातभयोदिग्रा मग्नाः केदारकर्दमे।
त्यक्त्वा तं तद्भटा मग्ना गर्त्ताटाइव तेऽपतन्। अर्जितां सर्व्वसामग्रीं पामरैः परिलुण्ठितां।
साक्रन्दस्य सुतं पश्यन्स्सम्यद्धैर्य्येण वियये। दृष्वा च क्व च मे माता क्व स्त्रियाः क्व गृहादिकं।
सम्पुनः सपुभिर्बद्धः क्व पृच्छामि करोमि किं। वरं मरणमेवास्तु मा मास्तु मम जीवनं।
फलितं वचनं मेऽद्य यदुक्तं जनकेन तत्। धिङ्मांश्चिन्तामणिं त्यक्त्वा येन काचमणिः श्रित.।
इत्यादि निन्दन् स्वात्मानं पश्चात्तापहतासयः। जीवन्मरणसम्पन्नः स्वाभस्सम्प्रति वर्त्तते।
पौषे तदरिवीरस्य फलपत्रविवर्जितः॥ कुलकं॥

राज्यं तव क्रमायातं दत्तं देवेन भुज्यतां । फलितो धर्मविजयः सोऽयं भाग्यैर्महीपते ।
किमन्यत्तस्य कर्त्तव्यं यत्तु तूर्णं समादिश । श्रुत्वेति नृपतिस्तुष्टो दत्वास्मै पारितोषिकं ।
जयवाद्यनिनादौघैस्सर्व्वं बलमतोषयत् । अन्येद्युस्त्वङ्कटाजैनगिर्य्यां कटकवेष्टितं ।
बहामखानमानिन्युस्सुप्तं भूपतेः पुरः । संग्रामविजयोत्सिक्तं सत्कर्त्तुं स्वभटव्रजं ।
सहर्षो राजधानीं तामारुरोह नरेश्वरः । उच्चावचोक्तिमुखरपौरान्तरगतं नतं । ८०
भूमेरन्ध्रमिवेच्छन्तं लज्जया च भयेन च । रणचण्डभटन्यस्तहस्ताध्वस्तविभूषणं ।
दयालुनीचदत्तात्मजीर्णवस्त्रावगुण्ठितं । मुखलग्नेषु भेदोघ्रनाताश्रुतवेष्टनं ।
अलक्ष्मीवीचितं दूरात् पितृव्यं चण्मैचत । भाग्यार्जितस्य भूभर्त्तुरग्रे बद्धस्य मात्मजः ।
दीनात्मा ददृशे पौरैः स्थिराः कस्य विभूतयः ।
लोभाक्रान्तधियो विवेकमुचितं मुञ्चन्ति यन्मोहिताभुक्ता या मनसापि दर्पकचितास्त्यक्तुं न शक्याः स्वयं ।
सन्तापाय भवन्ति सन्ततमलं नीताः परैश्चेद्वलान्मा सन्तु भवेऽत्र हन्त चपला वेश्याद्वेताः श्रियः ।
उपेक्षितः पिता तादृगवस्थास्थो स्वार्थलिप्सया । ज्येष्ठोऽप्यादमखानस्तु बाधितोपाययुक्तिभिः । ८५
दुराशयापरो भ्राता श्रियोऽसाध्यामयेक्षणात् । राज्यलोभाद्वाहस्सुते तास्ताद्रोहधियः हताः ।
अद्यैतेन फलं प्राप्तं तदधर्मविनिश्चयात् । दृष्ट्वा बद्धं तमानीतं खानमित्यवदज्जनः ।
केऽप्यूचुस्तु पितुः शापाद्विमूढस्समपद्यत । तथाहि तं पिता जातु पितृदैवे रहोऽब्रवीत् ।
राज्यं त्वदग्रजाभ्यां मे नाश्रितं वैरतो मिथः । तथाप्यनिष्टौ द्वावेव मम चिन्ताज्वरप्रदौ ।
तदेतौ विनिवार्य्याहं युक्त्या देशसुखाशया । त्वामेव वर्द्धयिष्यामि त्वं मदेकाश्रयो भव । ९०
श्रुत्वेति प्राह तं नाहं जातु चेद्भ्रातरं त्यजे । यतो ज्येष्ठोऽसि मे लिप्सा द्वयोः किं स करिष्यति ।
श्रुत्वेत्याहाग्रजं हन्तुं त्वयेच्छुस्त्वां स रक्ष्यति । प्राप्तप्राघुणहस्तेन भुजङ्गमिव वेश्मगं ।
सिद्धकार्य्यस्य पुत्रस्य बाधते यदि का गतिः । तच्छ्रुत्वा संस्कृतग्रस्य श्लोकेनेत्युत्तरं ददौ ।
विद्यातीर्थे श्रुतपरिचितास्साधवस्सत्यतीर्थे गङ्गातीर्थे सकलमुनयो योगिनोऽध्यात्मतीर्थे ।
लज्जातीर्थे कुलयुवतयो दानतीर्थे वदान्या धारातीर्थे धरणिपतयः किन्त्विदं चालयन्ति ।
तदाकर्ण्याब्रवीद्राजा सक्रोधं तं दुराशयं । बहुधा युद्धदृष्टोऽसि नाहं यत्रास्मि तत्त्वमः । ९५
वराकः खड्गधारार्थी तत्र त्वमपि दर्पितः । किं वच्म्युत्पाटने योग्ये नेत्रे पश्यामि दुर्धियः ।
तदेकएव नष्टस्त्वं भवेस्मानुशयोऽचिरात् । इत्युक्तमस्मिन् पित्रा यत्तदद्य फलितं वचः ।
तमीक्षेति कथा लोकः सशोकोऽप्यकरोन्मिथः । इति बहामखानपराजयः ॥
यथोचितैर्दानमानैस्तोषयित्वा निजं बलं । तस्मिन्नेव दिने राजा तुष्टो नगरमाययौ ।
बद्धं रिपुं समादाय नौकारूढं सुतान्वितं । श्रीजैननगरे राजवाधे स्वे बन्धने व्यधात् । १००
जननी नृपतेः प्रीता दर्शनाम्नतदर्पणा । अमन्यत रणोत्तीर्णं पुनर्जातमिवात्मजं ।
शङ्कितो यौनसम्बन्धाद्भूपतिः कतिचिद्दिनैः । हयावतारसीहादीन् कारागारान्तरे व्यधात् ।

पापीमल्लिकटाजस्य पञ्चगङ्गरदेशजः। पुनश्चाटुकतन्त्रेण तत्रादायासकार्य्यभूत्।
उल्काचमुद्रादानादिप्रपञ्चाश्चितवञ्चनः। सुसञ्चयकृता येन देशोऽशेषो विलुण्ठितः।
अभिमन्युप्रतीहारः स्वतन्त्रोमन्त्रिमण्डले। स देवसरसि स्वाम्यमभजद्दलदर्पितः।
लोत्रप्रतिगृहचैत्रदत्तवृद्धिः पदे पदे। लुब्धस्य निजमात्मानमनाशीर्भाजनं व्यधात्।
शङ्कोराजगृहासन्नः पित्र्योवञ्चनस्थितः। लव्यण्यत्र स्थिते कोऽपि नीत्वा दैराज्यमाचरेत्।
इत्यादि प्रेरितोऽनेन नेयबुद्धिर्नरेश्वरः। क्रुद्धोबद्धामखानाय नेत्रोत्पाटनमादिशत्।
तस्य तूलाचिते नेत्रद्वये तप्तां शलाकिकां। जैनराजोनकोलोद्दीं दृङ्नाशार्थमदापयत्।
नैर्गुण्याद्विहन्तुर्य्यत्कष्टाचस्य च या व्यथा। इयं न शक्यते वक्तुं यथार्थं मादृशां गिरा। ११०
दुर्णीतिमवदन् केचित् केचिदीश्वरजृम्भितं। प्राक्कर्म्मपाकमपरे नीचसङ्गमथापरे।
केचिद्विभववैशस्यं कातरत्वमथापरे। तदन्धकरणं श्रुत्वा कोऽप्यवाच्यगिरोऽब्रवीत्।
मानुष्यं मास्तु तच्चेत्स्यादरं प्राकृतवेश्मनि। राजगेहेऽस्तु मा जन्म कस्यापीति न कोऽवदत्।
स्फूर्जद्भाग्यसमुद्भवन्नवनवप्रोल्लासमम्पत्सुखः प्रायोवेत्ति विभुर्व्विनोदकलया कालं विशालं क्षणं।
दौर्भाग्योदितदुर्गतेः स्मृतिनिजप्राच्यप्रकर्षान्ततेस्तस्य प्राप्तमहाभयस्य स भवेत् स्वप्नोऽपि कल्पोपमः।
अयःशृङ्खलबद्धाङ्घ्रिर्योऽन्धस्तत्रैव बन्धनैः। स्मरन्विभवसामग्रीमनयच्छेषमायुषः। ११५
नायं गीतैर्विना जातु वर्त्तते स्म गृहान्तरे। इत्येव तस्य साराव्राज्ञिज्ञोजागरणं व्यधुः।
योऽभूच्छय्यागृहे नित्यं सर्व्वाङ्गे सेवकैर्वृतः। अभूवन् केवलं तस्य भृत्यास्तटकमत्कुणाः।
वितानावलयोयस्य बभूवुर्दुर्लभाः सुरैः। दृष्टास्तएव तद्गेहे लूतातन्तुविनिर्म्मिताः।
यद्वपुः कोमलं पट्टतूलशय्यामभूषयत्। तदा तत्तस्य भूपृष्ठेऽशयिष्टादृष्टविष्टरं।
दीयतां दीयतां तस्य वाणी या त्यागिनः श्रुता। विपर्य्ययेण सैवाभूत्तत्तदस्त्रपयाचने। १२०
गतं स्वाम्यं हता भृत्याः प्राप्तः परिभवो नवः। बन्धनं शृङ्खलाबन्धैर्नेत्रोत्पाटनतो व्यथा।
इत्येवैकः स्मरन् दुःखं सोऽन्धोराजसुतश्चिरं। नाज्ञासीन् स्वात्मनस्तुच्छमपरं प्राकृतास्वपि।

कोपाज्ज्वलं कमलमेत्य नवं समन्तादस्मिन् रमेऽहमिति तुष्यति चञ्चरीकः।
दोषानुषङ्गमधिगम्य निबद्धमूर्त्तिस्तत्रैव नाशमुपयाति विधौ विरुद्धे।

राजवासःस्वलीलार्थं निर्मितस्तेन यः स्वयं। सएव बन्धनायाभूत् को वेत्ति भवितव्यतां।
इत्थं वर्षत्रयं तावदनुभूतमहाव्ययः। अस्थिशेषतनुः क्षीणास्तस्मिन्नेव क्षयं ययौ। १२५
देशकालमनालोच्य वैरं यः कुरुतेऽरिभिः। स नश्यत्यचिरेणैव शौर्य्यश्रीमण्डितोऽपि सन्।
अभिमन्युप्रतीहारस्तत्तच्छौर्य्यमहोद्धतः। अयुक्तपक्षं प्रबलं नासहिष्ट स निष्ठुरः।
स्वातन्त्र्येण स्फुरन्प्रावत् स्फुरदाकृष्टरताडनं। दर्पादायुक्तपक्षस्य स्वचोत्राचितोऽभवत्।
उपायान् कुर्व्वतस्तांस्तांश्छद्मकोपेन मन्त्रिणा। बन्धुं तं मल्लिकेनात्र नावाप्यवसरः क्वचित्।
एकदा तद्गृहं गत्वा स्वर्णं श्रीविजयेश्वरे। तद्भिया नृपतीराज्यधान्यन्तमामयन्नयत्। १३०

अभिमन्युः स्वयं ख्यातः पाण्डवाद्यास्य तत्सुताः। शृगालवत्तदाभूवन्निर्गिच्छां विविधा विधेः।
यस्याहवे मुखमवेक्ष्य महागजेन्द्रा दूरं प्रयान्ति बलिनस्त्विमिलीमुखाद्याः।
दर्पोद्धिमैर्यदि न निर्मितकूटयन्त्रं कस्तं निरोद्धुमलमुत्सहते मृगेन्द्रं।
सपुत्रं हृतसर्व्वस्वं बद्धा नौकान्तरे ततः। ताजिभट्टः समानीय कारागारान्तरेऽक्षिपत्।
यादृग्वड्डामखानाय कारयन्नृपतेरसौ। वर्षैकेन तादृक्षं नेत्रोत्पाटनमन्वभूत्।
यादृग्वड्डामखानस्य व्यथाभूदतिदुस्सहा। अविन्दत्तादृशीं सोऽपि वक्तुं नान्येन शक्यते।
यस्मिन्नेव दिने यस्मिन्मासे विप्रियमातनोत्। तस्मिन्नेव दिने तस्मिन्मासे सोऽपि समासदत्।
सोऽपि वर्षद्वयं भुक्त्वा सपुत्रो नरकव्यथां। वड्डामखानवद्दुर्व्यसनान्तर्व्यपद्यत।
अद्येव मदृशौ धन्ये याभ्यां मत्कुलवैरिणः। सर्व्वस्वहरणं दृष्टं मरणं जैनभूपतेः।
इत्यूचे निष्ठुरं यस्य दुष्टात्मा हतलुण्ठनः। तदुक्तिफलमापासौ तयोर्नाशोऽभवत्फलं।
चिन्तितं जैनभूपेन सम्पन्नं नैव यत्पुरा। हेलयास्याद्य पौत्रेण कृतमित्यवदज्जनः।
यत्कर्त्तुमिच्छति परापचयं मनुष्यस्तेनैव तस्य नियमेन भवेद्विनाशः।
शृङ्गं बिभर्त्ति हरिणः पररन्ध्रबुद्ध्या शार्ङ्गीक्षतं तदिषुभिर्हरते तमेव।
दृष्टोरम्यश्चिरमुपवने वंशवाटी जनैर्यो नानावर्णैस्तृणगणगुणैर्भूषितो भूरिपत्रः।
तत्रान्योन्याहननजननात्तादृगभ्युत्थितोऽग्निर्येनैकान्तादुपवनगतं सर्व्वमेव प्रनष्टं।
या कारकसभा रम्याभवन्मोलमहीभुजां। अचिरेणैव कालेन सर्व्वा स्वप्नोपमाभवत्।
कष्टं मल्लिकजादोऽयमन्धर्मं स्थानमिच्छति। राज्यार्थमिति केनापि राज्ञोऽग्रे पैशुने कृते।
सर्व्वस्वहरणं कृत्वा कारायां बन्धुमादिशत्। श्रुतेन तेन यद्विष्टेन कः सौख्यं समासदत्।
आक्षेपैरर्जिता यद्वत्तेन श्रीर्न्यायवर्जिता। तद्दाक्षेपतस्तस्मान्नीता राजाधिकारिभिः।
उत्कोचमुद्रादानादितत्तदायासकारणात्। स विपत्पतितो माभूत् कस्यापि करुणावहः।
कदर्य्यहस्तेक्षणसौख्यनिष्ठं त्रिसत्ययुक्तं प्रसभं धनं यत्। कष्टेन निर्याति तदेव कृष्टं शुनीभगे लिङ्गमिव प्रविष्टं।
एकैकं सञ्चितं वस्तु कष्टं कष्टेन तस्करात्। नियुक्तैः पीडनं कृत्वा विलान्तर्गतसर्पवत्।
पूर्णनापितमल्लिकजाद्याद्या हतसम्पदः। बन्धनस्थायिरं भुक्त्वा ते सर्व्वे प्रमयं ययुः।
तत्तद्राज्यहिताकाङ्क्षिकुले तस्य क्षयावधिः। शापः श्रीजैनभूपस्य प्रसारितभुजोऽभवत्।
मन्त्रैराज्यविवर्द्धनं कुरुत भोस्त्वयं मृते मन्त्रिणो नाशं स्वामिनि कुर्व्वतां नहि सुखं स्यादः परत्रेह च।
येयैर्जैनमहीपनावपकृतं पुत्रैर्न भृत्यैर्न वा तैर्लब्धं फलमीदृशं तदहिता मात्सर्य्यधीस्त्यज्यतां।
अन्येऽप्युत्पावपास्तस्य सेवका ये तदाभवन्। तदनिष्टकरास्सर्व्वे तदन्तेऽपि प्रमिम्यिरे।
यावदश्नति वसन्तस्तावद्धिलषन्ति सन्ततं भृङ्गाः। तस्मिन्विष्टे नष्टे भ्रष्टच्छाया नु चेष्टन्ते।
पूर्व्वं जैननृपस्सैदनासीरादीन्समागतान्। पैगम्बरान्वये जातान् पूज्यान्ज्ञात्वा महागुणान्।
मोघसनकुरस्पर्श्यदर्पितातुलसत्कृतीन्। स्वसुतादानमानेन यांस्तान् राष्ट्राधिपान् व्यधात्।

तेभ्यश्चोद्यमालारीन् राजा ज्ञात्वा तरङ्गिणाम्। मध्यगुणपदा देशात्तत्सुयमरचयत्।
स सैदनाधिपो धन्यो गण्यो युधि मनीषिणां। योविचार्य्यायतिं रात्रि मति देशागारं ययौ।
सुतोपनयनाद्राज्ञश्चुचिरं यैर्भूपायितं। मठरूपाधिराज्ञाधिपत्यनित्यमुखोऽभ्यसेः।
इतस्तोऽभ्रमन्तस्ते केचिद्दिसोपुरं ययुः। केचिदिभशेभिम पुनर्निष्काशिता अपि।
नारमन्त वहिर्देशे माघे मधुकरा इव।
प्राप्ता ये परदेशजाः फणभुजो देशेऽत्र सम्पच्युता गर्भोत्पादिव विश्रुतात्मचरिताः कुर्य्युः प्रजापीडनं।
ते तत्पापभरेण नष्टविभवा निष्काशिताः स्वामिना गच्छन्ति इदशष्टमत्यतुलनां तत्कोऽत्रमात्राकुलाः।
राजानकैठक्कुरैश्च तर्भोगंपतिभिस्सह। नियद्धुयोमयमन्मश्तकैयोमल्लिकोऽभवत्।
सर्व्वतन्त्राधिकारेण राजतन्त्रमखण्डितं। ताजिभट्टाय मल्लेको मुष्टिमन्भमिवाकरोत्।
पुत्त्रीकृतोऽयं मद्दंश्यः सदाकश्मात् स्फुरद्यत्। इति तस्याचमिष्टादो मल्लेकः स्फूर्जितं न कं।
स्वसारं वीचते स्वस्य मार्गेशोऽपि ज्यहंगिरः। स्वसारं सैदनिर्मुक्तिदत्तपत्राङ्कितां यथात्।
तन्मार्गेशाग्रजं राजा नमते न मसन्नधीः। अभ्यर्थ्य ताजिभट्टाय मल्लेकस्तामदापयत्।
ज्यहङ्गिरोऽपि मार्गेशः चितिपालानुरोधतः। स्वायमार्पणमेतस्मै चचमे नयदृष्धीः।
चञ्चरीका इवोद्यानं कुल्या इव महोदधिं। भाग्यभाजं समायान्ति कलत्त्राणि च सम्पदः।
तां मार्गेशकुलोद्यानकल्पवल्लीं फलप्रदां। तैस्सम्पूर्णगुणैः पूर्णां भट्टोलक्ष्मीमिवासदत्।
सैदनिष्काशनं नैव सम्पन्नं जैनभूपतेः। देवयैवास्य पौत्त्रेण कृतमित्यवदज्जनः।
कृते निष्कण्टके देशे मल्लिकाह्मदसन्ततः। प्रतिष्ठारसिकोराजा तत्सभा च तदाभवत्।
विवाहोत्सवसद्देशनाथयात्रादिमङ्गलान्। नापरामयहीचिन्तां वैराज्यसुखितोजनः।
पञ्चाशद्वत्सरे राजा निर्म्ममे निर्ममेच्छितः। दिद्दामठे नदीप्रान्ते राजधानीं मनोहरां।
धन्याहमन्या किं भून्यादत्येवाम्बुनि विम्बिता। स्फुरच्चतुष्किका हस्तैर्नृत्यतीव दिवानिशं।
मद्दर्शेन कृता केनापीदृशीति दिदृक्षया। स्वर्णच्छत्त्रच्छलाद्यस्याः प्राप्तोव्योम्नो दिवाकरः।
यत्काष्ठक्लिप्तकोणस्थदारुगारुडमूर्त्तिभिः। त्रस्तास्वरन्तोनायान्ति पचिणस्तत्प्रभोध्वना।
गोलुखातोनाभिधा राज्ञी माता दिष्ट्येव देवता। विशालां धर्म्मशालां साप्यकरोन्मद्रसाख्यया।
यत्प्रवेशे नृपस्तुष्टो मातामहसमागतः। पचमेकं व्यधाद्भूरिव्ययशालिमहोत्सवं।
प्रतिष्ठामर्द्धनिष्पन्नां निर्लोच्यानुचितां नृपः। नगरे पितृपुण्यार्थं स्नानगार्हं निर्निर्ममे।
कुलोद्धरणनागस्य तटभूमौ महीपतिः। वह्निदग्धं नवं चक्रे राजवासं मनोरमं।
विजयेशनदीप्रान्ते राजवेश्म नवीकृतं। भाति भातिशयान्मध्यरत्नं हारावलेरिव।
छत्रं यत्र स्फुरत्पत्र वितस्ताम्बुनि विम्बितं। प्रेत्य तुष्टैस्सुरैर्मुक्तमिव सौवर्णपङ्कजं।
भाति सुय्यपुरे राजधानी राजविनिर्म्मिता। पुरातनी पराकीर्णा हसतीव सुधासिता।
राज्ञा कृतैरल्पकाले सोद्याने राजवेश्मभिः। यद्दर्शनादनेकाचोनूनं स्वमभिनिन्दति।

प्रतिष्ठा विहिता राज्ञा मत्वा या निजमण्डले । अन्यास्ता वर्णिता नात्र ग्रन्थगौरवतो मया ।
हिद्दामठेऽन्नदायुक्तः छन्नातुलम्टहावलिः । मसीदाहजिरोदारशिलाभित्तिविराजितं ।
खानगाहेति विख्यातं धर्म्मवासं विनिर्म्ममे । येन नानादिगायाततत्तत्पथिकशालिना ।
हिद्दामठपुरं सर्व्वं ययौ नेत्राभिरामतां । प्रवेशे नृपमानीय षष्टिलचक्रतत्रयं ।
दत्त्वा सतिपुत्रग्रामं सत्रं यत्रावतारितं । शाहाभिधास्य भार्य्यापि मठं सुकृतकर्म्मठं ।
खेरीविषयमार्गान्तर्निर्म्ममे सप्रतिग्रहं । तत्पुत्री चौरुजायुक्तं कृत्वा धर्म्ममठं नवं ।
नगरात् चिन्निकां यावच्छैलसेतुं नवं व्यधात् । तद्दीपे सति यो हन्ति सर्व्वेषां पुरवासिनां ।
सम्भ्रनिर्म्मितदीर्घाश्मसेतुबन्धकुटुहलं । भ्रातरावपि तौ धन्यावन्यौ रिचकनूपकौ ।
व्यधातां क्रमराज्यान्तर्मठौ सौधमनोहरौ । ताजिभट्टोऽपि भूपालवाल्लभ्यविभवोर्ज्जितः ।
करालविषये जैनपुरीमध्ये मठं व्यधात् । कुम्रदीनपुरीमध्ये चक्रेऽश्मरचना नवा ।
इन्द्रोऽपीचेत तस्योऽपि भवेत् कर्म्मकुतूहली । एदराजानकोराजवल्लगोभाधिकारभाक् ।
खानगाहं स निर्व्वर्त्य बलाद्यमठकान्तरे । नवः सिद्धविहारान्ते निजजन्मभुवोऽन्तरे ।
येन लोकार्त्तिहृच्चक्रे विहारः स्वच्छोज्ज्वलः । मठाग्रहारमस्जेदाविद्यारम्टहपंक्तिभिः ।
त्रिंशद्दिग्प्रतिष्ठातामण्डले येन कारिताः । सर्व्वदर्शनसम्पन्नप्रतिपादितदक्षिणे ।
प्रतिहार्य्यक्षणे येन क्रोटिरेका व्ययीकृता । स फिर्य्यडामरो जैननगरे मन्त्रसुन्दरं ।
मसीदाहजिरोदारं खानगाहं विनिर्म्ममे । हयातखातोना राजवल्लभा विभवोज्ज्वला ।
म्टगयाटाभिधे स्थाने मठं दग्धं नवं व्यधात् । मोमारखातोना राजमहिषी स्वधनैर्नवं ।
राजधान्यन्तिके जैननगरे स्वमठं व्यधात् । जयरालाभिधा राजपुत्री राजान्वयोदिता ।
शेकन्धरपुरप्रान्ते खानगाहं नवं व्यधात् । श्रीजैननगरीयस्य मसीदाहजिरादयः ।
भान्ति प्रतिष्ठा यत्नैताः पुण्यकीर्त्तिमनोहराः । कर्म्मसत्यधिकारस्थो नापितः फेरठक्कुरः ।
विजयेशनदीपारे मठं चारुतरं व्यधात् । सय्यभाण्डपतिश्चक्रे विहारो विजयेश्वरे ।
योधर्म्मसद्भाद्युपक्षयोधमार्गद्वावभौ । प्रासादं लक्ष्मभेगाद्या भ्रातरोऽस्य वणिग्वराः ।
भीमस्वामिगणेशस्य व्यधुः शैलमयं नवं । तद्गणेशालयं दृष्ट्वैवोन्नतं सुधया सितं ।
द्वीपात् चेस्तमुखं चित्र्यं भवत्येवासितं नतं । अन्येऽप्युच्चावचा वेश्मप्रतिष्टा विविधा व्यधुः
याभिः स्वर्गोपमं भाति मण्डलं वेश्ममण्डितं ।
देशेऽस्मिन्विभवोऽभवन् कति न ते यैः सद्व्ययार्थं वयस्संनीतो न नेतास्त्रेतरुपस्वताप्येकाकिनो काकिनोः ।
सोऽहं सम्पदः करोमि यदि नो धर्म्मं प्रतिष्ठादिभीरिक्तो यस्य सुतोऽचिरादिति मतिः पुण्यात्मनो जायते ।
क्षेपोद्दीपे नरेन्द्रस्य वेग[illegible]समुत्थिते । दिपामधागर्तजाता ननु तद्वेश्मनां क्वचित् ।
योऽभूद्राजविरुद्धानां दण्डसङ्कृत्त्वेोठनं । तच्छ्राव्ये प्रभविष्णूनां तद्दिकत्पागतद्रुदः ।
किमन्यद्वेश्मनिर्माणव्यसने शाख्युपद्रवात् । जाता वनभुवः शून्या दिशां वसतयो यथा ।

श्रीतोरमाणदीनाराभ्निर्प्रचारानवेत्य च। द्वितीयारीनागमयो न वा तेन प्रवर्त्तिता।
पञ्चविंशतिकोयेोऽभूत्पुराणस्तापनिर्मितः। किञ्चिदूनीकृतस्याभूद्व्याप्राचुर्यलक्षणात्।
* मुक्तामणिं नृपतिमौलिषु योग्यमूर्त्तिं या वर्द्धयत्युपनतेन पयोधरेण।
सा पावनी शुचिरुचिर्जननी सुमुख्या सङ्गच्छते न चिरकालमनेन साकमिति पाठः।
सा शुक्तिकास्य जननी जननीतचित्ता साध्वीव तिष्ठति चिरं वरभुक्तिकामा।
शैशवे स्ववयोदत्त्वा राजा सम्वर्द्धितो यया। गौलखातोनास्य जननी साकस्मात्त्रिदिवं गता।
का पौर्व्वविक्लतेराज्ञस्तरङ्गतरलात्मनः। सततं प्रतिबन्धाय सिन्धोर्व्वेलेव याभवत्।
तां छिन्दुकसमाचारश्रतपत्त्ररविभ्रमां। स्तला सहृदिताकन्दं शुशोच सकलोजनः।
तया वियुक्तस्तत्कालं राजा कृष्णाम्बरास्तरः। दिनश्रियेव पद्मोऽभूद्दुःखसङ्कुचिताननः।
ग्राहयित्वांशुकं शुद्धं व्यतीते दिनसप्तके। सव्ययं मल्लिको राज्ञोव्यधाद्दुःखनिवारणं।
श्राहाभदीनपुर्य्यन्तैर्न्नेीसेतुं विपुलं नवं। तद्भर्नेनाद्रिमल्कैर्, तत्पुण्यैर्न्ने महीपतिः।
अभूत्सैद्रान्वये जाता वल्लभा या महीपतेः। हयातिखातोना राज्ञी प्रेमाश्वासविलासभूः।
पदार्थान् घोषभूषादिपरिवारसमन्वितान्। अनन्यरसिकोराजा तस्यै सर्व्वं समापर्यत्।
तयैकयैव राजेन्दुः स सुन्दरगुणश्रिया। अविन्दत् परमानन्दं मालत्येव मधुव्रतः।
विभवे सति भवति भवे कस्यचिदेवेप्सितोलाभः। वर्षति मेघे कृषिकृत्कोऽपि मणिं मौक्तिकं लभते।
महाराज्ञ्यां महीभर्त्तुरस्यां राजसुतोऽजनि। यस्य मह्मदखानाख्यामकरोन्मोसुलोचितां।
ततः पूर्व्वाधिकप्रीते ताजिभट्टे स भूपतिः। स्वसुतं रचणायादात् सिन्धुरिन्दुमिवेश्वरे।
चतुःपञ्चाशवर्षेऽथ वैशाखे नरनायकः। पुत्त्रजन्मोत्सवानन्दमभजद्धायसुन्दरं।
विदग्धचर्चरीपालनर्त्तकीनटगायनान्। उद्दिश्य त्यागरसिकैर्न कैर्व्वैश्रवणायितं।
पट्टकोशेयवस्त्राणीराज्ञ्य श्रीजैनभूपतेः। सामन्तसचिवादीनामासीत् सत्कारसिद्धये।
तद्राज्ये विभवोदारव्यये सा प्राकृतालयात्। उत्सवे चर्चरीपालनटाद्यै. प्रापि तैरपि।
एधोतराजश्रिया प्रीतो नृपतिर्नवयौवनः। आनीतगीतविन्द्यैः सङ्गीतरसिकोऽभवत्।
सङ्गीतशास्त्रसङ्गेऽमार्गेप्राधाः सुखोचिताः। तारकाइव चन्द्राग्रे व्यरुचन्त सभासदः।
हृष्टचन्द्रावलोराजनृपाभिनयनैपुणात्। राज्ञे वरनटा नाथ्यात्तद्धर्मकुतूहलं।
प्रटम्बटतकाम्समुदन्तभ्रूविक्रियाश्चैः। तारामुधारितद्भावनाथ्यहास्यकथाक्रमैः।
अनीकमुख्यवाद्येच प्राग्भिभापानुकारकैः। भण्डिमापण्डितोभण्डोमूर्त्ताहास्यरसोऽभवत्।
महाहस्तनमामापि पितुरभ्यधिकोगुणी। प्रथमं द्रुतम्ब्रोकोभोद्वीणामकारयत्।
भाषाभिगीतसामग्रीं पारसीगीतकोशनं। तुम्बरोणाधरः सोऽहं नृपाग्रेऽप्यदर्शयं।
गाथागीतप्रियो राजा स्वयं संस्कृतपद्यवित्। मादर्शमामयं घोक्तं रागालयेदमत्रवीत्।
दृष्ट्वा येन समुल्लसन्ति तरवो वल्लाभरेपुङ्गगाः पदे चावतरन्ति दैवतगणा जल्पन्यदृष्टाश्रपि।

योदुःखे च सुखे च मूर्खविदुषोर्लासं द्रुतं यः सदा प्रायः प्रीतिकरो ममास्तु सततं श्रीनादनामा रसः।
अव्यकण्ठे नृपो गीत्वा रागैकालस्थितोवहन्। रागान् स प्रोचगीतांश्च साश्चर्यान्सदाकरोत्।
अथ गायनवृन्दानां प्रवेशय ममायतः। गीताङ्गाधिपतेराज्ञामदान्मे नृपनायकः।
आनीय स्थापिताः सर्व्वे नामपाठं निवेद्य च। ते ते वह्लावदेनाद्याः सर्व्वाद्या वृन्दनायकाः।
निर्दोषकण्ठसञ्जातमञ्जुलध्वनिरञ्जकाः। अधीतगीतवङ्गात्तुमातुन्द्रव्यकमट्टकाः। १४५
शिवाकारादयः पञ्च खप्रेपञ्चातिचञ्चलाः। असुञ्चलपञ्चमथाजातपञ्चेषुरससञ्चयं।
सङ्गीतज्ञं नृपज्ञात्वा श्रुत्वैवं तत्समुत्सुकाः। गीते शब्दगुणाः पञ्चदशसंख्यास्थितिं व्यधुः।
केदारगौडगान्धारदेशभङ्गालमालवाः। कर्णाटगायना राज्ञो रागांश्चाप्यस्फुरन् पुरः।
मदनोद्दीपितारात्रौ नव्यभाव्यदशोज्ज्वलाः। अथोभन्तानुगाराज्ञो लासिका दीपिकाअपि।
रत्नमाला दीपमाला नृपमालाङ्किताभिधाः। अकुर्व्वन् लासिकालास्यं हावभावमनोहरं। १५०
झम्पाकम्पाकुलायप्रसरसरसताधारसर्व्वाङ्गहारप्रारब्धाश्चास्यलास्योत्तरतरलसमुद्भावभावानुभावा।
उत्कण्ठाकारिकण्ठोद्गतसततनतस्फीतगीतप्रपञ्चा पात्रीयं रम्यगात्री लसति सतिलका कीदृशी रत्नमाला।

गुणिमदलणधात्री प्रेक्षकानन्दधात्री नवकरणविधात्री रूपलावण्यधात्री।
कलितललितगात्री शुद्धसङ्गीतगात्री गुणगणमणिपात्री रूपमालेव पात्री।
यस्या मुखं हिमरुचिं सृजता विधात्रा सम्पूर्णसर्व्वमतेशधतयाच मुक्तः।
आश्यानतामुपगतोऽस्य रुचायमास्ते नासाग्रमौक्तिकमिषादमृतस्य विन्दुः।

आसां कर्णालिकप्रोतलम्बिमुक्ताफलच्छलात्। मुखेन्दोर्निर्गतानूनं लावण्यामृतविन्दवः।
इत्यादिशंसां कुर्व्वाणोनृपतिर्नवयौवनः। लीलामित्रैः समं ताभ्यो मद्यपात्रमगाहत। १५५

तत्तत्कलापरिचये कविवाक्प्रपञ्चे पञ्चेषुसञ्चयनिभासु वराङ्गनासु।
सङ्गीतचर्व्वणविधौ वसुधानुभोगे धन्या नृपाः प्रतिदिनं व्यसनं भजन्ते।

श्रुत्वा दिगन्तरात्कीर्त्तिं राज्ञः कर्णामृतप्रदां। गीतकाव्यकलाख्यातः पवारकदनोऽभ्यगात्।
गायतः सोऽनुगीतानि स्वकृतानि सभान्तरे। तुष्टोमहीपतिस्तस्मै व्यधात् कनकवर्षणं।
प्रबन्धगीतचतुरः कदाचित्स नृपाग्रगः। अगायत्स च लीलाख्यं प्रबन्धं देशभाषया।
अनभिज्ञतया राज्ञः पृष्टोऽहन्तस्य लक्षणं। छन्दः भरतशास्त्रादेस्तोदाहरणमब्रवं। १६०
पदपाठस्वरैस्तैस्तु तालरागैर्मनोहरं। श्रुत्वा षडङ्गं तं मत्तो राजाभूदुदिताशयः।
उद्गीतस्याण्डवेक्तव्यं ज्ञात्वा मामब्रवीदिदं। गीतदर्पभृता वादं कुर्व्वनेन सभान्तरे।
तथेत्युक्ते महाराजोद्वयोर्वादमकारयत्। सभायां विहिते वादे गीतग्रन्थावलोकनात्।
श्रुत्वा प्रबन्धान्मत्तस्स साश्चर्योगदनोऽभवत्। अहो काश्मीरिकोऽप्येदृक् चतुरः सर्व्वशास्त्रवित्।
इत्युक्त्वालिङ्ग्य मां मे त्वं गुरुरित्यब्रवीत् स्फुटं। कौशेयकपरीधानप्रसादानन्दिताशयं।
अकरोन्मां नृपसूर्यो तदादजयरञ्जित।

घोषास्स्वोत्पत्तितोषागतिगुणचतुराः पीवराङ्गास्तुरङ्गाः स्फीतं यज्ञोपवीतं कनकमणिचितं द्रव्यमन्यच्च भव्यं।
वस्त्राद्योतास्य पोता निजवपुषि धृतावस्त्रयोगाः सभोगाराज्ञा श्रीहस्सनेन प्रथममिह मयि श्रीवरे किं न दत्त।
नयज्ञः शंसदेनोऽभून्मन्त्रीवालाभदेनकः। वीरः शाहाभदेनः स कुद्ददेनो विवेचकः।
श्रीशेकन्धरशाहोऽपि यवनेन्द्रमतिप्रियः। आलिशाहोऽभवद्दाता श्रीमाञ्जैनमहीपतिः।
सर्व्वशास्त्रप्रियः सर्व्वभाषाकाव्यविचक्षणः। राजा हैधरशाहस्तु तन्त्रीवाद्यविशारदः।
सङ्गीतनिपुणः सोऽयं हस्सनेन्द्रो नरेश्वरः। एकैकगुणवाऽऽख्यातप्रसिद्धा नृपमण्डली।
मण्डलेऽस्मिञ्जनैर्दृष्टेत्यवोचन्नृपतेः सदा। श्रुत्वा राज्ञोमहागीतं रागालप्तिमनोहरं।
श्रीज्यहाङ्गिरमार्गेशमुख्याः पादौ ववन्दिरे।
देशेऽस्मिन् परवञ्चनात् प्रकुरुते लोको यदा सञ्चयं तत्तद्धर्म्मविपर्य्ययेण च भजन् स्वाचारनिःसारतां।
उत्पातैर्विविधैस्तदा रमुदिताः स्वम्पीडयन्ति प्रजा दुर्व्वात्यानलदाहदुर्हिममहाशैत्यसभेदामयाः।
कदाचित्पौरवणिजोगोवधं नगरान्तरे। आजन्महिंदुकाचारास्तकुर्म्मासुलवल्लभाः।
यत्र गावोहता भुङ्क्ते तन्मांसैस्तैर्दुराशयैः। सविहारः सनगरः शुष्कोवाग्नौ स्वर्मक्षिपत्।
अथ नैर्ऋतदिग्वातोजातोत्पातप्रताचितः। अकस्मादुदभूद्देशे प्रत्यूहापातदुःसहः।
आरभ्यएव कोऽप्येतं श्लोकं स्तनु व्विपश्चितः। गणराचं समालोच्य दुर्व्वातन्तं महाद्भुतं।
खरवर्णेन मेघेन चन्द्रवर्णेन भानुना। नैर्ऋतेनातिवातेन हा प्रजे क्व गमिष्यसि।
वत्सरे पञ्चपञ्चाशे प्रवरेशपुरान्तरे। गोसीनिकापणोपान्तादकस्मादुदभूच्छिखी।
मारी तथैकपार्श्वस्था गुलिकावाढिकावधि। चणाक्षगरभूर्दाहाद्दग्धारण्यमिवाभवत्।
भूर्जलम्वायुनोद्भूता ज्वलन्ती सजवागता। हृहम्मजेदाच्छत्रान्तः पपातोत्पातदूतिका।
प्रसारिता चतुर्दिक्षु यत्र नित्यसुधासिता। श्रीशेकन्धरभूभर्त्तुर्मूर्त्ता कीर्त्तिरिवाभवत्।
व्यधाद्यदन्तर्जनतामणीता पुनरुत्थिता। त्वत्सङ्गरोवरोत्तुङ्गतरङ्गावलिभङ्गितां।
मन्मपाठोघतं यच यवनानां कदम्बकं। गुञ्जन्मधुपगर्भाञ्जसहस्रमिव राजते।
चतुर्दिग्द्वारनिर्गच्छत्कुञ्जावारागता जनाः। कुर्व्वन्ति भूगतस्वेच्छतदर्निर्गमभ्रमं।
यन्मध्येस्थचतुस्तम्भदम्भादिधिदिदृक्षया। चतुष्पादिव तद्धर्म्मः प्रासोभात्युज्झितस्थितिः।
स्वर्णच्छत्रच्छलाद्यत्र मायाकर्णेनकौतुकात्। कर्णं दातुमिवाभ्यर्णं भजन् भाति दिवाकरः।
तन्मसाधदनं व्याप्तगगनं रचनाद्भुतं। म्लेच्छदर्शनरागान्धारचादुर्गस्त्रियं ददत्।
कुर्व्वन् कल्पाग्निमिदंग्धविश्वज्वालाप्रलिप्रभं। क्षणमात्रात्तदायत्तं भित्तिमात्रावशेषतां।
निमित्तशाविधा यस्मा येच्छाः कुर्व्वन्ति भक्तितः। एधामहोत्सवाद्येषु गणश्रोमिमिलिताश्चदा।
अभूदग्रामशालीयपञ्चावाशादिभिर्व्वहैः। सतारण्डवचटत्कारं तैः स्वाण्डववनायितं। ;
ज्वलद्भूर्ज्जलचोयातवितस्तासलिलाम्बरं। दग्धा जलगता नावः शेकुः शमयितुं न याः।
शुरपत्तनघोषेषु तदुपस्रवतावुना। सहस्रधस्मावेशोघाश्वहिने अम्लतुर्न के।

उत्पातवातजातोर्म्मिमहापद्मसरोन्तरे। शतसङ्ख्या दिने तस्मिन् किराताः प्रलयं ययुः।
वर्णाचारविपर्य्यासस्समासः कुजवत्सरः। पुरश्रीविहितोद्वासे नितान्तभयकार्य्यभूत्।
अथवा पूर्व्वकृद्दैर्णे जाते पुण्यचये सति। नवीनकर्तनिर्म्माणकीर्त्यर्थं कुरुते विधिः।
निर्म्मिता तादृशी राज्ञा सा महासदनस्थितिः। पुण्यश्रीरिव या स्फीता विभाति नगरान्तरे। १८८
अचिरात् सा पुरी दग्धा नवीकृतगृहा बभौ। भूपं तरुणमेवेच्छ विहिता तरुणी प्रिया।
भूपालदुर्व्यसनजाः प्रभवन्ति दोषा नाशाय यद्यपि हिमाध्वनि मण्डलेऽस्मिन्।
अन्योन्यमन्त्रिवरवैरसमुत्थदोषो राज्यं समस्तमपि नाशयति क्षणेन।
शक्तिस्फीतं समुदयलसत्सप्रधानाङ्गभङ्गं दत्ते नित्यं यदपि सुभगं सर्व्वकार्य्यक्षमत्वं।
देशाघातादयइव महामन्त्रिणोऽन्योन्यदुष्टा यत्रैते स्युर्गलति नचिराद्देहवत्तत्र राज्यं।
अवश्यैः सर्व्वदा रक्ष्यः स्वभेदः मर्मविष्णुभिः। चार्व्वाकाणामिवैषां हि भयं न परलोकतः।
ललितादित्यदेवोक्तामिति नीतिं विलङ्घ्य ये। मिथोवैरं प्रकुर्व्वन्ति ते नश्यन्तीह मन्त्रिणः। १९०
मलारसाकदर्य्यावस्थानादीनां विरोधतः। स्वभेदजर्जरं राज्यं दृष्टं श्रीजैनभूपतेः।
तदा प्रभृति तेनैव दृष्टे नाशेऽत्र मण्डले। मन्त्रिणोनैव कस्यापि मत्सरोविरमत्ययं।
अहो द्वेषपिशाचोऽयं रुद्धोराजसभाश्रये। केनापि मन्त्रिणा नैव जीयते सर्व्वनाशकः।
रोगोहतप्रयोगोथ्यालोवा एतमद्यविपज्वालः। नाशिस्ताद्गशयक्षत् प्रकृतिविरोधोयया देशे।
अत्रान्तरेऽस्मदाप्तुकोपुकोऽपि नयसम्पदा। अधीरइव नाशाय नेयबुद्धिमग्रहीत्। १९२
एकदा पितरं पुत्वा विजने नौरुजादयः। इत्यूचुर्दूषणं ताजिभट्टीयं त्रिभवासहाः।
नियहानुपदेकायाः समये मन्त्रिमण्डले। उयोभट्टः प्रजायासैदेशनाशाय वर्द्धितः।
तत्रापि दर्पपिहता राजस्तनुर्नृपास्पदे। अपे यथा समायोगः सोऽयं दाहाय दुःसहः।
राज्ञो राज्ञावदस्यास्मि सेनानीरयमेव हि। प्रवत्तं वाधते ह्यस्मान् यदि नायं प्रणाश्यते।
इत्याकर्ण्य सुतैरुक्तं गुणादस्तोकच च। गुणोक्तोऽपि मल्लेकल्पोऽभिभट्टे चरज्वल। १९४
राज्याङ्गानि समस्तानि योऽरक्षत् समता दृशा। प्राक्पुण्यसङ्क्षयात् सोऽपि शमैरासीत् स्वतन्मतिः।

स्वार्थं परित्यज्य विभोर्हितं ये कुर्व्वन्ति तत्कार्य्यकृतावधानाः।
विनाशकाले समुपस्थिते ते भवन्त्यकस्माद्विपरीतचेष्टाः।

इति चिन्ताकुलस्तांस्तानुपायाम् मल्लिकोऽकरोत्। अथैकदाब्रवीद्राज्ञः सभायां मल्लिकः क्रुधा।
राज्यैनाशेन किं राजन्नाकान्ता वाद्यभूः परैः। चिन्ता कस्यापि नैवास्ति यावत् सर्व्वं प्रणश्यति।
वैरं स्वैरमहं यामि तदाज्ञा दीयतां विभो। इति श्रुत्वाब्रवीत्ताजिभट्टस्तं साहसोत्सुकः। १९६
यात्रायै दीयतां राज्ञा सेनानीर्मत्परोऽधिकः। तच्छ्रुत्वा सर्व्वशामर्षो दत्वा मल्लिकवादितः।
राजा तं कटकोपेतं वाहदेशं व्यसर्जयत्। भीत्या प्रीत्या च नीत्या च अफुस्तमनुसेवकाः।

मधुपाद्दव गर्जन्तोयातुं मधुकरेश्वरं। राजप्रक्रियया रम्यं दृष्ट्वा तं व्ययशालिनं।
नृपा राजपुरे याद्या बभूवुर्व्विस्मिताशयाः। अन्येऽप्यत्याभदेवाद्याः समस्ता मद्रमण्डले।
तत्तारखानमुत्सृज्य तुष्टास्तमुपतस्थिरे। तदपोद्दलिता मद्राः क्षुद्राविद्राविताश्चयः।
देशे तत्तारखानीयं सोपद्रवमचीकरत्। दहन् शृगालकोटादौ मस्जेदां खाननिर्म्मितां।
सामान्यकुलजोऽप्येष निःसारोऽनुमितोजनैः। अचिन्त्यकृतकार्य्यासीत् स्वामिस्नेहप्रभावतः।
पुरपत्तनघोषादीननयत् स्मृतिशेषतां। प्रतापस्तस्य तत्कालं तोत्रांशोरिव दुःसहः।
तत्तद्दिक्ष्वादिदेशस्थराजोलोकभयं व्यधात्। करदीकृत्य सामन्तांस्तत्साहसनिष्ठुरः।
स्वदेशं प्रत्यगात्तूर्णं पूर्णस्तुरगसम्पदा। स्वामिकार्य्यवशान्मन्त्री पुत्त्रं पश्यति शत्रुवत्।
शत्रुमप्यति वैरार्हं पुत्त्रवत् परिरक्षति। इत्यादि नीतिमुल्लङ्घ्य मल्लिकोदैवमोहितः।
तदुत्कर्षासहस्तस्य दर्पनाशोद्यतोऽभवत्। सबलो बाधते सर्व्वान् बालभ्यादिति शङ्कितः।
मल्लिकस्तं प्रति क्रुद्धो भूपं द्वेषमजिग्रहत्। अत्रान्तरे सुतोराज्ञः कनीयान् होस्सनाभिधः।
पयोदानाय मल्लिकेनोद्दजाय समर्पितः। तेन श्रुतेन तद्रूपविधेयत्वविस्तृचितः।
आगच्छन् कटके भट्टो ययौ मन्दप्रतापतां। तस्य सेनागतस्याथ नेयबुद्धिर्नृपेश्वरः।
सत्कारश्चोदितं तस्मै नाकरोद्विरसीकृतः। अथ तस्यापकारार्थं मल्लिकः स्वयमक्षमः।
दध्रे गतानां सैदानां पुनरागमने मतिं। यदीयास्तनयाराजंस्तव पुत्त्रवतीं प्रियां।
रक्ष्यः श्वशुरपक्षः स कथं नानीयते त्वया। इत्यादिप्रेरणाद्राज्ञोराजाराधनतत्परः।
सोपधीन् व्यसृजल्लेखान् सैदाप्तिस्त्रीशमण्डले।

तस्यैवेति प्रभवति जनोदुर्णयैर्दूषणाद्यैरेतद्बुद्धा नयति न वशः स्वं कथं गाढमूढः।
सर्व्वां पृथ्वीं जयति न कथं तन्त्रमन्त्रोर्जितोऽसावित्याशङ्क्यो भवति पुरुषोभाग्यभाग्यावदास्थे।

अपकृत्य पुनः सैदान् यदानयति मल्लिकः। तेन स्यात् सर्व्वनाशोऽस्येत्यवदत्तीत्त्णधीर्जनः।
सैदानयनवृत्तान्तं बुद्धा श्रीफिर्जडामरः। मद्दं गत्वाह्वदायुक्तं युक्तमित्यब्रवीद्वचः।
ताजिभट्टाविधेयोऽयं भृत्यवद्वर्त्तते त्वयि। तदेतं रक्ष युक्त्यास्य विधाय मदघातनं।
मा प्रवेशय सैदांस्त्वं दुर्धरान्देशकण्टकान्। तुरुष्कपुष्कराश्वासान् यत्नान्निष्काशितानपि।
एकनाशार्थमिच्छा चेत् सर्व्वनाशस्तदागते। पोतैकहेतोश्चैत्यस्य ज्वलनं किं समर्थ्यते।
नूनं सपुत्त्रभृत्यस्य नाशो न भविता चिरात्। यत्सैदानयने बुद्धिर्जाता भाग्यविपर्य्ययात्।
कृतापकारान् सैदांस्तानानिनीपुर्भवान् यदि। विषमुष्टिं क्षिप स्वास्ये सान्त्रायां तत्क्षमत्यये।
मद्देषात्स्फुटते सत्यं शमन्येन त्वया न तत्। विपत्तौ स्मरणीयं स्यान्मयि लोकान्तरं गते।
श्रुत्वेति मल्लिकः प्राह किं कुर्व्वन्ति मयि स्थिते। एकदाज्ञातसामर्थ्याचाटुकारा भवन्ति नः।
तथेत्युक्त्वा गते तस्मिन् शमन्युत्ताद्गुणाद्गते। सैदानयनसङ्कल्पान्न मनाग्विरराम सः।

श्रुत्वा यतित्वादुपदिष्टमिष्टं रक्षाति वाक्यं न हि नष्टचेष्टः।
कष्टे निविष्टः सहि वत्ति शोकाद्विस्मामतिष्ठं न हितोपदेशे।

ततो लेखान् समालोच्य तत्रोत्कण्ठितमानसाः। हंसा इवाययुः सैदाः कृतपक्षपरिग्रहाः।
अथ प्रथममेवेह स मेथाहस्तनोऽग्रणीः। अध्यात्मनोहसायुक्तयुक्तोभूपाश्रमाययौ।
विहितान्योन्यकं शपथन् मल्लिकोऽस्मै प्रसन्नधीः। खोयाश्रमं प्रदेशन्तत् स्वकीयं स समर्पितं।
यत्सैदहस्तनेनापि सिन्धुदेशाधिकारिता। तस्य तेनैव नाशार्थं सिन्धुदेशाधिकारिता।
क्रमात् समागतैः सैदैराक्रान्ते मण्डले वलैः। आभ्यन्तराश्च वाह्याश्च काश्मीरास्तत्रसुर्जनाः।
सैदास्तरङ्गितान् दृष्ट्वा तुरङ्गाद्भूपतेर्मतात्। नृपोजाया विधेयत्वात्तद्विधेयक्रमागतः।
सपुत्त्रः सोऽह्मदायुक्तोऽभवभूवानुभयाकुलः।

पश्चाद्वेद्या मनुजेषु बुद्धिः कार्य्ये कृते सा प्रथमं यदि स्यात्।
मित्रार्पितश्रीः परिभूतशत्रुर्न कोऽभवेत् सन्ततसौख्यभागी।

अथ सैदाः स्वतन्त्रास्ते कलत्रहरणेच्छया। बन्धनं ताजिभट्टाय कर्त्तुमैच्छंस्तद्वेषिणः।
एकदा निष्टमाकर्ण्य स्वात्मनः सैदचिन्तितं। मल्लिकमदनं प्रायात्ताजिभट्टोभयाकुलः।
सैदविस्फूर्जितं दृष्ट्वा साशङ्कः सोऽभवद्यदा। स फिर्य्यडामरोहद्धस्तत्कालं प्रमयं ययौ।
मातिहिर्थादिसुकृतैरिह वा परदुर्लभं। य एकः सकलः श्लाघ्यामसञ्चान्यचणे क्रियां।
तच्छ्रुत्वा नृपतिस्तूर्णं क्रुद्धः सैदप्रतारितः। रोद्धुन्तद्गृहजस्नैनराजानकमुखान् भटान्।
खगेहे स्थाप्यतां बद्धोहतस्वोदत्तरचकः। इत्युक्तोमल्लिकस्ताजिभट्टं तेभ्यः समर्पितं।
तथैव स्थापितो बद्धः पुण्यशेषतयात्मनः। कालं हृत्त्वाकृताप्यायः सकुटुम्बोऽत्यत्राहयत्।
भूर्य्यर्थव्ययपुण्यः स बद्धोऽपि स्वस्रहान्तरे। सकुटुम्बः सुखं तस्थौ मरालइव मानसे।
विभवे दानभागं यः करोति सुकृतेच्छया। एतद्दृष्टः समाप्नोति भूयस्तत्ताजिभट्टवत्।
एवं मल्लिकाह्लादेन परोद्रेकासहिष्णुना। ध्वस्तमाया व्यधीयन्त सर्व्वे ते प्रभविष्णवः।
कृतापकारिसैदेभ्योभागिनेयप्रणाशनात्। व्यहाङ्गिरोऽपि मार्गेशो मल्लिके शङ्कितोऽभवत्।
सर्व्वाधिकारसामग्री स्वपक्षस्य समर्पिता। प्रतीहारादिवीरेन्द्राः स्वार्थवुद्ध्या विनाशिताः।
इत्यादिदूषणे राजा मल्लिके विरसोऽभवत्। एषत्युक्ता स्वमात्मनं कदाचित्कृतदर्शनः।
नैकत्रावस्थितिस्तिष्ठन् स्वराष्ट्रान्तःस्थितिं व्यधात्। अथागात् कुसुमक्रीडां कर्त्तुं भेदसमन्वितः।
भवनोपवनं राजा शक्रश्चैत्ररथं यथा। विधाय लीलां पुष्पाणां नौकायातो महीपतिः।
मार्गेशनोहजायुक्तः पानलीलां व्यगाहत।
सर्व्वे परस्परक्षीवास्तत्तद्वाचानुबन्धिनः। ते हृष्यद्वान्योन्यं चक्रुर्मांकुच्छरताडनं।
क्षोभे प्रवृद्धे क्रुद्धोऽथ त्यक्तमस्तकवेष्टनः। अगात्कर्त्तुमुपालम्भं नृपोमल्लिकमन्दिरं।
प्रसादितोऽपि स प्राप राजधानीं क्रुधान्वितः। पुत्त्रदुर्णयजः शोकोमल्लिकस्य च मानसं।

अन्येद्यूरहितांस्तस्य राजा विरलमानसः। रक्ष्योनायुक्तपचोमे युक्तमित्यब्रवीद्वचः।
अवश्यमेव छिद्रं तं समासाद्य विरोधिनः। अपकाराय सन्नद्धा देहे दोषादिवाभवन्।
राज्ये येसेभखानश्चेत् कुर्युः किं क्रियते तया। एभ्यानीत्वा तदन्यस्मै देह्येतं रक्षणाय भोः।
तथेत्युक्त्वा नृपोऽन्येद्युर्जोनराजानके द्रुतं। विन्यस्य रक्षणे युक्त्या मल्लिकात् खानमग्रहीत्।
पुत्रं विन्यस्य भूपस्य तद्दिने स्वगृहस्थितः। अपकर्त्तास्मि शत्रूणां प्रातरित्यब्रवीत् प्रियां।
अत्रान्तरे मार्ग्गपतिर्नृपाज्ञतो बलान्वितः। स्वराष्ट्रात् साहसोद्युक्तो नगरे तूर्णमाययौ।
प्रातः श्रुत्वाथ मल्लिकः सबलोऽगान्नृपान्तिकं। रुषा निरुत्तरोद्धोऽपि चिन्तया दक्षिणस्तया।
पादाभ्यां ताडयन् वक्षोगच्छतोऽस्य तुरङ्गमः। भविष्यत्स्वामिविरहाच्छुचेवाश्रुमुखोऽभवत्।
तत्कालोदितसूर्य्यार्च्चिःसंक्रान्तिज्वलितायुधः। नृपाज्ञयोऽपि मार्ग्गेशः ससैन्योऽविशदङ्गनं।
अन्योन्यस्पर्द्धया तत्र द्वयोः प्रविशतोस्तदा। सन्नद्धयोराजधानी ययौ सम्भ्रमलोलतां।
समस्तोऽयं प्रविष्टः किमित्यायुक्तः स भाङ्गिलं। अदापयत् ज्यंसराय मार्ग्गेशाय नृपः क्रुधा।
तावन्निर्गत्य भीतेन राज्ञा स प्रेरितस्ततः। पुरान्तर्गन्यतां छत्वा ससैदः पुनराययौ।
निर्मुच्य बन्धनात्ताजिभट्टं राजानकान्वितः। राजधान्यङ्गनास्कन्दं ददौ जिष्णुर्थहाङ्गिरः।
प्रेरितास्ताजिभट्टेन तद्भटास्तमरोधताः। पश्चिमद्वारधानीं तां राजधान्यामदाहयन्।
सोऽग्निर्देसनराजानकावासान्तं क्षणान्तरात्। सौधागारां गृहश्रेणीं दग्धारण्यमिवाकरोत्।
इन्द्रवासोपमा वेश्मरचना ज्वलिता श्रुता। दूरस्थितानामप्यन्तस्सन्तापमुदपादयत्।
उद्धमत्तोमसङ्घट्टज्वालाजालगतोष्मणा। सर्व्वेऽन्तस्याः कटाहान्तर्जीवन्मत्स्योपमां दधुः।
अङ्गनेऽग्निं समालोक्य ज्वलन्तं राजसद्मनि। सभीतिर्नृपतिर्भीतिविक्लवः समपद्यत।
उष्णायमानमार्गेषु स्फुरन्तोऽपि युयुत्सवः। न केऽपि शेकुस्तान् योद्धुं तद्वार्गैर्यन्त्रिताइव।
स्वभृत्यांश्चलितान्दृष्ट्वा पुत्रांस्तैवावशेषितः। बभूव मल्लिकस्तत्र किंकर्त्तव्यतयाकुलः।
पुत्राः कुर्व्वन्तु मा युद्धं राज्यं नश्यति भूपतेः। अयं राजास्य देशस्तु रक्षितोद्यवत्सरान्।
तत्कथं नाश्यते युद्धादस्मिन् विषमविग्रहे। तंचापि ज्येष्ठः पुत्रो मे तटस्थोऽरिष्ठमध्यगः।
अनिष्टं नोत्सहामि लभन्तेऽस्माद्रणक्षणे। वरं ममैव नाशोऽस्तु नाकीर्त्तिं वार्द्धके मते।
इति ध्यात्वाब्रवीत्पुत्रान् योद्धव्यमिदाषत। इत्युक्त्वा गलितोत्साहो नृपं शरणमाययौ।
मण्डपे राजधान्यां स राजा विन्यस्य रक्षिणः। स्नेहादरक्षदायुक्तान् पूर्व्वसेवामनुस्मरन्।
आयुक्तनर्थकाद्यास्ते ज्ञात्वा भूपं तदाश्रितं। युद्धाशक्ताय निर्गत्य भट्टदेशागारं ययुः।
अथोत्तरदिशा द्वारधान्या मान्या जयोद्यताः। ज्यद्याङ्गिराद्या गर्जन्तः प्राविशन्त नृपाङ्गनं।
रणदुन्दुभिनिःस्वानप्रतिशुश्रावरवस्वनात्। अहमद्राजधानीव तुष्टा तत्रासमक्रमात्।
राजदर्शनतुष्टानामुत्कटानां जयार्जनात्। प्रापुः प्रसादं तत्कालं मनांसि च वपुं
प्रातः सपुत्रं मल्लिकं तत्सैवकर्पुतं। क्रुद्धैर्नियोदितो राजा कारागारान्तरे

आयाता युक्तमदनाह्वीतेत्रातिथ्ययादिभिः । अकरोद्राजवल्लीः सा स्वस्य स्वसुखसन्निकां ।
तेषां राजविरुद्धानां दासकायस्थपीडनात् । सञ्चितं रौप्यकुप्यादि सर्व्वं तद्राजसादगात् ।
यन्मन्त्रात् सभयात् सजैननृपतिः श्रीहाज्यसाहोऽभवद्यन्नीत्या दशवत्सरी गतभयः पुत्त्रोऽस्य राज्यं व्यधात् ।
यातास्ते स्मृतिशेषतां यदमता वह्रामखानादयः सोऽपि व्याकुलतामगाद्रिपुभये धिग्वैभवं स्वामिनां ।

आतङ्कपङ्ककलुषाः प्रभवन्ति येऽर्थाः सन्मार्गविघ्नकरणाहृतजाड्यदोषाः ।

तत्तद्दरिद्रजनपीडनहेतुभूतास्तिष्ठन्ति ते न सुचिरं हिमपूरतुल्याः ।

तद्भृत्यैः फेरवङ्काद्यैरित्यादिजनपीडया । यदानीय धनं दत्तं तत्सर्व्वं राजसादगात् ।
बहिर्द्देशात्समानीतांस्तुरङ्गांस्तान्मनोहरान् । स्वांशुकानचिरांश्चापि निक्षेपमिव दत्तवान् ।
भूपालवर्म्मदेच्छलात्स जन्मदिवसादिषु । यद्दत्तं यच्च भुक्तं स्वं तदेवास्याभवद्धनं ।

हे मर्त्या नृपविभवाप्तभूरिवित्ताश्चित्तार्त्तौ कुरुत यथार्थदानभोगौ ।

संसारे जलधितरङ्गभङ्गुरेऽस्मिन् सामग्री न पुनरियं सदैव लभ्या ।

राज्ञः प्रियोऽस्मि विभवप्रथितप्रभावो हे सेवकास्त्यजत मानमिदं खनिष्ठं ।

गन्धर्व्वनिर्म्मितपुरे च कुसुम्भरागे वेश्यारसे नरपतौ च कुतः स्थिरास्था ।

प्राप्ता पूर्णा सपदि पदवी शत्रुवर्गो जितो यः कोशोऽशेषो मम सदनगो भृत्यवर्गः ससर्गः ।

इत्थं यावत् कलयति नरो वैभवोत्सिक्तचित्तस्तावत् सर्व्वं चपयति विधिः स्वप्नवत्तद्विरुद्धः ।

एकदा जुगभट्टस्तं बन्धने प्रष्टुमभ्यगात् । अन्यत् किमस्ति ते स्वर्णं तूर्णं राज्ञे समर्प्यतां ।
क्रुद्धस्तमब्रवीद्द्रव्यकोटिसंख्यं हृतं मम । एतावतापि नो तृप्तिः प्रभोर्लुब्धस्य विद्यते ।
किं ब्रूमो राज्यरक्षार्थं स्वपक्षो नाशितोऽखिलः । शक्नोऽपि न युद्धाय सोढं तत्तु मुनेऽन्तरे ।
कान्दिशीकाः समानीय सैदाः सम्बर्द्धिता मया । द्रोग्धारस्तेऽपि मे जाताः छलग्रेऽस्मिन् महीपतौ ।
सर्व्वं मयार्जितं राज्यं सन्धिस्तावत् करोत्यसौ । पुनश्चेद्भुज्यतां राज्यं मत्रासान्मुदितस्तु सः ।
दशवत्सरपर्य्यन्तं राज्यतन्त्रनियन्त्रणा । मदीयाशीर्द्भवे दग्धे यदोद्गृह्यपि तद्विभुः ।
तुच्छलक्षप्रणाशेन मयि लोकान्तरं गते । इत्याद्युक्ता नृपाग्रे स स्वविज्ञप्तिं व्यसर्जयत् ।
धिङ्मां येन गृहीतं न वचनं दीर्घदर्शिनः । श्रीफिर्यडामरेशस्य निनिन्दात्मानमन्वहं ।
यद्यहं सुविरुद्धोऽस्मि तन्मद्द्रोहकरा अमी । मार्गेशताजिभट्टाद्य नभन्त्यल्पदिनैः फलं ।
इत्यादि दुःखदग्धः स बन्धनस्थो यदब्रवीत् । अचिरात्तत्फलं दृष्ट्वा माध्यर्थो भविता जनः ।
इत्थं निर्व्वाहहृत्तेऽस्मिन् सपुत्रे मल्लिकाह्वदे । नाशितेऽन्ये व्यजृम्भन्त खलप्राया नृपास्पदे ।
ताजिभट्टादयो लुब्धास्सैदानामधिकारिणः । प्रमेयान् पीडयामासुर्दुष्टादेशमिवामयाः ।
आनन्दपुष्पदीनारखण्डप्राप्त्यादि नामभिः । सैदाधिकारिणश्चक्रुः प्रजायाश्चैव नाशनं ।
श्रीजदराह्नि रमार्गेशनामराजानकादयः । मधाविव द्रुमाश्चिपश्चात्ते श्रिश्रियुः श्रियः ।
मल्लिकपदवीं सत्रां श्रीसैयाहसनोऽभजत् । नापामपामराग्रादि तदीयं तद्दघहीर् ।

सम्प्रत्यपुत्रवर्गेभ्यः प्रमेयान्विभजन्नवान्। स मेयामन्नदायार्द्धधनराष्ट्रं समार्पयत्।
स्वायत्तीकृतभूपास्ते सैदा जयविश्रृङ्खलाः। दूतान्विसृज्य चतुरमार्गिन्युः सैदनामिरं।
प्राप्ते पाञ्चालदेवाग्रे तस्मिन्क्रूरपुराध्वना। ज्वरस्तद्धृदयं पूर्व्वं पश्चात्स पुरमाविशत्।
पौत्रीजामातृसम्बन्धिबान्धवाः सर्व्वमन्त्रिणः। अपुनःसङ्गमाएव सर्व्वेषां दर्शनं ददौ।
तदर्थमिव संप्राप्तैर्म्मृतकल्पो दिनद्वयं। अतिवाह्य ज्वराक्रान्तः स्वगृहे पञ्चतां ययौ। ४२५
मल्लिकोवन्धनस्थस्मन् त्रस्तः पुत्रप्रवासनात्। तत्तच्छोकामयग्रस्तस्तोऽप्यस्वस्थो व्यपद्यत।
वहुस्यापि स्मृतिं तस्य शुचा मन्त्रिशिरोमणेः। देशे सरुदिताक्रन्दं शुशोच सकलोजनः।

सत्कार्य्यभाजां महतां वियोगाद्भवन्ति नीचाः पदवीषु योग्याः।
प्रकाशकेऽस्मिन् द्युमणौ प्रयाते भवन्ति दीपाः शरणं प्रजानां।

दुहिचभाग्यसौभाग्यसंप्राप्तविभवोर्ज्जिताः। सैदाः काश्मीरिकान् सर्व्वान् न तृणायाप्यजीगणन्।
याभूत् सैदमुखादाज्ञा निर्यान्ती स्वार्थलिप्सया। राज्ञस्तदर्थनिष्ठस्य प्रतिश्रुतीव साभवत्। ४३०
सैदेषु द्वैधनिष्ठेषु चान्तिशीले महीपतौ। प्रबलासु च नारीषु कोऽप्यजृम्भत विप्लवः।
उत्कोचग्रहणं धर्म्मः प्रजापीडा च कौशलं। स्त्रीषु च व्यसनं सौख्यममन्यन्ताधिकारिणः।
प्रातिबन्धिकनिर्दृत्या स्वाच्छन्द्यप्राप्तिदर्पितः। स सेयादहसनः सर्व्वतन्त्रेभ्यो यन्त्रणां व्यधात्।
प्रवर्द्धमानो राज्यस्य शनैराक्रान्तमण्डलः। ग्रहाधिपत्यं सर्व्वेषां राजच्छायामिवाकरोत्।
अथ खशाष्टकुट्ट देशान् सैदा जिगीषया। श्रीज्यशाङ्गिरनाथौ याचाथै द्वौ व्यसर्ज्जयन्। ४३५
उभावेकत्र गच्छावोयद्यावां कर्म सेत्स्यति। इति मार्गपतेर्वाक्यं सैदौ नैवाश्वतिष्ठतां।
तयोर्देशं विजित्यैकः सयशाः प्राविशत् पुरं। अन्योविशङ्कितोयद्धा युत्त्यात्मानमरक्षत।
निपत्य पश्चाद्गुर्द्वैर्यत् सेनायाः कदनं कृतं। कालापेक्षानुरोधेन स मनाग्वर्णनं कृतं।
मद्धारागादयस्तस्य सेवका हृद्भूभुजः। केचित्तस्यान्भुक्ताजिवक्रो शलभतां गताः।
पूर्व्वापकारस्मरणात्सैदास्ते रक्षलक्षिताः। नोग्रराजानकं हृदुद्दर्शनं तं न्यवारयन्। ४४०
तेभ्यः स्वामिद्रुमाप्रकृत्य निजरक्षणदक्षधीः। युक्त्या तद्दर्शनोराजोराष्ट्रं मार्गपतिर्ययौ।
ततः सैदेषु नष्टेषु प्रजानाशनकारिषु। आमद्यानिष्टमात्मीयं युक्त्या राजाप्रमापयो।
एकदा रहसि क्ष्मापमब्रवीत् स ज्यशाङ्गिरः। राजन् सैदा यदानीता अमी निष्काशिता अपि।
सोऽयं निष्कण्टके देशे स्थानस्थः स्वयं कृतः। यथैव राज्ययोग्यस्त्वं पौत्रः श्रीसेनभूपतेः।
दौहित्रोऽपि तथैवास्य प्राप्तोमियामहम्मदः। सैदास्ते सम्प्रदायस्थास्तत्पक्षाश्रयमानसाः। ४४५
तथाद्यापि राज्ये ये लुब्धाः सन्ति सन्ततं। न युक्तैकमियामक्रियाद्भावस्य ते विभो।
एवयतोरनेनाग्रः सततं येन सम्यते। यदि मायाविधेयं न स्यात्तव महीपते।
सर्व्वं सिध्यति साध्यं तत् शोकिनो मा भव प्रभो। मया महाज्यरत्नार्थं स्वरत्नार्थं गम्यते।
यदिदं दोहतः ख्याता रक्षणीयो यथा मता। इति श्रुत्वा तथेत्युक्ता राजा रात्रौ विपाल्लिके।

तदुक्तमश्रौषीत् सर्व्वं खेदमोहवशीकृतः। तेन मार्गपतेः क्रुद्धा भोगिनीव भयावहा।
अनिष्टं चिन्तयन्त्यासीत् पिष्टपचमतादृता।

पुरुषानवधीर्य्य यत्र नारी प्रभवत्येव जितप्रिया स्वतन्त्रा।
कुपितेव तदीक्षणाद्विशिष्टा न चिरन्तिष्ठति तत्र राज्यलक्ष्मीः।

अमुष्यदस्सभापार्श्वं तत्पक्षानुग्रहाग्रहः। मल्लेक्षाच्छदवद्राज्यं तदायत्तं ततोऽकरोत्।
सैदेभ्योऽनिष्टमाशङ्क्य त्रस्तो राज्ञा विरुद्धया। कार्कोटद्रङ्गमार्गेण मार्गेशः सबलो ययौ।
सर्व्वां कुटुम्बसामग्रीं भाङ्गिलान्तरतो नयन्। गच्छन् दुर्गममार्गेण न स धैर्य्याद्व्ययुज्यत।

तद्राज्यसिन्धुर्विपुलः समृद्ध्या व्यलचि यस्मृतवाहिनीकः।
परस्परामात्यविरोधवात्याविक्षोभितोऽभूत् स विकीर्णरत्नः।

सांम्ना दैन्यमुदारदानविधिना वित्तप्रकर्षक्रियाभेदात्पैशुनकर्म्म मर्म्मदलनं युद्धेन नाशो विशां।
इत्यालोच्य विरोधिषु प्रतिदिनं वर्द्धत्स्वशक्ते प्रभौ देशत्यागमुपायमेकमुचितं कोऽप्युत्तमो गाहते।
अयुक्तपक्षनाशेन पश्चात्तापाहतो नृपः। मार्गपत्यादिनाशेन क्षते क्षारमिवान्वभूत्।
मार्गेशाद्यैर्विना राजा सर्व्वसैदान्वितोऽपि सन्। स्वात्मानं गणयामास यूथभ्रष्टमिव द्विपं।
मार्गपत्यन्वये जाताः प्रतीहारान्वये च ये। ठक्कुरान्वयजाः कोशाध्यक्षजा अपरे च ये।
स्वस्वपक्षोर्जिताः पूर्व्वं येऽभवन् विजयोर्जिताः। नष्टमन्त्रविरोधेन शतैकोयोऽवशिष्यते।
तस्मिन् याते वहिर्वर्षत्तुषारं प्रसभं नभः। भाग्याधिकोऽयं सर्व्वेभ्यो विशां चिच्छेद संशयं।
हिमानीपातभारेण येऽवसन्नत्र मण्डले। ययुर्निश्छायतां वृक्षा भग्नशाखाजनाइव।
प्राक्चेत्पतेद्धिमं तावद्भ्रियेरन् क्षुधिताः क्षणात्। पिष्टराभ्यन्तगर्त्तोष्ट्राः प्रविष्टाइव तद्भटाः।
तेनैकेन विना सर्व्वहृदयाह्लाददायिना। नाशोभवत् सभा राज्ञश्चन्द्रेणेव कुमुद्वती।
तद्दस्तोऽप्यत्यकार्य्येषु सैदभार्य्याविधेयधीः। विस्रब्धव्यवहारत्वं निन्द्यलश्चागमन्नृपः।
स्वराज्यरक्षणाचारलक्षणाक्षमशासनः। निन्द्यन्दाच्यं सदैवासीत् प्रियेक्षणकृतक्षणः।
निग्रहानुग्रहव्यग्राः सोत्कोचग्रहतत्पराः। अन्तरङ्गास्त्रियोऽभूवन्न मन्त्री न च सेवकः।
भोगलोभोज्झितौचित्या अमी विन्दन्ति साम्प्रतं। तुरुष्कपुष्कलाश्यामाः स्वार्थमर्थं न च प्रभोः।
अनायका विनश्यन्ति नश्यन्ति शिशुनायकाः। स्त्रीनायका विनश्यन्ति नश्यन्ति बहुनायकाः।
स्त्रीविधेयं समालोच्य राज्यं तस्य महीपतेः। इति श्लोकं पठंल्लोकः सशोकः समहस्यत।
ध्यायतो मार्गपत्यादींस्तत्प्रत्यानयनक्षमः। शयनीयविमुक्ताङ्गस्ताप्यते स्म दिवानिशं।
तत्रान्तरे स मार्गेशो लोहरान्तरसंश्रयः। स्वामिचिन्ताकुलो लेखं शिक्षामित्यं व्यसर्जयत्।
राजन् पुंरत्न कोशस्थो योऽभूत् सर्व्वार्थसाधकः। उत्पाद्योत्सारितः सैदैर्यद्दारिद्र्यं सुदुःसहं।
निसर्गगुरवो नान्यसङ्गमिच्छन्ति पश्यतः। अमी परस्पराभिन्नाः पारदस्य कणाइव।
हरिचन्दनवद्राजन् सर्व्वदोऽप्यमदो भवान्। किन्तु फोत्कारकारिण्या भोगिन्या वेष्टितोऽसि।

यस्मिन् स्फूर्जद्विषज्वाला व्यालाः सन्ति परासहाः। निधानमिव तद्राज्यं त्याज्यं कस्य न सम्मतेः।
मदीशापि न या स्पृश्या दृश्यापि भयकारिणी। श्मशानाग्निशिखेवासौ लक्ष्मीः सा केन सेव्यते।
स सेयाहस्सुनस्तत्तद्दुर्ग्रहग्रस्तवासनः। आश्रितोऽपि सन्मार्गे न तिष्ठतीव रावणः।
सेराख्या ताडकेवात्र सोत्कोचामिषभक्षिणी। पौलस्त्यस्येव ते सर्व्वनाशार्थं निकटे स्थिता।
तिष्ठन्त्वभ्यन्तरे सैदा यदीशा भवदन्तिके। तुरुष्ककरवीन्द्रेशमिहस्थः साधयाम्यहं। ९०
राजद्रोही न कोऽप्यस्मत्कुलेऽभूद्भक्तिवर्जितः। त्वदेकशरणः सोऽहं स्वामस्येदास्त्वदसे।
वयमेव सदाचारा विचारविशारदयः। उन्मार्गे यदि गच्छामः कोऽप्यस्मासु न विश्वसेत्।
कल्पान्तमपि जीवित्वा कृत्वापि धनसञ्चयं। हत्वाप्यरीन् कोऽप्यत्र भवे भवति सुस्थिरः।
नष्टेऽन्यस्मिन् भवांस्त्राता त्वयि नष्टे परोऽस्ति कः। इति लेखं नृपस्याग्रे बुद्ध्वा मार्गपतेर्द्रुतं।
स सेयाहस्सुनः क्रोधाच्छ्वसन्नहिरिवाब्रवीत्। सोऽयं स्थानच्युतस्तत्र स्वजीवनविवर्जितः। ९५
नूनमस्मत्प्रतापेन शुष्यतीवाम्बुपङ्कवत्। मीनोपमाणा विमुच्यास्य पङ्कमात्रावशेषिणः।
भृत्यास्तस्य न तिष्ठन्ति तडागस्येव पक्षिणः। किं करोतु स्थितस्तत्र तत्रत्यैर्विहितादरः।
मदीयदासमात्रोऽपि तं जेतुं क्षमते युधि। अथवाहं स्वयं यामि तं निष्काशयितुं ततः।
स तुरुष्कैः समं तत्र यत्नं कुरुते ऽन्यथा। अथोचे सैदहसनः पूर्व्वमैत्रीमनुस्मरन्।
किं मल्लेन कृतं राज्ञं दीपतामानयाम्यहं। अयुक्तापसवे पूर्व्वं कृतदिव्याः परस्परं। १००
अनिष्टं चिन्तयामश्चेत्तत् कथं सहते विधिः। तच्छ्रुत्वा नृपतेरग्रे तद्वैरैकायमानसः।
तूर्णं डामरयानं स्वं भोग्यहाराधिपं व्यधात्। वाञ्छस्थः साधयत्येव कार्य्यं सकृतकारणीः।
द्रव्यकोटिं ददामोऽस्मै सैन्यसङ्ग्रहसिद्धये। इत्युक्त्वा प्रतिमुक्तान्तमेधराजानकस्मथः।
द्रुतं निवर्त्तयामास दत्तद्रव्यमपि स्वयं। श्रुत्वा परशुरामाद्या मद्राः काश्मीरदेशतः।
स्वानिष्टमद्य या गन्तुं मार्गं सेभ्यो यथोचिरे। ऊचुस्ताम् प्रति मुञ्चामो युष्मान् पाथेयसंयुताः। १०५
कियद्दिनानि तिष्ठध्वं सद्रूपं दत्तवेतनाः। तेषु स्वपसि याति सैदास्तेऽन्योन्यमब्रुवन्।
निष्काश्याः सर्व्वथैतेन तुरुष्कैकविरोधिनः। अथान्तरे नरेन्द्रस्य तत्तद्व्यादिविस्मनात्।
जाताधिवाधितं मध्ये पौषे पयमिशभवत्। श्टगयारम्भिकाः सैदा निन्युस्तं सादृशं नृपं।
माघे विषयगादादिगताम् दृष्टुं श्टगभशाम्। यथ यथावसद्राथो सधेहकटकोत्कटः।
पीयमानसमानन्दसुखराशिरिहोऽभवत्।

पङ्क्तीः प्रथाय्य परितोऽद्रिषु तद्विभागं यत्नेपवेशसकरोत्कटकोनृपस्य।
तत्रोदनिष्टरतिनिष्ठुरवाग्जनानां द्रागावसतास्थिरदि द्रुता सरिताखनेपः। ११०
निषेवोऽस्तुसमाणाव गुणदाः धार्म्मनिर्भराः। चाकाशाः कटकैर्दिष्टैर्दुर्जनैरिव बाधकः।
प्राक्षिदपुष्पसद्याशाः पुष्पा गिरिन्द्रहरः। युक्ता लोलाहसं यथाः पशुपुष्पाः समायगुः।
हर्षस्निग्धान् स्युद्गमस्थितांविभजदाहताम्। तांस्त्यापागतान्द्दृष्ट्वा सैराश्चे तत्पुरं।

हरासान् पीवरानेतान् पोतान्मा हर दुर्व्वलान्। इतीव वक्तुं भूपाग्रे प्रापुस्ते सार्भकामृगाः।
सिद्धाध्युषितशृङ्गस्य चसैण्यवधदर्शनात्। क्रुद्धाः स्युर्देवताराजन्मा कृथा मृगयामिमां। ११५
इत्याद्युक्तोऽपि वक्रमस्तचैत्यस्थकैर्जनैः। शृङ्गारीवाद्रिनामद्रान्न व्यरंसीन्मृगयग्रहात्।
आस्थानमृगगोग्रेयं नान्यया क्रियते त्वया। मुनिर्वैश्रवणेऽद्रिस्थानृपमेयाब्रवीदिति।
साक्रन्दमाहता हत्वा मृगीस्ता रुचिरोचिताः। तद्गर्भनिर्भरां भूमिं सैदायकुर्दशोज्झिताः।
अवृश्नस्तदधात् हत्वा निर्मृगांस्तान् गिरीश्वरान्। सायं श्रान्तः मघोपोधान्मसतोरादिशन्नृपः।
भव्या सुपास्य तनया तरुणी च जाया कादम्बरं प्रसरके पशवश्च मीनाः।
तिष्ठाम्यमुष्य सदनेऽहमिहैव राज्ञा ध्यालेति कोऽपि न्यविशद्यमकिङ्कराभः। १२०
धानुष्कपुष्कलबलावलिनस्तुरुष्काः पङ्क्तिर्मधर्म्मनिरतास्यमृहोपविष्टाः।
तद्गाण्डपक्वहतकुक्कुटमांसभक्ता यथादवात्र विदधुर्म्मधुपानगोष्ठीं।
पशुतण्डुलमद्यादि हृत्वा वास्तव्यलोकतः। लुब्धास्तत्सेवकाः केऽपि स्वगृहे भरणं व्यधुः।
मान्यदागमनं भूयाद्युष्माकं जनपीडया। इत्यादि चाशिषः शृण्वन्नशक्तो विव्यथे नृपः।
मृगयाव्यसनं राज्ञो धिक् फलं भुज्यते न यैः। मृगापदेशाल्लोकानामेव सा क्रियते स्फुटं।
पशुवच्छतशो वद्धा मृगौघो यत्र सार्य्यते। मृगया सा विनोदाय यदि शौनिककर्म किं। १२५
असत्त्वं चले लक्ष्ये स्पृहणीयोऽस्ति सादिनां। कोऽयं वद्धे मृगे श्लाघ्यः शराभ्यासो धनुष्मतां।
क्षत्रियैर्मृगया कार्य्या निरवद्यत्वणाशनात्। नैकान्तव्यसनं युक्तं क्वापि सर्व्वत्र गर्हितं।
महापद्मसरस्तीरगिरिगांश्च मृगव्रजान्। आगतानृपतिस्तद्वन्निःशेषानकरोद्वधात्।
इत्याद्यनुचितं किञ्चिन्मृगयादूषणं कृतं। विलोक्य यद्भवेद्भीतिर्भाविनां मृगयायुषां।
आखेटिकां नृपः हत्वा राजधानीं समागतः। अस्वास्थ्यमत्रहद्दे हे ग्रहणीगदसम्भवं। १३०
केऽप्यूचुर्मृगयादोषात्कुपितादेवतास्ततः। अतीसारगदारम्भास्तत्रैवास्य विलोकिताः।
केऽपि प्रच्छन्नराज्येच्छाः वैद्याः स्वात्मकाङ्क्षिणः। व्यधुः किमपि भूपाले तुरुष्कादुत्तमारुचाः।
केऽपि मन्त्रिवियोगोत्थचिन्तासन्तापितात्मजं। रुजमाऊचे तद्व्याधेर्निश्चयः कस्य चिदभूत्।
भूपस्तादृगवस्थः स नववर्षादिवासरे। यथा सर्जप्रदेशन्तद्व्यथया शकुनीच्छया।
तद्दिने गच्छतस्तस्य राज्ञो नौकान्तरस्थितेः। जैनवाटविहारायात् सर्पस्तत्राट पद्धतिं। १३५
तद्दुर्निमित्तमोशान्त्यै हत्वा तं शायकैर्नृपः। अहरद्धृदयामद्दां न शरीराद्रुजं पुनः।
किमर्थं निर्गतोऽपि चिरं त्वं सुक्तनं कुरु। इतीवायागतोवायुश्चेगन्तं न्यरुध्यत।
अस्मिन् गते प्रजापीडा भविष्यत्यत्र मण्डले। अकम्पत शुचेवोद्यत्तरङ्गतरलं सरः।
तत्र सर्व्वोत्सवे भुक्त्वा मेदमन्त्रिसभाहृतः। अपुनर्दर्शनायेव सर्व्वेषां दर्शनं ददौ।
नौकारूढस्ततस्तूर्णं सभृत्यः षद्दिनावधि। उत्कण्ठाखण्डनायेव श्येनैः पक्षिवधं व्यधात्। १४०
अद्यैवेमं विनोदं नः करोति न पुनः प्रभुः। इत्येव श्येनाः पक्षाली मृद्वीलोपायनं व्यधुः।

प्रत्यावृत्तस्ततो राजा सैदांस्तान् प्रतिमुच्य च। नाहं स्वस्थोऽस्मि तल्पस्थो देवीं ज्ञातरुजं व्यधात्।
तत्पथ्यपरिचारिण्या स्वयं देव्या हृतो नृपः। दिवसेन्दुरिव क्षीणरुचिं विच्छायतामगात्।
कवाटविकटं वक्षः श्यामगौरं तदाननं। कम्बुरुजानुपादाश्च पीनाः पद्मदलोपमाः।
सुन्दरं नयनद्वन्द्वं ललाटं भ्रूमनोहरं। तद्रुजा नृपतेः सर्व्वं विवर्णं समपद्यत। १४५
एकदा सोऽवदद्राजा तं मेयाहसनं रहः। नाहं जीवामि राज्यार्हान सुताः शिशवो मम।
वद्धो वह्रामखानीयेन पाति मम वालकान्। वरमादमखानीयं युक्त्यानीयाभिषिच्यतां।
अथवेयं भवत्कन्या यद्वक्ष्यति करोतु तत्। श्रुत्वेति भर धीरस्ते स्वास्थ्यं स्यादिति सोऽब्रवीत्।
केवलं सैदहसनोपरोध भयदुःखितः। ॥ कुलकं ॥
अथ राज्ञ्यवदत्पित्रे रहोमेरमुखादिदं। सन्देहितास्वराजायं राज्ये किं क्रियतेऽधुना।
वरं वह्रामखानीयोयुवायमभिषिच्यतां। यौवराज्ये च ज्येष्ठोऽयं दौहित्रः स्थाप्यतामिति। १५०
द्वित्रादिष्टाश्च वध्यन्तां सर्व्वे सुरविनश्वराः। श्रुत्वेति मेयाहसनः सक्रोधस्तामभर्त्सयत्।
तच्छ्रेयः प्राप्तिसंकल्पकल्पितद्रव्यसञ्चयान्। भैासुलेभ्योददुः सैदा द्विजभक्तिविवर्जिताः।
प्रभुं द्रष्टुं न यच्छन्ति गच्छन्त्यभ्यन्तरं स्त्रियः। मन्त्रपाठं निषेधन्ति तत्तद्गारुडिकोचितं।
चिकित्सां वैद्यकोक्तान्तामन्यथा रचयन्ति च। तत्रापि गुलिकां भोक्तुं रचयन्ति स्वसाधितां।
किमप्यनिष्टं कर्म्मेति कृतमित्यादिवादिनः। वर्णोविवर्णं पश्यन्तोऽप्यन्तरङ्गा महीपतेः। १५५
वैद्योगारुडिकश्चाहं दुष्टकर्म्मेति कल्पयन्। तयाभूद्व्यभट्टः स स्त्रीवैद्यकृतार्थनः।
मुमूर्षुः सेवकैः पृष्टः कारुः किञ्चिदपि विभो। मण्डोनिवार्य्यनामपादित्यूचे तान्महीपतिः।
कृतान्तमहिषोद्दृष्टो दिष्यमद्यैव यात्ययं। इत्युक्त्वा मुमुचुः सर्व्वे साक्रन्दं साश्रुलोचनाः।
संरुद्धवमनः साश्रु घूर्णयन् दृष्टिमण्डले। तस्यामेव रजन्यां स मुमूर्षुरभवन्नृपः।
वर्षे षष्टितमे कृष्णनवम्यां मासि माधवे। पञ्चाहं द्वादशाब्दांश्च राज्यं कृत्वा दिवं ययौ। १६०
आक्रन्दमुखरा रात्रिः सर्व्वा सा जनताप्यभूत्। प्रातर्यानं समारोप्य छत्रचामरसंयुतं।
सैदाः समेत्वथाः सर्व्वे सिन्युः पितृमाजिरं। श्रीजैनभूपसमये दुःखिता नाभवत् प्रजा।
तादृशी यादृशी तस्य मरणे शरणोज्झिता। तद्दृशामसि यत्नाद्यै तस्य मस्तकवेष्टनं।
तदन्तरवसं दृष्टिकोञ्ज्दलं मस्तिलोप्यधुः। तदालोक्य जनः सर्व्वादर्शनोत्कण्ठिताशयः।
स्मारं स्मारं नृपं मेने सिवणमिव मध्यगं। प्रातः प्रातः समागत्य सैदाः सप्तदिनावधि।
खेदाध्ययनं चक्रुर्मिश्रितं रुदितैः स्वनैः। १६५

विहितरतपोवृष्टा येऽन्यैर्महाविभवोज्ज्वलामहृत्तवयशोरामालीलाविनाससदाश्रमाः।
कतिपयदिनैस्तेऽमी विज्ञा प्रजन्ति मुधान्विताविरमसमयोरज्यदेशाग्रहादिव कामुकाः।
देशो सोऽयं रचितरचना राजधानी तथेयं कोशो सोऽयं युवतिरपि ते ते गुणा से च भृत्याः।
इत्थेशान्तः समयति नृपो यावदेत्यासकृत्सं त्यक्त्वा सर्व्वं प्रजति मुधिरः पुण्यपापैकभागी।

मन्नाङ्गसुभगं राज्यं ममेदमिति योऽब्रवीत्। तदीयेनाभवत्तस्य स्वदेहान्ते पृथक्स्थितिः।
इत्थं शवाजिरे लोकः शुशोच नृपसंहतिं। अश्मेकरचनामात्रावशिष्टां तत्र संस्थितां।
राज्यदानाय राज्ञी सा म्लेच्छसम्पर्ककर्कशं। वह्रामखानजं पुत्रं दुःखोदर्कमतर्कयत्। १७०

इति श्रीजैनराजतरङ्गिण्यां पण्डितश्रीवरविरचितायां हस्सनशाहिराज्यवृत्तान्तवर्णनं नाम तृतीयतरङ्गः।

इति हस्सनशाहिवर्णनं ॥

## ॥ श्रीवरपण्डितकृता तृतीया जैनराजतरङ्गिणी ॥

### ॥ चतुर्थस्तरङ्गः ॥

तृतीयेऽहनि सैदास्ते मिथः संमन्त्र्य सत्वरः। व्यधुर्महम्मदखानाय राज्यदानाय निश्चयं।
प्रतीचाचममालोक्य कालं सैदास्त्वराकुलाः। राज्याभिषेकदानेच्छामकुर्व्वन्नृपसूनवे।
अथ राज्ये व्यधीयन्त तत्सुतं सप्तवार्षिकं। कृत्वा महम्मदशाहाख्यं गोनर्दमिव सुन्दरं।
तस्य सिंहासनस्यान्ते स्थापिता वस्तुसन्ततिः। त्यक्ता भोजनसामग्रीं पूर्व्वं शार्ङ्गेऽपतत्करः।
एतद्राज्ये सदा युद्धं भविता मण्डलान्तरे। दृष्ट्वा शकुनविज्ञाः केऽप्यूचुस्तत्रान्तिकस्थिताः।
रौप्यसिंहासने छत्री विबभौ बालभूपतिः। दत्तानन्दः पयःपूरैर्व्वालेन्दुरिव सुन्दरः।
सैदाः शुभ्रांशुकन्यस्तकुङ्कुमालोहितत्विषः। भाविद्रोहरुजोद्गच्छद्रक्तसिक्ता इवाबभुः।
भ्राता हैदरखानोऽस्य कनीयान् रुचिराकृतिः। बभौ बालनृपस्याग्रे शुक्रस्येव बृहस्पतिः।
शोकहर्षान्वितो लोकस्तद्दिने पितृपुत्रयोः। दधौ तमःप्रकाशाढ्यां लोकालोकाचलश्रियं।
दौस्थित्याभ्युदये सैदायहरानन्दसुन्दराः। सुगन्धिमकरन्दाढ्ये मधौ मधुकरा इव।
वाद्यमानोत्सवातोद्यघोषप्रतिरवच्छलात्। अकुर्व्वन्निव हृष्टाथं राजसत्ताशिषो दिशः।
राजधान्यङ्गने सैदाः परिधानप्रसाधनैः। अतोषयन्नुत्सवान्तः सर्व्वं नृपपरिच्छदं।
एकस्मिन् कीर्त्तिशेषेऽन्या दिष्ट्याद्युमनदयो। तादृशे ददृशे पौरैः स्फूर्ज्जत्सादिशतावृता।
राज्यसम्पत्समप्राप्ता तद्गृहे समलक्ष्यत। तत्कन्यादेजितेवाशा वक्तुं रिपुपराभवं।
राज्ञः सेवकशासमग्नाः प्राप्नुवन्नाख्यदन्तिकं। प्रवेशं लेभिरे माग्लुंठनाः कुक्कुरा इव।
देशसंस्कृतशास्त्रज्ञविदग्धजनविडम्बनाः। म्लेच्छस्तीषु वह्निः श्येनलीलासु व्यसनं दधुः।
विरुद्धव्यवहारेषु क्रूराचारेषु दर्पिषु। दुःसहान्नकदूनेन लोभेन क्षोभितेषु च।
दौःशील्यामभिगम्येषु प्रमरम्मत्सरेषु च। विरागितेषु सैदेषु सभयाः सेवकाययुः।
हितानामपि सैदानां केचिद्रूपाठसेवकाः। साध्यमन्दम्परिचयं काकानामिव कोकिलाः।
दिनस्थितिः सुखं यायोत् प्रतीपरशि नियता। तेषां श्रीनैव भृत्येव श्रामिता चपलाशया।

स्फीतगीतोत्सवनादा येऽभवन् इन्द्रगायनाः। शोकमूका इवाभ्यर्थे माघे सन्नाद्वाभवन्।
अथ प्रथममेवैते गृहीत्वा नवभूपतिं। शकुनापेक्षिणो नावा वितस्तातटमभ्यगुः।
स्वपक्ष्यावर्जकास्तत्र इष्टनौव्याजमण्डपः। स्वातन्त्र्यप्राप्तिदर्पान्धाः काश्मीरा नादरं व्यधुः।
अपुनर्गमनायेव विधाय शकुनिचयं। एकदा स्वीयसंयुक्ता व्यधुः किमपि मन्त्रणं।
तेषां तत्केवलतया श्रुत्वा पाड्गुण्यमन्त्रणं। काश्मीरिकाश्च मद्राश्च शङ्किता नगरेऽभवन्। २५
ततः परशुरामाद्यैरुद्दिष्टैः सह तद्दिने। मिलिताः पञ्चषष्टीशाः सैदा द्रोहमचिन्तयन्।
जिघांसतामथैतेषां वैजन्यावसरेच्छिनां। न भेदमगमन्मन्त्रोगुप्तसद्गुक्तैरिव।
एकदा तत्सुताभीष्टा मेराख्या मेरहस्सनं। मूर्त्तेव दुर्दशा गेहमागत्येत्यब्रवीद्रहः।
राज्ञः क्वापि क्रिया साध्या त्वर्णमागम्यतां प्रभो। इत्युक्त्वानिष्टमयेनं सा निनाय गृहान्तरात्।
द्रोहस्ते सूर्य्यवारे स्यात्र गन्तव्यो नृपालयः। पिचेत्युक्तोऽपि स स्वप्ने यथा दैवविमोहितः। ३०
तावत्स सैदहसनोऽप्यायया स्वगृहाद्दुतं। पादोच्छेदोऽस्ति ते द्रोहान्मा पलायनमारुह।
इत्येव पादकटकच्छिन्नोऽप्यादपतद्भुवि। प्रतोल्यां सैदसाद्यश्वखुरोत्कीर्णरजोमिषात्।
नैते पुनर्विशन्तीति शुचेवोच्छ्वासमक्षिपन्। तत्तारखानलेखेन त्वदनर्थादिहेतवे।
प्रतिनाय मिथोमन्त्रं विधाय कृतनिश्चयाः। आक्रान्तमण्डलाः सैदायुग्मच्छेपविशङ्किताः।
प्रातर्व्विश्रान्ति वसस्मादुपायः कोऽपि चिन्त्यतां। मिथेति बोधिता मद्रा जोनराजानकादिभिः। ३५
इन्मास्त स्वयमेवादौ समस्येति समाययुः। सर्व्वानमृतवाख्यन्तः समेतानवगन्य तान्।
अन्तः परशुरामाद्या विविशुः शस्त्रधारिणः। रक्ष्योद्वारस्त्वया तैरित्युक्तोद्वारेशताजकः।
मन्त्रे प्रवृत्तिरित्युक्त्वा सैदभृत्याश्च्यवारयत्। कुर्व्वन्ति भोजने बुद्धिं त्वद्भृत्याइति तद्गिरा।
सैदाः सशस्त्रान् स्वान्भृत्यान् स्वसमीपाश्च्यवारयन्। जोनराजानकस्तावत्पयान्येनागमद्द्रुतं।
गृहीत्वा राजभृत्यौघं जिघांसुर्वाटिकान्तरात्। ताजदौवारिकोऽप्यद्यमारुद्धाशु नृपाग्रगं।
वध्यामाभ्यन्तरेऽन्यत्र तन्मतेन जिघांसया। ४०
वाटिकान्तश्चतुष्खण्डमण्डपोपरि संस्थिताः। सैदा सद्भान्त्समालोक्य सासङ्का इव तस्थिरे।
किं न गच्छत देशं स्वं प्रतिमुक्ताः किमागताः। इत्यागतांस्तान् दृष्ट्वैव सैदं सिंहदिशोऽभ्यधात्।
मार्गमुक्ताचरोनाप्तस्वत्तोधामः कथं वयं। अद्य वः प्रतिमोच्यामस्त्वयार्थमिति तेऽभ्यधुः।
वैजन्यमेत्य पाथेयव्याजादस्मादुपाजतः। परशुस्सिंहभट्टन्तं न्यवधीत्प्रथमं रुषा।
चतुष्खण्डपिकाप्रान्ते प्रचरत्त्वतजोचितः। सिंहोऽपि विनटस्फालः शृगालइव सोऽपतत्।
किं द्रोहो द्रोह इत्युक्त्वा यावद्भीताः समुत्थिताः। तावत् खड्गप्रहारैस्ताञ्छूर्भद्राः समेत्य ते।
निर्घातः प्रस्फुरन्सैदा द्वाराय्ये सैदहस्सनः। हतो मुख्यायुधस्तत्प्रहारशतविक्लवः।
तं दृष्ट्वा मेयहसनं सभयं विद्रुतं द्रुतं। प्राकारारूढमवधीत् कोऽपि छिन्नपदद्वयं।
गद्यामीनयासीममसस्त्राद्यास्तदन्तिके। चिंशन्मात्रा हतास्तत्र पुत्त्रमित्रसमन्विताः।

वदन्तो हालहालेति रक्तसिक्ताक्तपाणयः। चेरुस्ते तद्वधोद्युक्ताः कृतान्तस्येव किङ्कराः।
गृहेषु गोवधात्तेषां पापभीर्नाभवद्यथा। तथा तत्र कृतां सैदान्मद्राणां नाभवद्घृणा।
मृगयान्ते कुरङ्गादींश्छिन्नाङ्गान् व्यदधुर्यथा। तथा सैदाः कृता मद्रैः घुटैस्तदाटिकान्तरे।
दिगम्बरतांशुका नग्ना महार्हशयनोचिताः। अनाथा इव लोकस्य प्रययुः प्रेक्षणीयतां।
केचिद्विभवसंस्थानाद्या निष्कृष्टच्छुरिकास्ततः। हर्षं प्राकारमुल्लङ्घ्य गृहीलाश्वान् पलायिताः।
तद्दृष्ट्वा तुमुले जाते वहिस्तदनुजीविनां। कस्यापि निश्चयो नाभूदन्तरे के हता इति।
भयत्यक्ताभिमानेषु विद्रुतेष्वनुजीविषु। चकर्ष शस्त्रं तन्मध्यात् कोऽपि नैवाङ्गनान्तरे।
मल्लजादात्मजाहूतास्तावन्मैथामहम्मदः। गृहादेत्य द्रुतं प्रादादास्कन्दं राजमन्दिरे।
प्रतोलीपालकः सोऽयं द्रोहीत्यथागतं द्रुतं। राजमार्गान्तरे क्रुद्धो नोरोज्ञाहमघातयत्।
वद्धारिपुटां दृष्ट्वा राजधानीं नवीकृतां। ज्ञालान्तस्थान् रिपून् प्राग्वत् चोभेनाग्निमदापयत्।
न शक्तोपद्रवं द्रष्टुं स्वर्गं मद्रचक्रो गतः। शुचेवेति द्वारधान्या जुहुवे ज्वलने वपुः।
सौधप्राप्तलसद्धूमस्तोमव्याजान्नृपश्रियः। क्व मां खला नयन्तीति निःश्वासौघा इवास्फुरन्।
अत्रान्तरेऽग्निमालोक्य द्रोग्धारो धारितायुधाः। राजधान्यङ्गनं प्रापुर्निर्गता वाटिकान्तरात्।
जोनराजानकोऽगच्छत् क्रुद्धः केनापि पत्तिना। वीरः खड्गप्रहारेण द्विचांस्तत्राङ्गनेऽवधीत्।
समारुह्याथ राजाश्वान् सर्व्वे मद्रसमन्विताः। मुक्तामूलकनागान्ते प्राप्ताः प्रोचुः क्षणं मिथः।
वरमत्रैव तिष्ठामः सैदैर्युद्धं विदध्महे। स्वल्पावशिष्टैः शत्रूणां न शेषः परिरक्ष्यते।
ज्यलालठक्कुरः श्रुत्वा तानूचे नयकोविदः। न युद्धसमयोऽस्तीह गलानेन यया द्रुतं।
वितस्तापारमासाद्य तिष्ठामः सपरिच्छदाः। तत्रोपायान्विधास्यामो येन नश्यन्त्यमी स्वयं।
अभिनन्द्येति तद्वाक्यं सर्व्वं साहससालिनः। जुहिल्लामठमार्गेण वितस्तापारमासदन्।
अत्रान्तरेऽन्तरं प्राप्तः क्रुद्धो सैयामहम्मदः। अवधीद्भ्रातरौ ताजपाजकौ द्वारपालकौ।
राजधान्यङ्गनात्कृष्टौ श्वपचैर्गुल्फदामभिः। अमेध्यमध्यमप्राप्तौ ययतुस्तौ श्वभोज्यतां।
आजन्मक्षपणयाम्यपीडोत्कोचार्जितश्रियौ। प्राणदानवशे तस्मिन् गतौ सर्व्वस्वदावतां
भक्षितं याम्यपीडाभिर्लुब्धैर्धनपरवञ्चनैः। तेषां सद्रूप्यकुप्यादि सर्व्वं तद्राजसादगात।

क्षपणस्य गृहं विशन्ति येऽर्थान वहिः क्रष्टुमनो जनाः समन्तौ।
विलमध्यगता इव द्विजिह्वा यदि निर्यान्त्यसुभिः सहैव सर्व्वे।

भिक्षोः प्रवर्तितमार्गं येन दत्तं तद्गृहान्तरात्। शतं तण्डुलखारीणामिन्धाधैरेव तद्धृतं।
गोधूमपिष्टं पूपैकपर्य्याप्तं मातमर्थिभिः। यत्तत्मुष्टिपतच्चूर्णैर्हिमपातायितं पथि।
अत्रान्तरे गृहादाशोऽप्यानियानोभटोद्भटः। प्राप्यासिक्तामतोलीन्तामदृष्टम्लिष्टोवधा।
एदराजानकाद्याय तावदुद्दामघामजं। उन्मुच्य बन्धनात्तूर्णमपमार्गेण निर्ययुः।
कापि दृष्ट्वारिभिन्यस्य पयादपि ऊतामनं। घमोयाहं न च स्थातुं गृगमावद्वाभवत्।

क्रष्टोऽरिष्टाय सोऽयं नो विदद्धैरिति तं विदन्। आलिखानः समाश्वास्य विश्वोत्सर्गमिवावधीत्।
महाराज्ञैव क्रष्टोऽयं पाजभट्टमतस्त्वया। राज्यार्थमिति सैदास्तं चुक्रुशुः केचनावदन्। ८०
उपायो बन्धनात् क्रष्टुं चिन्तितस्तस्य योऽपरैः। अपायः प्रत्युतास्याभूद्दैवं केन विलङ्घ्यते।
तस्य मोरादयो भृत्याः पापास्तेन प्रचोदिताः। प्रहारविवशं चक्रुः शशकं शबरा इव।
राजपुत्त्रवधोत्पातविवशं पृष्ठपातिनं। अवधीत्पाजभट्टन्तं श्वपचमिव राघवः।
भुक्तं किमपि नो राज्यान्निर्देतु किमयं हतः। शुचेवारोदि तद्दृष्ट्वा दृचैः पिकरवच्छलात्।
मा मा बधीरिमं स्थाणं सुचिरादभ्यनीदृतं। इत्युदुस्तच्छुचेवेत्थं महता कम्पिता लताः। ८५
केऽमी तुरुष्का दुष्कार्य्यकराः पुष्कलपातकाः। इत्येव तरवः कम्पमापुर्व्वायुविघट्टिताः।
चतुर्व्विंशतिवर्षीयन्मात्रा प्राप्तश्चिराच्छ्रुवः। न्यहं दहार्गन्तिके स्नेहात् कृतोऽन्त्यक्रियया ततः।
यवाग्नभक्षिणी तस्य जननी विधवा सती। सोवाएदेवी साजीवमवसत्तच्छ्रुवाजिरे।
राजसैदद्विजानेतान् हतान्वीचाम्यहं कथं। इतीव तत्क्रुधा रक्तः सूर्य्योलोकान्तरं ययौ।
परितो राजधान्यास्तान् दृष्ट्वा नग्नान्महत्तरान्। न भिक्षुः कोऽपि वस्त्रैकखण्डं दातुं चपाद्वते। ९०
सरस्तीरगता भेका अविच्छिन्नरवच्छलात्। साक्रन्दाः सर्व्वरात्रन्ते तच्छुचेवाभवंस्तदा।

ये राजवेश्म विविशुः सुभगाः सुवेशास्त्वङ्गत्तुरङ्गखुरधूलिकृतान्धकाराः।

ते दिग्विवोढशिविकाधृतजीर्णवस्त्रा निष्क्राशिता नृपगृहात् स्रुतरक्तधाराः।

इत्थं पष्टितमे वर्षे भाव्युपद्रवकारणं। वैशाखस्य चतुर्द्दश्यां सैदानां विप्लवोऽभवत्।
नूनं हसननाम्ना स भृत्यानां तत्र वत्सरे। अन्तकः सन्निविष्टोऽभूद्येनैते प्रलयं गताः।

सामान्यवेश्मनि वरं जनिरस्तु पुंसां मा मास्तु राजनिलये बहुदुःखकर्त्री।

ते शेरतेऽत्यहचिरेऽल्पपटैकमध्ये नो माति राजयुगलं विपुले स्वदेशे। ९५
अथालिखानसैदाद्याः क्रुद्धाः पश्चादवालगन्। नदीपारगतान् श्रुत्वा द्रोहिणस्तान्विरोधिनः।
नौसेतुबन्धानुच्छिद्य सार्द्धैः काश्मीरिकैः समं। ज्यालालठक्कुराद्यास्ते मतं चक्रुर्जिगीषया।
विंशप्रस्थान्तरे सैदाः प्राप्तसन्नाहवाहनाः। तत्तत्पटकुटीषण्डमण्डिताः शिविरं व्यधुः।
पुरमात्रावशिष्टास्ते सैदा दैशान्निवर्त्तिनः। वाजिवर्म्मासिभूयिष्ठां राज्यलक्ष्मीं विभेजिरे।
येषां वराटिकैकापि नाभूत् करगता क्वचित्। स्वर्णरूपकहस्ताद्यास्ते वेशभूषिताः। १००
तेऽप्युत्तुङ्गतरङ्गेषु सर्व्वतोवसुवर्षिषु। अकारि शस्त्रग्रहणं शिल्पिशाकटिकैरपि।
मन्दुरासुन्दरा येऽश्वा राज्ञोऽभूवन्महागुणाः। तानारुह्याधमा येहसलङ्घ्या नित्यदुर्लभान्।
ततो हसनराजानकाद्यैरन्यैश्च संयुताः। पाड्गुण्यं विदधुः सैदाः काश्मीरिकजिगीषवः।
ते मेयामत्तनाराचमुख्यानां यन्त्रणोज्झिताः। स्वसेवकानां विदधुरधिकारसमर्पणं।
अत्रान्तरे पारगताठक्कुराद्या महाधियः। सैन्यानां सङ्गहं चक्रुस्ते जालद्रगरान्तरे। १०५
श्रुतेति साहसोदात्तं नगरे सद्र निर्म्मितं। आययुः सर्व्वराष्ट्रेभ्यो लोकास्ते शस्त्रधारिणः।

प्रवृत्ते च पुरक्षोभे पुरे ग्रामे च पत्तने। अत्युल्वणजनः सर्व्वो धावति स्म धृतायुधः।
शमालावांगिलीयाद्याः क्रमराज्यगताश्च ये। स्वामार्थं वितिकातीरे शिविरं समकल्पयन्।
दरङ्गियकवाकाद्यैर्दरङ्गिः सुभटैः समं। वैदूर्य्यभट्टः स्वामस्थो युद्धसन्नद्धतां दधौ।
नीलाश्वलोकं सङ्गृह्य पद्मराजानकादयः। दुग्धाश्रमान्तिके सिन्धोः पारं स्वामार्थमासदन्।
सर्व्वतोधान्यसम्भारानानीयानीय नाविकैः। प्रवासवेतनं कोशाभावात् काश्मीरिका व्यधुः।
क्वचिल्लुण्ठिं क्वचिद्दाहं परदेशदवात्र ते। पारावारगताश्चक्रुर्नदीं तीर्त्वा पुरद्वये।
धनुर्यन्त्रशरैर्मुक्तैः प्रतितीरं पुरद्वये। पञ्चषस्मृता युद्धे प्रत्यहं कटकद्वये।
खशाखोपान्तसामन्ताः चौरश्रेण्या रटद्भिर्हताः। नामावशेषाः खानाश्च शूरादारिद्रपीडिताः।
चौराः कृतप्रमोपाश्च चिरबन्धनयन्त्रिताः। तत्तद्राजविरुद्धाश्च पिशुनाश्च श्ववृत्तयः।
हृताधिकारास्तत्कार्य्यन्यायप्रत्यायनक्षमाः। एते चान्ये च तुतुपुर्देशेऽस्मिंस्तदुपद्रवे।
नौसेतुबन्धान्नावश्च सर्व्वामडवराज्यतः। आनीय वामतीरस्था विदधुः स्वोपयोगिनीः।
देवाभिधः शाकुनिको नाविकाधिपतां भजन्। प्रतीर्थ्य नौकायुद्धेन विदधे सुभटक्षयं।
सैदा दुग्धसरस्तीरस्थितान् शाकुनिकान्नवान्। सपोतान् व्यसृजन् योद्धुं तत्तन्नन्दपुरस्थिताम्।
सेयावलाकनामापि पुररक्षाधिकारभाक्। विचार्य्य चौरांस्तत्काले द्विनान् शूले न्यरोपयन्।
आसमुद्रमठाच्चैननगरान्तं सडिण्डिमं। तस्मिन् स्फुरति पौराणां न भीश्चौरकृताभवत्।
छिन्नेषु सेतुबन्धेषु तत्तच्छ्रीपुरकादिषु। पूर्दुर्गरचनेवाभूद्दुर्गमा नदिरोधिनां।
आस्कन्दं स्कन्दभवनादामक्षोपटहाङ्गनं। पञ्चहस्तमितां सैदाः परिखां समकल्पयन्।
द्वारधानीसमीपेऽपि रुद्रराजानकान्तिके। तादृशीं परिखामन्यां चक्रुर्वैरिभयच्छिदे।
विरुद्धवेशमलुठनं कुर्व्वन्तो घाततद्रुमाः। सैदभृत्या भयं चक्रुः प्रजानां गोवधादिना।
विरुद्धमुक्तलुठितगृहदारुसमाचितः। दिद्दामठो रुद्रवनवासैन्यसमाश्रितोऽभवत्।
अनभिज्ञतयाप्यासां नदिरुद्धरुदस्त्रियः। ययौ चक्रुर्यथा सैदागावोहत्या शुभामिव।
निःपृष्ठपथाः पश्चाद्दममुद्यमो दिने दिने। राजधान्यङ्गने साश्वास्तद्भृत्याः प्राविशन्मदात्।
मल्लामीनपदांदुन्दकापदसद्मानि च। राजानको हरकस्य ददाह स्वगृहं क्रुधा।
काकतालीयकन्यायः सैदकाश्मीरसैन्ययोः। परस्परभयभ्रंशद्वैर्य्येयारभत्तदा।
पारावारगता धीराश्चौर्य्यं साहसिनो द्रुतं। हत्वा तांस्तांश्छिरश्छित्त्वा तीरे दण्डे न्यरोपयन्।
सोमाख्या रोहिणि हते तीर्सा सैदभटद्वये। लुण्ठिं विशेषमाभाषाचक्रुः पद्मपुरान्तरे।
सोमराजानकाद्याश्च दृष्ट्वा तीर्णा भटोद्भटाः। उशाशादिषु सैन्यावादुत्पिञ्जं चक्रुरञ्जसा।
तेन सैदा अपि ग्रामे जग्मभुगो गृहाणनैः। सोमराजानकस्यैव सौधाद्ग्निमदापयन्।
तच्छ्रुत्वा च नदीपक्ष पद्मश्चि विषयान्तरे। ताजिभट्टस्य सदने सहदग्निमदापयन्।
गृहान् पदातिमात्रः स दग्ध्वा सहरसाधगः। दुग्धाश्रमादिस्वामस्थान् पलायनपरान् व्यधात्।

अथ लोहरकोटस्थं श्रीमार्गेशव्यवहागिरं । ज्यश्चालठकुराद्यास्ते लेखमित्थं व्यसर्जयन्।
यस्मादभिया देशात् सकुटुम्बोगतो भवान्। स मद्रैर्विहितोऽस्माभिर्युक्त्या तद्वधसाहसः।
मेयामहम्मदाद्यैस्तत्पुत्रैरस्मज्जिगीषुभिः। वैतस्तो दक्षिणे वामेभ गोऽस्माभिः समाश्रितः।
जिगीषवोवयं सर्व्वे क्रान्तकश्मीरमण्डलाः। पुरमाचावशिष्टास्ते सैदास्तिष्ठन्ति वेष्टिताः।
तद्विलम्बधियं त्यक्त्वा तूर्णमागम्यतां यतः। प्राप्ते त्वयि जयोऽस्माकं तव स्यु. कीर्त्तिसम्पदः।'
राजभक्ताश्च शक्ताश्च यूयमेवाच मण्डले। तदनागमनात् कीर्त्तिं मा कार्षीः स्वां कलङ्कितां।
वद्धे रणादालिशाहे पूर्व्वं मलिकजः स्वयात्। राज्यरचां व्यधादत्र यथा मार्गेशमल्लदः।
तदत्प्राणं त्वया रच्यं तूर्णमागत्य साम्प्रतं। अन्यथास्य शिशोराज्ये स्थापयन्ति न सैदजाः।
इति लेखं विचार्य्याशु स्वदेशोत्कण्ठिताशयः। तूर्णं पर्णोत्समार्गेण स मार्गपतिराययौ।
प्राप्ते तस्मिन् दिनैर्द्वित्रैः कुन्नरीनपुरान्तरं। चकम्पुः शिविरे सैदाः प्रदीपाइव वायुना।
अथ सम्भय सैदास्ते भयात् सन्धातुमिच्छवः। इत्थं शिखशद वार्दोसिखइम्मान् व्यसर्जयन्।
प्रधानपुरुषास्सन्तः कृतसैदवधाः कथं। भवन्तोऽत्र कुर्व्वन्ति कार्य्यं लोकविगर्हितं।
दैवाद्यदि मृतोभूपस्तत्सुतस्तत्पदे कृतः। कस्य किं वो हृतं येन सर्व्वे छेदार्थमुद्यताः।
न सर्व्वे द्रोहिणः सन्ति यूयं काश्मीरिका जनाः। वैदेशिकैर्हतायैस्ते द्विषांस्तान्नः प्रयच्छत।
अथवा परदेशात्ताश्छिष्काश्य सपरिच्छदान्। यूयमेवात्र देशे स्य मुख्या मन्त्रिषु पूर्व्ववत्।
या यस्य पदवी पूर्व्वमासीत् सा तस्य तिष्ठतु। संभूय सर्व्वे भुञ्ज्महे नास्माकं विग्रहे ग्रहः।
मरणं नियतं जन्तोर्यथैव विधिकल्पितं। तथैवावश्यभावीति के निवर्त्तयितुं चमाः।
इति लेखार्थमालोच्य मार्गेशाद्या महत्तमाः। यवनाचरसंबद्धमिति लेखं व्यसर्जयन्।
रचारक्तं नृपस्तादृग्यचितो न दुराशया। किमर्थं स हतो राजपुत्रो वहामखानजः।
नेरोलोहादिवधतः कस्याश्चोषा भवत्विह। तत्राप्यस्य शिशोराज्ञः सर्व्वः कोशो विलुण्ठितः।
लौहीषा घटिकैवैका द्वारि तिष्ठति भूपतेः। सैदैः शिष्टाहमेवेति ब्रुवन्तीव ध्वनिच्छलात्।
गच्छन्त्वनिष्टा मद्रास्ते वहिर्युक्त्या निवारिताः। सन्तोषहृत्या तिष्ठन्तो यूयं पैतामहे पदे।
इत्यादि श्रुत्वा सैदैस्तु समाहूतोऽप्यनागतः। तदयं व्यसृजद्दूतं स च प्राप्तोऽब्रवीदिदं।
स्थापयन्तु धनं कोशे यद्धृतं बालभूपतेः। शस्त्रं त्यजन्तु मन्त्रादौ तिष्ठन्तु भयवर्जिताः।
अनता एव कुर्व्वन्तु राज्यकार्य्याणि पूर्व्ववत्। किञ्चिन्नश्यति नो देशे दोषाः शान्तिं व्रजन्ति च।
यद्धृतं गतमेवात्र मृता जीवन्ति नो पुनः। अन्योन्यशुद्धिर्वैरस्य जातान्योन्यकृताद्वधात्।
इत्यादि युक्तमुक्तं तद्वाक्यं श्रुत्वा मदोद्धताः। सैदास्तदुक्तिजनितक्रोधदग्धाइवाभवन्।
नृपः कोशश्च शस्त्रञ्च युद्धदचास्तथा भटाः। सर्व्वमित्यस्मदायत्तं किं कुर्व्वन्ति विरोधिनः।
इति हैमतखानोक्ता युद्धसन्नद्धबुद्धयः। अभूवंस्ते कृतोद्योगाः कौरवाः पाण्डवेष्विव।
अथैकदा सैफढारजोनराजानकादयः। पुरे नौसेतुमुत्तीर्य्य सैदयुद्धार्थमाययुः।

उपायैः सर्व्वदा जेयास्समयो न रणस्य वः । इति मार्गपतेर्वाक्यं नागृह्णंस्ते रणोद्यताः ।
दावोदनामा मार्गेशपुत्रो धामाकरोद्रुतं । प्रतीहारादिभिर्युक्तो नगरान्तरमासदत् ।
समुद्रमठमार्गेण प्रविष्टा पृतनाथ सा । प्रापस्कोष्टविहारान्तं कर्त्तुं सैदभटक्षयं ।
रणं सन्त्यज्य डोम्बाद्यायेऽन्ये लुब्धा महाभटाः । सर्व्वस्वहरणव्यग्रा बभूवुर्नगरान्तरे ।
डोम्बाद्याः सुभटाश्चान्ये घ्नन्तोऽन्योन्यमुदायुधाः । प्रसिद्धपौरवेश्मभ्यो भाण्डागाराद्यलुण्ठयन् ।
भूमौ निखन्य यन्न्यस्तं पौरैर्गुप्तं गृहे धनं । चिह्ना प्रतिपदं शङ्कुर्नीतं तच्चैरिवार्पितं ।
मद्राहते भटे दृष्ट्वा सैदा दिक्पतितं शिरः । नाद्यास्माकं जयोऽस्तीति तूर्णं जग्मुर्यथागतं ।
अथ सैदचमूः श्रुत्वा तान्प्रविष्टान्पुरान्तरे । अग्रे जगाम युद्धाय सायकायुधवर्षिणी ।
अथागतं पद्मभटं हत्वा स्वशिविरान्तरे । तद्रक्ततिलकं चक्रुः सैदाः स्वायुधसिद्धये ।
आलिखानः स तत्रस्थस्तः श्रुत्वागतां चमूं । लक्ष्मदविहारेऽग्निं मार्गरोधार्थमार्पयत् ।
ज्वालाजटाकुले मार्गे प्राप्तो दावोदमार्गपः । सहोसनप्रतीहारः स वीरो रणमग्रहीत् ।
सेतुसङ्कटमार्गेण पतितः परिखान्तरं । स मार्गपतिदावोदो युध्यन् प्राणैर्व्ययुज्यत ।
तत्राह्लादप्रतीहारमुख्या वीरा रणाङ्गने । ययुः शौर्य्यं दर्शयन्तो दिव्यस्त्रीसुखभागितां ।
रूपं तस्य मृतस्यापि स्मृत्वा पौराङ्गनाः पुरे । वदन्ति नैव पश्यामस्तादृशं सुभगं क्वचित् ।
सुरूपो मानुषो योग्यो नायं तन्नीयते दिवं । इतीव देवताभिः किं मृतं तत्र न्यधीयत ।
तावद्रुभतखानाद्यैः पश्चादन्यपथागतैः । विदधे खानगाहाग्रे तत्तत्सुभटसंक्षयः ।
भूताविष्टैरिव प्राप्तविजयैरुद्धतायुधैः । रणश्चेद्वागताः पौरास्तद्दिने कोपितैर्हताः ।
किमन्यत्परदेशीया दूता विप्रगृहे स्थिताः । एते मद्रा इति प्रोक्ता लोभाद्भित्त्वा निपातिताः ।
विमुच्य बन्धनस्थान् स्वान् युध्यन्सैदभटैः सह । स सैफडामरः पौरान् सैदांश्चोत्पाटकान् व्यधात् ।
अस्मद्वैरिहितः सोऽयमिति सैदभटास्तथा । जघ्नुर्गृहस्थितं वैद्यपण्डितं यवनेश्वरं ।
अत्यन्तानुचितं सैदाश्चक्रुर्यत्तस्य मस्तकं । छित्त्वा चन्दनलिप्ताङ्गं न्यधू राजपथान्तरे ।
प्रविष्टाराद्यशाः केऽपि तद्दिने ते पुरान्तरे । अविचार्य्य क्षयं चक्रुः सर्व्वेषां यत्कृपोज्झिताः ।
तस्य चन्दनलिप्ताङ्गं मस्तकं वीक्ष्य नागराः । न के निन्दां व्यधुः सैददुष्कर्म्माधर्मनिश्चयात् ।
आमल्लेकपुराक्षोद्रविहारान्तं पुरान्तरे । शवा दन्धनगण्डाल्य इवाशुनिचिताः पथि ।
आसन् येषु वपूंषि तूलशयनन्यस्तोपधानोद्गतस्पर्शोत्कर्षसुखावमर्शविलसच्छृङ्गारसाराण्यलं ।
नष्टास्ते भुवि काककुक्कुरवृकैः सम्भक्षिता लक्षिता मेदोमांसवसावमत्क्रिमिलसन्निष्पन्ददुर्गन्धिनः ।
जयेन तावन्मात्रेण तुष्टाः सैदाः परस्परं । विंशप्रस्थान्तरे चक्रुर्वाद्यैस्ते विजयोत्सवं ।
हतावशिष्टाश्शंस्तांस्तद्दिने चलितान् बहून् । पश्चाच्चेद्लगिष्यन्त सर्व्वसंहरणं भवेत् ।
किन्तु प्राक् लुठिता देवा ज्वलिताः केऽपि देवगाः । तां बुद्धिं विजयायैषामदास्यन् कुपिताः कथं ।
अहंपूर्व्विकया याततरङ्गटभराग्रहः । भौमसेतुबन्धसुचोट तावच्छ्रीनगरान्तरे ।

सन्नाहभारसंभग्नाः सेतुभङ्गात्परिच्युताः। शतसङ्ख्यादिने तस्मिन् वितस्तायां विपेदिरे।
नूनं सा शारदा देवी वितस्तारूपधारिणी। तदधर्मक्रुधा ग्रामं विदधे कटकद्वये।
प्रेक्षागताहताः पौरा इति निन्दानिवृत्तये। तत्क्षणाल्लूनशिरसां सैदेराशिः कृतोऽग्रतः।
तत्तत्कील्यर्पितमुखैस्तैर्वितस्तातटान्तरात्। काष्ठमेकं न्यधुः सैदा भीत्यै दीपधरोपमं।
वितस्तायां शवाः केचित् सलिलोच्छूनविग्रहाः। विससुर्विस्रगन्धाढ्या महापद्मसरोन्तरे। २००
अत्रान्तरे समानीयावशिष्टान्परितो भटान्। काश्मीरिकाः पुनश्चक्रुः पूर्व्ववत् सैन्यसंग्रहं।
श्रीज्यहाङ्गिरव्यमानसैफडामरकादयः। मुख्यान् सैदान् पुनर्ज्जेतुं रणोपायं व्यचिन्तयन्।
ससैफडामरः प्राप्तसिद्धादिशपदस्ततः। उच्चावचेषु व्यभजद्विषयान् सप्तविंशतिं।
काष्ठागता लवन्यचास्तीत्प्राश्च सफलीकृताः। यत्रैषवश्च योधाश्चाघट्टंस्तेषु दिने दिने।
क्षुभ्यद्वैतस्ततीरद्वयजयघटनारब्धयन्त्रेषु युध्यत्क्रुध्यद्वीरेक्षणात्तप्रचुरपुरजनस्वान्तसंक्रान्तशौर्य्यै।
धावत्सन्नाहिताश्वोत्कटसुभटघटाघातजाताग्निवर्षं चक्रुः क्रोधात् पुनस्ते प्रवरपुरवरे युद्धमत्यद्भुतं तत्। २०५
यामदुन्दुभिवाद्यानां ध्वनिः सर्व्वैस्तदा श्रुतः। पूर्व्वं राजगृहे पश्चात् सैदकाश्मीरसैन्ययोः।
अवतीर्णा जलार्थं याः पारावारपुराङ्गनाः। यन्त्रेषुभिर्व्विदीर्णाङ्गास्तत्क्षणात्तत्र विपेदिरे।
स नासीद्दिवसो यत्र द्वित्रा वीराः पतत्रिभिः। विद्धा मुमुर्षवस्तीरान्न नीताः स्वगृहान्प्रति।
वह्निदानस्फुरद्योधसंहारादैरुपद्रवैः। एकमेकं दिनं तत्रानेहसामभूद्यथावहं।
अश्लीलालापिनोऽन्योन्यं रङ्कखाङ्गाटनोद्यताः। तटद्वये भटाः क्रूरा अवाच्यमपि तेऽब्रुवन्। २१०
राजसैदद्विजद्रोहरोहत्पापादिवादिनः। मिथोगालीं वदन्तस्ते किं नावाच्यं बभाषिरे।
प्राप्ता दौलतशीहाद्याः कष्टवाटादिदेशतः। शिष्टाः सल्हणहंसाश्च शाहिभङ्गनृपात्मजाः।
पञ्चगह्वरजाः केचित् सिन्धुपत्यन्वयोदिताः। खशाश्चिक्कास्तथान्येऽपि रुरुधुः सर्व्वतो दिशः।
काश्मीरिकाः स्वभेदेन बलप्राप्त्या तथापरे। ययुस्तामविश्लथबलमज्ञातान्योन्यनिश्चयाः।
अत्रान्तरे नभस्युल्का सार्धं दीप्तोदभूत् स्फुटं। उदीच्या दक्षिणं याता प्रज्वलद्दक्षमस्तका। २१५
दृष्ट्वा तामद्भुतां सर्व्वे सैन्ययोरुभयोरपि। सङ्ग्रामाशङ्कितानिष्टावभूवुर्भयविह्वलाः।
अत्रान्तरे सैदसखैः प्रेरितोदेशलिप्सया। तत्तारखानोव्यसृजत्तौरुष्कं पुष्कलं बलं।
प्राप्ताः शस्त्रगलस्थानं तुरुष्कास्ते सुदुष्कराः। हंसभोडनराद्यैश्च शौर्यैः शलभा इव।
कालीधारापदेशेन काली भगवती क्रुधा। व्यधात्तद्भक्षणं नूनं सतीदेशहितेच्छया।
आदामखानजस्तस्मै विसृज्य इति चोदितः। निवर्त्य तं तुरुष्कः स स्वान्तिके समरक्षत। २२०
तदीयाश्वपदार्थौघप्राप्त्या तद्देशवासिभिः। अनन्यसुलभां प्राप्य श्रियं वैश्रवणायितं।
अथ काश्मीरिकाः श्रुत्वा तद्वधं वाद्यवादनं। चक्रुर्य्येनाभवन् सैदा विच्छायवदनाः श्रुते।
गतावशिष्टा दुर्निष्टदुष्टतत्कटकान्तरात्। सहस्रदितथौ तत्र शवानां निहिताभवन्।
विशुद्धपार्ष्णिसन्त्यक्तभयाः प्राप्तबलोद्धताः। काश्मीरिका सतश्चक्रूरणार्थं स्पष्टमानसाः।

मध्ये ससैन्यास्तिष्ठन्तु मार्गेशाद्याः पुरान्तरे। राजानकाद्या मद्राश्च स्तामस्था यान्तु दिग्द्वयं।
एकतस्ते स्थिताः सर्व्वे नश्यन्त्यल्पबलाः पुनः। इत्येवमतनिष्ठास्ते सम्मन्त्र्य कृतनिश्चयाः।
स्तामार्थमादिशल्लोकं स्वप्रदेशादुपप्लवः। नावा सिन्धुं प्रतीर्य्याथ जोनराजानकोद्धुतं।
स्तामस्थान् पञ्चषान् हत्वा पलायनपरान् व्यधात्। वस्त्रवाजितनुत्रादि हृत्वा सैदबलान्तरात्।
काश्मीरिकाव्यभाष्यन्त प्रयाताः प्रतिवासरं। किमन्यत् स्फुटमेवाक्षि येऽवसन् सैदसन्निधौ।
निर्लज्जास्ते व्यलक्ष्यन्त काश्मीरिकबलान्तरे। इतोयाति ततश्चैति लोकोविगतयन्त्रणः।
बाले राजनि मन्दाग्नौ कोऽप्यजृम्भत विप्लवः। गृहेषु लुण्ठ्यमानेषु विटैर्व्विहितपेटकैः।
निरुद्धमार्गसञ्चारोदेशोऽभूद्भयविक्लवः। मासद्वये व्यतीतेऽपि पारावाररणाद्यमैः।
जिगीषां नात्यजंस्तत्र सैदाः काश्मीरिकाश्चपि। पूर्व्वमङ्कुरितः सैदबधे पल्लवितः क्रमात्।
परस्परं वैरतरुस्तदागाच्छतशाखतां। दक्षिणे राजकोशादि वामे सेनाद्यवेक्ष्य च।
बलद्वयेऽपि विजयः सन्दिग्धः प्रत्यभाद्विशां। पुंसां निरुद्धे सञ्चारे नावा नद्यस्तटद्वये।
स्त्रियएव तदाकुर्व्वन् पारावारगतागतं। पारानेत्य विटैर्लुब्धैर्मुषिते पथिकव्रजे।
अधिष्ठानादिदेशेषु मार्गः प्रचलितोऽभवत्। पारावारगतान् कांश्चिदन्योन्यच्छलनोद्यतान्।
निरुद्धः प्रत्यहं द्विषाः क्रोधाच्छूलेऽध्यरोपयन्। अवोचन्नेकदा सैदा भटाः काश्मीरमन्त्रिणः।
आयान्तु यदि शक्तिर्व्वायुध्यन्तु पुनरप्यलं। सीमा वा दीयतां तावत् प्रतीचामो रणं प्रति।
नित्यं जनबधे लोका उद्विग्नाः शरवर्षणैः। भजतां विभवं सोऽत्र विधिर्य्यस्मै प्रयच्छति।
निश्चयेति पुरप्रान्ते सीमार्थं वामपार्श्वगैः। चिच्छिदुः सन्धितां रज्जुं तूर्णं सैदभटास्तटात्।
तितीर्षुं वैरिणो ज्ञात्वा सैदाः कार्ष्टीलनस्ततः। न्यधुर्हसनराजानकादीन् स्तामार्थमाकुलाः।
छिन्नेषु सेतुबन्धेषु सैदैर्मैशापुरकादिषु। नगरीं दुर्गमां दुर्गतुल्यां चक्रुर्द्विषद्भयात्।
अथ काश्मीरिकाः प्रोचुः सैदांस्तीरान्तिकस्थितान्। नौसेतुबन्धरज्जुर्य्यद्युष्मच्छिन्नोभयेन नः।
पुरमात्रावशिष्टत्वादुत्तिष्ठध्वं कियच्चिरं। पर्य्याप्तं भुज्यते धान्यं किं कुरुध्वं पुनः पुरे।
श्रुत्वेति सैदास्तांस्तारमूचुरित्थं सखेचकैः। अन्नाभावादभुञ्जाना न चलामो भयादितः।
का जुगुप्सा तुरुष्केषु सर्व्वमांसभुजो वयं। यावत् पुंपशुगोमांसपर्य्याप्तिस्तावदास्महे।
पुनर्देहस्यतेऽस्मान् कः शक्तोरोद्धुं स्वदन्तरात्। श्रुत्वेत्युत्पुलकास्तीरे व्यसालमलिकादयः।
एकत्रमिलिताः सर्व्वे चक्रुः सम्मन्त्र्य निश्चयं। सैन्यं स्तामविभागेन विभज्य पथिभिस्त्रिभिः।
उत्तीर्य्य यामः शीर्य्यन्ति सैदाः कटकभेदतः। अन्यथैकत्र सन्नद्धा दुर्ज्जयाः सैदपत्तगाः।
एवं तत्रैव्विलिताः सर्व्वाण् जेयाभोऽल्पयत्नागमम्। अस्माकं प्रथमं सर्व्वे न विलम्बोऽधुनोचितः।
श्रुत्वेति मद्रधंयुक्ता जोनराजानकादयः। स्वायुधा नोजयो वेति युद्धसम्बद्धतां दधुः।
अथैकं मतमाश्रित्य स्तामस्थाः सैन्यनायकाः। पुराणमठकस्नानात्तीर्त्वा पर्व्वतमासदन्।
प्रोलभट्टादयो हसवादिकाख्यप्रदेशतः। नौभिस्तीर्णाएतो साहाः सोलोकाम् सभटान् व्यधुः।

दृष्ट्वा धैर्य्यं द्विजस्यापि रणश्रमरतः चणात्। गक्कादयोभटाः सर्व्वे शशंसुर्वीरमानिनः।
अन्योन्यप्रहृतिर्माभूदिति काश्मीरिकाभटाः। पचशाखान्यधुर्मूर्ध्नि हर्त्तुं निजपरभ्रमं।
सैफडारादिवीरेषु शक्तयः करगा बभुः। निर्गतास्तान् रिपून् हन्तुं मूर्त्तिमत्यद्द्वान्तरात्।
तानुत्तीर्णान्समाकर्ण्य सैदाशङ्कितमानसाः। हाशिमं व्यसृजंस्तूर्णं शागजयोद्धतमानसं।
सम्प्राप्तोऽभिवनायुर्यमठन्तीराध्वना व्रजन्। गिरिशृङ्गगतैर्दृष्टस्तैः शिलाभिरवार्य्यत।
तच्छिलावर्षणत्रस्तस्तुरङ्गात्पतितः चितौ। पदातिः स चलन् छक्काभिस्तीर्णोरणसङ्कटात्।
तदीयं तुरगं बद्धखड्गं सन्नाहभूषितं। काश्मीरिकाः करगतं मूर्त्तं जयमिवासदन्।
तं पराभूतमालोक्य तद्युद्धार्थं भटान्वितान्। सैदाः पिरुजखानादीन् रात्रावेव व्यसर्जयन्।
दुग्धाश्रमागतामेथाभोकिराधाय तत्क्षणात्। वर्षाघादत्र गर्ज्जन्तः आपुः पूपामठान्तिकं।
तावन्मद्रप्रतीहारडामराद्यामहाभटाः। सन्नद्धाः सुमनोवाटप्रदेशान्तं समासदन्।
सैदखानादयः सैदहोसुनादिसमन्विताः। सैदानां सुभटाश्चान्ये प्रापुस्तत्रैव ते प्रगे।
करवालाः स्फुरज्ज्वाला बभुः श्यामलकान्तयः। भूपीडनादिव व्यालाः पातालविवरोद्गताः।
अथोदतिष्ठत्तुमुलः समरः सैन्ययोर्द्वयोः। सखड्गफलकचुद्रमद्रव्यूहसुदुस्सहः।
भोवीरास्समयेऽत्र युध्यत मुदा मा यात पश्चादमी जेतारो यदि तद्धरन्ति सकलं सैदाः क्रुधा निर्घृणाः।
प्राप्तश्चेद्विजयः सुखं स्वविभवात् स्वर्गोऽपि तच्चेन्मृता युद्धादाविति मद्रपः सपरशुः काश्मीरिकानब्रवीत्।
पूर्व्वं पिरुजखानोऽग्रे निर्ययौ रणगर्व्वितः। तं पिरुजप्रतीहारो रामोराममिवाभ्यगात्।
अनभिज्ञतया युद्धे स्फुरन्तं वीक्ष्य तं द्रुतं। स्वभटान् प्रेरयन्मद्रास्तत्तुरङ्गखुरच्छिदे।
खड्गकृत्तखुराश्वोद्यतस्तुतिनष्टरणक्रियं। गक्काद्याः प्राहरन्सर्व्वे शक्त्या शक्तिसमन्वितं।
तद्भृत्याः शाहिभङ्गीया भ्रमराइव सारवाः। ददंशुः कटकं क्रुद्धाः स्फुरन्तः खड्गकण्टकैः।
पतितं सम्मुखं दृष्ट्वा तं काश्मीराररणाङ्गने। जयोऽद्य वर्त्ततेऽस्माकमित्युक्तोत्साहमादधुः।
व्याहन्यमानाः काश्मीरैः भटैर्मद्रसमन्वितैः। भृत्यास्ते शाहिभङ्गीयाः स्थैर्यं सलोचितं दधुः।
एहि तिष्ठात्र युध्यस्व क्व गच्छस्यधुना मम। इत्यन्योन्यं भटास्तत्रातर्जयन् रणगर्ज्जितैः।
काश्मीरपृष्ठगः सूर्य्यः खड्गान्तःप्रतिबिम्बितः। जयोऽद्य युष्मास्वित्येव वक्तुं व्योम्नोऽवतीर्णवान्।
अहम्पूर्व्विकया सर्व्वे ते वीरभ्रमरास्तदा। रणोद्याने स्फुटश्चेर्यशःकुसुमलम्पटाः।
तद्रणाङ्गनरङ्गान्तःसङ्गतास्ते भटानटाः। लग्नदङ्गविभङ्गाढ्या नाट्यभङ्गिमदर्शयन्।
व्यहाङ्गिराद्यास्तद्भृत्याः प्रविष्टाः सम्मुखे रणे। विधाय युद्धं सन्नद्धावीरवृत्त्या विचक्रिरे।
ववर्ष शरधाराभिः ससैन्यकटकाम्बुदः। स्फुरच्छस्ततडिज्ज्योतिर्युक्तोगम्भीरगर्जितः।
सैदेषु भाकरस्तत्र सम्मुखस्थविभाकरः। शौर्य्यशोभाकरः साPदयो भाःकरवालभृत्।
तङ्गच्चुङ्गतुरङ्गस्थोरणरङ्गान्तरे स्फुरन्। सोऽङ्गहारसमासङ्गोनाट्यभङ्गिमदर्शयत्।
प्रहारविचतं सर्व्वे मिलितापि रणान्तरे। शेकुस्त्राहिताश्वस्थं चिरात् पातयितुं चितौ।

द्विनान् हत्वा भटान्वीरो वीचितः श्लाघ्यविक्रमः । अभजद्वीरशय्यां स रक्तसन्दोत्तरच्छदां ।
येषां प्राणपरित्यागे निर्णयं बध्नतामपि । रणयोग्येचणोपेचा नास्ति किन्तैः पशूपमैः । २८५
सैदहोसनमुख्याश्च ये काश्मीराः सैदपचगाः । भास्करादीन् हताम् दृष्ट्वा रणं त्यक्त्वा पलायिताः ।
ततः काश्मीरसेनान्या वात्ययेव तटद्रुमाः । भग्नास्तन्नीडनिःसृता मृत्याः शावाइवाहताः ।
न खड्गी न हयारोही न चापी न च शक्तिमान् । व्याहृत्य मेचितुं कश्चिन्नाशकद्विद्रुताम् बलात् ।
हठलुण्ठितविध्वस्तास्समस्तास्ते विरोधिनः । दृष्टारूढानपि घ्नन्तः प्रापुस्ते नगरान्तरं ।
आसमुद्रमठात्पूर्व्वाधिष्ठानान्तं निरम्बराः । मार्गेष्विभ्मनगर्ड्डोघाद्वाससन्निहिताः शवाः । २९०
केचित् कुल्यान्तरे मग्ना भग्नाः केऽपि रणान्तरे । केचित् प्रमुषितानग्नाभयोद्दिशादिशोऽचलन् ।
तद्वीरावयवैः कृत्तैः पूरिता विपुलैर्मही । तद्ग्रासार्थं प्रवृत्तस्य मृत्योरिव महानसः ।
ये सुन्दराविपुलभोगपुरन्दराभास्तेहनेरेशविभवप्रथितप्रपञ्चाः ।
नग्नान् विलोक्य भुवि तान् धृतदुष्टगन्धान् कस्यापि शाम्यति न देहभवोऽभिमानः ।
वरं मरणमेवास्तु रणे स्वर्गसुखप्रदं । न सहेऽद्यतनस्वामिवृत्तियाञ्चाकदर्थनाः ।
इत्युक्त्वा प्रविशन् युद्धे धीराश्वस्थोऽप्यकातरः । हर्मभमेरः शस्त्रेण स श्लाघ्यमरणोऽभवत् । २९५
अन्यान् प्रचलितान् दृष्ट्वापीचिताशाशवैरिणः । पलायनेच्छा नैवाभूद्युयुत्सोर्यस्य मानसे ।
छिन्नाङ्गुलिकरोऽप्यश्वमारुह्य स्वधभान्वितः । अकरोत् चणमात्रं यः शस्त्रप्रहरणं रणे ।
स्वामस्थितः पुरस्तात्ते स राजानकहस्सनः । हतस्तेराज्ञमेराद्यैर्मारीकुल्यातटान्तगः ।
प्रच्छिन्नाङ्गुलिहस्तेन सममस्य शिरोभटैः । नीत्वा न्यदर्शि हर्षार्थं मार्गेशादिसभान्तरे ।
किमाकारनिकारेण कुर्व्वन्त्वस्यान्यसत्क्रियां । इत्युक्त्वासौ स मार्गेशः शवमुक्तिमकारयत् । ३००
योऽभूच्चिरं नृपगृहेऽखिलमन्त्रिवर्य्योधूर्य्यः पदेषु विभवोचितदानमानः ।
शोच्यां दशामितरवत् स गतः किलान्ते धिग्वासनां भविषु शाम्यति या न भोगैः ।
स चेत्प्राप्तखलीकारस्तिष्ठेत् स सदने शमी । सर्व्वामन्त्रिगणस्तस्य भवेत्तादृपरोन किं ।
पुनर्विभवलोभेन सैदपचं समाश्रयन् । आगामिकम्पनेशाधिकारितां प्रार्थयन्निजां ।
अज्ञातदैववृत्तान्तोयथै लोकेषु हास्यतां । अथवा नाशकाले स्याद्बुद्धिः कुपथगामिनी ।
कुर्व्वन्ति ये परशरीरनिकारमाजौ दर्पान्धलोचनयुगाः स्वविचारवाह्याः । ३०५
ते प्राप्नुवन्ति वधमाशु तथा यथामी लोकाम्वदन्ति नरकोचितएव मर्त्याः ।
धिग्धिग्घभतखानन्तं वीरंमन्योऽपि येरणात् । निर्गत्य सभयः प्राप्तः फखुराविषयान्तरं ।
त्यक्तोत्तुङ्गतुरङ्गः स निःशस्त्रिर्मृतकोज्झितः । तत्र प्राकृतवेशेन जुगोप स्वं भयादटन् ।
कुद्दुर्दीवादमार्गेशवधात् मार्गपतेर्भटैः । स चौरइव वाच्यन्तहेतोऽप्यात्तशिरोऽभवत् ।
छित्त्वात्तमाङ्गन्तस्याशु निन्युर्मन्युनिवृत्तये । मृतमार्गेशपुत्तस्य शवाराद्रिकतां भटाः ।
स चेत् पलायितः सैदशिविरं प्राप्नुयान्निशि । तदन्तर्ज्जीवरचा स्यात् सुबुद्धिः पापिनां कुतः । ३१०

तैर्भृत्यैर्लुण्ठितादेशो गोवधोऽथ पुरे कृतः। जाने भृत्यापराधेन प्राप्तास्ते तादृशीं दशां।
दौहित्रोऽपि महीभर्त्तुर्ज्जातो वीरकुलादपि। तत्पापेनाभवत्तस्य चित्तं वीररसोज्झितं।
विग्राराजसुताः सैदाः काश्मीरा अपरेऽपि ये। सहस्रसङ्ख्याः समरे तद्दिने प्रलयं ययुः।
निहतानीकसुभटसमूहान्तरलक्षितान्। भूमिदाहाय निष्क्रष्टुं नाभूत् कस्यापि पौरुषं।
ये सर्व्वसन्नाः पीनाङ्गा भोगैर्मण्डलवर्द्धिताः। यातार्धभीत्यदुर्गन्धास्ते श्ववायसभोज्यतां। ११५
रत्नाककर्त्तरीशक्तिमुद्गरद्रुघनादिभिः। शाल्मलिद्रुमवत् पुष्पैर्बभुर्युद्धगताभटाः।
स्मृत्वा रुद्रविहाराग्निदाहं सैदकृतं क्रुधा। अलाभपुरदाहाय मार्गपोऽग्निमदापयत्।
ज्वालाजालकरालोऽसावग्निर्व्विश्वासप्रदारुणः। अलाभदीननगरं दग्धारण्यमिवाकरोत्।
श्रीमत्सैदहमादानखानगाहोदितानलः। राजप्रजापचारोत्यतत्क्रोधाग्निरिवाद्युतत्।
हतेषु भाकराद्येषु पलाय्यान्येषु यात्स्वपि। विदधुर्न्नगरे लुण्ठं तद्भृत्याः श्वपचादयः। १२०
आसन् जन्मदरिद्रा ये ते महाढ्यत्वमाययुः। सदैवाढ्यादरिद्रत्वमुत्पिञ्जापन्नते तदा।
केचिच्छ्वान्विचिन्वन्तो यत्र कुत्रापि तिष्ठतः। भीतिं प्रापैस्तदीयार्थैर्ययुः कापालिका इव।
विरुद्धसञ्चयापूर्णगृहलुण्ठिविधायिनां। अभूत् परस्परं युद्धं समांसास्थि शुनामिव।
आदावेकेन यन्नीतं तस्मादन्येन तद्धृतं। तस्मादप्यपरेणेत्थं मात्स्यान्यायस्तवोत्थितः।
द्विधा जयप्रवाहोयस्तदाहिन्योरभूत् पुरा। एकपार्श्वागमात् सोऽत्र शाख्युन्मूलनमातनोत्। १२५
आढ्यान् द्विजवणिक्प्रायान् पौरान्नित्यसुखार्ज्जितान्। मुष्णन्तस्तङ्कटाश्चक्रुर्द्दरिद्रान् दुःखभागिनः।
दारुणोश्मचयात्तत्तदस्तुनाम्नाचितान्यपि। पौराणां समदह्यन्त सदनानि मनांसि च।
नगरान्तः कुलीनानां पुण्याः कन्याश्च योषितः। विटाः केऽप्यधमाश्चक्रुर्हठसम्भोगदूषिताः।
व्यधायि यत्र निर्म्माणं कल्पान्तस्थिरतामया। कोटिकोटिधनं दत्वा दग्धं सद्मसमादगात्।
आसदन् केऽपि केऽप्युच्चैरनदन् केऽप्यलुण्ठयन्। दस्यवो दक्षिणे पारे चौरा इव जयोद्धताः। १३०
न शोधुचषकोऽप्यास्त येषामुत्सवतर्पणे। सहस्रसङ्ख्याः कुम्भानामभोवन्नगराहृताः।
केचिद्बन्धुवियोगार्त्ताः केचित् सञ्चयवञ्चिताः। विरुद्धलक्षताक्षेपाजितरुद्धभुवः परे।
बहवो दुःखितास्तैरः शतैकीयोऽभवत् सुखी। तत्तद्रणविपन्नैस्च यतैः प्रेतैः स्ववेश्मनि।
उच्चावचैर्जनैः सार्द्धं सहस्रद्वितयी मृता।
इत्थं षष्टितमे वर्षे श्रावणप्रतिपद्दिने। एकान्नविजयार्त्तिर्या तत्तच्छोकचयोऽभवत्।
पूर्व्वमङ्कुरितः सैदवधात् पल्लवितः क्रमात्। परस्परं वैरतरुस्तद्दिने फलितोऽभवत्। १३५
पौराणां वीरवर्गः प्रतिदिनमहरत् सञ्चयं वञ्चयित्वा दुःस्थावस्थः समस्तः कृषिफलहृतिभागास्त वास्तव्यलोकः।
उच्छेदस्याट्टवाटावनिसफलतरुच्छिन्नभिन्नार्थं दुरन्तः सैदैर्वधात् समुत्थः प्रवरवरपुरोपप्लवोऽभूत् समन्तात्।
अत्रान्तरे वधं श्रुत्वा सैदाः काश्मीरिकैर्ज्जिताः। आलिखानमुखास्तस्थुर्दासमात्रावशेषिणः।
दिनान्निहत्य नगरे निवृत्तः सैन्यभावतः। सैयामहम्मदः प्रापत्तावत्साग्निविरान्तरं।

भाकरादीन् हतान् श्रुत्वा सैदाभीताश्रपि व्यधुः । द्विवान्निहत्य नगरे पुनर्युद्धाय निश्चयं ।
पश्चात् प्रतीर्य्य मार्गेशोहन्यात्रस्तद्रणेऽस्त्विह । इत्युक्त्वा ताजभट्टस्तान्निन्ये त्वाशविश्वचतां । ५००
अस्मिन्नवसरे पारादागतोयुक्तिपूर्व्वकं । सैदानादाय रावन्नः स्वालयन्तान्व्यसर्ज्जयत् ।
कृत्वा वालनृपे मन्त्रं सैदाभ्रपटलो ज्झितं । पौरानानन्दयामासुश्चान्तिणोमस्तोयथा ।
दुर्य्योधनैकशरणाः कृतशकुयोगाथे धर्म्मजातिविरथाः कविदत्तकर्णाः ।
अन्यायवृत्तिधृतराष्ट्रकृतावमादास्ते कौरवाइव रणे न जयं लभन्ते ।
राजधानीं समानीय नवां पद्मपुरान्तरात् । खानगाहं नवीचक्रुर्दग्धं श्रीनगरान्तरे ।
भाभसैदहमादामखानगाहोनदीतटे । पूर्णस्तत्पुण्यसम्भारस्तदाकारइवोत्थित' । ५०५
सर्व्वस्वमपहृत्याथ सैदास्ते सकुटुम्बकाः । मण्डलादालिखानाद्यानिरवास्यन्त मन्त्रिभिः ।
एकमत्यम्भमात्येषु काश्मीरेष्वविशङ्किताः । ययुः परश्चरामाद्याः स्वदेशं प्राप्तसत्क्रियाः ।
शिशौ दत्त्वा राज्यं वयमिह भजामः सुखमिति व्यधुः स्वार्थं शिष्टागलितमतयः सैदपतयः ।
हृतेष्वेवं तेषु प्रसभमभजन् मन्त्रिपदवीं परे तत्तज्जुष्टां विधिरिह वलीयान्न पुरुषः ।
मेयाहस्सनसामग्रीं नायामादिप्रमेयजां । ज्यक्षालठक्कुरोऽगृह्णात्तत्पुत्तोलहरादिकं ।
गृहीत्वा वाङ्गिलं राष्ट्रं स्वकं मार्गेशमागतः । मखूयादिप्रमेयांश्चाभजत् श्रीमान् ज्यहाङ्गिरः । ५१०
माचाश्रमादिराष्ट्रेषु स्वाम्यभूत्तैफडामरः । अन्याश्च ग्रामसामग्रीं सोदरेषु यथोचितां ।
परिहासपुराधीशोजैनराजानकोऽभवत् । सैन्याधिकारनिर्द्दैन्यस्तातव्योज्झितयन्त्रणः ।
एभ्राहिमश्च मार्गेशोद्वारपालाधिकारभाक् । चक्रे सैदादिभृत्यानां रचामचामपौरुषः ।
राज्ञोऽधिकारसामग्रीं भूमेर्द्रव्यावलीमिव । महाभूताइवामात्याः सम्भूय व्यदधुर्नवां ।
एकोमार्गपतेः पचठक्कुरोडामरोऽपरः । राजानकीयोदीप्तास्ते सर्व्वेश्रयइवाद्भुतम् । ५१५
आत्मैव निष्क्रियः साचिमात्रं वालनृपोऽभवत् । सर्व्वं प्रकृतिनिष्पन्नं राज्यतन्त्रमभूत्तदा ।
विभजन्तोभुवं सर्व्वां यथेच्छं स्वेषु केवलं । अलेखयन्नृपं पत्रे साक्षीकाराक्षरवर्जीं ।
कष्टप्रदाः प्रजानिष्टादुष्टमृत्यविचेष्टिताः । यथेष्टं समचेष्टन्त दुष्टास्तेऽरिष्टचेष्टया ।
स्वपक्षरक्षणे दक्षाः परपक्षेष्टखण्डनाः । तार्किकाइव ते तस्थुर्व्वितण्डावादर्शिक्षिताः ।
मण्डलं तापयन्ति स्म सर्व्वे तीर्णकरात्मके । कल्पान्तकाले भुवनं द्वादशार्काइवोदिताः । ५२०
आक्रन्दितोत्पादादैव भूरिभूकम्पसम्पदा । वेपमानोजनोजज्ञे प्रत्यावृत्तमुपद्रवं ।
शिशौ नृपे व्यधुः पीडां विशाक्षेतन्नियोगिनः । आमयाइव देहानां वार्द्धके शक्तिवर्ज्जिते ।
नृपतेर्यदि मत्सरात् सहाया रचयन्ति प्रबला मिथो विरोधं ।
कुपिताइव धातवः शरीरं क्षपयन्ति प्रसभं सदृद्धि राज्यं ।
ये सर्व्वकण्टकास्तीक्ष्णाः परेषां छिद्रकारिणः । करभाणामिवैतेषां ते तेऽप्याभन्नितिमिथाः ।
पैशुन्योपायनात्तैदं नयद्भिः प्रतिवासरं । चाक्रिकैः कृतसञ्चारैर्वैरं प्रौढिमनीयत । ५२५

उक्तं यन्नैव केनापि स्वबुद्ध्या परिकल्पितं। तेषां तद्भृत्यपैशुन्यं हृद्यं काव्यमिवाभवत् ।
इत्थं मन्त्रिहृदादर्शैर्वैशद्यान्योन्यविम्बिताः । तद्भृत्यपैशुनाश्यामैर्मालिन्यमभजन्त ते ।
अथ मार्गपते रुचपदवीं प्राक् क्रमागतां । नामहन्तापरे रम्यां चक्रवाङ्कादवेन्दवीं ।
इहास्माभिर्हताः सदैयक्षोत्या विद्रुतोऽप्ययं । नृपस्यास्य सभाश्रेष्ठः स्थापितः कुरुते मदं।
इत्यादि प्रत्यर्थस्तद्भृत्यवर्गान्मार्गपतिस्ततः । ताटस्थ्यं राजकार्य्येषु विरक्तः सोऽभजद्रुषा। १७०
वद्धामखाननयनोत्पाटनेन निजं वपुः । विश्रामनाशियां पात्रं जोनराजानकोऽनयत्।
मण्डलाधिपत्यानौचित्यनिग्रहानुग्रहक्रमैः। ग्रहाणामिव तेषां स क्रूरो राहुरिवाभवत्।
कुन्दानकादिदेशस्थग्राम्याणामनियन्त्रणः । लोद्रभूम्यपहारेण तद्देशेशोऽपि सोऽभवत् ।
सैदद्वैधान्तरे लब्धैः सर्व्वत्र मुषितप्रजः । तत्पदार्थैर्गृहे पूर्णां कोष्ठागारावलीं व्यधात्।
यत्कष्टेनार्जितं लोकैर्बलात्कारहृतं धृतं। स्वं ब्रह्मदेयमिति यत्परस्वं वेत्ति लुब्धधीः। १७५
सङ्गृह्य वाहिनीः सर्व्वास्तदीयाहृतजीवनैः। और्वाग्निरिव तृप्तोऽसौ न बभूव कदाचन ।
देयान्निरर्थकाचेये ग्रामे वा नगरान्तरे। नायकद्रविणं कश्चिदस्थिना तेन पीडितं।
यदि धर्म्मधिया कश्चित् प्रहत्तोदीनरक्षणे। स तन्महत्तरैराजसदस्याप खलोक्तिं।
स्वप्रमेयेषु वास्तव्यांल्लुब्धान्निरपराधिनः। अन्येऽपि पीडयामासुर्गोगादव नियोगिनः।
राजा शिशुर्गतवयावहवस्तु हायायचानिमत्सरभताश्च मिथः स्वतन्त्राः।
राज्याङ्गभङ्गमसमं नृपतेर्दिशन्तस्तत्राचिरात् समुदयन्ति न के ह्यनर्थाः । १८०
अत्रान्तरे वाह्यदेशे यात्रार्थं यौ विसर्ज्जितौ । रुद्रराजानकष्टक्कुराह्लदश्चापतुः पुरं।
तद्दर्शनापदेशेन श्रुत्वा किमपि मन्त्रिणां । नगरे नागमद्भूतैर्मार्गेशः शङ्कितो भृशं ।
ससैफडामरेणाशु गत्वा स चकितो गृहे। वैदेशिकभटाज्ञानात् साशङ्कः सोऽनयन्निशां ।
शङ्कीषु सदनाप्तेषु प्रातस्तन्मतमास्थितः। अह्लदष्टक्कुरो जोनराजानकमथावधीत्।
शस्त्रव्रणमुखोद्गच्छद्रक्तसंसिक्तमण्डपं । तद्गृहे तं शवं दृष्ट्वा न को रोमाञ्चितोऽभवत्। १८५
दत्तकल्यमयं जन्यमवधीद्गृहमागतं। दिव्यं कृत्वापि साध्वस्तं धिग्भोगाभ्यासवासनां।
मिथोऽसहिष्णवोभेदान् मन्त्रिणः प्रभविष्णवः। विनश्यन्त्यचिरेणैवं द्रोहिणेत्यपि केचन।
केऽप्यूचुः स यथा सैदानवधीन्मद्रूपैः सह । वर्षेणैकेन तत्पापात्तदवस्थापादितोऽरिभिः।
भृत्यार्थैव रक्ष्यन्ते पोषितार्थे सहस्रशः। नैकोऽपि तेभ्यस्तस्यान्ते प्राणत्राणक्षमोऽभवत्।
अर्जितं यद्यथैवाद्य तत्तथैव हृतं परैः । न तिष्ठन्ति चिरं गेहेष्वन्यायोपार्जिताः श्रियः । १९०
पापं पुण्यं वलं दाक्ष्यं परं स्वं दूषणं स्तुतिं। नो वेत्ति राजपुरुषः कदाचिद्विधुरे विधेः।
वैदेशिकभटैः किं नस्त्वाद्या सैन्याधिकारिता। इत्युक्तोऽपि स पुत्रेण नाग्रहीद्भाग्यवर्जितः ।
विपरीता मतिः पुत्रे विश्वासः परसेवके। जायते गतभाग्यानां विनाशे प्रत्युपस्थिते।
वैदेशिकभटान्सेने यत्सजातीनिवान्वहं। अन्वत्यान् शस्त्रिणो वीरान्सेने भोक्तॄन् परानिव।

स सैफडामरोवीरवरसाच्छौर्य्यशङ्कितः। भीतः समार्पिपच्छस्त्वं वीरवृत्तेर्न निश्चयः।
व्यसालठक्कुरस्तावद्राजधान्यङ्गनस्थितः। बद्धोऽन्तः स्वैर्द्वारपालैर्गतिः क्व विधुरे विधौ।
भास्वानपि प्रतिदिनं मृदुतोष्णताभिमतां तां बिभर्त्ति गगनान्तरगोऽप्यवस्थां।
नित्याकुलस्य मनुजस्य बलप्रभावे कोनिश्चयो भवति तत्र विचित्रवृत्तौ।
मसोदडामराद्यास्ते छिन्ननौसेतुबन्धनाः। प्राग्वत्ते जालन्धरगडे विदधुः सैन्यमङ्कुरं।
शृङ्गारसीर्फानिकटं ययुः शूरपुराध्वना। ठक्कुरास्तालिथाद्यास्ते ऽप्यसक्ताः स्वयमागताः।
कारागारान्तरं प्रापुः कस्य स्युः सम्पदः स्थिराः।
जेराकनामा तद्भृत्यः साहसी नगरान्तरात्। ठक्कुराश्वादतुरगान् हृत्वा राजपुरीं ययौ।
इत्थं तत्सैन्यबधतोजैनराजबधोऽधिकः। पाददाहादिवासद्योगलरोगोव्यथावहः।
यावन्नरस्त्यजति कार्य्यकृदेकचिन्तां चिन्तान्तरं सृजति तावदमुष्य धाता।
याते क्षयिष्णि शशिनः किल पूर्णिमान्तो संजायते द्युतिहरोग्रहणप्रचारः।
निष्प्रतिद्वन्द्वि निश्चिन्त्यं मार्गेशोयावदाप सः। तावच्छुश्राव सम्प्राप्तं पुत्त्रमादमखानजं।
स यथाभ्यन्तरं प्रातोयथा राज्यं गृहीतवान्। वाल्यात्प्रभृति वृत्तान्तं तत्खानस्य ब्रवीम्यहं।
पितुः श्रीजैननृपतेः प्रसये निर्गतोवहिः। श्रादमखानोविज्ञाणः प्रपेदे मद्रमण्डलं।
भावीश्वरांशतैश्वर्य्यप्राप्तिसूचकपर्व्वणि। शिवराज्यन्तरे तस्य तत्रस्थस्य सुतोऽजनि।
जनकेऽस्य दिवं याते तुरुष्कसमरान्तरे। मातामहगृहे चन्द्रोवर्द्धधेऽम्बुनिधाविव।
काले तात्तारखानेन रचितः स गतः स्वयं। जालन्धरमहीपीठे निनाय कतिचित् समाः।
व्यर्द्धागिरोऽस्य मार्गेशः सेदभीत्या गतोवहिः। सोपधिं व्यसृजल्लेखं धर्त्तुं पैतामहं पदं।
तात्तारखानप्रसये ततः स्थानमिमं पुनः। सुतोहस्सनखानोऽस्य कञ्चित्कालमपालयत्।
तुरुष्कान् वञ्चयित्वाथ विहितोत्साहसाहसः। खानोऽमितपरीवारः प्रापद्धृहणमण्डलं।
इतः काश्मीरिकादूतामार्गेशेन विसर्जिताः। शृङ्गारसीहेनानीतस्तावद्राजपुरीम्प्रति।
ततोराजपुरीनाथोमार्गेशदेपनिश्चितः। फतीहखानमानिन्ये स्वान्तिकं स्वाश्रये च्छया।
जैनराजानकवधात् काश्मीरेभ्योविनिर्गतैः। डामरैरधराजानठक्कुरदौलतादिभिः।
तत्रस्थैः शिश्रिये खानस्तरुर्मधुकरैरिव। प्रयां निन्ये यथा पूर्व्वं कुप्पेदेवात्मजोऽभवत्।
थैनसम्बन्धबद्धोऽपि मार्गरत्नाधिकारभाक्। मसोदनायकः सोऽपि खानपक्षं समाश्रयत्।
दौनोग्राम्यजनोदुष्टवङ्गनायकतार्दितः। तदागमनवार्त्तां तौ चते चारमिवाविदत्।
सापराधर्षिकन्यायप्रेष्यवद्वद्धवेदकाः। चौराविटादरिद्राद्य तत्पुः खानवार्त्तया।
ग्रामे वा नगरे वापि त्यक्त्वा गृहकुटुम्बकं। मद्भाग्यो राजविभवे न कः प्राप तदन्तिकं।
तांस्तान् देशादिनिर्य्यातान् खानोऽग्रहीत् समृद्धिमान्। श्रेच्छलब्धप्रतिष्ठः स राज्ञः प्रत्यभियोगितां।
पौत्रश्रीजैननृपतर्य्योग्योऽयमिति सर्व्वतः। त्यक्त्वान्यान् सर्व्वराष्ट्रेभ्यस्तमेवाशिश्रियज्जनः।

तदार्त्ताश्रवणात्तुष्टाश्चौराद्यास्छन्नमास्थिताः । तत्कालमुत्प्लवन्ति स्म मत्स्या इव तडागगाः ।
न मम महती सेनैकोऽरिर्निर्जितोऽल्पपरो महान् चिन्तिरतिबलैरुद्धा भिन्नाः परेश्वरसेवकाः ।
स वरतुरगोऽस्वस्थः कोशे न चाधिकृतोहितस्तदमिव घुणास्तास्ताश्चिन्ताः स्तुदन्ति विभुं न कं ।
तुष्टोऽप्यहाङ्गिरस्तावत्तत्प्राप्त्यै प्रेषितोपधिः । तावत्तन्मतगं ज्ञात्वा सचिन्तः समपद्यत ।
अहितान्मूलनोद्भूतदेशैकविभवाश्रितः । सुखेच्छुः प्रत्युत प्रापद्दुःखमुद्भूतविस्रवः ।
प्रवर्द्धमानया नित्यं खानागमनवार्त्तया । वेपमानोऽभवल्लोकोवात्ययेव वनावलिः ।
चाक्रिकाश्चतुराः खानमन्त्रिणोऽथ जिगीषवः । इत्थं लेखाङ्कितं दूतं व्यसृजन् मार्गपं प्रति ।
भोभोमार्गपते गर्व्वसर्व्वखर्व्वितविक्रमः । कश्मीरान्तः सुपर्व्वेव भवांश्चर्व्वितसद्यशाः ।
सोऽयं खानस्त्वया नीतो लेखैस्तैरुष्कदेशतः । उपेक्ष्यते कुलस्वामी कथं मार्गपतेऽधुना ।
स्वयं कृतं कथं कार्य्यं पश्चात्तापाय जायते । शिशौ राज्यं परित्याज्य भुज्यते मण्डलं परैः ।
व्यवहारोचितः शुद्धः सोऽयं किं तिष्ठते बहिः । अथवा पितृभागश्चेत् प्रयच्छस्यस्य मण्डलात् ।
बहिरेवास्त्वयं राजाप्ययमस्त्वन्तरे स्थितः । अथ किं बहुनोक्तेन मान्योयदि न तेऽस्त्वयं ।
रणोभयबलवधात्पापं ते परिणंस्यति । श्रुत्वेति लेखं मार्गेशः खानदूतोपदर्शितं ।
प्रत्युत्तरमयं पत्रं तस्मै दत्वाब्रवीदिति । भोभोमण्डलगोप्तारो भोक्तारो नृपसम्पदां ।
सर्व्वथा हितकर्त्तारः पुराणोक्तं विचार्य्यतां । कश्मीरा पार्व्वती तत्र राजा ज्ञेयः शिवांशजः ।
नावज्ञेयः स दुष्टोऽपि विदुषा भूतिमिच्छता । देशेऽस्मिंस्तपसा राज्यं प्राप्यते न पराक्रमैः ।
अन्ययादमखानाद्यैः किं नाप्तं स्वकर्मोचितं । अन्ययाप्येतत्र चिरादनौचित्यचितं फलं ।
क्रमेण येनायातोऽसौ तं त्यक्त्वा तद्दलार्थिनः । सति राज्यस्य विघ्नाय प्रवेशो दीयते कथं ।
न मयायं धृतो राज्ये बालोऽप्यन्याभिषेचितः । कः शक्तोत्यधुना हन्तुं मयि सन्निहिते स्थिते ।
खानोऽयं सर्व्वथा पूज्यो यद्यस्मन्मतमिच्छति । अग्रेसरारुणः सूर्य्यः पूज्यते ह्युदयोन्मुखः ।
श्रियः कृतघ्नतावाप्ता न सुखाय चिरं नृणां । भोगा रोगाय देहानामपथ्याशनसम्भृताः ।
किं दान्यत् सैदहसस्तोयदह्राजा विमोचितः । तदन्तकूलगः सोऽयं प्राप्यते तद्विचेर्म्मतं ।
इति लेखं विसृज्यैत्पक्षपातात् क्रुधान्वितः । रथ्याधिकारं जग्राह मसोदन्य ज्यहाङ्गिरः ।
वह्रामनायकादीनां दत्वा तन्मार्गरक्षणं । शृङ्गाररराजानकादीन् स्थामार्थं व्यसृजद्द्रुतं ।
अथ खानं पुरस्कृत्य नायकोऽसुखदायकः । क्रुद्धः पथोपहरणात् प्रापच्छूरपुरान्तरं ।
तद्भृत्याः खशडोम्बाद्यास्तद्विसृष्टाः पदे पदे । देशे मडवराज्यान्तश्चक्रुरुत्पिञ्जमञ्जसा ।
एकतो नृपतेः सेना कष्टा खानस्य चान्यतः । देशाद्दयीयमस्येव लुञ्चिता सर्व्वभक्षिका ।
प्राक् सैदविसरात् खानस्तिस्र सोऽधिकोऽभवत् । पाददाहादिवाश्च्योगवरोगो व्ययावहः ।
तस्कराक्रान्तपथिकोबलवन्निहताबलः । अराजकद्रयानीशो देशः कष्टां दशामगात् ।
जग्मुर्दक्षिणपारादीन् प्रमेयांस्तद्दिगाश्रिताः । रुद्दोला गोधनं सर्व्वं त्यक्त्वा स्वदेशतीर्भयात् ।

खेरीं चार्द्धवनं राष्ट्रं भ्रष्टमग्निशिखेव सा। अतापयन्महोशाख्या प्रविष्टा कटकद्वयी।
राजसैन्यं समालोच्य प्रसुप्तं चारचक्षुषा। एकदा जैरकाद्यास्ते स्कास्कन्दं शिविरे ददुः।
प्रजागरचरन्यासशस्त्राभ्यासविवर्ज्जिताः सर्व्वे पशूपमास्त्रासाद्दिदधुः शिविरान्तरात्।
सेनापतेर्न्निजाः केऽपि युद्धोद्दा भेदिताः परैः। चक्रुस्तत्कटकं त्यक्त्वा द्रोहं वैरिसमाश्रयात्। ४५५
राज्यं नश्यति क्षयति प्रतिदिनं वाह्याखशालीनका लोकः क्लिश्यति लुण्ठिदाह्वकरणैश्चौरः स्वकं पश्यति।
सेना भ्रश्यति धीरवीरसहिताप्यन्विष्यति स्वं रिपुः काश्मीरप्रभविष्णुषु प्रभवति दैवात् स्वभेदो यदा।
द्रोग्धृंस्तानवलोक्यैव सस्तां ज्ञात्वा स्ववाहिनीं। सेनानीश्शङ्कितः सैन्यात्पलायनपरोऽभवत्।
हतेऽथ विद्रुते तस्मिन् पश्चादेत्य महाभटैः। सर्व्वस्त्राप्या जहर्षाय खानस्तत्प्रथमं जयात्।
तुरुष्कदेशाद्युद्धा खानः प्राशोनिरर्गलः। सुभागसोदस्तत्पश्चात् केनापि प्रचलन् हतः।
अथ मल्लशिलास्थाने तुष्टः खानो जयोन्मदः। स्वसैन्यसंग्रहं कुर्व्वन् जिगोषुः शिविरं व्यधात्। ४६०
विकरालान् भटान् चित्वा करालविषयावनौ। मुमुपुर्निष्करालम्भान् वास्तव्यांस्तस्य शस्त्रिणः।
अत्रान्तरे मार्गपतिर्ग्रहीत्वा बालभूपतिं। तज्जयाय बलोद्युक्तो निर्य्ययौ नगरान्तरात्।
प्राक् सैदकदनाभ्यस्तन्यस्तवस्तुविलुण्ठनाः। पुराद्दूरतमा भीताः पौराग्रामेषु न्यपक्षिपन्।
निष्कृष्टवसुभावा सा मुषितेव वराङ्गना। अभवद्राजरहिता नगरी न गरीयसी।
वैदेशिकटकाटोपकोपोत्कररटद्भटः। शुसिकोड्डारभूवाटे पाटवाच्छिविरं व्यधात्। ४६५
संस्थाप्य तत्र भूपालं त्रिधा कृत्वा स्ववाहिनीं। कल्याणपुरगं श्रुत्वा खानं योद्धुं विनिर्ययौ।
द्राभग्रामान्तसीमान्ते समासन्नोऽधिकार्त्तधीः। तस्थौ खानान्तिकं प्राप्य सखानमरुगान्तरे।
क्रमराज्यस्फुरत्प्राज्यचक्रवाटादिदुःसहं। वैदूर्य्यभट्टः पाश्चात्यां जग्राह गिरिपद्धतीं।
सपिर्व्वजप्रतीहारगक्कराजसुतादयः। चतुरङ्गोपमां लीलां चणं चक्रुः पुरोगताः।
अथैकतः स्वकाश्मीरवैदेशिकबलान्विताः। मसोद्नायकसुता योद्धुं व्यूहात्समाययुः। ४७०
फलकासिस्फुरत्पचा नदन्तोऽन्तिकमागताः। चेरुः पङ्क्त्या भटास्तत्र हंसा इव नभोन्तरे।
यावत्मद्दलोयोद्धुन्तांस्तावद्दीव्यायमागतान्। अह्लादठक्कुरव्यूहो निरोधः समपद्यत।
चेताङ्किकाभुजः केऽपि गर्जन्तो जलदा इव। स्फुरच्छस्ततडिज्ज्वालाः सोत्फाला निर्ययुर्म्मृधे।
विषमा पङ्कसङ्कीर्णा शाश्वदुर्म्मार्गदूषिता। तेषामापततां साध्या वसनेव निजाजिभूः।
वैदेशिकभटान् दृष्ट्वा नटत्खेटकपोटकान्। चटका इव जग्मुस्ते विदूरं पाटवोज्झिताः। ४७५
न संस्तम्भयितुं सेनामशक्तां पलायिनीं। अह्लादठक्कुरोद्दीर्णां सेतुभग्नां नदीमिव।
अहमहमिकायातशातघातप्रणार्दिताः। प्राणत्यागेन ते केऽपि चक्रुर्भर्त्तननिष्कृतिं।
रुधिरच्छोणितसिक्ताङ्गाः शालिचित्रगताः शवाः। यागोपहारपशुतां ययुः कार्पिकभूमिषु।
सेना यामस्य वात्येव सा नैरृतदिगागता। तत्तल्लोकक्षयं चक्रे वेगभग्नभटद्रुमा।
केऽपि काश्मीरिकास्तत्र वैदेशिकभटानले। शस्त्रज्वालासमीदीप्ते जुहुवुः शोफलं वपुः। ४८०

किं नामोदीरणैस्तेषां दृष्ट्वा व्यूहं समागतं। तिर्यग्भिरिव पातं स्वं भीत्या यैर्य्यैः पलायितुं।
प्रमेयभाजोमुख्याये दृष्टा राजसभान्तरे। अदृष्टपूर्व्वं संत्रासं तेऽप्ययास्तत्रदाययुः।
वीरवृत्त्या त्यजन् प्राणान् केवलं श्लाघ्यतामगात्।
तस्य त्रिचतुरास्त्यक्तप्राणा अनुचरा रणे। दिवं यियासोर्भोगार्थं बभूवुस्ते पुरःसराः।
हतावशिष्टान् विद्राव्य ते खानस्य महाभटाः। निवृत्ता मार्गपत्यग्रे स्वीयभ्रान्त्या समाययुः।
मसोदखानः क्वेत्येवं वदन्तो विजयोद्यताः। वीराहस्सनमीराद्याज्ञाता मार्गपतेर्भटैः। ४८५
पञ्चषास्तस्य सम्बन्धिनस्त्यास्ते नौरुजादयः। सैगारभट्टाद्याश्चान्ये च हता मार्गपतेः पुरः।
विमुखोऽभूत् कियत्कालं यः स साम्मुख्यमाययौ। वालभूभृत्प्रभावेण कश्मीरकटके विधिः।
मार्गेशस्याथवा स्तुत्यं धैर्य्यं तस्यात्र संयुगे। सन्नद्धः सबलस्तस्यौ जयस्तम्भ इवाचलः।
पैदकमात्र पश्चाचेदगमिष्यत्स तत्स्थलात्। काश्मीरकटकस्यास्य नावशिष्येत किञ्चन।
भिन्नप्रकृतिसन्धानकौशलं श्रीज्यहाद्गिरे। भिषजीव तदा दृष्टं भैषज्यं सान्निपातिके। ४९०

प्रागल्भ्यमप्रतिहतं प्रतिभानमोजस्तत्प्रयोगचतुरत्वमसंभ्रमश्च।

एतानि यस्य समयेऽप्यतिसङ्कटे स्युस्तस्यैव तं प्रति समेति रणे जयश्रीः।

खानोऽस्मत्करमासोऽत्र मिथ्याद्विध्याच्च संयुगे। रणात् प्रचालितान् दूरं युक्त्या सर्व्वानुपानयत्।
मार्गेशमधुसान्निध्ये तद्रणोपवनान्तरे। ते वीरभ्रमरायेरुः स्फुरत्पत्त्ररवोद्धताः।
अथ खानस्य शिबिरं गक्काधाजयदुर्मदाः। नीतावशिष्टां सामग्रीं हत्वा भूरीनलुण्ठयन्।
एभराद्दिममार्गेशः सभृत्यः समराग्रगः। मसोदनायकमुखान् विमुखांस्तर्जनैर्व्यधात्। ४९५
अन्ये शृङ्गारयोद्धाद्याद्दृष्ट्वा तत्सैन्यमद्भुतं। भेडावनपथात्तूर्णं विद्रुताः स्वां भुवं ययुः।
सर्व्वं राजपुरीसैन्यं रुद्दैन्यं वेष्टितं भटैः। दत्वाभयं ररक्षासौ गक्कोगणपतिर्यथा।
त्यक्त्वा सन्नाहसामग्रीं केऽप्येते विद्रुताद्रुतं। मुषितः स खशैर्ग्राम्यैः पृष्ठलग्नाः प्रशान्तयः।
वृक्षानपि वने जघुररयोऽनुलगन्त्यमी। वैदेशिकैर्हतं यत्तद्ग्रामेषु जनपीडया।
काश्मीरिकेभ्योमुषिता निक्षेपमिव ते दधुः।
शीतज्वरार्दिताः केचित् केचिच्छ्रान्ता बुभुक्षया। वैदेशिकाश्च काश्मीराः शतसंख्याः क्षयं ययुः। ५००

संरूढे कमपि निपातयत्यकाण्डे पाताहं नयति च कञ्चन प्रवृद्धिं।

सङ्कल्पाविषयविचित्रकाकतालीवाप्यैघस्तरुमिव पूरुषं विधाता।

यादृक् सुशासनः खानस्तादृशस्तस्य चेद्भटाः। भवेयुः किं न जायेत किन्तु धर्म्मानुगो जयः।
इत्थं फतहखानेऽस्मिन् प्राप्ते कश्मीरमण्डलं। एकषष्टितमे वर्षे पुरद्वच्छ्रावणान्तरे।
कटकद्वयसंयोगे कल्याणपुरसन्निधौ। अत्रत्यानाञ्च वाह्यानां तत्तल्लोकक्षयोऽभवत्॥ युगलकं॥
मैत्रचक्रशनिसंयोगं मिलापं शनिजीवयोः। सौमाब्दे तत्क्षये हेतुं देशे दैवविदो विदुः। ५०५
श्रीजैननृपतेराज्ये षड्दर्शनरताः प्रजाः। दृष्टाः स्वधर्म्मनिरता निरातङ्का निरीतयः।

तस्मिन् स्वर्गं गते राज्ञि नष्टाचारेऽत्र मण्डले। प्रजापचारालोकानां क्षयोऽभूदिति मे मतं।
तथाहि वणिजः केचित् स्वाचारं हिन्दुकोचितं। त्यक्त्वा पुरान्तरे चक्रुर्हेला गोमांसभक्षणं।
येनैव पितरोयाता येन याताः पितामहाः। तद्दर्शनेऽत्र तत्पुत्रास्त्यजन्ते मौसुलप्रियाः।
प्रत्यब्दं तिथिकार्य्याणि पुराणोक्तानि कानिचित्। विस्मृतानि दुराचाराः कथं न सुदुरापदः।
मण्डलेऽस्मिन् दुराचारचातुर्वर्ण्यविराजिते। प्रसह्य पतिताचारविपर्य्यासादितीरितं।
राजाक्रान्तः परैर्म्मिथ्यावार्त्तयेति विसूचितः। मार्गेशस्ताजभट्टादीन् हत्वा स्वशिबिरं ययौ।
पश्चाच्चेदलगिष्यत् स नष्टांस्तान् बलवर्जितान्। न किञ्चिदवशिष्येत स्वानस्य चलतः पथि।
मार्गानभिज्ञो मार्गेशः सर्व्वेऽप्युभयचेतनाः। दायाददुःस्थितिं लोके काङ्क्षन्तः स्वार्थलिप्सया।
प्रेरयंस्तद्रणाद्धन्तुं मार्गेशं चाप्यदीदरन्।
सनृप सैन्यमुत्थाप्य ततो जिष्णुर्ज्यैहाङ्गिरः। ज्यमालमहगा स्थानं ययौ स विजयोर्जितः।
किमेते मिलिताः स्वानमिति तेन विसर्जिताः। ददाह ताजभट्टः स ग्रामान् माङ्क्ष्यमादगान्।
तत्तद्दग्धगृहोच्चालधूमजालाकुलं नभः। घनकालोद्भवोद्दीप्ततडिद्भ्रोपमां दधौ।
कृतं यदा स्वदेशेषु काश्मीरैर्दिग्जयक्षणे। दाहलुण्ठनादिकं तद्दृष्टमत्रैव मण्डले।
अकिञ्चनान् जनान्ग्रामान् विग्रहे समुपागतान्। अचौरजातान् दृष्ट्वा तान् न कोऽप्याच्छादनं ददौ।
तत्रत्यास्तद्धृतं कुप्यं रूप्यं धेनूः पशूनपि। दृष्ट्वोच्छ्वासाकुलाश्चक्रुराक्रन्दमुखरा दिशः।
सर्व्वस्वहरणं यद्वत् कृतमस्मास्वहेतुकं। युष्मास्वपि तथा भूयादचिरेण विरोधिभिः।
तत्पापफलमेतेषु त्रिषु तन्मरणक्षणं। फताहसाहराज्याप्तौ दृष्टं लोकैर्व्विगर्हितं।
उत्पिञ्जोत्पादनाद्देशे श्रुत्वा स्थित्यादिदूषणं। प्रजापापादसन्धित्सुर्मार्गेशः स न्यवर्त्तत।
सनृपो नगरं प्राप्तो विधाय विजयोत्सवं। उच्चावचान् स्वानपक्षगतान् सर्व्वानदण्डयत्।
एकं स्वानाग्रगं ज्ञात्वा पिष्टं तस्य कुटुम्बकं। अबाधत न को देहे दुष्टरोगद्रवोल्बणः।
कदाचित् सुप्रीतोजनयति सुखं सार्व्वजनिकं कदाचिद्वक्रोऽक्षुः सृजति जनतामोतिचकितां।
फलत्रोचं पोषं भविषु परिहृत्या विदधतो ग्रहस्येवाकाशे गतिरिह विचित्रा बत विधेः।
कश्चित्कालं दरत्रस्तः स्वानस्त्राणविवर्जितः। ययावकिञ्चित्करतामवग्रहद्रवाम्बुदः।
अत्रान्तरे स्थितः स्वानः सभेरवगतान्तरे। अचिन्तयत् पुनर्देशप्रवेशं नायकोर्जितः।
मासद्वयमतिक्रम्य काश्मीराभिमुखस्ततः। आययौ स पुनः स्वानः सत्राणउद्भटैर्भटैः।
तस्मिन् शूरपुरं प्राप्ते संनृपोऽथ ज्यहाङ्गिरः। निर्ययौ नगरात्तूर्णं सम्पूर्णः सैन्यसम्पदा।
प्राग्वत् स गुसिकास्थाने निषण्णः शिबिरान्तरात्। गक्कराजसुतं रात्रौ सोऽग्रणीर्दिद्रुतं द्रुतं।
आरोहणक्षणे तस्य तुरङ्गस्तामसपहीम्। सत्वं स शत्रुजोऽपि नातिष्ठिपुरः क्रुधा।
गृहीतभूरिवित्तोऽपि यथैव द्रोहितामगात्। कोऽन्यस्तिष्ठति तथैव पक्षः प्रत्यागतोऽभवत्।
सुदृशे निर्गतोभूयोमार्गेशः शिबिरान्तरात्। उपाधावस्थिन्यायासुके स्वानं यत्नभेदगं।

अत्रान्तरे शूरपुराच्छेरकाद्यामहाभटाः। प्रविश्य नगरं रात्रौ बन्धनस्थानमोचयन्।
ते सर्व्वे बन्धनान्मृत्युद्वारादिव विनिर्गताः। सैफडामरमुख्यास्ते सम्प्रापुर्व्विजयेश्वरं।
ससैफडामरः पूर्व्वं बन्धने स्वप्नमैक्षत। केनाप्येतत्पदद्वन्द्वं छिन्नं शस्त्रेण तन्निशि।
वीरस्य बन्धनं ह्रास स्फूर्जत्पक्षस्य रक्षणं। सोऽभ्रशः पतितं मेने वह्नेर्वस्त्रावगूहनं।
तथापि रक्षणं वह्नेरिव वस्त्रावगूहनं। जयापीडपुराद्दुर्गाद्बन्धनं नगरे कथं।
इत्यपायोऽप्युपायस्य जातोमार्गपतेर्यतः। एभ्यादिमः समार्गशस्तावत्पश्चादिनिर्गतः।
शंपनायकमुख्यानां बहूनां कदनं व्यधात्। ठक्कुराद्यद्रजेराकप्रतीहारान्वयादयः।
इत्थं तत्साहसं चक्रुर्विहितक्षोणपद्धयः।

विपदि समनुभूय कोऽपि कष्टं भवति पदं नृपसम्पदां नितान्तं।
कनकमनलपातघातमात्रा शिरसि विभाति नृपस्य मौलिरूपं।

कारापञ्जरनिर्मुक्तः पक्षीवाक्षतपक्षतिः। पुनर्जातमिवात्मानममन्यत स डामरः।
पूर्व्वं जयपुरे दुर्गे योऽभूद्दड्डः सहोदरः। काराप्राकारमुल्लङ्घ्य रज्जुनैकोऽपि निर्गतः।
रुद्धः सुप्तः पुनर्व्वद्धो नगरे बन्धनालये। निश्चिन्तितं वधस्तत्र दिष्टैर्दिविदिनान्तरे।
एवं कष्टात्ततोमुक्तः प्राप्तः स्थानान्तिकं क्रमात्। प्रधानपुरुषाख्यातिं प्रापत्सज्जनिमध्यगः।
ससैफडामरस्तत्र यथासद्मतस्थितः॥ कुलकं॥
रामोरावणवञ्चितोयदि स्वहाम्नैवागमिष्यद्वनं सुग्रीवः स च वालिना कृतपदोनैव घटिष्यद्रुषा।
लङ्कां प्राप्य रिपून्निहत्य समरे जेताभविष्यत् कथं संयोगं सुखदुःखयोः प्रतनुते धातैव भूत्यै दयोः।
राज्यार्थी विच्युतोदेशात् स्थानीवीरास्तिसम्पदः। डामरोमार्गप. क्रुद्धः सर्व्वनाशात् पदच्युतः।
एवमन्योन्यसापेक्षं नाभविष्यत् स्वयं यदि। प्रविश्य देशे राज्याप्तिः कथमस्य भविष्यति।

राजा विभाति बहुवीरसमाश्रयेण वीरा भजन्ति च तदाश्रयणेन शोभां।
अन्योन्यसङ्गतिरभङ्गुरभङ्गिरेषां वाराङ्गनाकनकभूषणवद्विभाति।

तेन प्राप्तेन सा स्थानसभा तत्र व्यराजत। मुक्तालतेवाङ्गनाङ्गे नायकेन शुभात्मना।
अत्रान्तरे मार्गपतिश्चकितस्तत्समागमात्। सन्धित्सुर्मित्रशार्ङ्गमुखं स्थानं व्यसर्जयत्।
एधराजानकारिगडामरः केशवोबुधः। राजाश्रमेत्य सन्ध्यर्थं निन्ये राजपुरीपतिं।
तावद्भदायरावचमुखाद्राज्यास्य मार्गपः। शृङ्गारसोहं तं भेदमनयद्द्रविणार्पणैः।
नीत्वा मार्गपतेः पुत्रं सन्धित्सुः स बलद्वये। न्यवारयद्रणक्षोभं यावद्राजपुरीपतिः।
तावन्मार्गेशपुत्रन्तं रोद्धुमन्यैर्व्विनिश्चितं। नामन्यत स यत्नेन सामन्तामर्षिणोऽभवन्।

यावत् प्रजासु सनृपासु विधिर्व्विरुद्धो दायाददुःस्थितिरुपाय... याति।
देहे दुराधिनिहते भिषजां प्रयुक्त्या रोगाः कथं प्रविशन्ति कृताधिकाराः।

स्थानान्तरङ्गैरास्थिते भिन्ने राजपुरीपतौ। अकस्मादुदभूत् क्षोभ. सर्व्वसैन्यभयावहः।

गक्कमट्टङ्गारसोहाद्यास्तस्ता राजपुरीं ययुः। खानोऽपि सबलोभीतोऽयथा प्राग्वद्ययागतं। १६०
केचिज्जेराकसेराद्याः प्रापुर्मार्गेशसन्निधौ। ज्यसालटक्कुरप्रेम्ना कृतमाध्यस्थ्यमन्विदः।
एवं क्षोभेण सा सेना खानस्याङ्गतरङ्गिता। यथा सहस्रधा दीर्णा सेतुभङ्गादिवापगा।
अथ मार्गपतिः श्रुत्वा तद्वृत्तान्तमनुद्रुतः। युयुत्सया ससैन्यस्स प्रापच्छूरपुरान्तरं।
अत्र दूतमुखाच्छ्रुत्वा क्रमराज्यमुपद्रवं। शाहिभङ्गबलप्राप्त्या चिन्ता द्वैगुण्यमादधे।
निवृत्य स ततोराज्ञः प्राप्तः स्वप्पुरान्तरं। बबन्ध नौरुजे खानं युक्त्या यत्साधु तद्व्यधात्। १६५
स हि तद्दिवसे प्राप्तेऽमुष्मात् श्रीनगरं विटैः। किन्तु तत्काङ्क्षितं क्रूरं न सिद्धं पौरपुण्यतः।
सोऽपेत्य मार्गपं तत्र ढौकितं क्रमराज्यतः। पदार्थराशौ दत्वाग्निं तद्रुषा भस्मसाद्व्यधात्।

अन्यायतः प्रतिदिनं समुपार्ज्य वित्तं यद्दानभोगरहितं निहितं गुहान्तः।
तत् सम्प्रयाति कृपणेषु कृतानुतापं भूपालसादनलसाद्दरिद स्नुषाच्च।

ततस्तत्सहित. प्राप्तो नगरं स ज्यहाङ्गिरः। जयेन तावन्मात्रेण नगरे स व्यजृम्भत।
सैदान्निष्काशितान् देशात् स्वपुत्त्रबधकानपि। लेखैरानाययामास सोपयोग्यतया स तान्। १७०
तदन्तरे जन्मवाटे वसन् खानोबलोर्ज्जितः। मृगानिव हरिस्तत्र विदधे दुर्दशान् खशान्।
सप्तविंशतिसङ्ख्यान् स काश्मीरविषयान् यथा। तावतीस्सिन्धुरीस्तत्र व्यधाद्दुस्थः पराक्रमैः।
सार्द्धं मल्हानहंसैस्तत् कटकः सुभटोत्कटः। मद्रमण्डलमुल्लुण्ठ्य तुरुष्कांश्चकितान् व्यधात्।
स मद्रमण्डलं जित्वा दत्वा राजपुरीपतेः। जिष्णुश्चैत्रे पुनः प्राप तद्युतो नायकालयं।
गृहं दैवतवत् प्राप्तं खानं तमानयद्गुणैः। मसोदनायकोऽमुष्मिन्नाभवद्भक्तिखण्डितः। १७५

सागरस्त्यजति चेन्निजां स्थितिं पश्चिमोदयमुपैति चेद्रविः।
चञ्चियः शरणमागतेऽर्थिनि प्रायशश्चलति न स्वधर्मतः।

स सैन्यसङ्ग्रहं कृत्वा कृयिल्लकटकान्वितः। तस्थौ खानोगिरिशृङ्गे वैरिभङ्गविधित्सया।
रोगैरिव भटैर्ध्वस्तसमस्तगृहवस्तुभिः। वास्तव्यानां स्थितिर्दुस्था गेहे देहे यथाभवत्।
अत्रान्तरे बन्धनान्तर्गतं पृष्टकवाटिनं। भीतोव्यापादयामास जेराकं नगरेऽध्वपः।
तच्छ्रुत्वा राजलोकस्य सर्व्वएव विरागभाक्। आत्मासघातकत्वेन दुरुक्तिमुखरोऽभवत्। १८०
ज्येष्ठे मासि श्रुतानिष्टो मार्गेशः कष्टनिष्ठितः। अतिष्ठत् ससृपो मत्समिलापृष्ठेऽतिनिष्ठुरः।
दृढमार्गनिरोधेन सर्व्वोऽप्युभयवेतनः। जनोवत्सदयं गन्तुं निराशः समपद्यत।
विशां निर्व्वणं भोज्यमन्नतामत्र मण्डले। मौंगिशव्यञ्जनं नाम श्रुतं हाख्यावधं न कैः।
सार्द्धं पत्ते पैन्धवस्य कयोऽभून्नगरान्तरे। दीनारपञ्चविंशत्या दुरापं नगरैरपि।
दापहितमवर्षेऽपि कश्मीरागमनोत्सुकं। खानं श्रुत्वा मार्गपतिर्नीतिकौटिल्यमादधे। १८५
दोहिवं हाश्यखानस्य खानेमस्कन्धराभिधं। कम्पनाधिपतिं कृत्वा स्वामार्थं स व्यसर्जयत्।
मसोदनायकीयं च राष्ट्रं दत्वा स्वगश्रये। यश्वराजामकश्चापि ससैन्यं सत्यमुच्यत।

समं देशसुखेनाथ प्रालेये तनुतां गते । स्वसैन्यसहितः खानोराजपुर्य्याः समाययौ ।
प्राप्तं खानं समाकर्ण्य तं भैरवगलान्तरे । मार्गं शूरपुरे रोद्धुं मार्गेशः सनृपो ययौ ।
प्रवेशरोधः खानस्य तदूर्ध्वगलवर्त्तितः । राज्ञदेहे स्मृतस्येव देशोऽभूच्चक्रमीलितः । १८०
पशुपादिष्टमार्गेण परदच्छावणान्तरे । ततोऽगाद्गिरिमुल्लङ्घ्य खानः काचगलान्तरात् ।
ताजभट्टादिसैन्यौघो गुसिकोद्वारभूतले । क्षुब्धं वायुरिवागत्य चक्रे खानबलार्णवं ।
ध्वनिदुन्दुभिनादेन तर्जयन् परितोजनान् । खानः सकटकोभीत्या नगरं व्याकुलं कृतं ।
उड्डीयेवागतं श्रुत्वा साश्चर्य्यो मार्गपस्ततः । ससैन्यः सनृपस्तूर्णं तद्युद्धाय समाययौ ।
उड्डामरोडामरस्य शौर्य्यश्रीगरुडामरः । रणे डामरयागेऽन्तर्स्वभावुच्छ्रमरुद्रवत् । १८५
केचित् सैदभटास्तत्र युध्यन्तः सुभटैः सह । अनिवर्त्तितया याता दिव्यस्त्रीसुखभागितां ।
अश्वपातरणाघातक्षतानां तत्समागमे । शवानां राशयस्तत्र पतिताः समरान्तरे ।
न सैदयुद्धे नो खानागमप्रथमसङ्गरे । भटक्षयोऽभवद्यादृग्गुसिकोद्वारसङ्गरे ।
प्रमेयभाजोऽप्यासन् ये रणे मुख्यानिजोचितं । शौर्य्यं नादर्शयन् केचित् साक्षिभूताइव स्थिताः ।
पातनेनेव वृक्षस्य पक्षिशावाइव च्युताः । गताहताः क्षताश्चासन् यत्र तत्र शवव्रजाः । १९०
पूर्व्वापकारी यो यस्य ग्रामे वा नगरेऽभवत् । स तस्य वाधं कृतवान् दुर्ब्बलस्य बली तदा ।
ससोदनायकस्तत्र सायका युधवर्षणे । कुठाख्योविजहौ प्राणान् भावि केन विलङ्घ्यते ।
कृत्वान्यान् युद्धगान् यत्र मार्गेशोऽगात् त्वरक्षया । श्रीसैफडामरोवीरयुतस्तत्रैव सोऽभवत् ।
योगवेधः स चावाप्नदति तुष्टोभटाहतः । प्रथमं प्राहरत्तस्य मूर्ध्नि श्रीसैफडामरः ।
अलं शिरोद्वैधरस्य स च क्रूराइव ग्रहाः । मुखे भुजे कपाले च प्रन्तस्तं विवशं व्यधुः । १९५
अथ मार्गपतेः स्वर्णवर्णमङ्गलमालिकां । सचामरां डामरेशो जयश्रियमिवाहरत् ।
उपेक्षितं तं तत्रस्थैर्निजैराश्वस्तमानसं । ररक्ष केवलं भीतोजात्यश्वसमराचलन् ।
विहितारिक्षप्रसराः सचिवाः समसैकपार्श्वगताः । यत्र सुशस्त्रप्रचितामश्नन्ति नौकेव राजश्रीः ।
वैदेशिकभटैर्व्वीरैर्हि विहिते समरागमे । तावत्ते कत्यवाडाद्या निन्युः खानं यथागतं ।
खानोराजभटैर्व्वीरैः रणे मिथ्येति वार्त्तया । स सैफफडामरो युद्धात् स्वस्त्रैर्व्योन्यवर्त्तत । २००
तत्तद्राज्यसामर्थ्यो रक्षन् शूरपुराध्वना । समरोड्डामरः सैफडामरः खानमासदत् ।
इत्थं तृतीयवारं स प्रविष्टोमण्डलान्तरात् । वधं कृत्वा विनिर्गत्य खानः पर्णोत्समागतः ।
अधर्म्मबहुलः कालः सर्व्वे द्रोहपरायणाः । राजा शिशुस्तरश्चायं स्वतन्त्रं मन्त्रिमण्डलं ।
अविधेयानिशाग्रामी खानपक्षप्रतीक्षिणः । पौरानिरनुरागाश्च निष्कोशं नृपमन्दिरं ।
सत्ता नाम न वृद्धस्य सर्व्वसामर्थ्यवर्जिता । इति सञ्चिन्तयन् शस्त्राघातजातव्यथाकुलः ।
मासौ द्वौ गमयामास मार्गेशोऽपि स्ववेश्मनि । २०५

दृष्ट्वा महार्घमणिमौक्तिकविद्रुमौघान् रत्नाकरं श्रयतु सोऽपि सुलाभलोभात् ।

यस्तान महाभयकरान्मकरांस्तदीयान् वीर्य्येण वारयितुमुज्झितभीः समर्थः ।
अत्रान्तरे पुनः खानस्तुटिकाशारपर्व्वतात् । तृतीयातैर्भटैः सार्द्धं लब्धत्राणः समाययौ ।
तस्मिन्नभ्यन्तरे प्राप्ते मुदितैरिव पर्व्वतैः । तदहः पतितं दध्रे तुषारं सुमिताम्बरं ।
ग्रामान् प्रचलितान् दृष्ट्वा तद्वार्त्ताचकितस्ततः । मार्गेशोवाञ्छितं त्यक्ता सबलोयोद्धुमभ्यगात् ।
तावन्मितपरीवारो बहुरूपान्तराहतः । प्रापद्दामोदरोड्डारभूमिं डामरसंयुतः ।
सनृपोमार्गपः पश्चात्तनवायुरिवोर्जितः । सैन्यं न्यवेशयत्तत्र सातदैवतसन्निधौ ।
सव्यूहोजातयुद्धेहोलिशान्ते शैफडामरः । बभञ्ज मार्गपानीकं दामोदरदवोत्थितः ।
चित्रं हैदरशाहस्य यन्न सिद्धं त्रिधागमैः । अहो हीनबलस्यापि सिद्धमल्प विधेर्व्वशात् ।
किमन्यदल्पसैन्योऽपि खानः कश्मीरकुञ्जरान् । हतविद्रुतविध्वस्तयूथान् सिंह इव व्यधात् ।
प्राप्तवत्सोऽनिष्टमाशङ्क्य मार्गपः शैफडामरात् । अन्येषां वीक्ष्य ताटस्थ्यं प्रपेदे नगरान्तरं ।
छिन्नेषु सेतुबन्धेषु शाक्षैददैधनस्तदा । पारावारगताः पौरा दैराज्याकुलतां दधुः ।
पित्र्जप्रतिहाराद्याः प्राप्तामडवराज्यतः । नृपपक्षं परित्यज्य खानपक्षं समाश्रयन् ।
स्वभेदजर्जरं ज्ञात्वा सैन्यं दिवानिशोऽनयत् । सैदवत् स्कन्दभवने किंकर्त्तव्यतयाकुलः ।
एकदा सर्व्वसैन्येशं कृत्वा सैयामहम्मदः । नोसराजानकयुतं द्रोहं स्वामिनि तद्व्यधात् ।
यथा चित्तं तथा कायो यस्य स्यात्साहससमः । तस्य तु निरपेक्षस्य कर्त्तव्यं किं न सिध्यति ।
भागिनेयं नृपपदेऽप्युपेक्ष्य स्वार्थलुब्धधीः । द्रोग्धाभूद्यस्य तेनाभूत् सर्व्वनाशस्य कारणं
नष्टसैन्यः सदैन्योऽथ मार्गेशः शरणं भयात् । ज्यसालठक्कुरं प्रायात् खर्व्वाश्रमस्थितं हि
यथैव स विरुद्धानामकरोच्छासनादिकं । तादृशीं स दशां प्राप्द्धिक् चला राजसम्पदः

सत्रपदानुगुणधारितसत्रवारवर्णांशुकोपचितवेशविशेषभूपः ।
बद्धामभूपइव योऽभवदष्टभोगप्राप्तादशामितरवत्स धिगस्तु लक्ष्मीं ।

क नृपः क मदीयन्तत् सर्व्वस्वं क परिच्छदः । नास्मरत्तद्दिने किञ्चित् प्राप्तोमुनिगुहान्तरं ।
राजदारापहारोत्थपापभारादिवार्दितः । तद्भ्राता नाशकद्गन्तुं नावं स्त्रीसहितोऽविशत् ।

अन्ये सैन्याः सदैन्या गिरिबिलविगलद्वासराधूसराभास्तिष्ठन्तादिष्टरिष्टाहतघनविलसदृष्टिनिर्नष्टचित्ताः ।
दिष्टैर्दुष्टैर्गरिष्ठैः परिचितवसनाः पृष्ठलग्नैर्निकृष्टाः कारागारान्तराले पशव इव सलाक्ते निबद्धाविरुद्धाः ।

गर्जन्तो मुमुचुः परे जनपदान् दुष्टाः खशादस्यवस्तल्लोत्या परिहृत्य सर्व्वजनवन्मग्नानराज्ञस्त्रियः ।
मार्गेशप्रपलाद्यतादतुर्वले. पूर्व्वापकारस्मृतेस्तोऽभूद्राज्यविपर्य्ययोऽतिभयदः कल्पान्तकालोपमः ।
सर्व्वस्वालुण्ठने तस्मिन् धनिनो दुःसहे पुरे । आसन् दरिद्राः सत्य. व्याप्याद्यादारिद्र्यभागिनः ।

ये श्रुद्धंमाणुदलपुष्पफलाभिरामानघसरङ्गतरवः सरवः पिकाद्याः ।
ते शीर्णशुष्कसरसूकगुणा दिमर्त्ता किं तत्र यद्भवति कालविपर्य्ययेण ।

ते राजसभा स्थालाः छिद्यन्ति च सेवकाः । कथावशेषतां यातास्त्रिपुरन्ते स्मये

इत्थं वर्षद्वयं सप्त मासान् भूत्वा नृपासने। नृपोद्दापष्ठिवर्षे स द्याश्विने भंगमाप्तवान्।
राजा मल्लदशाहस्तु विप्रप्रस्थान्तरान्ततः। आनीय फिर्यपालेन शत्रुपचे समर्पितः।
राजधान्यङ्गने राजवासे तं मनुजैः सह। विधाय इत्तिं सम्पूर्णां ररक्षुर्डामराधिपाः।
राज्यप्राप्त्या सुखं तादृक् तस्य नासीत् सुदु:स्थितेः। यादृक् तद्भ्रंशतस्तस्य नृपमन्त्रिप्रसादतः। ८॥
सैदद्वैधवधे लुण्ठिः पुरेऽभूत् त्रिगुणा ततः। खशैः कृता दारुणास्मिन् तस्मिन् राज्यविपर्य्यये।
प्रधानवणिजः केचित् कोटिसञ्चयवर्ज्जिताः। तृणमात्राहृतैरङ्गैस्तत्तुल्ये रचितासवः।
दिनत्रयं ददामोवोमेयणं यदि जायते। इति वैदेशिकोत्कोचसापेचा मन्त्रिणोऽभवन्।
काश्मीरिकायथा लुण्ठिं वहिर्यांचागता वधुः। तथा वैदेशिकाद्यकु काले किञ्चिं न दृश्यते।

प्रतिपदभ्रमणैः सपरिश्रमा मधुकरी तनुते मधुगोलकं।
निहितधूमतया विनिवार्य्यतां तमुपलभ्य परः सुखमश्नुते। १०॥

कष्टैः षण्मासपर्य्यन्तं महद्भिस्स्थितं गृहे। श्रयत्नमपरैर्भुक्तं सर्वं तत्स्थानसंश्रितैः।
रत्नाकलणपूगान्तः चिप्तं कैरपि यद्धनं। न नीतमड्ड चिस्थानतूलिकास्तरणभ्रमात्।
सद्युम्ननिम्नकुम्भाभ्रः पविपुष्करिणीकृतैः। रचितं कैरपि द्रव्यं नीतं ताडितदर्शनात्।

सत्यं ब्रवीमि धनिकाः शृणुतास्मदुक्तं यत्सञ्चितं वसु गृहे परवञ्चनाद्यैः।
तद्भोगदानसफलं कुरुताविलम्बं नो चेद्वृथा स्मरत राज्यविपर्य्ययेऽस्मिन्।

भग्नभाण्डकरण्डाद्यैः प्रसार्य्य परितो गृहे। मुषिताः स्म इति व्याजात् खशाः कैरपि वञ्चिताः। ११॥
जलान्तरशवागारान् शून्यानापूर्य्य वस्तुभि.। ररक्षुर्नागराः केऽपि शून्यीकृतगृहाधनं।
तैर्निवर्त्तितगर्त्तान्तःचिप्तैः पौरधनैर्धनै.। तस्मिन् काले प्रतिपदं सत्यार्थाभूद्वसुन्धरा।
मार्गरोधाहतैः सर्व्वैः चैपणीयास्ववर्णिभिः। राजामन्त्रार्टिकोयैस्तैस्तत्काले साहसं कृतं।
कर्म्मस्थाननिधानसर्पसदृशप्रोत्सारणाडिण्डिमोद्दिष्टप्राक्तनसेवकाम्बुजघटाहेमन्तकालोदयः।
भूपश्रामधुगोलकस्य सरघासड्ड तधूमोद्गमः सोऽभूद्राज्यविपर्य्ययो नवसमोद्यानद्रुमालीमधुः।
किं स्वाचारविपर्य्ययात् किमु धनस्यान्यायतोपार्जनात् किं वा द्रोहितया सतां किमथवा सद्दर्णषाड्ग्यतः।
निःसामर्थ्यतया यथा शिशुविभोर्द्वेषेण वा मन्त्रिणां राज्ये सुस्सत्रभूपतेरिव वभूवायं प्रजोपद्रव.। १२॥
येनादौ सैदवैरे रणरसिकतया मोचिता बन्धनस्थाश्शिहाबदेशाधिकारोत्यधित जितरिपुः स्फूर्जितश्च प्रयातः।
प्राज्यं राज्यं व्यधात् फतिहनरपतेर्नाशयिलारिचक्रं जीयाच्छ्रीडामरेन्द्रोवरसचिवपतिः सैफमेश्र एकः।

इति श्रीजैनराजतरङ्गिण्यां पण्डितश्रीवरविरचितायां फतिहशाहराज्यप्राप्तिर्नाम चतुर्थस्तरङ्गः॥

॥ समाप्तेयं श्रीवरराजतरङ्गिणी॥

## ॥ चतुर्थी राजतरङ्गिणी ॥



नमश्चराचराकारधारिणे चन्द्रमौलये । शिवाय स्वच्छस्वच्छन्दपरमात्मस्वरूपिणे ।
विलोक्य मिश्रं शिवयोः स्वरूपं सर्पाधिराजोमिलितोऽतिभक्त्या ।
गौर्य्याभुजावर्त्तनकङ्कणेन यत्रावतात्दो गिरिजाशिवाङ्कः ।
विरत मोहान्धतमो यदनुग्रहरोचिषा शुकस्यापि । वन्दे तं गुरुतरणिं बुद्धाश्रयहृत्सरोजदीप्तिकरं ।
वन्द्य तर्कवितर्ककौशलमतेर्वाक्यं प्रमाणान्वितं यत्काव्या नृपकीर्त्तिवस्तुरचना देदीप्यते सर्व्वतः ।
श्लोकैः सत्पदशोभनैरविरलानुप्रासयुक्तैः शुभैर्नानार्थानुगतैर्मतैः सुकविना लालित्यभावान्वितैः ।
श्रीकह्लणद्विजप्रोक्तश्रीमद्राजतरङ्गिणीं । आलोक्योद्यमिताभ्यां स्वं वपुः कर्त्तुमखण्डितं । १
श्रीजोनराजविबुधश्रीवराभ्यां मनोरमं । कृतं द्वाषष्टिवर्षान्तं ग्रन्थं राजावलिद्वयं ।
गङ्गाभगवतीतीर्थस्थाने धन्यस्वभूषितः । कविः श्रीप्राज्यभट्टाख्यः समग्रगुणभूषितः ।
राजावलिपताकां स्वां राज्ये फतिहभूपतेः । एकोननवतिं यावल्लौकीचक्रे ततःपरं ।
अथ देशादिदोषेण दुरन्तभ्रमभीतितः । नायदीद्राजवृत्तान्तस्थैवालं मानसे कविः ।
तदाप्रभृति तद्वृत्तवर्णनं क्रियते मया । बुद्धाश्रयात्मजेनात्र शुकाख्येनात्मचापलात् । १०
पूर्व्वेषां राजसभ्यानां निशम्य पृथुसम्पदां । तद्भारश्रान्तयेवाहं न कुर्व्वे कविताञ्छया ।
क्व पूर्व्वकविवक्तृत्वं क्वेदं मन्दधियोमम । वर्णमात्रेण रीत्यंशः स्वर्णखण्डायते कथं ।
राजोदन्तमरं सन्तः श्रुत्वा योजनपूर्व्वकं । अनुगृह्णन्तु मद्वाक्यसुधावृष्टिनिवर्हणैः ।
...रेषु महाराजजैनशाहकुलाङ्कुरः । श्रीमान् फताहभूपालः सम्राडस्मभवन्महीं ।
तस्मिन् शास... ...णीं प्रजाः सर्व्वसुखावहाः । आसन् सुधर्म्मनिरता दयादाक्षिण्यभूषिताः । १५
हतोद्भूतमदव्यपमेव्यमतः स... ... । सोमराजानकश्चन्द्रान्वयोऽभूत्तस्य भूपतेः ।

सामान्येन महीभर्त्ता पुत्रोमल्लेकज्यङ्गिरः। पैत्रिकैर्ग्रामराष्ट्राद्यैर्मानेनास्य नियोजितः।
ब्राह्मणाः स्वक्रियाचारहीनाश्चासंस्तदा भुवं। यदेषां सोमचन्द्रोऽभूत् क्रियालोपप्रवर्त्तकः।
सर्व्वविज्ञानविन्मेरशेषदराकदेशजः। शाहकाषिमस्य क्षात्रोऽस्य ह्युपदेशं विना गुरुः।
सोमचन्द्रस्तदादेशाद्धृत्वा देवालयस्थितान्। भूमिं द्विजेभ्योनीत्वा तत्कृत्यांस्तृप्तान् व्यधात्तथा।
सुफाख्यैर्म्मेरशेषस्य छिन्नादम्भनवाञ्छया। बोधखानदति व्याजादत्युच्चास्तरवोऽनुगैः।
सन्निधानं तदात्याजि दैवतैः प्रतिमासु हि। कथं विधत्ते मनुजस्तत्स्थानेषु विलुण्ठनं।
दुराचारोऽस्य साचारोभट्टोभुट्टोनटोविटः। इत्येवमासीत् तत्काले सभासाम्यं कलेर्बलात्।
सोमचन्द्रात्मजस्याथ दानमानौ च गौरवं। श्रर्षहिण्णुभिरस्येशपुत्रैरब्दालकादिभिः।
विभिद्य शेमराजानं प्रतीहारादिचक्रिणः। अवधूय स्वजनकं येनसंबन्धयन्त्रितं।
श्रीजैनलाभदेनस्य पुण्यराशिरिवोच्छ्रितः। सञ्चितः श्रीवितस्तान्तश्चिरकालमभूत्तु यः।
राजानसोमचन्द्रेण प्लावितोनिर्म्मलैर्धनैः। श्रीजैनकदलः सेतुः पारावारप्रतारणे।
बल्लाख्यमठमल्लेकपुरान्तरसमाश्रयैः। शोषितोवेश्मभिः साकं रात्रौ वैरिजिगीषया॥ कुलकं॥
दग्धारण्यनिभे जाते नगरे कदले तथा। नावशिष्टं विटैर्लुप्त्या स्थानवासोजनस्य च।
समं हन्तः चीणकाले सोमचन्द्रस्तदुन्मणा। स्वसैन्यसंग्रहं कृत्वा निविष्टोजालद्रगडे।
प्रतैकीयोवसन् कोऽपि ब्राह्मणोब्रह्मवर्चसा। युक्तोयेनाभवत्तस्य राजानस्यारिनिग्रहः।
प्रतापाग्नेर्नरेशस्य पुरस्य दहनार्चिषः। राजानसोमचन्द्रेण स्ववपुः श्रीफलायितं।
राज्ञा दत्ते वहिर्गन्तुं धर्म्मद्वारे दिनैः पथि। विप्रशापाख्यस्वर्भानुः सोमचन्द्रमयाग्रिलत्।
मलेकालादयः पुत्रा विद्रुताः समराङ्गयात्। विधाय सोमचन्द्रस्यान्त्यक्रियां नृपशासनात्।
मार्गेशेभ्राह्मिसोमन्त्री स्वान् परान् समतोषयत्।
सिद्धादेशं महातत्त्वं ज्येष्ठपुत्राय मार्गपः। मलेकपितृजायादान्मलेकाब्दालकाय च।
अस्त्राधिकारं दत्वाथ विभज्यान्यप्रभेयकान्। मल्लेकलुहरादिभ्यः स्वात्मजेभ्योददौ महान्।
शेमराजानज्येङ्गरप्रतीहारौ तु चक्रिणः। वाह्यानेतान् डामरांश्च राष्ट्रेशान्विदधेऽध्वपः।
मृते प्रशान्ते सचिवे चेल्हत्पिञ्जटास्तत। कर्णगोचरदुर्दण्डशिरोभर्दव्यदायिनः।
यमेवाश्रयते रज्जुं नदीं तर्त्तुमहो नरः। छिनत्त्यकस्मात्तमेव विधिर्विधुरताङ्गतः।
सोमचन्द्रवधार्थैते वाह्यानीता हि डामराः। मार्गेशेनास्य तैः सर्व्वैर्द्रोहोऽकारि नृपाज्ञया।
नौसेतुच्छेदं कृत्वा ते प्रतीहारादिडामराः। नाशयित्वा मार्गपतिं विदेशमनयंस्ततः।
डामरडल्समल्लेकदौलत्याद्यानृपास्पदे। अभजन्मन्त्रिपदवीं षट्पदा इव तेऽटवीं।
आस्थाने डामरेन्द्रेषु सम्यङ्निर्णयकारिषु। बलिनोदुर्व्वलाश्चासन्बलाबलवत्तराः।
सुहृत्तं डामरेन्द्रीये शिष्टानां सत्यभाव्न तत्। तमिस्रासक्तघूकानामप्रकाशइवावनौ।
नृपान्तरङ्गाः कारायां चिप्तास्तैर्डामरैर्निशि। आलेमरादयोद्रोहकर्त्तारः समयादमी।

ज्यहाङ्गिरप्रतीहारहोसराजानकादयः । दुन्दुभरवमानाच्चे दिनैस्तान् डामरान् प्रति ।
आस्थानाधीनयोर्गाजखानमल्लिकदत्तयोः । शस्त्या गदायमेराख्याजघानोरोदयोर्द्रुतं ।
श्रुत्वा तदुत्समल्लेकोराजाग्रादगमद्वहिः । चिरं युद्धारिभीराज्ञा नीतः स्वान्तिकमादरात् ।
तद्वधाद्राजधान्यन्तर्हाहाकारोमहानभूत् । उद्भूत्पौरलोकास्तु नृपतेश्चायशस्तदा ।
डामरोहोसमल्लेकः स्वध्यभोगान्तरादथ । श्रुत्वा ज्ञातिवधं धैर्य्यान्न चचाल महाभटः ।
प्रयुध्य वैरिभिः सोऽथ डामरस्तत्र सङ्गरे । वीरः स्वःसुन्दरीयोगं समरोड्डामरोऽगमत्
शाहाभदनकुलजः खानएभ्राहिमस्ततः । ज्यहाङ्गिरप्रतीहारज्ञातेयः कुशलोमहान् ।
विभागीकृत्य राष्ट्राणि यथार्हं पञ्चषैर्दिनैः । प्रददौ होसराजानमुख्यानां नृपतेः पुरः ।
आशङ्क्य नृपतेः पार्श्वस्थं तमुत्सवमल्लिकं । अकरोद्बन्धनं नीत्वा दुर्गमे तु खशालये ।
विभवं मासमात्रन्ते गन्धर्व्वनगरोपमं । विधाय द्वेषादध्वंशभीत्या चेलुरिवाधमाः ।
वृत्तान्तमुत्समल्लेकदुग्धभ्राता विश्रुत्य तत् । रावत्यदेवकोगत्वा खशालयमवेष्टयत् ।
खशैगङ्गामठोपान्ताद्गीतैरुत्सवमल्लिके । विमुक्ते ह्युदभूत् कोऽपि हर्षोऽन्योन्याश्रयात्तयोः
अथाध्यश्रयतां तौ द्वौ नृपकल्पतरुं दृढं । विपत्तीव्रातपक्लिष्टौ मार्गैशागमनोत्सुकौ ।
एकोननवतौ शुक्लाषाढादाश्वयुजावधि । वधादिवृत्तं राजानडामराणामभूदिदं ।
शरत्काले वहिस्तौर्लौ मार्गेशः पुनराययौ । विभागीकृत्य कश्मीरान् सर्व्वेषां दत्तवानसौ
राजाधिकारान् संस्थाप्य स्वात्मजेभ्योऽभवद्भीः । योगीव कतिचित् कालं स्वदेशे विगतज्वरः ।
उत्समल्लेकराजानशृङ्गारौ निरदाहयत् । शहानब्दालमेरस्य नावतेऽब्दे जिगीषया ।
निरोधवेश्मदाहादि श्रुत्वा पुत्रस्य मार्गपः । भाङ्गिलात् चुय्यमार्गेण हिन्दुवाटं समागमत् ।
तस्मिन् दिगन्तरं याते मल्लेकाब्दालकोऽरिभिः । बन्धनाय निनायोग्रैर्दुर्गं लद्खशालयं ।
उत्समल्लेकराजानशृङ्गारौ नृपसंयुतौ । विभक्तुमैच्छत् कश्मीरोत्पत्तिं वाराहमूलकं ।
तत्र राजाज्ञयानीतैस्सिद्धादेशाधिकारिभिः । देशोत्पत्तिविभागज्ञैस्तऽशैर्लेखककर्मभिः ।
कायस्थैर्बुधकश्मीरसंख्येशजुगकादिभिः । भागत्रयं विधायोर्व्वीराष्ट्रदेशेषु सर्व्वतः ।
भागः कृताश्चाहस्य मल्लेकोत्सस्य चापरः । तृतीयोऽथश्च राजानशृङ्गारस्येत्यलिख्यत ।
विभज्य भक्ता देशेऽच देशोत्पत्तिः पुरा त्रिभिः । ऊप्कशुप्याकनिष्काख्यैस्तथैवैतैर्महात्मभिः ।
ततोनगरमारुह्य राजराजानडामराः । नात्यजन् हृदयादैरं गूढं नकुलसर्पवत् ।
मुख्यं मन्त्रिपदमुत्समल्लेकस्य ददौ नृपः । सिद्धादेशश्च राजानशृङ्गारस्य महत्पदं ।
आस्थानउत्समल्लेके स्थिते निर्णयकारिणि । शृगालेडिकसंयोगः श्रुतोऽभूत्रचितस्तदा ।
कांगिरिशाहडिञ्ज्यर्यशादिनोः मात्रयोर्द्वयोः । मादात् स उत्तरं द्रष्टुं स्वाभिशामाहृताश्रयां ।
तदा चाहिनशक्ल मवंशोमरिस्तशं वरः । ससोदमाहिमहितएभ्राहेमोऽध्वेश शाययौ ।
वाराहमूलं सम्प्राप्ते तत्सैन्ये राजानिदेः । उत्समल्लेकमुख्यास्ते योद्धुं स्वय्यपुरेऽविशन् ।

पारावारस्थितं सैन्यद्वयं वीक्ष्य नराधिपः। फताहशाहोमन्त्रीशमुत्समल्लेकमब्रवीत्।
मन्त्रिन्नब्धाधिपेनेयं परिणीतेव भामिनी। अस्मान् कापुरुषान् ज्ञात्वा राज्यलक्ष्मीर्वृतामुना।
श्रुत्वा तदुत्समल्लेकान्नृपमूचे महीपते। एकाकिनमवन्तुं मां दृष्ट्वा किं न करोत्ययं। ८०
कदाचिद्दृश्यते चिन्तामणिः खकुसुमादि च। राजप्रतापदग्धा हि नोत्पद्यन्ते नरर्षभाः।
उत्तिष्ठ राजन् युध्यस्व दैवाधीना विभूतयः। श्रुत्वैवं मन्त्रिणोवाक्यं योद्धुं नृपवलं ययौ।
अध्वेभ भवतुङ्गं तत्पथायाते ससैनिके। सबल उत्समल्लेकः कोशनत्वोन्यविचत।
मध्ये भूत्वा गिरिं तत्र स्थितात् सैन्यद्वयाद्भटाः। रत्यान्योन्यं शरासारं पारावारादथाक्षिपन्।
प्रयुध्य वैरिभिस्तत्र मार्गेशात्मजशियैकः। स्वप्राणैः पद्मनागस्य प्रादाद्बलिं महत्तरं। ८५
हते तस्मिन् रणे तत्र शियमार्गपतावतः। सम्भुलादुत्समल्लेकोजेता शिथिलतां ययौ।
शैथिल्यमस्य दृष्ट्वा ते वीरामार्गेशसैनिकाः। सर्व्वाश्वसाध्वना यातस्यानुमसुर्महौजसः।
फताहशाहोराजानस्यङ्गारान्वितएव तत्। श्रुत्वा स्वध्यपुराद्धिन्दुवाटं शूरपुराद्ययौ।
अनुयातैरथाध्वेशसैनिकैरुत्समल्लिकः। अरोधि न्योवाशमान्ते केशरीव गुहामुखे।
नवाब्दान् पालयित्वा क्ष्मां याते फताहभूमिपे। मह्मदशाहः सम्प्रापद्राज्यं मार्गेशसंश्रयः। ९०
मार्गेशप्रीत्या नृपतिर्भट्टाल्लं स्वाततायिनं। सैदरस्कन्दरं खानं यौवराज्यपदोर्जितं।
महामार्गपतिर्भूयोराजलक्ष्मीविराजितान्। स्वपुत्त्रानकरोत्काराग्रहे शत्रुनिधानतः।
दत्तकन्योऽप्ययं जन्यदेव मां घातयेत् कथं। निश्चित्त्य उत्समल्लेकोयावदास्ते स बन्धने।
मार्गेशपुत्त्रोवलिनं सद्देषस्तं कुकर्मणा। अथ शृङ्खलबद्धाङ्घ्रिमवधीत्पञ्चषैर्दिनैः।
युद्धं भट्टार्जुनस्याजौ कारायाः शेषचक्रिणः। बद्धस्य तादृग्वीरस्य तस्याभूच्छस्त्रिभिः परैः। ९५

बलिना कलिराजेण नृचन्द्रे गलिते ऽर्केऽप्युदभूद्ध्वान्धकारः।
जनताप्यनिशं भृशं रुरोद कलयन्ती पितरीव पक्षपातं।

विरते चोत्समल्लेके लोके राजिश्वराः खलाः। विचेरुरन्धतमसाविस्फुरद्दीर्घदृष्टयः।
भागांशोद्विगुणोजातोग्राम्याणां तत्र वत्सरे। विज्ञप्तिश्रवणे मूकावधिरामन्त्रिणोऽभवन्।
नव मासान्नवाहानि राज्यं कृत्वा महम्मदे। बहिर्याते कृतोत्साहः शाहः फतिह आययौ।
प्रतीहारव्यहाङ्गीरस्यादान्मन्त्रिपदं नृपः। सिङ्कादेशस्य राजानशृङ्गारस्य महत् पदं। १००
स्वयंभूश्चण्डचण्डांशुमहसः शौर्य्यशालिनः। काचचक्रस्य शस्त्राधिकारं राजा स्वयं ददौ।
नूनं नाकेशचक्रेशावतारः काचमल्लिकः। आजीवमभवद्यस्य राजश्रीवलितं वपुः।
श्रीमद्दौसनचक्रस्य कमराज्याजिजन्मनः। प्रोद्भूतः काञ्चनोवीरोरामोदशरथादिव।
प्रजापुण्योदयाद्रामाधार्म्मिका धीरजायत। अथवात्यल्पकालोऽस्य राज्यस्याजायि भूभुजा।
तथाहि प्रेष्यवद्दुद्ध्यापाराधिपतां नृपः। अकरोत्तासपट्टान्तर्गणनाक्षेपवारणं। १०५
स्तर्तविन्दुकजन्तूनामस्थीन्यादाय भूमिपः। गङ्गां यातुं समादिचत् स्वेच्छापद्मान्तिये।

चिप्रास्थीन्यत्र स्वर्णद्यां प्रत्यायाताजनाः पथि। अकस्मादातङ्कष्मा तेऽयुतसङ्ख्याविपेदिरे।
चिरेण गङ्गया भुक्तान्यस्थीनीति क्षुधार्त्तया। मन्येऽस्थिप्राप्तलोकोऽपि निगीर्णोऽनया भुवं।
आयुःशेषं समाश्रित्य पादत्राणसमाश्रयाः। मृतागृहेषु ये प्राप्ताः केचिन्नियतियोगतः।
अस्मिन्नेकनवत्यब्दे शरत्काले च मार्गपः। मल्लोदशाहिषद्दितोवाङ्गिलात् पुनरराययौ। ११०
ससैन्योवाङ्गिले ग्रामे निविष्टोऽभून्महीभुजः। फताहशाहः प्रबले बलं युद्धाय निर्ययौ।
प्रयुध्य वैरिभिर्गाढं धार्मिकोऽश्वेशनायकः। गतः स्वःकामिनीयोगमात्मजोऽस्य रणाजिरे।
कलौ धर्मस्य पादैकोवर्त्ततेऽस्मिन् भुवस्तले। महामसोदस्तम्भैः स चतुष्पादेन योजितः।
नूनं कार्कोटनागेन निगीर्णोमार्गपः क्षुधा। प्रत्यब्दं तद्गिरिस्थानाद्गमागमचिकीर्षया।
अन्येऽप्यब्दालमल्लेकलुहराद्याहि तत्सुताः। गतादिगन्तरं भूभ्रद्युक्ताव्यक्तमनोरथाः। ११५
वितस्तिः पूर्य्यते जीर्णवस्त्रे हस्तोविशीर्य्यते। इत्येवमादिकादोषाजायन्ते पापिनां विशां।
सम्यगन्तकनारीव व्याध्युपद्रवकारिणी। उदभूत् सर्व्वतोमारी जनताचयकारिणी।
मृतानां नाभवत् सङ्ख्या ग्रामेषु नगरेऽपि वा। अन्त्यकर्पटवासोऽपि येषामास्ते स्म दुर्लभं।
बान्धवानेव चक्रन्दुः प्रलापस्य कथैव का। प्राणरक्षापराः केचिदायुःशेषेण रक्षिताः।
जजृम्भे शमिते मारीदीपे देशेऽथ दैवतः। वार्त्ता मल्लदशाहस्य कश्मीरागमनं प्रति। १२०
गत्वा मल्लदशाहस्य नौशाहारात् सलोहरात्। स्कन्दराद्गजपतेः स प्राप महतीं चमूं।
प्रत्यायातोऽश्वपसुतैः सहितोराज्यशङ्कया। प्राप्तोराजपुरीदेशमिति दूतान्नृपोऽशृणोत्।
यस्मादुर्व्वार्त्तयाप्यासन् पूर्व्ववैरामहीभुजः। समस्तामन्त्रिणः शाहमल्लदागमनेस्पृशः।
काष्ठवक्रेशराजानशृङ्गारौ स्वबलैर्वृतौ। गतौ प्रतीचितुं शूरपुरं नवनृपस्य तौ।
विधुरे हि विधौ मृत्यशालेमेरोऽस्य भूपतेः। श्रीमत्फताहशाहस्य शत्रुपक्षमथाश्रयत्। १२५
वैदेशिकोनिःशरणः शाहिभङ्गीयदत्यशे। पुत्त्रवद्वर्द्धितोराज्ञा ग्रामहेमाद्यनुग्रहैः।
प्रतीहारज्यहाङ्गेरमन्त्रिणैकेन संश्रितः। श्रीमान् फताहशाहस्य पुराद्योद्धुं विनिर्ययौ।

कोपाणकं फतिहशाहवले निविष्टे गूढेक्षणैः प्रतिभटैर्विदितारिवृत्ताः।
रत्यारिमध्यमथ शूरपुराद्युयुत्सुकामाः प्रवीरशयनान्यधिजग्मुरत्र।

फताहशाहो वीक्ष्यैतद्युद्धमस्यादथापतत्। मन्त्रिभिः प्राक्तनस्नेहात्प्रभुत्वादपि रक्षितः।
एवं समाप्तं वर्षैकं भुक्त्वा भूमिं स भूमिपः। वर्षे द्वानवते मासे इषे राज्यादथापतत्। १३०
ततः फतिहशाहः स निरस्तोवाद्यमण्डलं। मन्त्रिभिर्घटिकाशारगिरिमुल्लङ्घ्य लोहरं।
श्रीमान् महामहोम्माहः शाहोमहम्मदः पुनः। समं गजपतेः सैन्यैः कश्मीरानविशज्जयी।
[illegible]दत्तमत्तेभाद्युधः सेनाजमस्य ते। जङ्गमाद्रिभ्रमं मार्गे काले धाराधिरोहणे।
वाजिनां [illegible] हस्तिकर्णतालैश्च पुष्पितैः। पटहैर्अंपमन्द्रोऽभूद्द्विगुणोनृपतेर्विशां।
बद्धा राजाभटहग्नार[illegible] मार्गपं बहिः। कर्तुं मन्त्रिपदे राज्ञयिना काप्युद्भूद्धृदि। १३५

नृपादेशान्महामन्त्रिपदं चक्रेशकाञ्चनः। स्वालेमेराद्यनुज्ञातोऽप्यग्रहीत् स महाबलः।
स्वामात्यान् देशरक्षार्थे स्थापयित्वा गतोभुवं। विभज्याटविकं लोकं प्रतिमुक्ते वहिर्नृपे।
नाग्रामकोटं लुहराध्विशराजाननोसकौ। प्रविष्टौ सैन्यसन्नद्धौ शत्रुकार्य्यचिकीर्षया।
हिमार्त्तोऽराजकोदेशोऽपरिज्ञाताश्च मन्त्रिणः। देशोदुर्व्वार्त्तयाशेषश्चकम्पेऽन्वहमित्यनः।
चक्रेशोविक्लस्थर्णं वीरं मसेकज्यङ्गिरं। साहायकार्थमानिन्ये राङ्गघोषैः छनार्हणं।
मासमात्रमुषित्वात्र कोटे तैर्वैरिणां क्रुधा। प्रभाते नगरं वीराययुर्युद्धचिकीर्षया।
निर्याते काचचक्रेशसैन्ये रिपुबलं प्रति। परस्परमभूद्युद्धं वोराणां जालद्रगडे।
युद्धा लुहरमार्गेश याते राजाननोसकः। ऊला रणाग्रौ स्वप्राणनाद्विचत्नाकयोषितः।
छित्वा तत्राङ्गुलीः काचचक्रेशस्यारथोऽथ ते। नाजोकमार्गनत्याद्याः प्रययुः शलभायितां।
प्रवीरोदेवरावत्रस्खलितःसमराङ्गनात्। हतोमारीनशेतोरे चक्रसैन्यैर्निरायुधः।
तादृशात् समरान्मुक्तः काचचक्रोऽखिलैर्जनैः। देशरक्षाकरोऽज्ञायि राधेयार्जुनसन्निभः।
सचिवः काञ्चनश्चक्रः प्रवीरः काञ्चनश्रियं। अङ्गुल्या सह सम्प्रापच्छिन्नया तत्र संयुगे।
सन्तोष्य नृपतिर्दानमानाद्यैराजमण्डलं। प्रतिमुच्यागतोऽकार्षीत् धैराज्यं राष्ट्रमण्डले।
वर्षेण स हि मल्लेकलद्दभट्टादयोऽखिलाः। चक्रेशमन्त्रिणा कारागारक्षिप्तामहौजसः।
अङ्गुलीछत्रनिर्देशं स्थापिते भूपतौ ततः। चतुर्नवतिवर्षेऽत्र श्रावणे काचचक्रपः।
मल्लिकज्यङ्गिरप्रीत्या स्थानमेशाद्दिमं व्यधात्। सिद्धादेशाधिकारेऽस्य सुजनं धीमतां वर।
क्रियालतायामूलानि पूर्व्वं शिर्य्यद्विजन्मना। रोपितानि च कालेन सिक्तान्यमृतवारिणा।
श्रीमन्निर्मलकण्ठेन द्विजेन्द्रेण हिमागमे।
सोमराजानकालोद्दलम्लेच्छोपद्रवजोमहान्। समस्य कण्ठभट्टाद्यैर्दुष्कलङ्कोनिवारितः।
प्रलोभ्य काचचक्रेशं स्वप्राणेन धनेन च। तत्कार्य्यवत्तचक्रेशानुमतोम्लेच्छचोदितः।
स्तुस्नाभिराह्लदोभट्टनिर्म्मजाद्यानघातयत्।
ब्राह्मं तेजः क वो विप्राः क्वाचारोऽद्यतने युगे। इत्येव खिन्नोविचस्तांस्तन्मुखानवधीद्विजान्।
आसूचितः सैदकाले सोमचन्द्रेण व्यञ्जतः। सफुलः काचचक्रेण सोऽस्त्वोपद्रवक्रमः।
ततोऽब्दे पञ्चनवते श्रावणे वाह्यमण्डले। फतादशाह्राजेन्दुरस्तं यातोनृपाधिपः।
श्रुत्वा महम्मदशाहेन तद्दिने नाशि नास्वपि। नास्नायि,राजराजन्तं स्मारं स्मारं दिवानिशं।
नयज्ञोदीर्घदर्शी च सत्यवाग्गुणिवत्सलः। प्रशान्तः प्रियभृत्यश्च क तादृग्लभ्यते प्रभुः।
सम्प्राप्तं नरदेवेन जन्म वाह्येऽत्र मण्डले। प्रमयोऽस्याभवत्तत्र विधिकार्य्यं हि दुर्घटं।
कर्णीरथमयारोप्य स्वभृत्यैर्नरनायकैः। शवीभूतइहानीतः कर्त्तुमन्त्यक्रियां दिनैः
कश्मीरेन्द्रः समारोप्य सामात्यस्तं शवं नृपं। इहन्मृताजिरे श्रीमज्जैनशाहादिभूभुजां।
गोगर्त्तेस्फटिकावर्त्तैर्मूर्त्तैः कार्येरिवाश्रिते। राजोचितक्रियां कृत्वा भूगर्त्तेऽभ्यन्तरेऽक्षिपत्।

चिन्नाखीन्यच स्वर्णयां प्रत्यायाताजनाः पथि । अकस्मादातङ्कया तेऽयुतमह्वाविपेदिरे ।
चिरेण गङ्गया भुक्तान्यस्थीनीति सुधार्त्तया । मन्येऽस्थिप्राप्तलोकोऽपि निगीर्णोऽध्वनया भुवं ।
आयुःशेषं समाश्रित्य पादचाणसमाश्रयाः । मृताग्टहेषु ये प्राप्ताः केचिन्नियतियोगतः ।
अस्मिन्नेकनवत्यब्दे शरत्काले च मार्गपः । मह्मोदशाहिधहितोवाङ्गिलात् पुनराययौ ।
ससैन्योवाङ्गिले ग्रामे निविष्टोऽभून्महीभुजः । फताहशाहः प्रबलं बलं युद्धाय निर्ययौ ।
प्रयुध्य वैरिभिर्गाढं धार्मिकोऽश्वेशनायकः । गतः स्वःकामिनीयोगमात्मजोऽत्र रणाजिरे ।
कलौ धर्मस्य पादैकोवर्त्ततेऽस्मिन् भुवस्तले । महामर्मोदसञ्ज्ञः स चतुष्पादेन योजितः ।
नूनं कार्कोटनागेन निगीर्णोमार्गपः क्षुधा । प्रत्यब्दं तद्गिरिस्थानाद्गमागमचिकीर्षया ।
अन्येऽप्यब्दालमल्लेकलुहराद्याहि तत्सुताः । गतादिगन्तरं भूयश्चुक्ताव्यक्तमनोरथाः ।
वितस्तिः पूर्य्यते जीर्णवस्त्रे हस्तोविशीर्य्यते । इत्येवमादिकादोषाजायन्ते पापिनां विशां ।
सन्यगन्तकनारीव व्याध्युपद्रवकारिणी । उदभूत् सर्व्वतोमारी जनताचयकारिणी ।
मृतानां नाभवत् सङ्ख्या ग्रामेषु नगरेऽपि वा । अन्यकर्पटवासोऽपि येषामासे स दुर्लभः ।
वान्धवानेव चक्रन्दुः प्रलापस्य कथैव का । प्राणरचापराः केचिदायुःशेषेण रक्षिताः ।
जज्ञ्मे शमिते मारीदोषे देशेऽथ दैवतः । वार्त्ता मह्मदशाहस्य कश्मीरागमनं प्रति ।
गत्वा मह्मदशाहस्य नौशाहारात् सलोहरात् । स्कन्दराह्वजपतेः स प्राप महतीं चमूं ।
प्रत्यायातोऽथपसुतैः पहितोराज्यशङ्कया । प्राप्तोराजपुरीदेशमिति दूतान्नृपोऽशृणोत् ।
पश्चाहुर्व्वार्त्तयाप्यासन् पूर्व्ववैरामहीभुजः । समस्तामन्त्रिणः शाहमह्मदागमनेश्वरः ।
कायचक्रेश्वराजानटक्कारौ स्ववलैर्वृतौ । गतौ प्रतीचितुं शूरपुरं नरनृपस्य तौ ।
विधुरे हि विधौ सत्यशालिमेरोऽस्य भूपतेः । श्रीमत्फताहशाहस्य शत्रुपक्षमथाश्रयत् ।
वैदेशिकोनिःशरणः शाहिभङ्गीयदत्यभौ । पुत्रवर्द्धितोराज्ञा ग्रामहेमाद्यनुग्रहैः ।
प्रतीहारज्यहाङ्गेरमन्त्रिणैकेन मंत्रितः । श्रीमान् फताहशाहस्य पुराद्योद्धुं विनिर्ययौ ।
कोपाणकं फतिहशाहवले निविष्टे गूढैश्चरैः प्रतिभटैर्विदितारिहत्ताः ।
रत्याश्मिध्यमय शूरपुराद्युतत्सुकामाः प्रवीरयवनान्यधिजग्मुरच ।
फताहशाहो वीर्य्यैतयुद्धमध्यादपापतत् । मन्त्रिभिः आक्रम्य हेलाभुलादपि रक्षितः ।
एवं समार्धं वर्षकं भुक्ता भूमिं स भूमिपः । वर्षे दानवते मासे दृषे राज्यादपापतत् ।
ततः फतिहशाहः स निरस्तोवाप्तमण्डलं । मन्त्रिभिरटिकाशारगिरिमुलङ्घ्य लोहरं ।
श्रीमान् महामदोत्साहः प्राप्तोमहापदः पुनः । सर्मं गजपतेः सैन्यैः कश्मीरामविशज्जयी ।
...रदकामन्तेभाव्यधुः सेनाजनस्य ते । तङ्कमाद्रिभ्रमं मार्गे यामे धाराधिरोहणे ।
वाजिभिः ... हस्तिवर्णतालेय पुष्यतः । पटहैर्भ्रंशमन्द्रोऽभूद्विगुणोभूपतेर्गिरा ।
बद्धा राजा... मार्गपं वहिः । कर्त्तुं मन्त्रिपदे रामसिमा काणुदभूद्वदि ।

नृपादेशान्महामन्त्रिपदं चक्रेशकाञ्चनः। स्वतैमेराद्यनुज्ञातोऽप्यग्रहीत् स महावलः।
स्वामात्यान् देशरचायै स्थापयित्वा गतोभुवं। विभज्याटविकं लोकं प्रतिमुक्ते वहिर्नृपे।
नाग्रामकोटं लुहराख्येशराजाननोसकैा। प्रविष्टैा सैन्यसन्नद्धैा मनुकार्य्यचिकीर्षया।
हिमार्त्तोऽराजकोदेशोऽपरिज्ञाताश्च मन्त्रिणः। देशोदुर्व्वार्त्तयाशिपश्चकम्पेऽन्वहमित्यतः।
चक्रेशोविक्रवस्कुर्ण वीरं मल्लेकच्यङ्गिरं। साहायकार्थमानिन्ये राष्ट्रघोषैः छतार्हणं।
मासमात्रमुषित्वात्र कोटे तैर्व्वैरिणां क्रुधा। प्रभाते नगरं वीराययुर्युद्धचिकीर्षया।
निर्याते काचचक्रेशसैन्ये रिपुबलं प्रति। परस्परमभूद्युद्धं वीराणां जालद्रगडे।
युद्धा लुहरमार्गेशे याते राजाननोसकः। छत्वा रणाग्नैा स्वप्राणानाश्चिचन्नाकयोषितः।
छित्वा तत्राङ्गुलीः काचचक्रेशस्यारयोऽथ ते। नाजोकमार्गपत्याद्याः प्रयषुः प्रतभायितां।
प्रवीरोदेवरावत्रचलितःसमराङ्गनात्। हतोमारोनरीतोरे चक्रसैन्यैर्निरायुधः।
तादृशात् समरान्मुक्तः काचचक्रोऽखिलैर्जनैः। देशरचाकरोऽज्ञायि राधेयार्जुनसन्निभः।
सचिवः काञ्चनश्चक्रः प्रवीरः काञ्चनश्रियं। श्रङ्गुल्या सह सम्प्रापच्छिन्नया तत्र संयुगे।
सन्तोष्य नृपतिर्दानमानाद्यैराजमण्डलं। प्रतिमुच्यागतोऽकार्षीत् सैराज्यं राष्ट्रमण्डले।
वर्षेण स हि मल्लेकलहभट्टादयोऽखिलाः। चक्रेशमन्त्रिणा कारागारचिप्तामहौजसः।
श्रङ्गुलोछत्रनिर्देशं स्थापिते भूपतौ ततः। चतुर्नवतिवर्षेऽत्र श्रावणे काचचक्रपः।
मल्लिकच्यङ्गिरप्रीत्या स्वानमेशाद्दिमं व्यधात्। सिद्धादेशाधिकारेऽस्य सुजनं धीमतां वर।
क्रियालतायामूलानि पूर्व्वं शिष्यैर्दिजन्मना। रोपितानि च कालेन सिक्तान्यमृतवारिणा।
श्रीमन्निर्म्मलकण्ठेन द्विजेन्द्रेण हिमागमे।
सोमराजानकालोद्यत्स्वेच्छोपद्रवजोमहान्। समभ्य कण्ठभट्टाद्यैर्दुष्कलङ्कोनिवारितः।
प्रलोभ्य काचचक्रेशं स्वप्राणेन धनेन च। तत्कार्य्यंवस्तचक्रेशानुमतोस्वेच्छचोदितः।
सुस्नाभिराह्लादोभट्टनिर्मैत्राद्यानघातयत्।
माहं तेजः क वोविप्राः काचागोऽद्यतने युगे। इत्येव खिन्नोविचस्तांस्तन्मुखानवधोद्विजान्।
श्रासूचितः सैदकाले सोमचन्द्रेण व्यञ्जतः। प्रफुल्लः काचचक्रेशमैासुलोपद्रवक्रमः।
ततोऽब्दे पञ्चनवते श्रावणे वाह्यमण्डले। फतादशाहराजेन्दुरस्तं यातोनृपाधिपः।
श्रुत्वा महम्मदशाहेन तद्दिने नाशि नास्वपि। नाहायि,राजराजन्तं स्मारं स्मारं दिवानिशं।
नयज्ञोदीर्घदर्शी च सत्यवाग्गुणिवत्सलः। प्रशान्तः प्रियभृत्यश्च क तादृग्लभ्यते प्रभुः।
सम्प्राप्तं नरदेवेन जन्म वाह्येऽत्र मण्डले। श्मशानेऽस्याभवत्तत्र विधिकार्य्यं हि दुर्घटं।
कर्णीरथमथारोप्य स्वभृत्यैर्नरनायकैः। शवीभूतइहानीतः कर्त्तुमन्त्यक्रियां दिनैः
कश्मीरेन्द्रः समारोप्य सामात्यस्तं शवं नृपं। इहन्मृताजिरे श्रीमज्जैनशाहादिभूभुजां।
सोगत्तैस्फटिकावर्त्तैर्मर्त्तैः कायैरिवाश्रिते। राजोचितक्रियां छत्वा भूगर्त्तान्तरेऽचिपत्।

कर्त्तुं राज्यमखण्डितं हठाधियोद्धर्त्तुं स्वमात्यान् दृढान् भक्तुं पामरसेवकान् हि नृपतिः किं किं न कुर्य्यात्क्रमं।
हा दैवं तदपाधितुं प्रयततेऽनयादिवात्याहतोमूलोत्पाटनमाप्य धिङ्नृपतरुस्तूर्णं पतेदाकुलः।
स सैफडामरेन्द्रादीन् हत्वा स्वयचिवान्नृपः। विपत्तौ प्रमयं प्राप हाहा कालविपर्य्ययः।

॥ इति फताहशाहस्थैर्याणं ॥

तदैवमेत्य राजानग्टङ्गारेण महात्मना। अन्वगामि नृपेन्द्रस्य प्रेम्णेव स्वर्गवासिनः।
तस्मिन् काले बहिश्चक्रवर्त्ती गजपतिर्दिवं। रस्कन्दराखोऽप्यगमत् सुरराजदिदृचया।
अभावादथ भूपस्य राजपचं विशङ्क्य तं। मल्लिकज्यङ्गिरामिरखुन्याह्नदमुखान् भुवं।
एभ्राहिखानग्टङ्गारभट्टादींश्चक्रनायकः। वैशाखेऽब्दे षस्रवतौ नगरस्थानरोधयत्।
सिद्धादेशातिपदवीं तदीयाश्चक्रपोददौ। दैवदृष्टस्य राजानहोमनस्य महात्मनः।
तद्गौरवं चिभिर्म्मासैरसहिष्णुः स चक्रिराट्। होसराजानकं कारां चिक्षेपासीदकुतोभयः।
मल्लेकचक्रमेरङ्गताजेमेरादिबान्धवान्। तोषयित्वा राष्ट्रघोषैः पूर्णकामांस्तदाकरोत्।
ज्येष्ठेऽथ सप्तनवते एभ्राह्मश्वपतेः सुताः। मल्लेकाब्दालकाद्याश्च सन्धाय देशवासिभिः।
फतिहशाहजं खानमादायेस्कन्दराभिधं। ससैन्यमाययुर्वाह्मात् स्वंशैश्वर्य्यकाङ्क्षिणः।
श्रुतप्रवेशश्चक्रेशकाचकोऽतिबली ययौ। योद्धुं लौलपुरोद्वारं स्वाम्यधुक्तोऽश्वपान् प्रति।
दृष्ट्वा चक्रबलं भूरि जग्मुर्भीत्याल्पसैनिकाः। नौग्रामकोटं राश्चक्रो दुर्गमं प्राणरचया।
अथानुपस्ते चक्रेशसैन्येनाश्वपतीन् प्रति। कोटभूम्यन्तरे भूरि ससैन्यं स न्यवीविशत्।
चमूदयादिनिर्गत्य शरासारैरवाकिरन्। योधादिवञ्च भूमिञ्च गर्जन्तः समराङ्गने।
तावत्प्रतीहारपतिर्ज्यहाङ्गिरः ससैनिकः। गदायमेरवहदोरमेराद्यैर्लुचरेऽविशत्।
ऊर्द्धाधः सहितं शत्रुसैन्यं वीक्ष्य स चक्रपः। मसोदचक्रं स्वसुतं व्यसृजल्लुहरं प्रति।
ताजचक्रादिसहितोवीरोमीरमसोदकः। शाहाभदेननगरं सम्प्रापारियुयुत्सया।
दृग्गोचरं गते चक्रिसुते युयुधिरे भटाः। आगच्छ प्रविशेत्युच्चैर्नदन्तः समराङ्गने।
मसोदमेरषड्गिंशा वीरोमीरगदायकः। शरावलीं चकर्त्तास्य वैजयन्तीमिव श्रियः।
पार्थपुत्रोपमे तस्मिन् रणं चक्रिणि कुर्व्वति। अरिमध्यात् सुसन्नद्धोनाभीत् कोऽपि धनुर्धरः।
मा पलायन्त समरादीरावीरगुणोज्झिताः। जिताः शत्रुसमूहेन व्यूहेनागम्यतामिति।
इत्युक्तोऽर्जुनराजानकैनेकेनागताभटाः। युद्धाय विविशुस्तूर्णं शलभाइव पावकं।
प्रत्यायाते समन्येऽय प्रयुध्यैतैर्महारथैः। गदायमेरः स्वनारीप्रणयिलमथाश्रयत्।
स्वपेषदक्रिणोदन्तनायकः पुष्पनायकः। दृष्ट्वैव नीतस्तूर्णं स स्वस्त्रीभिः समराङ्गनात्।
सैन्यं निहतं वीक्ष्य वीरास्तदनुयायिनः। मसोदमेरं धावित्वा जघानाह्नि शरेण ते।
शरर्निर्भिन्न...न्योन्यपतन्निहतोभुवि। मसोदमेरः प्रवरोधन्विनां चक्रिणः सुतः।
विशीर्णे रिपुभिर्यस्य...चलसन्निभे। प्रतीक्रिमी पदं लेभे मुक्ताहारा न कुत्रचित्।

डोमराजानकोगाजमेरः शृङ्गारभट्टकः । एते विरुद्धास्तत्राजौ बद्धाः पापिजनैर्हताः ।
प्रतीहारपतेः सेना प्रनष्टा पुरमाविशत् । दिनद्वयमयोध्यिचा सा प्रयाता यथागतं ।
तादृशे तनये वीरे निहते सङ्गरेऽरिभिः । काचचक्रस्य तद्दुःखात् कातुर्यमगमन्मनः ।
सेनान्यं दुःखितं वीक्ष्य ताजचक्रादयोऽनिजाः । अवोचन् समये चास्मिन् दैन्यं मा संश्रयेश्वर । १९५
निर्ययावथ चक्रेशो योद्धुं मार्गेशसैनिकान् । पारावारस्थितान् कोट्ट पुत्रशोकादविक्लवः ।
युयुत्सौ काचचक्रेशसैन्ये रिपुबलैश्चिरं । याम्यादीनतयाभूवन् किंकर्त्तव्यतयाकुलाः ।
मार्गेशाः ख्यातवीर्य्यास्ते वैरिनिष्ठस्य चक्रिणः । पौरुषं वीक्ष्य खानेन पुनायातादिगन्तरं ।
यथागतं गतेष्वेषु ससैन्येषु नृपान्वितः । विजयी नगरं प्राप चक्रेशः शोकविक्लवः ।
वीरं धीरं गुणज्ञन्तं महायोधपुरःसरं । मल्लेकोदौलतं ज्ञात्वा चक्रेशोऽभूद्वियोज्झितः । २००
समस्तं डामराद्यादि पुत्त्रसम्बन्धि धन्विने । ददौ दौलतचक्राय भ्रातृपुत्राय स प्रभुः ।
वर्षेऽष्टानवते राजपुत्त्रमाजस्सुरध्वपाः । हमेसखानमादाय चटिकाशारपर्व्वतात् ।
तामसीमल्लगास्थाने स्थापिते सैनिकैऽध्वपैः । मल्लेकक्काचचक्रस्य बलं सन्धपुरेऽविशत् ।
विज्ञातचक्रिवीर्य्यास्ते मार्गपाश्चान्यसैनिकाः । गिरिमार्गादवारोहन्नाधग्रामेषु केषुचित् ।
अध्वेशसैन्यात्तद्दैन्यान्निर्गत्याशिश्रयद्द्रुतं । सोमराजात्मजएदराजानश्चक्रिणश्चमूं । २०५
तच्छ्रुत्वा तेऽध्वपाः प्रत्यागतास्तत्पर्व्वताध्वना । आशापिशाचिका त्यक्ता मित्रद्रोहात्सुविक्लवा ।
मार्गेशवाहिनी मित्रद्रोहाख्यानशिलोच्चयात् । विशीर्णा शतधा याता सम्बद्धा वाद्यपल्वले ।
हमेसखानः सोऽस्वस्थोमार्गे पञ्चत्वमागतः । आरुह्य शिबिकां तूर्णमानीतोनिजपार्श्वगैः ।
कश्मीरानथ हत्वास्य चान्यकर्म्म मृताजिरे । शयितः पितृपार्श्वेऽयोगर्त्तेऽमात्यैर्महात्मभिः ।
शस्त्रेण ये वारयितुमशक्ता वैरिणोऽभवन् । नखैरपास्तभाग्यानामुदये काचचक्रिणः । २१०
प्रतीहारकुलोद्भवचन्द्रोमल्लेकश्चाङ्गिरः । ज्वालाभिर्वाह्यदेशेऽत्र तत्काले पञ्चतां ययौ ।
आनीताश्चक्रिणा मार्गपाब्दालनुहरादयः । यौनसम्बन्धन्यायेन कश्मीरान्निविशुस्ततः ।
तथाहि लुहराध्वेशः स्वसुतां परिणीतवान् । मल्लेकक्काचचक्राय शक्रायेव पुलोमजां ।
मल्लेकाब्दालकायाथ चक्रेशः स्वसुतां ददौ । परिणीर्यचिरात्सन्नामिव स्नेहतरङ्गिणीं ।
श्रीमता ताजचक्रेण स्मरेणेव रतिर्यथा । उद्वाहिता मार्गपतेरब्दालस्यात्मजा तदा । २१५
ततः काश्चनचक्रेण राष्ट्रधीपैः क्रमागतैः । महद्भिर्दानमानैश्च मार्गेशानां कृतार्हणा ।
अन्वहं वर्द्धिते प्रेम्णि मार्गेशैः सह चक्रिणां । बन्धुना रिगचक्रेण दैवाद्दूरीकृतस्तु सः ।
काम्भोजयवनेशेन वाभोरेण विपाटितः । तदेव हस्तिनापुर्य्यामिभ्रादेनो नृपेश्वरः ।
तद्रणोत्थरजोध्वस्तान प्राकाशन्त कुर्वचित् । आशागजपतेर्वीररत्नानामनुयायिनां ।
मार्गेशदीपयन्त्रे शस्त्रेहपूर्णाविकारितः । कर्णजपाम्बुपूरेण रिगचक्रालिमरयोः । २२०
तद्रूपोत्थानलज्वलन्मनसश्चक्रिणः कृताः । रिगचक्रनिरोधाख्यजलाप्यायेन शैत्यता ।

तृतीयेऽब्देऽश्वपाशे तु निहिंहाश्चक्रिणं प्रति । आलेमेरखताशाशाथिरोद्वारं न्यवीविशः ।
विदित्वा तादृशैश्वर्यं मन्त्रयित्वा महीभृता । न्यविशच्चक्रपः सैन्ये योद्धुं स्वं जालद्रगखे ।
असाध्यास्तामदानाथैस्तङ्कटाउङ्कटारणे । न शेकुश्चक्रिसैन्यान्तः केनापि विनिवर्त्तितुं ।
मलस्थलपावडादिदेशेभ्यश्वेशसैनिकैः । प्रयुध्य शतशोऽह्नानि निर्भयश्चक्रिपोऽभवत् ।
रात्रौ ज्ञकबलाघाते लहरे यटिकातलं । भूपाले काचचक्रेशेवाप्यदेशे भयाद्गतः ।
विरोधमव्यातताया आलेमेरेण धीमता । ताः पुष्पिताः पल्लविताश्चकेशाश्वेशभूमिषु ।
हिन्दुवाटं प्रयातेऽस्मिन्नुग्रे मन्त्रिणि भूमिभृत् । साम्राज्यमकरोद्देशेऽश्वेशमन्त्रिभिरादृतः ।
बहिश्चक्रेश्वरेणात्र सामन्ताः करदायिनः । श्रीजैनशाहवद्रीत्या कृताः स्वमलशालिना ।
ताजचक्रादयोवीराभ्रातरोलोहरादिषु । आहवे मुग्गुलान् हत्वा चक्रुः स्वं सफलं वयः ।
दुश्चेष्टिते विचिन्त्यात्र युवराजस्य चक्रपः । खानमेस्कन्दरं तं स हरोधाजगरमिव ।
तादृक्साहसिकं वीक्ष्य चक्रेशं भूमिपोऽनयत् । चतुर्थेऽब्दे शुचौ मासे काश्मीरास्तं दिगन्तरात् ।
पिता भ्रातायवा पुत्रोराज्ञां राज्यजिहीर्षया । शत्रुः कथितालोके किं करोत्यपरोरिपुः ।
इत्थं विदितभूपालचरिताश्वपासतः । ससैन्याः प्रययुर्वाह्यदेशं कीचाश्रमाध्वना ।
शत्रुश्येनं समादाय शान्ते चक्रिपतौ नृपः । राज्यं निष्कण्टकं मेने परितोषमुपाययौ ।
खानस्कन्दरोराजभृत्यैर्नीतोनृपालयं । अपुनर्दर्शनाः कुर्वन् श्यामानेत्रोत्पलैर्दिशः ।
नृपादेशादथ क्रूरानेत्रोत्पाटनमञ्जसा । श्येनादिव कुरङ्गाय व्यधूराजात्मजाय ते ।
व्यधूराजतनूजाय कुरङ्गायेव सारसाः । तत्क्षणे या व्यथा तेन प्राप्ता वक्तुं न पार्यते ।
तं विना ह्यपनिर्दैन्यांस्तान् क्रूरान् राजसेवकान् । पित्रोः शापेनु फलितोधनलुब्धस्य तस्य वा ।
शाक्याकृत्या अमासीनानश्वेशांश्चक्रिराट् ततः । गत्वा वराहमूलान्ताच्छीनगर्यां न्यवीविशत् ।
पारावारात् समागत्य तत्रान्योन्यबलद्वयं । व्यधाज्जनवधं घोरं जयाजयपरीक्षया ।
गिरीनुल्लङ्घ्य यातोऽथ चक्रिभ्रातृसुतो निशि । मलेकैदाततोमार्गेपशान्देशान्न्यवारयत् ।
इषमर्थोऽध्वना यातुं सेयामेरोऽश्वपायणीः । मार्गे पञ्चलमायाताश्चलिताः केऽपि सायुधाः ।
अदाश्वपेषु मष्टेषु यातेष्वेवं बहिर्भयात् । स महम्मदशाहोऽगान्नगरं चक्रिभिर्वृतः ।
धत्ते मुदं जडमतिः शमितारिविक्रियस्तावदुदेति नियतापदिपमोऽस्मिरस्य ।
रुद्धोदयादनुपतिः स्वसुतादवाप साम्राज्यभङ्गमहहो घटना विधातुः ।
तथाहि भूभुजानेन गजाधीशनिवेशने । पुत्तरभ्राद्दिमाखानोनाविन्दत्साभरत्पुरा ।
तुरुष्काहवगतेन विधूता शतधा चमूः । याता तत्क्षीवरक्षौघयुता नौरिव सागरे ।
नराहवधाम्मुक्ताभाविराज्यादयात्ततः । खानः स प्राप कश्मीरान् पितृखेदविवर्द्धितः ।
प्रादुर्बभूव राजानं प्रति राज्यजिहीर्षया । अस्मिन्नवसरे चक्रपतेर्दुष्टविपूषिका ।
राजान्तरङ्गाथेर्श्वाद्दुष्टरोगान् भिषगिव । मलेकहद्भट्टादीन् कारागारे न्यपातयत् ।

ताजचक्रालये वद्धश्चाले मेरोनिजानुगैः। विमुच्य रचिणोराचौ नीत्वा चित्तोदिगन्तरं।
तदेपश्यादिवाग्दोषोपरागादाष्टगोत् क्रुधा। मह्मादशाहमानुत्तं चकराक्रमिनैर्दिनैः।
इत्यमेकादशाब्दान् स दश मासान्दिनानि च। रचित्वा काश्यपीं राजा मह्मादश्चलितोऽभवत्।
धर्म्मः फलति कालेन सद्यः पाकोहि सोऽभवत्। खानखान्ध्याह्वया याभूद्राज्यभ्रंशान्नृपस्य सा।
गगोडाख्य खशस्थानं प्रहितोऽथ स चक्रिणा। दत्वा न्यायकखव्यादीन् क्रूरान् रचिजनान्निजान्।
॥ इति महम्मदशाहराज्यभ्रंशः ॥

जगत्सृष्टिस्थितिध्वंसहेतवे वृषकेतवे। भवाब्धिसेतवे ब्रह्मविष्णुरुद्रात्मने नमः।
अथ काञ्चनचक्रेण पुत्रान्मह्मदभूभुजः। एभ्राहमशाहइत्याख्यां कृत्वा राज्येऽभ्यषिच्यत।
स्वमन्त्रिपदवीं दीप्तां चक्रे चक्रेश्वरस्ततः। स्वीकृत्य राज्यतन्त्राणि द्रङ्गाग्रुल्कोड्वर्धनैः।
नानामदमुखैरार्द्यै राजयोग्यैर्न्ययोजयत्। अनुजांस्ताजचक्रेशमैयामिरादिकान् स्वकान्।
वाह्ये चाब्दालमार्गेशोदिल्लीपं मुग्गुलेश्वरं। सेवां मार्गयितुं मेर्जवाभारं प्रययौ रुषा।
आकारेङ्गितवाक्चेष्टासम्पूर्णं वीक्ष्य मार्गपं। चणं तुरुष्कराजोऽभूद्विस्मयानतकन्धरः।
तुरुष्कभूपेन ततोज्ञात्वा मन्त्रिवरस्य तं। महस्रमह्या वीराणां सेनास्मै प्रतिपादिता।
इत्थं प्रहृष्टां वार्त्तान्तां देशे पञ्चमहायेन। वैशाखे श्रुतवांश्चक्रपतिर्व्विक्रमशोभितः।
स्वाःक्रीडामिव कुर्व्वन्तु भूमौ चक्रिषु मार्गपाः। मलिकाब्दालनुहरमार्गेशाद्यामहारयाः।
गिरीनुमह्य वाह्नेवात् कश्मीरान्त्रिविरुद्धंतं। सिखालभेगमह्मादखानादिमुग्गुलैर्वृताः।
फनाहशाहजं खानं नाजीकश्चाग्रयायिनं। कृत्वा निविष्टाः सन्नद्धाः प्रतापपुरधन्वनि।
श्रुत्वैतच्चक्रपः सेनां नीत्वाश्वे स्वां न्यवीविशत्। सैन्यद्वयोद्धतावीराः स्वामिभक्तिमदर्शयन्।
विपक्षपक्षिभिश्छन्ने स्वेच्छसैन्यविहायसि। विहाय कम्पदं यातुं नाशकुन् सपक्षिभिः।
ततश्चक्रपतिं दूतः प्राह मार्गेशवाचिकं। भोभोश्चक्रपते वाह्ये सामन्ताः करदायिनः।
हतायेन स्ववीर्य्येण सवैः पञ्चभिरावृतः। हतोगजपतिः श्रीमानेभ्राहिमोवलोत्कटः।
तस्य मेरेजवाभोरराजन्यानुचराइमे। मया नीताः सहायार्थं सन्नद्धोऽस्तु भवान् रणे।
इत्युक्ते लेखहारेण चक्रेशोऽन्यवदद्मुं। दिल्ली न देशः काश्मीराः प्रतिष्ठाना वयं न ते।
फलपाकोमतोदेशान्मुग्गुलानां महोजसां।
अथ वीरामहोजस्कामहावीर्य्याधनुर्धराः। एभ्राहमखानभेरङ्गमेरमसेकताजकाः।
तथा मार्गेशपश्चान्तु मलिकनुहरादयः। रिगचक्रेशमसेकोषेच्छाशिखिभिगादयः।
कुरुपाण्डवसैन्यस्य युद्धं व्यक्तुमिवोद्यताः। निर्य्ययुः समरं वीराः स्ववाक्यतदर्पिताः।
रिगचक्रेशवीरेण शक्तिः क्षिप्ता च वैरिषु। प्रक्षत्ताद्भुतवीरेण ताजमेरेण सत्वरं।
मेरमेरङ्गदक्रेण प्रहिता करवालिका। रिपोर्नुहरमेरस्य याता पुष्पचनापनां।
एवं प्रवीरैरन्योन्यं प्रकीर्य्य समरम्बरं। स्ववीर्य्यंस्थगनाभ्युपल्लीगन्ध्याकुलितं कृतं।

ततः स्वसैन्यैः सेनान्तस्ताजचक्रेश उद्ययौ । वातोद्धूतपताकाभिस्तर्जयन्निव वैरिणः ।
रणः प्रववृते तत्र चक्रमार्गेशसैन्ययोः । आगच्छ जहि तिष्ठेति शब्दोऽभूद्भटसङ्क्षये ।
समरोद्धतमेत्य ताजचक्रमवदच्छूहरमार्गपस्तमेत्य ।
कुरु युद्धं किमतः परं किमन्यन्ननु जैः स्वामिदशासु साध्यते तत् ।
तन्निशम्य चिरं युद्ध्वा वीरैर्मल्लिकताजकः । शिश्रिये वीरशयनं नाकनारीविराजितं ।
कीर्त्तिशेषं गते तस्मिन् परे चक्रिसहोदराः । सैव्यामल्लेकसेरङ्गसेराद्यामुग्गुलैर्युताः ।
स्वसैन्यं निहतं दृष्ट्वा चक्रेशोऽल्पबलान्वित । खशालयं ययौ भीत्या शोकेन च समाकुलः ।
अथ मार्गेश्वराजित्वा मल्लिकाब्दालकादयः । विविशुर्नगरं लोकानाश्वासन्तोभयाकुलान् ।
गत्वा नृपाङ्गने सर्व्वे छत्रचामरशोभितं । प्रददू राज्यतिलकमब्धेशाराजसूनवे ।
अथ नाजीकशाहेन पित्र्ये सिंहासने श्रिते । प्रहर्षाकुलिता उच्चावचाः सर्व्वेऽभवंस्तदा ।
गता जमालमरुगां सनृपास्तेऽथ मन्त्रिणः । मल्लिकाब्दालकस्यांश आलेमेरस्य चापरः ।
मार्गेशलुहरस्यांशो रिगचक्रस्य चापरः । विभक्ताऽर्थे चतुर्भागैस्तैश्चतुर्भिरिहत्यभूः ।
खशालयस्थं चक्रेशं विसृष्टैस्तैर्महात्मभिः । लेखहारस्तमाह स्म मार्गेशमुखवाचिकं ।
भोभोश्चक्रपते स्वामिभक्तिज्योत्स्ना भवादृशैः । दुर्मन्त्रिभिरमात्यानां विमला मलिनीकृता ।
यस्य बालस्य साम्राज्ये राज्यकार्य्येषु मन्त्रिणः । वद्धाञ्जलयएवासन् स रुद्धोभवता कथं ।
रवेरावरणं मूढः कुण्डेन विदधाति कः । इत्थं दूतमुखाच्छ्रुत्वा मुमोच नृपतिं लसैः ।
ततोमल्लदशाहः स गत्वा लोहरमासदत् । पूर्व्वोर्व्वीशवद्रङ्गाशुल्काद्यमपि चाग्रहीत् ।
नीतिज्ञोमन्त्रयित्वाथ मार्गेशैर्मुग्गुलांस्ततः । विसर्जयामास नृपः संमान्यैतान् स्वकम्पदं ।
उल्लङ्घ्य लोहरं प्रापुस्तुरुष्काः स्वनिवेशनं । मल्लादशाहं संलेभे आलेमेरश्चिरं प्रभुं ।
हेमन्तमतिवाह्याथ वसन्तमिव तं नृपं । कश्मीरोपवने भेरामार्गेशानुमतोनयन् ।
राज्यं कृत्वाथ वर्षैकं दशम्यां नाजिकोनृपः । ज्येष्ठशुक्ले नृपात् प्राप यौवराज्यं महम्मदात् ।
पंचेऽब्दे मल्लदः शाहोऽभिषिक्तः सचिवैः शुचौ । राज्ये खशालयान्मुक्तोभूयोजातद्रवाद्भुतः ।
दिवं भेरेजनाभारः स प्रयातः स्वपुत्त्रयोः । दत्वा स्वविभवं कामराणहोमायवोस्तदा ।
सप्तमेऽब्देऽश्वपे. सार्द्धं युद्धेच्छुः काचचक्रपः । भीर्व्वारयामादगमत् ससैन्योऽथ दिगन्तरं ।
याति चक्रपतौ वीरे ततः पश्चिमदिग्वधूः । रतिहेतुरुषा केतुं मूर्ध्नि नियमधार्थ्यत ।
तदर्थे कार्त्तिके शुक्ले मल्लामाख्यश्च भूपतिः । मेरेजकामराणस्य कश्मीरान् जेतुमाययौ ।
शिवाभिगमल्लादस्वानादिमुग्गुलैः सह । कुर्व्वन् दश दिशः पूर्णा गर्जितैः सपैर्वलैः ।
श्रुत्वा मल्लदशाहाद्याश्चक्रेशं शीघ्रमानयन् । साहायकार्थमब्धेशेराद्धोपकृतार्णवं ।
सहशैरम्बराणां सेच्छानगरमाविशन् । काश्मीरिकाश्च दुर्गेषु स्ववलानि न्यवीविशुः ।
भयात् पौरजने याते गिरिगह्वरवर्त्मसु । वीरेषु सैन्यनाशङ्क्यात् प्रनष्टेषु स तत्र तु ।

शून्यं पुरवरं दृष्ट्वा मुग्गुलास्ते क्रुधादहन्। गृहाणि राजधानीञ्च कुदरदीनविलुण्ठकाः।
दुर्गेभ्योनिर्गतावीरास्तुरुष्कैराहवेच्छया। स्वेच्छया प्राणसर्व्वस्वं विक्रीय यशआददुः।
ग्रामेषु नगरे राज्ये तुरुष्कैर्निष्कृपैर्हताः। सहस्रसङ्ख्यालोकानां लुलुच्यवधकारिभिः।
ततः काश्मीरिकैर्वीरैर्मार्गेशैश्चक्रिभिश्च ते। शकांशुभिस्तमांसीव सन्ध्यापासितादृताः।
॥ इति तुरुष्कोपद्रवः ॥
मुक्तास्ते साहसाद्वीराः स्वगृहेषु स्थितिं व्यधुः। मार्गेशानादरत्रस्तः काचचक्रीवधिर्य्ययौ।
वर्षेऽष्टमे शुचौ शूरपुरात् सोऽप्याययौ पुनः। शल्यं प्रतिहतं ज्ञात्वा वाह्यं यातो यथागतं।
मार्गमासेऽत्र शरदि कास्कारीयाश्चमूचराः। मेराजहैदराद्याः श्रीसेदखानमहीभृतः।
हयारोहसहस्रैर्द्वादशभिः परिवारिताः। काश्मीरानायर्युर्मेतुं श्येनाइव विहङ्गमान्।
कोटाङ्गणर्गिर्य्यन्तश्चागच्छन्तो नृपालयं। प्रविशन्तोभवन्तीत्यं श्रुत्वा हन्तोविपेदिरे।
तुरुष्कोपप्लवात्लोकैः कास्कारोपद्रवोमहान्। श्रूयाथि सूर्य्यग्रहणं चन्द्रग्रासादिर्मिय्यते।
चलिते सकले जीवलोके वेश्मावलिस्ततः। शरराशिरिवोच्छ्रायशून्याभूद्भयदायिनी।
तस्यां दाहक्रियां कर्त्तुं नीमवक्रिप्रदायकाः। सेकन्धरमहाराजधानीं रम्यामतेजयन्।
नीचावचगृहैर्लब्धसंस्थैर्दग्धैः पुरोर्व्वरा। जाता श्मशानभूवत् सा दग्धकाष्ठभयङ्करा।
राजधानीदृयं तादृक् लभ्यते कुत्र भूमिपैः। सुधादार्व्विष्टकाचित्रैः कोटिसङ्ख्या व्ययीकृता
श्रीजैननगरे दिद्दामठे चाग्निं विना कृतं। राजधानीद्वयं भूम्नस्तुकृतमिव तत् स्थितं।
वेतालसाधनायुक्ताइवासन् मुग्गुलाधुनं। लब्धं यत्तद्धनिहितं गुप्तं पौरधनं तु यैः।
जलावरणयुक्तासु भूपभूमिषु शिश्रियुः। काश्मीरिकाश्चमूनाथाश्चाश्रयान् स्वेच्छयाद्दया।
चिरोऽशारश्च हाज्येऽङ्गकोट्टं चक्रधरं तथा। श्रुत्वाभ्यवाहयन् मासत्रयं स्वैक्यैः प्रयुध्य ते।
दैन्यरूपेण खःशेन स्थितांश्चक्रधरान्तिके। काशीरिकान् प्रति कृतं युद्धं निष्फलमभ्यगात्।
वन्ध्यमप्यभवद्युद्धं कृतं काश्मीरिकान् प्रति॥ इति वा पाठः ॥ ;
खिलीकृतास्तुरुष्कैस्ता भुवोमडवराज्यगाः। हत्वा फलसमृद्धिं तां हत्वा ग्राम्यजनान् क्रुधा।
ये याता नीषु तीर्त्वा संखयाश्मराजिभूमिषु। सवालदृद्धाः सुखिनः स्वायुःशेषेण रक्षिताः।
लुलुच्योपप्लवे पूर्व्वं तथा कज्जलमङ्गरे। क्षोभोऽभूत्तादृशे देशे कुकृत्यात् पापिनां त्रिशां।

चक्राधारादेत्य भूपेन्द्रयुक्ता भीमादेवीसन्निधौ सन्निवेशं।
चक्रुस्तीर्त्वा लेदरीवामपारं चेक्राद्यामार्गपाश्चाहवाय।

खानरस्कन्दरोमेर्जाहैदरोऽन्ये महारथाः। काश्मीरिकान् प्रति ययुः सन्नद्धास्तत्र संयुगे।
मार्त्तण्डपादमूले तत्राहेशुर्व्वलदयाप्राणान्। मलेकाजकहोसनमेरमिखालाः क्रमात्तमेत्य।
कास्कारीयाः प्रवीराश्च केचिद्युद्धा दिवं ययुः। सफलं स्वजयः कृत्वा मलेकाद्यादिभीरणे।

रे मूढाः कुरुत सदैव देवसेवां तान् सर्व्वान् भवविभवान् विहाय लोलान्।
दृष्ट्वा तन्मरणमथालिमेरनाम्न. सङ्ग्रामे मुगुलवरैर्हि देशहेतोः।
विदुरोपमिते तस्मिन्निहते दुद्रुवुर्भटाः। काश्मीरिकाः कृताश्वासाश्चक्रेशाध्वेशनायकैः। १३५
कबन्धनर्त्तकायत्तनरा वेतालराक्षसाः। महामांसाशनव्यग्राजन्यव्यापाद्रवाहवे।
रणोद्याने वीरपानमदोन्मत्तेषु तेष्वथ। हतशिष्टे चमूयुग्मे स्वाश्रयेषु न्यविक्षत।
अथ चक्रेशमार्गेशौ नृपादेशात् समेत्य तैः। मुगुलैः सह सन्धानमकार्ष्टां पौरुषोर्जितौ।
नवषङ्ग्रानि वस्त्राणि कतिकषोडशलतैः। तोक्तं तद्भाषयादाय मुगुलाभूपतेः पुरा।
नृपमुद्राङ्कितं पत्रं गृहीत्वा मौसुवाचरैः। प्रत्यायाताः स्वसैन्ये तत्कुर्व्वन्तो हर्षनिर्भरं। १४०
धाटीभिः पामरानीताः स्त्रीपुमान्पुष्पदन्तिकात्। मुक्ता हसनमेराद्यैरानीताः करुणापरैः।
ततोऽब्दे नवमे ज्यैष्ठे स्वदेशं मुगुला ययुः। बलात् पौरश्रियं साम्रादाय राजसुतामपि।
इत्थं स्तीसरोदेशे पीडाभूत् पापिनां विशां। पूर्व्वपश्चिमतः केतोरनिशन्दिवि दर्शनात्।
॥ इति कास्कारीयोपद्रवः ॥
पक्वशालिवरस्फातिपूर्णक्षेत्रेषु सर्व्वतः। नभसस्तारकाः पेतुर्भूयः केतुरदृश्यत।
सस्यद्विगीर्णेऽन्नराजे तदुपद्रवराक्षसा। उदजृम्भन्महाघोरो दुर्भिक्षोऽन्नपतेरिपुः। १४५
निविष्टे मण्डलेऽमुष्मिंस्तस्तत्सैनिकास्ततः। क्षुत्पिपासादयोलोकपीडकाबलवत्तराः।
सहस्रदशभिर्निष्कैर्लभ्या मूल्येन खार्य्यभूत्। धान्यस्य गतिमादातुं कान्यस्य धनिनो विना।
भर्तृभक्तिं सुतस्नेहं शुश्रूषां पित्रोरेव च। हित्वा स्वप्राणरक्षार्थे चेरुः स्त्रीपुरुषाः क्षुधा।
भुक्त्वा द्वित्रिचतुर्व्वारं क्षुधार्त्ता दिवसान्तरे। अटन्तः प्रेतरूपाहि दृष्ट्वा भोजनवाञ्छया।
तत्कालेऽब्दालमस्केरादयः पुण्यरता हि ते। प्रत्यहं तण्डुलशतैः पक्वान्नैः पुपुषुर्जनं। १५०
ग्रामेषु नगरे राजमार्गेषु गणनास्तु न। क्षुत्पिपासाप्रमीतानां प्रेतानामिव देहिनां।
भक्षितं रूप्यकुप्यादि विक्रीय व्यधुरात्मनः। प्राणसन्धारणं केचिच्छाकेनाचोटपिष्टकैः।
उपद्रवभयादेष दुर्भिक्षोपप्लवो महान्। गलनेत्रामयाद्दुष्टविस्फोटोद्घातिदुःसहः।
ज्यैष्ठान्तं दशमाब्दस्य नवमाद्वत्सराकृशं। घोरे दुर्भिक्षतमसि परितः क्रान्तमण्डले।
गुप्तिवीजोद्भवस्नेहधूपैर्दीपैः प्रकाशयन्। श्रीमा अन्ननृपामात्यः सुकालोयोद्भमाश्रयौ। १५५
यथा गोधूमकलटा उद्ययुस्तम्भजा भुवः। कुर्व्वन्तः स्वफलैः शेषजन्तोरारात्रिकामिव।
स्वबलैर्भ्रमाक्रान्तमवेक्ष्याश्वाधिपः स्वयं। भावयो बलिनं केतुं दुर्भिक्षं घोरराक्षसं।
वितत्य महतीं सेनां प्रियङ्गुशालिकोद्रवैः। यम्बानाभिरिवाचोटैर्जित्वा तं स न्यविक्षत।
॥ इति दुर्भिक्षोपद्रवः ॥
भवराजफलैः पुष्टाजन्तवोऽतिकृशास्ततः। पुनर्जातमिवात्मानममन्यन्त दिवानिशं।
तदा काश्यपक्षेमः स्थितिं जमपुरे व्यधात्। भल्लिलमध्यपादेशाद्राक्षोऽभ्यर्णे विभूषयन्। १६०

श्वपचाकारकश्चकपतिर्मडवराज्यगः। भूमीरदण्डयन्मार्गपाणां नाटस्थनोचणात्।
अत्रान्तरे महान्देशो देहादुष्टैरिवामयैः। खञ्जावामाश्रयैरेतैः पोडया जर्जरीकृतः।
तदुत्यपापमन्तापाच्चैवान्तेऽब्दे त्रयोदशे। राजा महम्मदशाहोऽभूदस्वस्थो नियतेर्बलात्।
कान्तं देहं रुजाक्रान्तं श्रान्तं वीक्ष्य च भूमिपः। मलिकतद्दभट्टाख्यं सखेदं प्राह मन्त्रिणं।
राजधर्माङ्कितैः पुण्यपापैः सम्वाङ्कितोऽपि सन्। तथापि कायः शापायदति मस्यैव निश्चयः।
अस्मद्वंशे महीपालाः शंसदेनादयो नृपाः। श्रीजैनोल्लाभदेनश्चापि ते पूर्वपितामहाः।
तद्वंश्योऽहं मदीयः कः कीदृशोमत्परो भवेत्। इति चिन्ताकुलं चेतो ज्वरेणाद्यापि दह्यते।
इत्युक्त्वा विरते राज्ञि मार्गशाह्वादलकादयः। आगतास्तादृशं वीक्ष्य सास्रमेवास्त्रमब्रुवन्।
भूपास्मदपचारेण प्रजाभाग्यैरथापि ते। कायक्लेशोऽस्ति स्वस्यैव दण्डो भूत्यापराधजः।
श्रुत्वाब्रवीन्नृपस्तेषां वचोमत्तनयाः सदा। भवद्भिः पालनीयाश्च वयं यामः परात्मनि।
आक्रन्दोऽभून्महाराजगृहे श्रुत्वा नृपोदितं। तदह्नि निष्कोशश्च राज्ञा धर्मेण येजिताः।
प्राप्ते पुष्याकरे मासे व्ययार्त्तस्यास्य भूभुजः। दातुर्जातु विपत्तिः स्यात् कृष्णपक्षे कथञ्चन।
ज्येष्ठशुक्लादिदिवसे गुरुवारे नरार्यमा। वर्षान् पञ्च कृतो भूयो राज्यं कृत्वास्तमाययौ।
तस्मिन् याते दिवं लोकः सशोको विललाप तं। हा कं श्रयाम भवति नाकलोकमुपस्थिते।
अस्मान् को नृपते हस्तात्त्वां विना पालयिष्यति। स्मराद्भुसुन्दराकार महासेनपराक्रम।
महम्मद महीपाल सर्वो हित्वा क यास्यसि। इति सन्तापमुखरे राजद्वारे स्थिताजनाः।
संस्थितस्य नृपस्यादुर्वाष्पैरिव जलाञ्जलीन्। कर्णीरथमथारोप्य शवं हृदम्भृताजिरे।
दत्तस्कन्धाः पितुः पार्श्वे गोगर्त्ते मन्त्रिणोऽक्षिपन्। केन्दुकामनश्यामासु नृपार्हे शयनं प्रभोः।
क शर्करिलभून्यन्तस्तेभान्ये विवर्त्स्थितिः। तदह्नि शोकमूकस्य लोकस्योच्छ्वासनात्परं।
धूमादि रन्धनाभावात्तज्ज्वलन गृहेषु तत्।

॥ इति महम्मदशाहस्वर्यानं ॥

मार्गशेन कृतासंसः समग्रंशोऽस्य मन्त्रिभिः। शंसशाहोऽयमित्याख्यां कृत्वा पुत्रोऽभ्यषिच्यत।
नवराज्योर्जितं चैतं युवानं वीक्ष्य भूमिपं। महान्तः पामगाः सर्वे तुतुषुर्गजरङ्गभाः।
चिरं स्वे पैतृके राज्ये स्थायादिति जनाशिषः। शृण्वन् राजगृहं प्राप शंसशाहः महानुजः।
तस्मिन् राज्यस्थिते जैनपुरान्नगरमाययौ। काचचक्रमतो रिगदकाद्वद्दोमहाबलः।
दृष्ट्वा वीरं नमायान्तमुक्षभट्टान्वितस्ततः। मार्गशेशस्तु नः सायात् कोशाग्रमेऽध्वशान्तिकं।
प्रविष्टोनगरं रम्यं काचचक्रः सभाजितः। नृपेण तेन सस्नेहं परपक्षविमर्दनः।
तथा काश्चनचक्रेण ज्ञात्वा दूरगतान् रिपून्। सबलोगर्धमाङ्गारे निविष्टोऽरिजिगीषया।
अत्यन्तिकस्थं बलिनं रिपुमाकर्ण्य मार्गपाः। चमूं निवेशयामासुश्छत्रं जनगदान्तिके।
महात्मा रिगचक्रेशः काचचक्राश्वपेशयोः। गत्वा प्रेरितदूतः स साम कर्त्तुमयैष्टशान्।

नगरे काचचक्रेशः क्रमराज्ये तु मार्गपाः। मन्तु सोऽहं समक्षेपामिति सन्धिं व्यधादयं।
अथ मार्गेशसैन्यस्थानानीयान्तिकमात्मनः। जैतचक्रेशमल्लेकदौलतैश्राह्मखानकान्। ३९०
खवन्धून् काचचक्रेश आरुरोह जयी पुरं। निवासमकरोद्दीरो रिगचक्रालयेषु सः।
काचचक्रे स्थिते राज्ञोऽन्तिके निर्णयकारिणि। बलं बलवतां दृष्टं शौर्य्येण तु पृथग्जने।
आगत्य रिगचक्रेश, काचचक्रान्तिकं तदा। दिनान्युषित्वा शालास्य खल्पप्रेमागमत्पुनः।
मार्गेशनिकटं गत्वावोचचक्रेशचेष्टितं। सम्मन्त्र्य वीरान् सर्व्वांस्तान् सङ्घट्य नृपाग्रगान्।
रिगचक्रः स मार्गेशं ज्ञात्वा दुष्टमिवामयं।

कश्मीरभूमौ प्रथिता अमात्याभीमार्ज्जुनद्रोणसमारणेषु।
मल्लिकश्रीदौलतगाजखानचक्रेशमुख्याश्च विचारदक्षाः। ३९५

सिद्धादेशात् प्रसिद्धस्य सिद्धादेशाधिकारिणः। श्रीमन्मल्लिकराजानतुज्यकस्य मुखाद्यथा।
विज्ञाप्यन्तेऽत्रदेशीयैः कान्दिशीकैर्बलातुरैः। सर्व्वैर्जनपदैर्दीनैर्दुरातङ्ककलङ्कितैः।
॥ तथाहि ॥ जैनशाहे दिवं याते दुर्ब्बलाबलवत्तरैः। पीडिताः कान्दिशीकाश्च जनादुर्दण्डतोगताः
श्रीभैकडामरेन्द्रेण नृपामात्येन पालिता। लालिताथ प्रजा नित्यं दुर्थ्यवस्थानिवारणात्।
पुण्यपापपरीपाकान्मन्त्रिभिरन्तरन्तरात्। पोषिताः शोषितालोकाः सद्विचाराविवेकतः। ४००
भानुरिव ततश्चक्रपतिर्मल्लिककाञ्चनः। उदेत्य मन्त्रिवीथी तां नृपादेशादभूषयत्।
विचारनिरतेऽमुष्मिन्नासीने राजमन्दिरे। बलं बलवतां दृष्टं शौर्य्येण तु पृथग्जने।
वैमत्यान्महतां पापादिशाश्च ततउत्थिताः। मुग्गुलान्मकदुर्भिक्षदोषास्तस्मिन् बहिर्गते।
मार्गेशाब्दालकानीतामेरेजोऽगणयन्ततः। अप्राप्तानिव प्राप्तः स कश्मीरांश्चक्रिणोभयात्।
काचचक्रेशमल्लिके हिन्दुवाटे गते दिवं। काश्मीरिकाणां वाह्यानामभूत् कलुषितं मनः। ४०५
तदाकर्ण्याथ मेरेजहैधरोऽचीकरन्महान्। कुलागतमिव स्वस्यं तदा कश्मीरमण्डलं।
चक्रेशेऽन्तर्हिते भूमौ मुग्गुलादैत्यरूपिणः। विचेरुः शारदापीठे निःशङ्कमकुतोभयाः।
मेरेजमग्गुगोलस्य कश्मीरस्थस्य चान्तिकं। आययुः परदेशेभ्योमुग्गुलाः खरधाइव।
मलेषु वर्द्धमानेषु तेषु यातीं तवाधिका। लोचप्रतियवोपात्ता भर्त्सिता तैर्न्निर्योगिभिः।
दिवानैर्षिकसद्धैर्मैर्लिखिता मुग्गुलाधरैः। भूमिः समयराज्ञाणां चलाय्याय प्रजाखपि। ४१०
इत्येव भूर्नभोमासि माध्वीवाय व्यकल्पत। द्वाविंशेऽब्दे जनाक्रोशान् हताय्यायानवेद्य सा।
प्रनष्टमुग्गुले देशे भूमीकुरस्विन्नोजनः। काश्मीरिकाणां विजयाद्रूयोऽभूदर्थनिश्चया।
तुरुष्कमाहवर्धान्ते काश्मीरामाग्रमंगलयं। वेशोभूमिर्भोजनस्य चिकित्सादण्डमहतं।
दृष्ट्वा शुभोऽपि लोकोऽयं मामुपद्रुदयाहतां। दुर्व्वमनां महावैद्याश्चिकित्सां शास्त्रगामिव।
दुराचारादियं भूमिर्वायुप्राप्तेव भूरिशः। चित्रोऽब्दे वायुप्रामे कम्पिता स्वामिनोमुज्ञः। ४१५
स्वतन्त्राणात्पश्चैदामामुक्ते लोचप्रतियक्षे। मोहाद्यतिचिथरस्काराद्दहोधर्म्मेण शाम्यति।

खुञ्चहाज्यकयोसोफचक्राद्यैर्मुगुलान्वितैः। साम राजपुरीराजा गाजशाहभयात् क्षतं।
नौशहारस्थिते शाहनाजोके मुगुलास्तथा। जङ्गले सन्धिबन्धेन कालं दुर्गादिकर्म्मभिः।
विसृष्टो गाजभूभर्त्ता दूतेभो मुखबाचिकं। करबाङ्गधरादीनां शाह गत्वा सभान्तरं।
भोभो म्लेच्छपते कस्मादकस्मात् प्रबलैर्बलैः। आयाताः केन विश्वस्ता अज्ञातनृपविक्रमाः।
अथवा भाक्तनी शैले शाहियुद्धं नु विस्मृतं। बलद्वयवधात् पापं युष्माकं परिणंस्यति।
यदि शक्ति. किमेतैः स्याद्दुर्गग्रन्थ्यादिकर्म्मभिः। विधिर्द्ददाति यद्यस्य स तत्फलमवाप्नुते।
चक्रिराजानकाद्यावास्थिताश्चेशहराद्दूतः। देशाः के मुगुलाः के वा खुञ्चहाज्योभविष्यति।
इत्युक्तो लिखहारेण खुञ्चहाज्योऽब्रवीदिदं। शासनमकुराख्यानं मुग्गुलेशस्य वश्म्यहं।
चक्रेशभूपं दातारं गुणज्ञं धन्विनां वरं। विचारे नौशरोवानं कया स्तुत्या स्तुवीमहे।
काश्मीरिकाणां देशांशान् म्लेच्छानां पारितोषिकं। दत्त्वा मुग्गुलराजस्य चेतःशुद्धिर्व्विधीयतां।
अथवा देशधाटीभिः किं स्यात्प्राकृतमेतया। युद्धेन वीरहानिः स्याज्ज्ञाता सर्व्वस्य भूमिपः।
दृष्टाः श्रुताः स्मृतानेव गाजशाहस्य सन्निभाः। योद्धुं दिगन्तरं कोनु यातएतत्परः समः।
दूतात् प्रत्यागताच्छ्रुत्वा क्रोधविस्मयवान्नृप.। आरूढोऽद्रितुङ्गाश्च समारूढोमहद्यशः।
श्रीमच्छृङ्गारमसेकआपेमसेकइत्यपि। खानअह्मदयोसोफएभशाहादयः सुताः।
खानः स शाहिभाजोऽपि हृतशान्त्यैश्च मन्त्रिभि.। स्वस्वसैन्यसमुन्नद्धैः कश्मीरेन्द्रविभूषितः।
सहस्रैरश्ववाराणां वाजिभिर्व्विगराजिभि। शार्ङ्गखड्गगदाप्रासशक्तितोमरभूषितै.।
नागरअगतोफाकनामाश्मरअगायुधैः। पदातिभिर्द्धैः सन्नद्धैः शत्रुसेनान्तिकेऽवसत्।
अन्तिकादन्तिकं व्यूढे निविष्टे सैन्ययोर्द्वये। पारावारगतायोधारणरङ्गमभूषयन्।
हासदुन्दुभिनादेन कर्णतालैश्च हेषकैः। गजाश्वानामश्मरअगर्जैनैस्तर्जयन्निव।
अथ पत्तिसहस्रेण पुरोगेन प्रभूषितः। प्रवीरो गाजशाहोऽत्र समरारम्भमग्रहीत्।
दृष्ट्वा वीरं तमायान्तं केचिन्मुग्गुलपुङ्गवाः। मनःधैर्यन्यमादाय शनैर्युद्धाय निर्ययुः।
नृपाये म्लेच्छवीराणां स्वामिभक्त्या पुरोगताः। मुण्डानि चिच्छिदुर्युद्धे शराकानिव चक्रत.।
रणे रैभतणामेन प्राणदानेन तत्क्षणं। विवाहोऽजनि स्वर्स्त्रीणां पद्मवाणेन योषितां।
वीरमतं पुरोगामामाहुतस्य तपः प्रभोः। विचिन्त्य मुगुलाधिनुर्द्धतभेपायथागतं।
स्वमाणवेतैर्येश्रद्धापरोऽन्यत्रहारिणः। विजित्य कीर्त्युपपथं स्वयांतसादनदयात्।
पक्षीनामद्भुतं सौर्य्यं वीक्ष्य चेष्यवनान्तरात्। धात्वाशं हृत्यकुप्यादि मद्राक्षामुपश्चीहतं।
स्वसैन्यापथं प्रथमेनोपथथमेव च। विचिन्त्य मुगुला याता वाणिजा इव वेतने।
अथ राजपुरीराजा पापापङ्काम् वन्दायित.। हस्ता प्रत्यायथो गाजशाहः पुविश्वोर्जितः।
नित्यसेना दिवं दिवा राजम् पापाश्चरीवितः। रत्नाश्रिवाजमाच्छृताम् काश्मीरामानृपोऽत्रिसत्।
वेदैः षट्शास्त्रैः पदक्रमश्रुतैर्वेदाङ्गविद्याभिस्तर्कव्याकरणैः पुराणपठनैर्मन्त्रैः पञ्चागमैः।

शैवैर्वैष्णवसौरबौद्धमहितैश्चित्रैर्विहारैर्मठैर्द्राक्षाकुङ्कुमशस्यशालिनिवहैः पुष्पैः सुगन्धैरपि ।
पौराणश्रुतितर्कशास्त्रनिचयैः क्रियाग्निहोत्राङ्कितैर्विप्रैर्ध्याननतपोजपादिनिरतैः स्नानार्चनाद्युत्सुकैः ।
नागैः कोटियुतैस्तथा हरिहरैर्गन्धर्व्वविद्याधरैः स्वर्गस्थामृतखण्डशीतलजला कश्मीरभूरुत्तमा ।
चत्वारिंशद्यथापि पञ्च गिरिशाः षष्टिश्च चक्रायुधा ब्रह्माणस्त्रयरत्यनादिनिधनाद्याविंशतिः शक्तयः ।
नीलादीनि शतानि सप्त फणिनां तीर्थैकसार्द्धकोटयोविख्यातास्य चतुर्दशोत्तमतरा: कश्मीरभूमण्डले ।
अष्टादश चमूभर्त्ता योऽभवद्धस्तिनापुरे । वीरोयुधिष्ठिरभ्राता भ्राता धुर्य्यद्दार्ज्जुनः ।
स दिग्विजयरागेण भुवं जित्वाखिलामिमां । पातालमविशद्वीरश्मनखण्डनशङ्कितः । ४७५
तत्र नागपुराण्याशु जित्वानभिमुखो रणे । प्राप्य नागसुतां वीरोवर्षं तत्राभजत्सुखं ।
आगतोऽथ गते काले बहुले पुनरप्यधो । दिग्जयाय जगामाशु स्वपुत्त्रेण हतोरणे ।
जीवायितस्ततस्तूर्णं परिज्ञाय स्वभार्य्यया । हृष्टश्च सुतवीर्य्येण तेनैव समुपाययौ ।
अथ कालेन नीतेऽस्मिन्नर्जुने तत्सुतौ भुवं । विभज्य दधतुः सर्व्वां परीचिद्भुशाहनौ ।
आभीरदेशे निवसन् सार्द्धं शतमसौ समाः । षोडशोनं शतं यज्ञे सुतानां वीर्य्यशालिनां । ४८०
तेषामपि सुतास्तद्दत्तत्सुतानांश्च सहस्रशः । आसंत्यज्य पुनर्योगी मातामहपुरं ययौ ।
ततस्तेऽतिबलोन्मत्ताः परस्परविरोधिनः । प्रजानां विदधुः पीडां मर्य्यादाश्च न्यवारयन् ।
आज्ञातिक्रमणात् पित्रा प्रशास्ते बलदर्पिताः । स्वनाशायाखिलान् देशान् धाटीभि. समपीडयन् ।
दृष्ट्वाकाशगतः कश्चित् सिद्धस्तज्जनपीडनं । विज्ञप्तिमकरोत्तूर्णं दयावानीश्वरं प्रति ।
अथोवाचार नभसोवागेवमशरीरिणी । स्रष्टः सागरमध्येऽस्ति सासिरेव यमोपमः । ४८५
स गृहीतस्ततस्तेन रोमदेशे च वर्द्धित. । तेनासिना हयारूढः कण्टकोद्धरणं व्यधात् ।
सोचोकश्चक्रवर्त्ती स सर्व्वभूतालिजित्वरः । श्रियमाणो न केनापि हतोऽभून्मित्रबन्धुभिः ।
ये लोकोत्तरकर्म्म कर्त्तुमतुलं स्रष्टाः परं वेधसा तेषां तादृशमेव सोऽय कृतवाञ्जन्मावसानं तथा ।
दृष्टान्तस्तु सहस्ररश्मिरिह यत्त्रैलोक्यदीप्तिप्रदोज्ञातः केन कुतोऽभ्युदेति यदि वा कुत्रास्तमभ्येति च ।
तद्वंशजन्मा पार्थोऽभूद्दूरं गत्वा दृषा पितुः । पञ्चगह्वरभूमध्ये योगह्वरपुरं व्यधात् ।
तद्वंश्यः कुरुपाद्योऽभूद्यः सर्व्वां दिशमुत्तरां । जित्वा स पश्चिमां चक्रे धनुर्देवान्वयं शुभं । ४९०
ताहिराखसुतस्तस्य लोचनत्रयभूषितः । यथेच्छालाभमाहात्म्ययुक्तोलोभविवर्जितः ।
त्रिकालदर्शी चादृष्टपालितोऽतिवलान्वितः । दयालुः सततं योगी वदान्यः सर्व्वशास्त्रवित् ।
तस्य प्रभावतोराज्यं कश्मीरेषुपभु[illegible] ।
कश्मीरभूमिपालानां य. स्यादशुभचिन्तकः । दिगन्तरीयभूपालस्ताहिरास्तो निहन्ति तं ।
काश्मीरःपार्श्वतो तत्र राजा श्रेयोहरांशज. । इत्येनत्प्रत्ययार्थेव यस्तास्येलोचनत्रयी ।
नास्य शत्रुरभूत् कश्चिन्नचाभो कस्य चिद्रिपुः । द्वैवीमप्यापदं लोके तपसैव न्यवारयत् । ४९५
ताहिराखकुलोत्थानां नहि ष्टच्छातियोनृपः । सोऽवश्यं सम्पदः स्वम्यादशायेव जनाश्रितः ।

दिव्यिराकर्णयामास गिरं खादुत्थितामसौ । गृहाण राज्यं कश्मीरेष्विति नैवान्वमन्यत ।
शाहमेरः सुतो योऽस्ति तवात्यन्तनयज्ञधीः । स विसृज्य त्वया यस्मादात्मा पुत्र इति श्रुतः ।
॥ इति शाहमीरवंशवर्णनं ॥
राज्यं नाशिकखानाय दत्वा दौलतचक्रकः । स्वयं न बुभुजे देशं निर्देशेन क्षमापतः ।
कम्पितोऽपि च्छलोकेन नवे तस्मिन्नराधिपे । रज्यते स्म जनो नित्यं शिशिरेण मधाविव ।
नाशिकसाहे तद्राज्यं गृहीते निर्व्वृतैर्जनाः । उदयाद्रिङ्गते सूर्य्ये प्रातः पद्माकरा इव ।
मिलितेष्वथ सर्व्वेषु परस्परविरोधिषु । पुनर्ग्रामविभागेन शनैर्वैरमजायत ।
रदेरैणादयो लोका मेर्जाहैदरसेवकाः । चक्रजातिविरोधेन सदाश्रिरपुरेऽवसन् ।
वितस्तातीरमाश्रित्य समुद्रामठवासिनः । युयुधुर्दहनाख्येण चक्रदौलतकादयः ।
मायमेकं हते युद्धे दहनाख्यमरादिभिः । दौलतचक्रलोकेन विजयो विहितस्तदा ।
अथान्तरे स होमायः पातिशाहोऽभवद्भुवि । नमत्समस्तभूपालमौलि घृष्टपदाम्बुजः ।
तेन निर्व्वापितो राज्ञा मिथो वैरमहानलः । प्रजानां हृदयोन्माथी न दारिद्र्यदवानलः ।
अजहोमायनामा मोदेरो तस्य महीभृतः । स देशं दुर्गमं श्रित्वा स्यातथ्यमिति चिन्तयन् ।
किन्तु नेष्यामि कश्मीरदेशं पर्व्वतदुर्गमं । तत्र स्थितं न बाधेत मां होमायमहीपतिः ।
इत्युक्ता चलिते तस्मिन्नजहोमायभूरतो । कश्मीरैः सह संग्रामो बभूव नगमस्तके ।
ततः काश्मीरलोकेन पर्व्वतोपरिवासिना । अजहोमायभूपस्य निहतं सर्व्वसैनिकं ।
अथ तु नृपतिः सम्यक्पाति कश्मीरमण्डलं । नाशीकनृपतौ शाहाद्विद्रोहः सर्व्वतोऽभवत् ।
द्वितीये प्रहरे रात्रेः प्रसुप्ते सकले जने । बभूव धर्म्मलोकप्रार्थितामेकमानवः ।

एतादृशे कृते कार्य्ये क्रुद्धवेतालचोदिताः। गृहे दौलुतचक्रस्य पतिताश्च शिलानिशि।
अदृष्टदेवताक्षिप्तशिलावर्षणसङ्कुलं। राजद्वारं निशीथिन्याममवद्दिक्षयावहं।
ईदृशं प्रत्यहं केन कृतं पाषाणवर्षणं। इत्थं परस्परं लोकः कथयामास विस्मितः।
ब्रह्ममूलाभिधे ग्रामे सम्यग्ज्ञानपरायणः। अभिमन्युरिति ख्यातः साधुरासीन्महातपाः।
एकदा तद्गृहं गत्वा साधुं दौलुतचक्रकः। उवाच निर्भयं प्राज्यं कथं राज्यं भविष्यति।
इत्युक्ते तेन सोऽवादीन्निवारय मदाज्ञया। वार्षिकं ब्राह्मणकरं तेन सिद्धिर्भविष्यति।
इत्थं निवेदिते तेन साधुना म्लेच्छसत्तमः। उवाच वचनं सम्यक् शृणु वच्मि महामुने।
ब्रह्ममूलाभिधं ग्राममर्पयिष्यामि तेऽधुना। विप्रदण्डं कथं म्लेच्छो वारयामि त्वदाज्ञया।
इत्थं दौलुतचक्रेन वचने कथिते सति। अभिमन्युर्बभूवासौ रोषव्याकुलमानसः।
तेनाशु ब्राह्मणकरो यदा नैव निवारितः। साधु दौलुतचक्रन्तं शशाप रोषसंयुतः।
समुद्रमध्यमासाद्य चन्द्रार्कौ ते पतिष्यतः। इति शापप्रनष्टश्रीर्ययौ दौलुतचक्रकः।
मासमेकं कृते राज्ये इभेभाभिधभूभृता। जग्राह तत्पदं लोभाद्राजखानस्ततः स्वयं।
तत्प्रतापाग्निदग्धेषु सिक्ताः स्त्रीनयनाम्बुभिः। गृहेषु वैरिणां नित्यमुत्पद्यन्ते तृणाङ्कुराः।
रुदच्छावनारीणामम्बुवर्षाकुलेष्वपि। ज्वलत्यपूर्व्वो गेहेषु यत्प्रतापदवानलः।
अथ दिग्दाहभूकम्पान्समीक्ष्य पृथिवीभृता। पृष्टावाक्यमिदं प्राङ्गणकागणनापराः।
देशेऽस्मिंस्तव सम्भविष्यति महद्युद्धं प्रभो सङ्ग्रामेष्वपि निःसरिष्यति महावेगा च रक्तापगा।
लोकानां प्रचरिष्यति प्रतिपदं दुर्भिक्षपीडाथवा तस्मात्साहविचारणेन धरणीं भूपाल भोः पालय।
अथाययौ स्वसेनाभिर्म्मर्जेहैदरसेवकः। करभट्टारनामासौ भूयो देशजिगीषया।
निशम्यैतादृशीं वार्त्तां गाजशाहिर्व्विनिर्ययौ। तुरङ्गमखुरोद्धृष्टचूर्णीकृतमहीधरः।
स समाश्रित्य भूपालो देशं राजविराभिधं। पदातिमार्गलोकानां समराय समादिशत्।
राजविराभिधे देशे मिलिते राजकद्वये। भीतिर्बभूव लोकानां द्विराजानामशङ्किनां।
रणे विलोक्य सर्व्वासां पत्तीनां गतिचातुरीं। बभूव वायुवत्कम्पो भीतिचञ्चलमानसः।
करभट्टारो दृष्ट्वाथ काश्मीरशरवर्षणं। स क्रुद्धः करभट्टारः पत्तिलोकविलोकनात्।
अन्धकार इव प्रातः साक्षाद्दृष्टदर्शनात्। तस्मिन् पलायिते देशान्निर्भयो सकलो जनः।
सर्वे विनिर्गते देशात् कुटुम्बमिव तत्क्षणं। तदास्य ववृधे तेजः करैर्ज्ज्वाल मेदिनी।
विससार प्रतापश्च ग्रीष्मकाले रवेरिव। अत्रान्तरे महारोषगर्व्वगौरवमानसाः।
हन्त चक्रादयो लोकाश्चक्रुर्दुर्गं गराञ्जरं। सदाशिवपुरे दुर्गं कृत्वा तिष्ठन्तु वैरिषु।
दिद्दामठान्तिके तस्मै भूपो युद्धचिकीर्षया। युद्धेऽस्मिन् घाटके स्वामिसदाशिवपुरस्ययोः।
वितस्तासिन्धयोर्मध्ये वारयन्तीव सा बभौ। नदीमुत्तीर्य भूपालो युद्धं कृत्वा महत्तरं।
सितानदीप्रवाहेषु इभेचक्रमसारयत्। गते मङ्दिवे काले नोशोचक्रप्रचोदितः।

आययौ मुग्गुनुखामी श्रीकश्मीरजिगीषया । शाहअब्दोलमालीति नाम यस्याभवद्भुवि ।
स कश्मीरान्तरं प्राप बहुलोकसमन्वितः । तत्तदागमनं श्रुत्वा सैन्येन महता हृतः ।
आससाद स भूपालः परिहासपुरान्तिकं । कृते बहुविधे युद्धे सकले सैनिके हते ।
शाहअब्दोलमाली स चचाल निजवर्त्मना । ३८५
बभूवुः समरे तत्र यवना विगतासवः । यमस्तेनाथ रक्ताघ्याजेनाधिगतासवः ।
आनीतैः समरस्थानाद्भूपालो नगरान्तरे । गृहमुट्टङ्कयामास मृतमानवमस्तकैः ।
एकदा सप्तवर्षस्य बालस्यान्मुष्णतः फलं । कृपां विहाय भूपालः करं चिच्छेद तत्त्वणं ।
चौरे मुष्णति कस्मिंश्चिन्मीनान् ग्रामनिवासिनां । बलाज्जहार भूपालः स्वर्णमुद्राशतद्वयं ।
मातुलं स्वं जिघांसन्तं यौवनस्थं प्रतापिनं । चणाज्जघान भूपालः स्वसुतं हैदराभिधं । ३९०
निहते स्वसुते तेन यौवनस्थे दुरात्मना । हतः पुत्रोऽप्यनेनेति हाहाकारो महानभूत् ।
अष्टादशाभवंस्तस्य युवराजस्य मन्त्रिणः । सुताञ्जघान भूपालउन्मत्तइव राक्षसः ।
एकदा कुष्ठरोगेण सङ्कुलेन महीपतिः । बभूव विगतोच्छ्रायो यद्दणेनेव चन्द्रमाः ।
कण्डुः कीटक्षता देहे पूयशोणितनिर्गमः । नरके यानि चिह्नानि तान्यासंस्तस्य जीवतः ।
कीटोजघास मांसानि पीत्वा तत्पूयशोणिते । नरकादधिका पीडा बभूवैतस्य जीवतः । ३९५
हा तात मित्र हा पुत्र मम कष्टमुपस्थितं । इति क्रन्दितमाकर्ण्य कोनाभूद्दीनमानसः ।
इति स्पष्टमहाकुष्ठनिपीडितकलेवरः । सह संसारलोभेन प्राणांस्तत्याज भूपतिः ।
मृतस्य तस्य भूपस्य भ्राता होसैनखानकः । निखन्य भूतले सम्यङ्निर्ममे मृतसंस्कृतिं ।
अकस्माद्भूतलं तत्र जज्वाल नरकाग्निना । धूमेनोत्पतता कुर्व्वद्दिक्षितां जनसन्ततिं ।
निःश्वासइव कालेन पीड्यमानस्य भूभृतः । उत्तस्थौ सर्व्वतोधूमः सर्व्वलोकविलोकितः । ४००
रात्रौ तद्भूतलं गत्वा पीड्यमानस्य भूभृतः । शुश्राव सकलोलोकोयमकिङ्करताडनं ।
तेनोप्तं यादृशं वीजं तादृशं लभ्यते फलं । इत्थं परस्परं लोकोवदति स्म सविस्मयः ।
वर्षद्वयान्तरे कृत्वा राज्यं पापमलीमसं । कुष्ठरोगविशीर्णाङ्गोगाजशाहिर्ममार सः ।
हा कथं तेन भूपेन कृत्वा पापमहर्निशं । अल्पकालमसह्येन नाशिता बहुवत्सराः ।
स्वर्य्याते नृपतौ भ्राता राज्यं होसैनखानकः । जग्राहास्तं गते चन्द्रे पूर्व्वाद्रिमिव भास्करः । ४०५
राज्यमाश्रित्य भूपालोदुर्व्विचारदवानलात् । प्रजानिर्व्वापयामास पौरस्त्योववतोयदः ।
यदा प्रत्यर्थिदानेन लक्ष्मीस्तेन वशीकृता । तदा प्रत्यर्थिदानेन कीर्त्तिर्दूरतरं गता ।
चिक्रीड सह कान्ताभिर्भूपः पीतनवासवः । सुखं तत्सदृशं स्वर्गे स चकार न वासवः ।
तद्गृहे गुणबद्धेव लक्ष्मीरासीदनन्यगा । तां विलोक्य तथाभूतां कीर्त्तिर्भीत्येव साचलत् ।
तदीयगृहमाश्रित्य प्राप्तसर्व्वमनोरथः । याचकोनाभवत् भीतोदानेन दाययाचकः । ४१०
सततं यस्य पादाब्जमसन्यन्नमस्यकः । अवाप परमां लक्ष्मीं लोकः शोकविवर्जितः ।

तस्मिन् रक्षति कश्मीरदेशं नित्यं विशेषतः। अभूत्पुष्पफलोत्पत्तिपरिपूर्णा वसुन्धरा।
दुर्भिक्षचौरराजभ्योभये तेन निवारिते। अमंस्त स्वर्गसदृशं लोकः कश्मीरमण्डलं।

यदा यदा तेन कृतोविचारस्त्वासीन्न चौरस्य तदा प्रचारः।

अभून्न दानावसरे विकारस्ततोऽभवत्तस्य यशःप्रकारः।

स्थानेशमामनामाभून्मन्त्री तस्य महीभृतः। स निर्गते महीपाले चस्कन्द नगरं क्षणात्। १८९

[ येनापराधः कृतस्तस्मातिवेश्मिकान् राजा मुमोष। प्रत्यहं शतशोलोकान् जघान। स्वल्पापराधेऽधिकं दण्डं कृतवान्। एकस्य ग्रामस्यापराधे सति बहूंस्तमान्मुमोष। सुपात्रे किमपि न ददौ कुपात्रेषु समार्पयत्। स्वसेवकं जैतानामानमादिदेश। मत्पुत्रोहन्यतां। स स्नेहवशाद्राजपुत्रं न जघान। ततोराजपुत्रं देलावरखानोजघान लोकास्तत्रसुः। हा पाप राजन् परलोके का गतिस्तव भविष्यति। स्वसुतस्यापि कृपा न जाता। तत्सेवकानपराधरहितान् किमवधीः। ]

तदीयसैन्यमागत्य नाशयामास तत्क्षणं। होसैननृपतिः प्रातरन्धकारमिवांशुमान्।
सुखं बहुविधं तेन कृतं नित्यं महीभृता। संरचना विधानेन प्रजाः सञ्जातविस्मयाः।
विरोधे कृतवुद्धीनां वैरसंसक्तचेतसां। मल्लरखानकादीनां चकर्ष नयनानि सः।
निर्गतानां महीं जेतुं भूपः सम्प्राप पर्व्वते।
एकदा शारिकास्थाने मिलिते सकले जने। वसन्तदिवसे राजा स चकार महोत्सवं।
कुङ्कुमागुरुकर्पूरचन्दनाद्यनुलेपनैः। रराज सकलोलोकोवसन्तदिवसे तदा। १९०
विहितोन्नतदुर्लक्ष्यलक्ष्यभेदाय भूपतिः। निजसेवकलोकाय गजवाजिधनं ददौ।
भूयः श्रीपञ्चमी तत्र दिवसे पृथिवीपतिः। ददर्श मिलितं लोकं ज्येष्ठरुद्राद्रिपर्व्वते।
कश्चित् कान्तां प्रतिकृतरसैचमञ्जरी जिघ्रति स्म चीवोऽन्यस्तोद्दर्षितसमये व्याकुलः कश्चिदासीत्।
पीत्वा कश्चिन्मधु समभवत् पुष्पसम्भूषिताङ्गः श्रीपञ्चम्यामिति कृतसुखोनिर्भयो सर्व्वलोकः।

वराङ्गनानां नवसुन्दरीणां विलोक्य साक्षाद्बहुनृत्यगीतं।

ददौ समासाद्य नवीननावं सुवर्णदुर्व्वर्णवासांसि राजा।

अथापस्मारदोषोऽस्य प्रबभूव महीभृतः। कलङ्कइव चन्द्रस्य निर्म्मलस्य शनैःशनैः। १९१
होसैनशाहभीतांशो ग्रस्तेऽपस्माररारुणा। दुर्व्विचारान्धकारेभ्योजनोभीत्याकुलोऽभवत्।
होसैनपृथिवीपालोराज्यं संस्थाप्य सोदरे। कुष्ठहत्यादिव स्वर्गं ययौ दानसमर्जितं।
सप्तवर्षेष्वतीतेषु नित्यं सुखमयेषु सः। स्वर्गोऽयं कीदृशोऽस्तीति दर्शनार्थं ययाविव।

विमानितापि द्रविणव्ययेन सहैव याता क्षितिपस्य लक्ष्मीः।

आराधितापि प्रसभं धनेन कीर्त्तिः कथं तिष्ठति लोकमध्ये।

आलेखानाश्रिते राज्ये तुतुषुः सकलाः प्रजाः। उदयाद्रिङ्गते सूर्य्ये प्रातः कमलिनी यथा। १९२
कश्मीरदेशमालोक्य सम्यग्भूपालपालितं। निनिन्द सुखितोलोकः स्वर्गं दैत्येन्द्रनाशितं।

विचारे विहिते तेन दुर्जनाविलयं ययुः । उलूकादव पूर्व्वाद्रि प्रयाते दिवसेश्वरे ।
तस्मिन्नवसरे चौरागुप्ताश्चासन् भयाकुलाः । मध्याह्नकाले सम्प्राप्ते विलमग्ना इवाखवः ।
प्रत्यर्थिभ्योऽददौ दानं महासमितिसंयुतः । चकार सफलान्नित्यं मार्गणान्निर्गतां सदा
यत्सर्व्वेषां दयाञ्चक्रे भीतानां धरणीपतिः । अतः संह्लादयाञ्चक्रे प्रजाः सञ्जातकौतुकाः ।
अकस्मादरुणीभूतं बभूवाथ दिशां मुखं । भाविदुर्भिक्षसंहाररौद्रकालानलोपमं ।
उत्पातलक्षणोपेता चकम्पे च वसुन्धरा । दुर्भिक्षभारोद्वहनादसमर्थेव साभवत् ।
मार्गे मार्गे तदा तस्थुरुच्छूनाः शवपङ्क्तयः । दुर्भिक्षकालमध्यस्य यमस्य पटहादव ।
सुवर्णरजतादीनां नाभूत्तत्र प्रयोजनं । किन्त्वपार्थं सुदुष्प्रापं चिन्तारत्नमिवाभवत् ।
काचिच्च खिन्ना भर्त्तारं रक्षिणी स्नेहवर्जिता । जघास भोजनं गूढं पुत्त्रे दूरे निवारिते ।
बुभुक्षावहिते पुत्त्रे कन्ययापि कृतार्थना । चकार भोजनं नारी प्राणांस्त्यजति भर्त्तरि ।
एकदा बहुभिर्लोकैराजद्वारि मृते गजे । अहंपूर्व्विकया लोभान्मांसं नीतं पृथक् पृथक् ।
एकदा कन्दुकारेण हत्वा नापितबालकं । पक्त्वा भक्ष्यप्रसङ्गेन विक्रीतं मानुषामिषं ।
विहाय स्वगृहं लोकाः पुत्त्रदारसमन्वितं । देशान्तरं तदा जग्मुः प्राणत्राणसमुत्सुकाः ।
तस्मिन्नवसरे वायुर्बभूवोत्पाटितद्रुमः । कल्पान्तकालसंहारभीतलोकविचारितः ।
वायुनोत्थापिते धूलिराशौ वलितभास्करे । मध्याह्नसमयः साक्षाद्धोरान्धदवाभवत् ।
वायौ चलति चाकस्मात् महाग्निर्वनोत्थितः । अग्निर्ज्ज्वाल सम्मूर्च्छन्निव मित्रदिदृक्षया ।
वितस्तातीरमुल्लङ्घ्य समुद्रामठसंयुतं । ददाह नगरं सर्व्वं वायुवेगानुगोऽनलः ।
ज्वलन्ती नगरी रेजे वितस्ताजलबिम्बिता । जलान्तर्दत्तझम्पेव दाहनिर्व्वाणहेतवे ।
धूमेनोत्पादिता व्योम्नि तारकापिहिता अपि । अनेकाङ्गाररूपेण बभूवुर्द्विगुणादव ।
धूमेन पिहितास्तारास्तत्र व्योमनि नावभुः । ज्वलन्तं वह्निमालोक्य भयेनेव पलायिताः ।
नववर्षार्जितान् भोगान् भुक्त्वा स धरणीपतिः । दुर्भिक्षपीडाविज्ञप्तिं कर्त्तुमिव ययौ दिवं ।

तस्मिन् प्रयाते त्रिदिवं नरेन्द्रे राज्यं गृहीते च तदीयपुत्त्रे ।
अल्लाखखानोऽपि चकार कोपं विलम्बरतस्य महीभृतोऽपि ।

यदापि म्रियते भ्राता भ्राता गृह्णाति तत्पदं । इत्थं कुलक्रमोऽस्माकं कथं राज्यं सदृच्छति ।
इत्युक्ता प्रहिते दूते सेनान्द्राखाभिधेन तत् । युद्धं योधिभमाहस्य सेकन्दरपुरेऽभवत् ।
अल्लाखमानकोयुद्धं हत्वा ह्यारिसैनिकं । कृतहर्षेणेव दिवं ययौ भ्रातृदिदृक्षया ।
योधिभभूपती राज्ये गृहीते प्रददौ धनं । प्राकृताः कर्णमान्याश्च मुख्यान्यिप्सारदत्त्विव ।
अथ सर्व्वमहायोगदुर्दिनेन चोदितः । मल्ल लोमारखानोऽगाद्दूरं युद्धचिकीर्षया ।
महद्दयानमानाभूद्योधिभस्यापमेरकः । युयुधे सह तेनैव तदा दिद्यामठान्तिके ।
महाभीष्टलोहाभियामहारिमूर्च्छिताः । जगर्ज्जुर्दंशनास्त्र च ज्वालाग्रिवुसादव ।

निःशोभा अभवल्लोकास्तते मल्लदूखानके। अस्तं दिनकरे याते सायं पद्माकरादव।
चलन्तः सादिनोऽप्यासन् वितस्ताजलबिम्बिताः। विशन्त इव पातालं तत्पराभवशङ्कया।
सामदयस्य साहूँस्य भोगान् भुक्त्वा स भूपतिः। जगाम स्वर्गलोकानां मार्गं पर्वतदुर्गमं।
राज्यं सोमारखानेन श्रिते योसिभभूपतिः। चचालोदयति प्रातः सूर्ये चन्द्र इवाद्रुगः।
समस्तपृथिवीपालज्यस्नालदीनभूपतेः। चरणं शरणीकर्त्तुं ययौ योसिभभूपतिः।
सोमारखानलोकस्य शनैर्वैरमजायत। परस्परविमर्देन वनस्येव दवानलः।
सपादस्यैव मासस्य सुखं छत्वा स भूपतिः। उवास देवतागारे शत्रुलोकाभिरचितः।
सोमारखानं निर्जित्य चक्कहैदरकादयः। राज्ये निवेशयामासुः श्रीमल्लङ्करचक्ककं।
तस्मिंल्लङ्करभूपाले भूमिं शासति सर्वतः। बभूवोपद्रवो नित्यं सिंहेभ्यो ग्रामवासिनां।
रात्रौ योयः प्रतिग्रामं गृहद्वारादिनिर्गतः। निहतः स स सिंहेन पिशाचेनेव भचता।
ज्यस्नालदीनभूपालपाददर्शनहर्षितः। आययौ वत्सरे याते श्रीमान् योसिभभूपतिः।
श्रीमत्स्वय्यपुरग्रामं वितस्ताजलदुर्गमं। शिश्रिये स महीपाल उदयाद्रिमिवांशुमान्।
तदा लङ्करभूपालो निर्ययौ नगरान्तरात्। अनेकलोकसंयुक्तः सिंहोनगमुखादिव।
ज्ञात्वा स्वय्यपुरग्रामं वितस्ताजलदुर्गमं। ययौ हैदरचक्कोऽथावन्यमार्गेण सत्वरं।
ज्ञात्वा योसिभभूपालस्तद्रिपुविचेष्टितं। वितस्ताजलमुल्लङ्घ्य युयुधे लङ्करेण स।
विधाय तुमुलं युद्धं सर्वप्राणिभयावहं। सस्नौ लङ्करखानस्य समाराल्हालमेरकः।
नष्टे लङ्करभूपाले मिलितैर्निजसैनिकैः। अवर्द्धत स भूपालो नदैरिव महार्णवः।
लङ्करखानो योसिभखानपादमशिश्रियत्। सभ्रातरममुं सोऽपि निर्नवमकरोत् चणात्।
ज्ञात्वा हैदरचक्कोऽसौ योसिभनृपचेष्टितं। शिश्रिये जाङ्गलं देशं पुनर्युद्धचिकीर्षया।
युद्धं योसिभभूपालचक्कहैदरयोरभूत्। वनेषु शोणितासारदूरीकृतदवानलं।
ज्यस्नालदीनभूपस्य ययौ हैदरचक्ककः। सकाशं वसुभिर्हीनो भास्करस्येव चन्द्रमाः।
शशास चलिते तस्मिन् देशं योसिभभूपतिः। अन्धकारे गते दूरं पद्माकरमिवोष्णगुः।
ववर्ष वासवः सम्यग्ववौ वायुः सुखावहः। ततापतपनः साधावस्मिन् रचति मेदिनीं।
कीर्त्तिर्दूरीकृता तेन चचाल वसुधामिमां। दद्दे गुणवद्भेव लक्ष्मीरामोदनन्यगा।

गुणेष्वनन्तेष्वपि तस्य राज्ञः स एव दोषः प्रकटस्तदाभूत्।
यदप्युलास्त्यात तेन लक्ष्मीः स्थिरापि कीर्त्तिर्निहिता सुदूरे।

चन्द्रमागुणिवैरोति प्रसिद्धिं परमागतः। साम्ययोग कथं तस्य नृपेण गुणिबन्धुना।

इभेभराजप्रमुखेषु तेषु रुद्रेषु योसिभमहीधरेण।
निष्कृष्य चचूंषि विशेषरोपात् काश्मीरदेशे विहितो विचारः।

ज्यस्नालदीनभूपालसेवनार्थं कृतोद्यमः। याकोभराजपुत्रोऽपि प्रहितस्तेन भक्तिा।

## ॥ चतुर्थी राजतरङ्गिणी ॥

उपायनेषु दृष्टेषु याकोमनिहितेष्वपि । कश्मीरविजयोत्कण्ठा सम्बभूव महीभृतः ।
ज्यल्लालदीनभूपेन कश्मीरविजयार्थिना । कृताज्ञा भगवद्दासप्रमुखानां महीभृतां । ६०
तद्विज्ञाय स याकोभस्त्यक्त्वा भूपालसेवनं । प्रत्याययौ स्वकश्मीरदेशं मार्गाद्दलचितः ।
पितरं स्वं समागत्य याकोभोऽवदद्व्यथः । भगवन् भगवद्दासः प्रहितस्तेन भूभृता ।
महतोऽप्यसमर्थस्य महत्त्वं याति निष्फलं । पर्वतसदृशाकारं कुञ्जरं हन्ति केशरी ।
इति निश्चित्य सर्वे ते निर्गमाय जयार्थिनः । आज्ञां विदधिरे सर्वपर्वतीयदरार्पणात् ।
विनिर्गते महीपाले सज्जीभूतेऽथ सैनिके । वैजयन्त्यस्तदा रेजुर्व्योमनीकृतभूरुहा । ६५
वराहतीर्थमाश्रित्य तस्थौ योसोभभूपतिः । तदीयमन्त्रिणोऽप्यग्रे ययुर्युद्धचिकीर्षया ।
उवाच सचिवान् भूपो न युद्धं कर्त्तुमर्हथ । ज्यल्लालदीनपादाब्जं सेवनायाश्रया महे ।
कथं महत्तरं जेतुं शक्तिर्नीचस्य जायते । न समीरस्य वेगोऽस्ति पर्वतोन्मूलने क्षमः ।
श्रुत्वेति सचिवाः सर्वे तमूचुः पृथिवीपतिं । कथमेतादृशी बुद्धिर्भवतामपि जायते ।
अकृतगुरुसहायः सिद्धिं न गच्छति साधकोव्रजति न सुखं रोगी वैद्यप्रयोगवियोगितः ।
अगणितमहायन्ता दन्ती न विन्दति चातुरी सचिववचनद्वेषी राजा न याति सुवैभवं । ७०
निशम्येति स भूपालः सचिवांस्तानवोचत । दृष्टं सैन्यं न युष्माभिर्ज्यल्लालदीनभूपतेः ।
प्राचीमेव शचीपतिः स भजते श्रीदक्षिणाशां यमः पानीयाधिपतिश्च पश्चिमदिशं वित्तेश एवोत्तरां ।
एते केवलदिक्पतित्वविभवस्पर्द्धां कथं कुर्वते जीयात् सर्वदिगीश्वरो नरपतिर्ज्यल्लालदीनाभिधः ।
नाकवरसमः कश्चिद्दातामुष्य भविष्यति । दानं समर्पितं येन पण्डितेष्वपि वैरिषु ।
कर्णः सुवर्णदानेन भूमिदानेन वा बलिः । समस्तवस्तुदानेन यशः प्राप्नोति भूपतिः ।
विश्री चेन्नरवाहनो भवति तत्कार्पण्यमुच्चावचं चन्द्रश्चेत् खलु निर्मलः प्रतिदिनं दोषः कलङ्काभिधः ।
तेजस्वी यदि वह्निरुद्धततमोधूमः सदा दूषकोराज्ञा दानयशःप्रतापनिकरैरेतेऽमुनाधः कृताः ।
इत्थं ज्यल्लालदीनस्य सेवाहेवाकतत्परे । योसोभनृपतौ सम्यक् सचिवाइदमब्रुवन् । ७५
प्रभुपादस्पृहा यस्य जीवितं तस्य निष्फलं । स एव पुरुषो धन्यो योऽहर्दिवि रिपुणा सह ।
भवन्तः सन्तु दूरस्थाः कुर्मस्तत्कार्यनिर्णयं । जाङ्गले देशमाश्रित्य योत्स्यामः प्रत्यहं वयं ।
सहस्रकिरणोऽरविशङ्कति सप्ततापोऽज्ज्वलोगुहान्तरगतं तमोहरति नो यथा जातुचित् ।
तथा नरपतिः क्षमो भवति चक्रवर्ती कथं विनाशयितुमुर्वीविदितशास्त्रलासादनं ।
इत्थं निशम्य भूपालः सचिवोदीरितं वचः । निर्भापयन्निवोवाच वचनामृतशीकरैः ।
भयं त्यजत मद्वाक्यमनुपालयताधुना । अहं ज्यल्लालदीनस्य पदीयामि पदाम्बुजे । ८०

अलङ्कारभूतोऽस्ति योसूपतीनामलङ्कारदेवेन रूपे यदीये ।
अहं कामतोऽस्मि ज्यल्लालदीनमहङ्कारएषोऽस्ति चित्ते मदीये ।

करिष्यामः कथं वैरं श्रीचक्रवर्त्तिना समं । मयैव सेवा कर्त्तव्या सुखं देशे भविष्यति ।

न भूतो न भावी न वा वर्त्तमानः कदाचिच्च कश्चिन्महीभृत्समानः।
इति प्रायशोनित्यशोवर्त्तमानः सदा जल्पनोवर्त्तते मेऽभिमानः।
पातिशाहिगुणान् श्रोतुं कर्णोऽयञ्चपलायते। एतद्वात्वमाकर्ण्य कर्णोऽयञ्च पलायते।
विधात्रा लिखितां भाले लिपिं दारिद्र्यदूषितां। पतन्ति चरणे तस्य जनाः कर्त्तुमिवान्यथा।
मस्तके भूषणं राज्ञां लक्ष्मीप्राप्तिमहौषधं। अस्ति पादरजस्तस्य दुर्लभं महतामपि।
प्रत्यक्षदेवमादित्यं ध्यायतश्चक्रवर्त्तिनः। साक्षाद्भक्तिप्रभावेण दूरं यान्ति विपत्तयः।
वेदान्निर्णीतभेदानसुरवरकराक्रान्तदेशान् सुरेशान् गन्धर्व्वान् मन्ददर्पान् प्रतिदिवसभयव्याकुलांल्लोकपालान्।
वेधोगोविन्दशर्व्वांस्तदभिमुखकृतप्राञ्जलींश्चापि मत्वा स्वयं प्रत्यक्षदेवं प्रणमति मतिमान् शाहिजल्लालदीनः।
एकतरनृपतेर्यदेति सैन्यं कथमिव शक्यमनेन मद्बलेन।
प्रसरति जलधेर्यदा तरङ्गोभवति हि शूर्पनिवारणं निरर्थं।
प्रत्यक्षदेवमादित्यमुलूकोयदि निन्दति। का हानिस्तस्य देवस्य जगतामुपकारिणः।
इति निश्चित्य भूपालोज्जल्लालदीनभूपते.। चरणं शरणीकर्त्तुं भगवद्दासमाश्रयत्।
अष्टवर्षाश्रितान् भोगान् भुक्ता योसोभभूपतिः। ज्जल्लालदीनभूपालसेवनार्थमथागमत्।
गते तस्मिन् महीपाले भगवद्दाससैनिकं। याकोभोनाम तत्पुत्रः प्राज्यं राज्यमथाग्रहीत्।
संग्रामे पितृसंस्त्वमर्जितं कोशसञ्चितं। दत्वा याकोभभूपालः सर्व्वांल्लोकानरञ्जयत्।
चलिते भगवद्दासे योसे.भनृपसंयुते। बभौ याकोभभूपालो मेघमुक्तइवांशुमान्।
म्लेच्छशास्त्रविनिर्दिष्टमास्ते मतचतुष्टयं। अन्योन्यमतवैरेण बभूव कलहागमः।
शंशचक्रादयस्तस्य नृपस्य हतमत्सराः। सदाशिवपुरे दुर्गं चक्रुर्युद्धचिकीर्षया।
अथ याकोभभूपश्च दिद्दामठसमीपतः। बभूव तुमुलं युद्धं शंशचक्रेन तेन तत्।
अलंमाशिरनज्ञेकश्चालकादिपुरस्कृतः। युयोध शंशचक्रोऽसौ याकोभसभुवा सह।
शंशचक्रस्ततोगत्वा मल्लेकश्चालचोदितः। जग्राह जलमध्यस्थं ग्रामं स्वप्नपुराभिधं।
उद्यन् यथा दिनकरः किरणोत्करेण राश्यन्धकारनिकरं हरति क्षणेन।
सैन्यं तथैव यमसादकरोत् करेण याकोभएव कृतसायकमोक्षणेन।
अलंमाशिरखानोऽसौ युद्धं कृत्वा पलायितः। नगराच्छंशचक्रन्तं स रुरोध महीपतिः।
विजये विहिते तेन याकोभेन तदन्तरे। मध्यदेशमहीपालाद्भयं नित्यमजायत।
मध्यदेशमहीपालज्जल्लालदीनभूपतेः। कश्मीरविजयोत्कण्ठा भूयः सम्यगजायत।
कासिमखाननामानं चक्रहैदरसेवितं। प्रेरयामास भूपालः कश्मीरविजयेच्छया।
द्वाविंशानां तदा सेनापतीनां निर्गमाय सः। चकाराज्ञां महीपालः कश्मीरविजयोत्सुकः।
ते सेनापतयस्तस्य भूपतेराज्ञया क्षणात्। लाहोरनगरात्तस्मान्निर्जग्मुरूर्जितश्रियः।
कृपानिरुद्धकाश्मीरम् पञ्चशेशास्तदा द्रुताः। मरुद्य समतां यातस्तदा सेनाप्रचारतः।

तत्र रेजुः पताकाभिः पटमण्डपपङ्क्तयः। कश्मीरपर्व्वतालोकसमुत्क्षिप्तमुखा इव।
उदयी स रजोराशिस्तथा सेनाप्रचारतः। येन नभसि सूर्य्यस्य राज्ञभीतिर्यथाभवत्।
मार्गस्थानां हि धूलीनां यथा सङ्ख्या न विद्यते। तथा सङ्ख्या न सेनायाः पदातिगजसादिनां।
दिनैः कतिपयैः सेना दूराध्वमलिनीकृता। चन्द्रभागानदीं प्राप चकोरीन्दुकलामिव।
वस्त्र प्रक्षालनैर्नित्यं पपुस्तोयञ्च निर्म्मलं। तडागदूषितालोकाः सुखं चक्रुर्यथेप्सितं।
स्नानचञ्चलदाजिभीतिचञ्चलमानवे। चन्द्रभागातटे दूरादुपहासः कृतोऽभवत्।
स्नानमुक्ताद्गजाद्यच्चाप्यग्रे दत्तकरेणुकात्। अन्यदन्तिकृतत्रासाज्जनोभीत्याकुलोऽभवन्।
चन्द्रभागां समुल्लङ्घ्य दिनैः स्वल्पतरैरपि। पर्व्वतस्यान्तिकं प्राप सेना काश्मीरदेशगा।
पर्व्वतेषु पदातीनामारोहणावरोहणैः। जानुगुल्फपदातीनामवसादोमहानभूत्।
क्वचित्तोये धारा क्वचिदपि जलं दुर्लभतरं क्वचित्पङ्के स्खानिः क्वचिदपि शिलाताडनभयं।
क्वचिच्छीतं नित्यं क्वचिदपि सदोष्णांशुपतनं नगस्थाने पन्था भवति यममार्गोऽपर इव।
सुदृष्टिकोमलीभूतं तासु पर्व्वतभूमिषु। नवघासाङ्कुरं जघुस्तेषवारणवाजिनः।
मध्यदेशीयलोकानां पश्यतां पर्व्वतस्थितिं। पृच्छतां ग्रामवृत्ताणां चमत्कारोमहानभूत्।
तास्ताः सङ्कटभूमयः सुगमतां नीताः शिलापट्टकैस्ते ते कुञ्जगकुञ्जराः किल भटैर्भीतिं तदा प्रापिताः।
लोकः कुञ्जमतिप्रकाशमकरोत् सानुं सतोयोद्गमं सेना पर्व्वतमस्तके समभवत् कल्पान्तकालोपमा।
चक्रवर्त्तिप्रभावेण तत्सेनादर्शनेन च। पर्व्वतीयजना आसन् भयाचकितमानसाः।
छागानुपायनीकृत्य मातुलुङ्गफलानि च। पर्व्वतीयजनास्तत्र काशिमखानमाययुः।
यद्ग्रामचरोऽपि मांसप्रकलैः संरुध्यते मानवैर्यद्दत्तीयतलस्थितोऽपि वडिशैर्मत्स्योऽपि चाबध्यते।
यद्दच्छस्यसमर्पणेन क्षतिभिर्दूरात्पशुर्नीयते तद्दत्तेन वशीकृता जनपदाः कासेमनाम्ना धनैः।
हैदरचक्कनामाभूद्याकोभे वैरतत्परः। मार्गसन्दर्शनार्थं तत्खानकासिमसैनिके।
अत्रान्तरे स काश्मीरमार्गरचणतत्परः। वह्रामनायकोऽप्यासीद्याकोभभयविह्वलः।
यद्ग्रामनायकोलोकं स्थापयित्वा बहिः स्वयं। जगाम केवलतया खानकासिमसैनिकं।
तस्य कासिमखानोऽपि सर्व्वकार्य्यविचक्षणः। चकार बहुसंमानं वस्त्राभरणैर्धनैः।
अथान्यैरपि याकोभमवगण्य समर्पितं। राज्यं होसैनखानस्य पक्षानिलगिरिस्थितैः।
कासेनखानमायान्तं देशान्तरव्यवस्थितं। मध्ये होसैनखानस्य राज्यं श्रुत्वा चुकोप सः।
अथ याकोभभूपालः प्रस्थानं कृतवान् च्छलात्। होसेनखानं निर्भर्त्स्य पक्षानिलगिरिं प्रति।
याकोभप्रहितं सैन्यं प्रभुसेवापराङ्मुखं। सार्कं होसैनखानेन सन्धिं चक्रे यदृच्छया।
श्रुत्वा याकोभभूपालोमिलितं निजसैनिकं। निन्दां चपलचित्तानां सेवकानाञ्चकार सः।
हरन्ति सम्पत्तौ वित्तं विपत्तौ विदिषन्ति च। सेवकाः सन्ति दुर्ग्राह्यास्तस्मात्तु तस्कराः।
संसदागिर्ध पन्थाम्भेरमहदर्यपुतं। मोचयित्वा स याकोभः काष्ठवाटान्तरं ययौ।

याकोभभूपमधिष्ठाय निरस्तवीर्य्यं ते सेवका न विदधुर्बहुमानसेवां।
चिन्तामणिं लुठितहस्ततलाभिघातैः खेलन्ति वानरगणा गुलिकाक्रमेण।

याकोभे चलिते सैन्यं विससार पृथक् पृथक्। हारसूत्रदये छिन्ने मौक्तिकं विद्रुतं यथा।
काष्ठवाटान्तरे केचित्केचिन्नगरवासिनः। आसन् केचिद्विदेशस्थाः केचिन्मुग्गुलपञ्जरे।
होसैनखानादाहृत्य राज्यं पर्व्वतमस्तके। गृहे शंसचक्रेन कासेमाभिधशङ्कया।
कासेमखानमायान्तं निशम्य छलनिश्चयः। जग्राह शंसचक्रोऽसौ पर्व्वतं जनदुर्गमं।
स्वल्पलोकसमायुक्तः शंसचक्रोऽभवत्तदा। कासेमखानकोऽप्यासीद्बहुलोकसमन्वितः।
पुरस्कृत्य स कासेमखानोहैदरचक्रकं। चकार तुमुलं युद्धं सुग्रीवमिव राघवः।
काश्मीरसैनिके सर्व्वे चक्रहैदरदर्शनात्। चचाल रात्रितामिस्रं प्रातरिवारुणोदयात्।
यथा महान् रजोराशिर्व्वायुमात्रेण नश्यति। तथा मुग्गुलसैन्येन नष्टं काश्मीरसैनिकं।
काश्मीरसैनिके नष्टे मुग्गुलैर्व्विजयः कृतः। इति श्रुत्वा पुरस्त्रीणां हाहाकारो महानभूत्।
भयधूतकराम्भोजाविलोलनयनोत्पलाः। कुन्तलालिवृताश्चासुः पद्मिन्य इव योषितः।
शोकान्धकारे सम्प्राप्ते रराज नयनोत्पलं। स्त्रीणां किन्तु मुखाम्भोजं सङ्कोचमगमत्तदा।
रुदन्तीनां कुचे स्त्रीणां निपेतुर्व्वाष्पविन्दवः। ज्वलन्तं हृदि शोकाग्निं दूरीकर्त्तुमिवोद्यताः।
द्राक्षाचोटफलव्याप्तं पुष्पकुङ्कुमशोभितं। प्रविश्य नगरं मेने स्वर्गवद्यवनो भृशं।

शाके प्रयातेऽष्टखपञ्चचन्द्रसङ्ख्ये द्वितीयादिषु कार्त्तिकस्य।
शुक्लेऽथ पक्षे रविवासरे च सैन्यप्रवेशो नगरे बभूव।

द्राक्षाफलमथास्वाद्य कार्पिकोपायनीकृतं। निनिन्दुर्मुग्गुलाः सर्व्वे निजकान्ताधरामृतं।
कुङ्कुमपुष्पमालाभिर्भूषिताशेषमस्तकः। मुग्गुलो मद्यपानेषु निजं वीर्य्यं व्यकत्थत।
कासेमखाननेतारं दृष्ट्वा हैदरचक्रकं। अथ काश्मीरलोकोऽपि तत्रैवनमशिश्रियत्।
अनेकलोकसंयुक्तं दृष्ट्वा हैदरचक्रकं। भीत्या कासेमखानोऽपि कारागृहे न्यवेशयत्।
अथ कासेमखानेन रुद्धे हैदरचक्रके। काश्मीरलोकाः सर्व्वे ते दूरं जग्मुर्व्वनान्तरं।
एकत्र मिलिताः सर्व्वे ते निन्दां चक्रुरात्मनः। परस्परञ्च संमन्त्र्य मतिं युद्धाय चक्रिरे।
योषित्पत्या विहीनेव चन्द्रहीनेव शर्व्वरी। लोकपूर्णा तथा सेना राजहीना न शोभते।
इति निश्चित्य सर्व्वे ते लोकायवनभर्त्सिताः। क्षणादानाययामासुर्याकोभं कृतनिश्चयाः।
याकोभमागतं श्रुत्वा साक्षात् कासेमखानकः। मोमारखाननामानं प्राहिणोत्तज्जिगीषया।
मोमारखानमायान्तं श्रुत्वा याकोभभूपतिः। बभूव बहुसन्नाहः सम्यग्युद्धचिकीर्षया।
कोऽयं मोमारखानाख्योऽयुग्मसेवकसेवकः। एतेन सह योद्धव्यमित्यूचुस्तस्य मन्त्रिणः।
त्यक्त्वा मोमारखानन्तं विजयेश्वरसंस्थितं। प्रस्थानमन्यमार्गेण चकार नगरं प्रति।
तस्मिन्नवसरे स्वयं साक्षादेदरयोमसः। भाविषह्रामसंहारपूर्णयेत्रास्तमाश्रयौ।

शनैः शनैर्दिने याते केवलत्भियेव सा। तत्सङ्गमार्थिनी सन्ध्या ययौ स्थित्वा क्षणान्तरं।

याकोभमार्यान्तमवेक्ष्य चन्द्रोहस्तखखड्गदयदुर्निरीक्ष्यं।

राजेति नाम द्वयमाकलय्य भीत्येव यातोऽस्तनगप्रदेशं।

अत्रान्तरे स याकोभोदूराध्वखिन्नसैनिकः। सदाशिवपुरस्थाने चस्कन्द नगरं क्षणात्।

कृतवति सति कान्ते चुम्बनालिङ्गनानि क्षिपति च निशिवाणान्निर्दयं कामदेवे।

सुरतनिरतनारीसङ्गमे सन्निकृष्टे समरभुवि नराणां सिंहनादोबभूव।

मार्गे गृहान्तरे वापि हत्वा यवनसैनिकं। सैन्येन महता याकोराजद्वारं ददाह सः।

अलिः सूर्य्योदयार्थीव रात्रिबद्धोऽम्बुजान्तरे। कासिमखानकोऽप्यासीद्रुद्धोनिजगृहान्तरे।

फतिहखाननामासौ मुग्गुलोधृतसैनिकः। समुद्धृततनुत्राणः सेकन्धरपुरेऽभवत्।

जज्वाल नगरं सर्व्वं यवनवासकारकं। अपि ज्वालाप्रकाशेन काश्मीरैर्युयुधे रणे।

ततः कासिमखानेन दृष्ट्वा काश्मीरसैनिकं। कारागृहस्थितोरोषाद्धतो हैदरचक्रकः।

सोढं कृत्वा गते सैन्ये वाजिवारणवासरं। प्रभाते स च याकोभोरात्रियुद्धाद्यवर्त्तत।

रात्रौ दुर्जनचक्रताडनमलं रात्रि स्वयं कुर्व्वति तारारत्नसमूहमम्बरवणिग्व्यस्तारयत् सर्व्वतः।

प्रातश्चण्डकरे प्रभौ कमलकोशोत्पाटनं तन्वति प्रालेयश्रमवारिणाकुलतरस्तोऽगोपयत्तं क्षणात्।

जाते प्रभातसमये शशिनि प्रयाते चास्तं क्षणाद्दिनकरेण तमोनिरस्तं।

याकोभभूपतिरतीव बभूव भीतः सोऽभूच्च मुग्गुलजनः सकलः समेतः।

प्रातश्चलति याकोभे यवनानगरान्तरं। मुमुपूरात्रियुद्धेन रोषसन्तप्तमानसः।

याकोभं चलितं ज्ञात्वा दृष्ट्वा भग्नं स्वसैनिकं। स्वयं कासिमखानोऽपि निर्जगाम जयोत्सुकः।

येन येन स याकोभोमार्गेण चलितोऽभवत्। तेन तेन हि कासिमखानकोनिर्ययौ स्वयं।

तस्य कासिमखानस्य बहुलोकसमावृतः। अलंमाशिरखानाख्योबभूव चरणानतः।

अलंमाशिरखानस्य तेलग्रामनिवासिनः। मित्रेण शंशचक्रेन युद्धमासीत् परस्परं।

फतेहखाननामाभून्मुग्गुलोवक्रसैनिकः। नगरान्तररक्षार्थं सेकन्धरपुरस्थितः।

युद्धं याकोभभूपालखानकासिमयोरभूत्। काश्मीरक्षिप्तपाषाणशरतोमरदारुणं।

अथ काश्मीरलोकानां विरोधउदभूत् पुनः। राजाहमेव राजाहमिति कोलाहलान्वितः।

विरोधमुत्थितं ज्ञात्वा सहायभ्रातृचोदितः। ययौ याकोभभूपालः काष्ठवाटान्तरं पुनः।

ततोयोसिभखानेन सेरमल्लदकेन च। सन्धिः कासिमखानस्य विहिता शरणार्थिनः।

तेन कासिमखानेन ल्लल्लाल्दीनभूभृतः। योसिभखानप्रमुखाः सहितावरणान्तिकं।

ल्लल्लाल्दीनभूपेन समस्तादरणामताः। संमानिताः सदा वित्तैः खानयोसिभकादयः।

काश्मीरेषु महाशीतव्यथितानेकमानवः। आययावथ हेमन्तो द्वितीयइव मुग्गुलः।

ततोयवनगेहेषु पपात हिमसन्ततिः। विजये विहिते यद्वत् पुष्पवृष्टिरिवाम्बरात्।

याकोभभूपस्य कृतश्रमस्य रणाय कुर्व्वाणइवोपदेशं।
पुष्पोत्करैः संकृतसर्व्वमार्गो वसन्तकालः प्रकटीबभूव।
अथ याकोभभूपालः काष्ठवाटप्रदेशतः। आययौ मुग्गुलाञ्जेतुं बहुलोकसमावृतः।
तत्र कासिमखानोऽपि वार्त्तां श्रुत्वा जिगीषया। निर्ययावथ हस्त्यश्वव्याकुलीकृतभूतलः।
तयोर्य्याकोभभूपालखानकासेमयोरभूत्। चेत्रदेशे महायुद्धं शरपाषाणदुर्द्दिनं।
अथ याकोभभूपालः प्रस्थानं नगरं प्रति। चकारालचितोभूत्वा मुग्गुलैरनुयायिभिः।
धान्यराशिसमीपस्थं नगमाश्रित्य दुर्गमं। याकोभभूपः सहसा युयुधे सह मुग्गुलैः।
निर्म्मलासितनुत्राणविम्बितार्कमरीचिभिः। प्रकाशमन्धकारेऽपि बभूव वनगह्वरं।
अनेकविगलल्लोकशोणितासवपूरिताः। बभुस्तत्र शिरस्त्राणा यमस्य चषका इव।
अनेकक्षिप्तपाषाणचूर्णीकृतमहीरुहाः। पर्व्वतस्यापि काश्मीराउन्नतत्वं न सेहिरे।
मृतशोणितसंलिप्तनिर्झराम्बुच्छलेन किं। अभवद्यमराजस्य क्रीडतः कुङ्कुमद्रवः।
इत्थं याकोभभूपालखानकासेमयोरभूत्। युद्धं तन्मासमात्रेण न जयोन पराजयः।
आदूलखाननामापि खानकासेमचोदितः। जगाम सबलोयोद्धुं काश्मीरान् पर्व्वतस्थितान्।
युद्धे सन्निहिते तेषां मेघैराच्छादितोगिरिः। म्लेच्छानामिव कुर्व्वद्भिः कालरात्रिं समावृतां।
रराज ध्वनिते मेघे विद्युन्मालातिचञ्चला। जिह्वेव यमराजस्य स्वादुचर्व्वणताडिता।
धारासारजले मेघे चलिते निजसैनिके। आदूलखाननामायं स्वर्गमार्गमथारुहत्।
श्रीरङ्गोनामराजाभूत् ज्यसालदीनसेवकः। सोऽपि तत्समरं प्राप्य स्वर्गमार्गमशिश्रियत्।
सदाशिवपुरे दुर्गं कृत्वा तिष्ठति मुग्गुले। ज्येष्ठरुद्रसमीपस्थः काश्मीरैराश्रितोगिरिः।
तत्र सन्निहिते युद्धे निर्ययुः शोनितापगाः। बभूव सङ्गमोयासां सह नद्या वितस्तया।

[ सेजांआदूलनामा पातिशाहिसेवकोयुद्धार्थं जगाम। तस्मिन्नवसरे काश्मीरानंशिरखानकलोके याकोभलोकस्य युद्धं बभूव। तयोर्युद्धे सन्निकृष्टे आदूलखानोऽपिजगाम। आदूलखानमायातं दृष्ट्वा याकोभलोको वदति स्म। इह मुग्गुला आगताः ते चानंशिरखानसैनिकं त्यक्त्वा आदूलखानं सङ्गच्छः। तेन सह युद्धमभूत्। अनंशिरखानलोकोऽपि आदूलखानसहायतां चकार। याकोभिन सह युद्धं चकार। आदूलखानोऽप्यनंशिरखानस्य सन्तुष्टो बभूव। पातिशाहिकार्य्यं त्वया कृतमिति वचनमुवाच। श्रीरङ्गोऽपि रायसिंहबद्धसम्बन्धो बभूव तस्य निकटे चत्वारिंशद्राजपुत्राश्वासन् वर्षे पतिते। श्रीरङ्गोराजपुत्रानवदत्। भो राजपुत्रा यूयं चलत। अहं पङ्गुरस्मि चलितुं समर्थोनास्मि। ते चावदन् सैवं राजपुत्रजातो चलनं न वर्त्तते पातिशाहो राजपुत्रेषु सम्मानं करोति। अतएव अस्माभिर्वृद्धा रक्षणीयेति। ते राजपुत्रा न सेनुः। ]

इत्थं विधाय समरं निहते चलोके कासेमखानयनस्य बभूव भीतिः।
भग्नानेवेत्य यवनान् परिभूयमानाः काश्मीरलोकनिकराः सहसा स्वस्थुः।

वार्त्तामेतादृशीं श्रुत्वा ज्यल्लालदीनभूपतिः। सैदयोसोभखानस्य चकाराज्ञां जिगीषया।
वार्त्तां योसोभखानस्य श्रुत्वा याकोभभूपतिः। चचाल गर्जितं श्रुत्वा मृगेशस्येव जम्बुकः।
श्रीकश्मीरसरोजमध्यनिरतं लोभाशया सन्ततं याकोभाभिधराज्यबद्धवपुषं नोद्यद्दिनिर्गमं।
काशेखानकषट्पदं भययुतं कुर्व्वन् चणान्निर्भयं सूर्य्योऽयं जयति प्रकाशमहितोयोसोभखानाभिधः।
शंसचक्रादयोलोका मेर्जायोसोभवार्त्तया। चेलुस्तद्वयनत्रस्ताः श्येनस्येव कपोतकाः।
योसोभखानआयाते भयात् काशेमखानकः। निर्ययावुदिते सूर्य्ये चक्राङ्गोविरहादिव।
मेर्जायोसोभखानस्य काश्मीरजनसंयुतः। मल्लादमेरनामाभूत् सदा सेवनतत्परः।
मेर्जायोसोभखानेन ज्यल्लालदीनभूपतेः। काश्मीरा बहवो लोकाः प्रहिताश्चरणान्तिकं।
अथ याकोभभूपालश्चाययौ काष्ठवाटतः। तथैव मुग्गुलान् जेतुं पतङ्गोऽग्निं यथा मदात्
मेर्जायोसोभखानेन मल्लदाभिधसंयुतः। हाब्येमेरकनामापि प्रहितस्तज्जिगीषया।
तस्याचलाभवत् सेना मुग्गुलानाञ्च भूतले। ते उभे तुलया धृत्वा विधिर्बलमिवेचत।
यवनैर्वेष्टिते भूमौ काश्मीरैस्तु नगोपरि। अन्योन्यसन्निकर्षन्तु गन्तुं शक्ता न तेऽभवन्।
सिंहनादोऽभवत्तत्र सेनयोरुभयोस्तयोः। लोकजियत्नया शब्दोयमदंष्ट्रोद्भवोयथा।
ततोऽभूत्तुमुलं युद्धं देवदानवभीषणं। महायोधगुणग्रामनिकषोपलसन्निभं।
काश्मीरचित्रपाषाणकम्पितानन्तपल्लवाः। आसन् युद्धं द्रुमादृष्ट्वा भयाद्भूतकराइव।
महायोधकृतानन्तसिंहनादापदेशतः। क्रन्दन्निवाभवत्तत्र पर्व्वतोऽपि भयाकुलः।
योधचित्रशरमातच्छन्नस्कन्धामहाद्रुमाः। तद्दृष्ट्वा तुमुलं युद्धमासन् रोमाञ्चिताइव।
युद्धं बहुविधं कृत्वा तुष्टं मुग्गुलसैनिकं। स्वबलं भग्नमालोक्य याकोभोऽभूद्भयाकुलः।
मद्योधचन्द्रमाम न्ये यस्तोयवनराहुणा। केवलोऽहं कथं शक्तोस्मिच्छमङ्गामसागरे।
इत्युक्त्वा स च याकोभः केवलोऽप्यचलत्ततः। काष्ठवाटान्तरं प्राप लज्जमानोदिने दिने।
ज्यल्लालदीनसेवार्थं गते योसोभखानके। भ्राताभून्मेच्छवङ्कुकः कश्मीरेष्वधिकारवान्।
विचारे विहिते तेन निर्व्वैरो सकलोजनः। चकोरइव शीतांशावुदयं प्रति गच्छति।
कुर्व्वन्तमेकदा हिंसां वणिजं निजवेश्मनि। कण्ठे निबद्ध तन्मांसं न नरं प्रत्यवेलयत्।
यः कश्चित् पुरुषोमोहात् प्राणिहिंसां करिष्यति। एतादृशं महत्कष्टमवाप्स्यति न संशयः।
एकदा यवनः कश्चिदपराधविनाकृतं। कश्चिज्जघान काश्मीरं पुरुषं मदविह्वलः।
निहतं पुरुषं सम्यग्गन्तधाय गर्त्तान्तरे। न मया निहतः कश्चिदित्यूचे स मृषा वचः।
विश्रमशस्फुटमेव तद्वृत्तं मेर्जवङ्कुकः। उवाच हेतुना केन काश्मीरोनिहतस्त्वया।
उवाच यवनस्तत्र नैव कश्चिन्मया हतः। यद्यस्मिन्हतस्तस्य कबन्धः कुत्र तिष्ठति।
इत्थं कृतप्रतिषेधिन् यवने मेर्जवङ्कुकः। शोकामाध्यापयामास मरश्मशविलोकतां।
वाद्याभीडिते सद्यस्तम्भे निर्गतोऽपि च। यवनस्यापराधोऽभूत् पुरुषं निघ्नतस्तदा।

अपराधिनमालोक्य यवनं मेर्जवङ्कक। शास्त्रोक्तेन विधानेन दण्डं तस्य समादिशत्।
ततोऽज्यसालदीनेन पृष्टोयोसोभखानक:। उवाचानन्तकाश्मीरगुणानानतमस्तक:।

कश्मीरदेशोविहितोविधात्रा स्वर्गस्य निर्माणइव द्वितीय:।
शेष: समर्थोरसनासहस्रद्वयेन वक्तुं न गुणान् यदीयान्।
द्राक्षाफलानि क्षणमात्रनश्यन्मधूदपूराणि विहाय यस्मिन्।
शृङ्गारिलोकाश्रमृतं स्रवन्ति पिबन्ति कान्ताधरपल्लवानि।
यत्राङ्गनानां सततं मुखानि विलासलीलाक्षिपरम्पराणि।
चकासति चित्रचलद्द्विरेफमालाश्रितानीव सरोरुहाणि।
हाहा तुषारं व्यथयत्यजस्रमितिच्छलाद्धस्तयुगं विधूय।
यस्मिन्नभीष्टं पतिलोकमध्ये नारी विलासं प्रकटीकरोति।

अन्येऽपि मन्त्रिणस्तस्य जगदुर्जगदीश्वरं। चक्रवर्त्तिन्नसङ्ख्यातागुणा: काश्मीरसम्भ
यस्मिन् भगवती सन्ध्या सन्ध्यानां त्रितये सदा। ददाति दर्शनं ग्रीष्मे सलिलागमनिर्गमै:।
यत्रामरेश्वर: साक्षाद्धिममूर्त्तिधरोविभु:। वर्द्धते शुक्लपक्षेऽसौ कृष्णपक्षे च क्षीयते।
भगवान् स्वयमग्नि: स यत्र जाज्वल्यते सदा। नेन्धनं विद्यते यस्य नाङ्गारोयस्य दृश्यते।
अथ ज्यसालदीनोऽसौ श्रुत्वा काश्मीरजान् गुणान्। निर्य्ययौ दर्शनार्थाय लाहोरनगरान्तरात्।
ज्यसालदीनभूपाल: कश्मीरनगरान्तरं। आषाढशुक्लपञ्चम्यामाससाद ससैनिक:।
आषाढशुक्लसप्तम्यामाशीर्व्वादपरायणान्। पुपोष स्वर्णदानेन भूपोब्राह्मणबालकान्।
ततोमार्त्तण्डमाश्रित्य गोप्रदानानि भूपति:। मुक्तासुवर्णयुक्तानि ब्राह्मणेभ्य: समार्पयत्।
द्राक्षाचोटफलोत्तुङ्गदिव्यतालीवनान्वितं। कश्मीरदेशमालोक्य तुतोष धरणीपति:।
वितस्तातीरमाश्रित्य पश्यतोनगरस्थितिं। ज्यसालदीनभूपस्य बभूवातीव कौतुकं।
ज्येष्ठरुद्रसमीपस्थं नानापुष्पोपशोभितं। सरस्तं पश्यतस्तस्य चमत्कारोमहानभूत्।
ज्यसालदीनपादत्रपवित्रीकृतमस्तक:। चरणं शरणीकर्त्तुं याकोभोऽपि समाययौ।
शरणार्थिनमायातं याकोभं शरणागतं। मानसिंहमहीपालसेवकं कृतवान्नृप:।
देशान्तरं समासाद्य चक्रवर्त्तिसमर्पितं। सुखं चकार याकोभोमानसिंहपदानत:।
ज्यसालदीनभूपालोदृष्ट्वा कश्मीरमण्डलं। देशं योसोभखानाय दत्त्वा देशान्तरं ययौ।
मेर्जयोसोभखानोऽसौ नृपसेवाविचक्षण:। देशं ररक्ष नि:शेषमादेशेन विशेषत:।
श्रीमज्ज्यसालदीनेन मेर्जयोसोमरोपित:। विहित: काजिश्यालाख्य: काश्मीरेष्वधिकारवान्।
वार्षिके ढौकिते तेन मेर्जयोसोमसेवका:। अधिकारविहीनास्ते गृहे प्राघुणिकाइव।
न दत्तं तेन कस्मैचिन्न भुक्तं स्वयमेव वा। किन्तु राशीकृतं धान्यं हत्वा स्वर्णमिवाखुना।
योकायोसोमखानस्य काजिश्यालेन भर्त्सिता:। सम्भूत: क्षुधया क्रान्तानिदाघेनेव चातका:।

धान्यं राशीकृतं दृष्ट्वा काजिश्चालेन वर्द्धितं। आययावथ कश्मीरलोकस्तद्ग्रहणेच्छया।
दुष्टेन काजिश्चालेन द्रविणे व्ययीकृते। अथ मुगुललोकस्य विरोधोऽभूत्परस्परं।
भ्राता योसोभखानस्य मेर्जयाद्गारकोऽकरोत्। सन्धिं काश्मीरलोकेन काजिश्चालजिघांसया। ८६५
विधाय विविधं युद्धं काजिश्चालोऽचलत्तदा। पर्व्वतारोहणादश्वे मृते स्वर्गं च सोऽगमत्।
हुसनभिगनामाभूज्ज्यल्लालदीनसेवकः। विधाय समरं सम्यग्जीवन्मत्यमयौ च सः।
चित्तं विधाय कुटिलं यदनेन वित्तं संरचितन्तु रिपुभिः खलु भक्षितं तत्।
हायं कृतं कथमिति प्रकटप्रहासमस्तोकशोकरहितं वदति स्म लोकः।
येन यत्सञ्चितं वित्तं वञ्चयित्वा क्षणीवलान्। तत्सर्व्वं निजलोकेभ्यो मेर्जयाद्गारकोददौ।
ज्यल्लालदीनभूपालपादसेवापराङ्मुखः। जयाद मेर्जयाद्गारोराज्यं कश्मीरमण्डले। ८७०
तद्दृष्ट्वा भाविषङ्गामभीतिचञ्चलमानसाः। ततः समस्तकाश्मीरा हाहेति जगदुर्जनाः।
इत्थं निशम्य चरितं यवनस्य तस्य ज्यल्लालदीननृपतिः सहसा जगाम।
रोषेण दुष्टकटकं कटकं विधार्य्य चूर्णीचकार च स पर्व्वतदुर्गमार्गं।
ततोज्यल्लालदीनेन वज्रलोकसमन्वितः। श्रीमच्छिखफरेदाख्यः प्रहितस्तज्जिगीषया।
स रुरोह ततो हस्तिगञ्जपर्व्वतमस्तकं। उदयाद्रिमिव प्रातः साचाद्भास्करसारथिः।
तस्मिन्नवसरे मेर्जयाद्गारो निजसेवकैः। प्राप्य श्रूरपुरग्रामं निहतो द्रोहकर्म्मणा। ८७५
हतं तं पतितं दृष्ट्वा जम्बूकश्वासितामिषं। स्वामिद्रोहीति युत्कृत्य सहसा जगदुर्जनाः।
आयातएव भगवानिह चक्रवर्त्ती पूजा ह्यनेकविधिना च मया विधेया।
इत्याकलय्य स उपायनभक्तियुक्तं याद्गारकोरचितवान्निजजीवितेन।
मेर्जयाद्गारके तस्मिन् निहते निजसेवकैः। ततः शिखफरेदाख्य स प्राप नगरान्तरं।
साचाच्छिखफरेदेन रचिते नगरान्तरे। चौराणां नाभवन्मार्गउलूकानामिवोषसि।
ततोज्यल्लालदीनोऽश्वो द्रष्टुं काश्मीरमण्डलं। आययौ कुङ्कुमाचोटफलपुष्पोपशोभितं। ८८०
काचिद्दर्शनकाङ्क्षिणी प्रियसखीं सन्दर्शयन्ती नृपं व्यग्राभूदपरा चमूपतिरयं दृष्टोमयेत्यब्रवीत्।
काचिद्दृढपयोधरं समचलत् सन्तर्जयन्ती शिशुमित्थं भूपविलोकने समभवत् पौराङ्गनानां त्वरा।
ततः काश्मीरलोकेन कृते भूपतिदर्शने। सद्यः प्रतिगृहं नित्यं प्रावर्त्तत महोत्सवः।
पुरा चक्रकुलोत्पन्नैर्भूपैर्जातिविरोधतः। ब्राह्मणेभ्यस्तदा दण्डोऽगृहीतः किल वार्षिकः।
चोरस्य निजां जातिं कुलशीलसमन्वितः। स ददौ वार्षिकं राज्ञे करं प्रतिग्रहं द्विजः।
ब्रह्मयज्ञोपवीतस्य रक्षणाय समर्पितः। प्रत्यब्दं ब्राह्मणैराज्ञां चत्वारिंशत्पणाः कराः। ८८५
उत्तमोब्राह्मणोदेशं तत्याज चेच्छदूषितं। तत्याज मध्यमोऽस्माकं जातिं तत्याज चाधमः।
चेच्छसेवे स्थिते तस्मिन्नन्धकारितदिङ्मुखे। विप्रादेशान्तरं जग्मुर्मरालाइव मानसं।
तादृशान् ब्राह्मणान् ज्ञात्वा ज्यल्लालदीनभूपतिः। चक्रवंशक्रमायातं विप्रदण्डं न्यवारयत्।

काश्मीरदेशे विप्राणां योयः पूजां करिष्यति। तस्मै तस्मै प्रदास्यामि तत्त्वयं पारितोषिकं।
काश्मीरदेशे विप्रेभ्योवार्षिकं योग्रहीष्यति। अचिरात्तस्य भूपालोग्टहमुत्पाटयिष्यति। ८०
इत्यादिशन्तोभूपस्य हृतवार्षिकसाध्वसाः। आशीर्व्वादपराश्रासन् ब्राह्मणाब्रह्मवादिनः।
साचाज्ज्यल्लालदीनोऽयं जीयादर्षशतार्ब्बुदं। योऽस्माकं वार्षिकं दण्डं वारयामास भूपतिः।
चक्रवंशप्रभूणां हि भूपतीनां सदाज्ञया। नित्यं धेनुसहस्रस्य म्टत्युरासीदवारितः।
म्लेच्छान्धकारविध्वस्तामित्रदर्शनवर्जिताः। ब्राह्मणाश्रन्वतप्यन्त रात्रौ पद्माकराइव।
देशेऽस्मिन् म्लेच्छदावाग्निशोषिताशेषहृत्तयः। नाभवन् ब्राह्मणाः सर्व्वे दग्धारण्ये म्टगाइव। ८५
क्वचिद्धासः क्वचित्त्रासः क्वचिच्चैव निभर्त्सनं। जम्बुकस्येव विप्रस्य पथि मत्सरतोऽभवत्।
ज्यल्लालदीनभूपालनित्यसेवनतत्परः। बभूव रामदासाख्योविप्राणामुपकारकः।
तादृशान् ब्राह्मणान् दृष्ट्वा रामदासोमहायशाः। वितीर्णस्वर्णदुर्व्वर्णोबभौ कर्णइवापरः।

यद्वर्णैरम्टतमेष ददाति मेघस्तद्गर्जितेन सविकथ्यत एतदेव।

दानं सदैव ददतोन बभूव तस्य श्रीरामदासनृपतेर्हृदयेऽभिमानः।

मान्धातर्मन्ददाता भवसि गुणगणैः कर्ण कर्णौ पिधेहि श्रीडा जीमूतवाह त्वयि भवति नवा किम्बले त्वं बलीयान्।
सत्यं वा वेद्मि नित्यं किमु तव यशसा विक्रमादित्य कार्य्यं दानं सन्यग्विधानं वितरति चतुरं रामदासः सदासः।९०
[ अकबरसेवकेन रामदासेन ब्राह्मणग्टहं प्रति रजतमुद्राशतं सुवर्णमुद्रासहितं समर्पितं।
रजतमुद्रापञ्चाशत्सहस्राणि रामदासेन ब्राह्मणानां दारिद्र्यदूषितानां परिकल्पितानि। ]
यावदन्तरमेदानदानयोरामदास जगतीसुरद्रुम। अन्यदीयभवदीयदानयोस्तावदन्तरमिति मतीयते।
निवेद्याशीर्व्वचस्तस्मै ब्राह्मणाब्रह्मवादिनः। ग्टहं प्रत्याययुः सर्व्वे पण्डितानिर्मलादयः।
अन्येद्युरपि सर्व्वे ते प्रह्लादनिर्मलादयः। सम्मानितानरेन्द्रेण वचसाम्टतवर्षिणा।
श्रीमान् ज्यल्लालदीनोऽपि रामदासनिवेदितान्। विप्रान्निर्व्वापयामास चकोरानिव चन्द्रमाः।
ग्रामेषु तेन दत्तेषु बभौ पण्डितमण्डलं। मेघे वर्षति दावाग्निसन्तप्तमिव काननं। ९५
ज्यल्लालदीनभूपालसदासेवाविचक्षणः। अभूद्राजानकादिभ्योभूमिदाने विवेचने।
विपक्षं गुणिनं हित्वा स्वपक्षं गुणवर्जितं। पुपोष भूमिदानेन स ज्ञातिस्नेहमोहितः।
काश्मीरेष्वथ रामदासवचनक्षुब्धाचलस्फारितं भूदानाम्टतमुत्थितं सुविमलं श्रीराजगेहाम्बुधेः।
आदित्याभिधराहुणा स विबुधान् हा वञ्चयित्वा कथं नीतं दुर्जनवस्तुदैत्यसुमहत्संघस्य तत्क्षणे।
साचाज्ज्यल्लालदीनोऽसौ करुणाम्टतसागरः। स्वर्णदुर्व्वर्णदानेन त्रिलोकमपूपुरत्।
[ ततः पालिशाहिः शिखाफेअं समादिशत्। भवता भाण्डागारे रौप्यमुद्रासहस्राणि ग्टहीत्वा ग्रामे
चाटव्यास्य सर्व्वेषु स्थानेषु ब्राह्मणानां भिक्षुकाणाञ्च द्रविणं समर्पणीयमिति तेनापि तथैव कृतं। ]
देशं योसौभखानाय समर्प्य पुनरेव सः। ज्यल्लालदीनभूपालोदेशान्तरमयागमत्। १००

देशे योसोभखानेनाश्रिते ते निर्वृर्जनाः । उदयाद्रिङ्गते सूर्ये प्रातः पद्माकरादव ।
समर्पिताः प्रतिग्रामं कार्पिकाः छतवार्पिकाः । धानुष्काद्य पुनर्युद्धशङ्कया तेन वारिताः
प्रवर्त्तते यथा हंसः चीरनीरविवेचने । तथाभूत् सोऽपि धानुष्कक्षपीवलविचारणे ।
ज्यज्ञालदीनसेवार्थं गते योसोभखानके । मेर्जलस्करनामाभूत्तत्पुत्रोऽत्राधिकारवान् ।
कलङ्करहितः साचात्सदा सर्व्वशिरोमणिः । सुधामयवपुः सोऽयं वालचन्द्रइवावभौ । ९१५
सेवकोयवनोलोके वितस्तातीरमाश्रितः । उद्धतां काष्ठभारोऽयमित्यादिश्य व्यमर्दयत् ।
तादृशं यवनं दृष्ट्वा मेर्जलस्करकः स्वयं । उवाच सचिवान् शीघ्रं पश्यायं हन्ति मानवान् ।
अहो मत्सेवकालोकान् काश्मीरान् व्यथयन्ति किं । ज्यज्ञालदीनभूपालाच्च भयं वर्त्तते कथं ।
मार्गे नास्ति विलुण्ठनं न च भयं चौरान्नवा दुर्जनाद्ग्रामे वा नगरे प्रयच्छति वणिल्लोकोन शुल्कं कचित् ।
मेघावर्षति मेदिनी फलयुता सदार्पिकाः कार्पिकादेशे रचति न चितेः चतिरहे ज्यज्ञालदीनाभेध ।
अधुना भवता शीघ्रं यवनोऽयं निरस्यतां । इत्याज्ञसोनिरुद्धन्तमधावत् सचिवः चणात् । ९२०
चलिते यवने तस्मिन् भयात्तं सचिवोऽब्रवीत् । भगवन् यवनः सोऽयं लङ्घयेन पलायितः ।
इत्युक्ते तेन भूयः स मेर्जलस्करकोऽवदत् । अधुना चलिते तस्मिन् मदुक्तं वचनं कुरु ।
मध्येवितस्तमानीय नावं काष्ठसमन्वितां । तथा दहन्तु लोकानां यथा भीतिर्भविष्यति ।
तथाविधे कृते तेन मन्त्रिणा यवनास्तदा । ज्वलन्तीं नावमालोक्य भयेनासन् मृताइव ।
यः कश्चित् यवनोमोहात् काश्मीरान् पीडयिष्यति । स निजस्यापराधस्य सत्वरं फलमाप्स्यति । ९२५
भूतलान्निर्गता रेजे कुङ्कुमाङ्कुरसन्ततिः । शरदिन्दुचया शेषशिरःपङ्क्तिरिवोत्थिता ।
प्रादुरासीत्ततोहित्वा निर्मलाङ्कुरचोलकं । शिखाकुङ्कुमपुष्पाणां लज्जयेव शनैः शनैः ।
कुङ्कुमपुष्पशोभाढ्यं द्राचाचोटसमन्वितं । दृष्ट्वा पद्मपुरग्रामं निनिन्द त्रिदिवं जनः ।
खारीके वापिते वीजे श्रावणे भुवि वापिकैः । अर्द्धखारोप्रमाणानि पुष्पाण्यवचितानि तैः ।
प्रातर्यावन्ति पुष्पाणि चितानि धरणीतलात् । आसञ्चितानि तावन्ति सायंमध्याह्नयोरपि । ९३०
यदाप्रभृति नागेन तच्चकेण प्रदर्शितं । तदाप्रभृति तादृक्षं कुङ्कुमं नाभवद्भुवि ।
कश्चित्पुष्पावचयनिरतोढौकयानोऽपि कश्चित् कश्चिद्गम्प्रसमथितशिरानीप्रयानोऽपि कश्चित् ।
कश्चिन्नित्यं तुलननिरतोरचणे कोऽपि सक्तस्तस्मिन् काले बहुलघुसृणव्याकुलोलोकआसीत् ।
इति कुङ्कुमवर्णनं ॥
अष्टवर्षेष्वतीतेषु ज्यज्ञालदीनभूभृता । योसोभखानादाहृत्य देशोऽन्येषु समर्पितः ।
आसाहखान आयाते मेर्जयोसोभपैनिकं । पृथक् पृथक् ययौ याते वायाविव रजोभरः ।
श्रीमज्ज्यज्ञालदीनेन प्रहितौ निजसेवकौ । आबादखानमोलतानमहम्मदकुलखानकौ । ९३५
आसाहखानसैा ज्ञात्वा ज्यज्ञालदीनसेवकौ । देशाधिपतितां दत्वा प्रभुपादान्तिकं ययौ ।

काश्मीरेष्वपि तौ सम्यग्दुर्विचारं विचेरतुः। अन्धकारं सदा पृथ्व्यां सूर्य्याचन्द्रमसाविव।

अकवरनृपतेरथाज्ञया तौ प्रवरपुरान्तिकशारिकासमीपे।

विदधतुरगमाकलय्य दुर्गं नगनगरीतिविरूढनामधेयं।

वङ्कविधतपसा विधूय देहं त्रिदिवनतिः खलु जन्मनि द्वितीये।

इह नगनगरी विलोक्य लोकस्त्रिदिवमिदं न समीहतेऽधिगन्तुं।

तस्मिन्नवसरे गेहे रुद्धे भूपालसेनया। दुःखं बभूव लोकानां नगरान्तरवासिनां। •

तादृशं दुःखमालोक्य वणिक्लोकनिवेदितं। लोकान्निवापयामास निर्देशेनेति भूपतिः।

नवीननगरीमध्ये मामकाः सन्तु सेवकाः। यः पीडयति काश्मीरान् सोऽपराधी भविष्यति।

आदेशे विहिते तेन ज्यलालद्दीनभूभृता। अथ मुग्गुललोकोऽयं शिश्रिये नगरी नवां।

शारिकापर्व्वते रेजे नगरी सा सुधासिता। राजधानीं समीपस्थां हसन्तीव पुरातनी। .

निर्गते यवने लोकस्तेनाय विहितोत्सवः। ज्यलालद्दीनभूपालसदाशीर्व्वाददत्परः।

हिमसहस्रगृहदीपितमहाभदीननिर्म्मितं। अकस्मादथ मध्याह्ने जज्वाल नगरं चिरात्।

मुग्गुलान्निर्गतान् दृष्ट्वा नवीननगरीस्थितान्। विरहादिव जज्वाल नगरी सा पुरातनी।

गृहशालादिविस्तीर्णं नानाचित्रोपशोभितं। वह्निना क्षणमात्रेण भस्मशेषमभूत्पुरं।

पुराणनगरीदाहे सा बभौ नगरी नवा। सपत्नीविरहे जाते मोदते इव वल्लभा।

इति पातिशाहिअकबरज्यलालद्दीनस्य काश्मीरप्राप्तिवर्णनं।

---

# राजतरङ्गिणीसंग्रहः



राजग्रन्थेषु ये भूपा कथिताः कविभिः कवौ । कश्मीरदेशसाम्राज्यपदगाः पृथिवीभुजः ।
तेषामनुक्रमः साम्प्रतमया हि लिख्यतेऽधुना । षट्सु वर्षशतेष्वेव त्रिपञ्चाशद्युतेषु च ।
प्रयातेष्वादिगोनर्दः शशास पृथिवीमिमां । कश्मीरेष्वादिगोनर्दः ख्यातः सर्व्वधराभुजां ।
समकालभवः पाण्डुपुत्राणां शौर्य्यशालिनां । २५ । ६ । सूनुर्दामोदरस्तस्य भूमिपालशिरोमणिः ।
पत्नी यशोवती तस्य राज्यभाक् तदनन्तरं । २५ । ६ । सुतस्तस्य महाराज्ञ्या बालगोनर्द इत्यथ ।
भजन् पैतामहं नाम कलिकाले ( ३० ) ऽथ भूमिपाः । आम्नायभङ्गान्निर्नष्टनामकत्यास्ततः परं ।
पञ्चत्रिंशन्महाघोरा कश्यपविस्मृतिसागरे । विस्मृता राजानः ( २५ )
[ कौरवकौन्तेयसमकालभवाद्दापञ्चाशतिर्नृपा गोनर्द्दादारभ्य विस्मृताः । तद्राज्ये गतवर्षाणि ( १२६६ ) ]
यदुक्तं । वर्षाणां द्वादशशती षष्टि षड्भिश्च संयुता । भूभुजां कालसङ्ख्यायां तद्दापञ्चाशतेर्मता इति ।
राजाऽभवल्लवोनाम कश्मीरेष्वथ तत्सुतः । ( व २५ ) तत. कुशेशयाख्योऽभूत् ( व ३ । मा ८ ) खगेन्द्रस्तत्सुतस्ततः । ( व ६० )
अथ साश्चर्य्यचर्य्योऽभूत्सुरेन्द्रस्तत्सुतोनृपः । ( व ३० । मा ६ ) [ तस्मिन् निस्सन्ततौ सति । ]
अथान्यवंशजोराजा गोधरोनाम भाग्यवान् । ( व २५ । मा ७ ) तदङ्गजः सुवर्णाख्य ( व ६० ) स्तत्सुनुर्जनकोनृपः ( व ६ )
शचीनरस्तस्य सुनु ( व ७१ ) रशोकस्तत्पितृव्यज. । ( व ६२ ) जलौकस्तत्सुतोनाम कश्मीरेषु सुखप्रदः । ( व ३० )
अथान्यवंशजः ख्यातः शापात् सर्पतनुं श्रितः । दामोदरो द्वितीयोऽसौ सत्ययुगनृपोपमः । ( व २५ )
अथाभूवन् स्वनामाङ्कपुरचयविधायिनः । हुष्कजुष्ककनिष्काख्या युगपद्राज्यकारकाः । ( व ६० )
तेषामनन्तरं भूम्यदभिमन्युर्महायशाः । ( व ३५ ) निष्कण्टकमुवः ख्यातः शतमन्युरिवापरः ।
ततोहिममहाव्यापत्समये कश्मीरमण्डले । बौद्धोपद्रवसम्भूते सर्व्वप्राणिक्षयंकरे ।
[ तस्मिन्नवसरे हि साधाज्यमहितेन चन्द्रदेवसाधकेन निवारितं कष्टतरं । ]
राजा तृतीयगोनर्द्दः प्रायः कश्मीरपोषकः । ( व ३५ ) पुत्रोविभीषणः श्रीमान् ख्यातस्तस्य यशस्विनः । ( व ३

इन्द्रजिद्रावणौ तस्य पितापुत्रौ क्रमान्नृपौ ।( व ३० । मा ६ ) अन्योविभीषणस्तस्य पुत्रः (व ३५) श्रीकिन्नराभिधः। ( व ३८ । मा ८)

सिद्धोऽभूत्तत्सुतः सिद्धः पुण्यभूपाग्रणीः कलौ। (व ६०) तत्सुनउत्पलाख्योऽथ पेशलाचतया स्तुतः। (व ३० । मा६ )

हिरण्याख्योमहाराजः ख्यातोऽभूत्तदनन्तरं। (व ३७ । मा ७ ) श्रीहिरण्यकुलस्तस्य पुत्रोराज्यपदं श्रित.। ( व ६० )

कश्मीरकाश्यपीकान्तावल्लभोऽभूत्तदङ्गजः। राजा वसुकुलः श्रीमा ( व ६० ) स्तत्सुनस्त्रीत्रिकोटिहा।

श्रीमिहिरकुलः क्रूरश्चतुरर्णवजित् कलौ। (व ७० ) श्रीमत्सतोसरोभूमिभामिनीभोगनिर्भरः।

वकाख्यस्तत्सुतोराजा (व ३६ ) तत्सूनुः चितिनन्दनः। ( व ३० ) वसुनन्दाभिधस्तस्य पुत्रोराजश्रियान्वितः। (व ५२ )

द्वितीयोनरनामाभूत् राजा कश्मीरमण्डले। ( व ६० ) अक्षस्तदङ्गजः ख्यातो ( व ६० ) गोपादित्यस्तदङ्गजः। (व ६०)

गोकर्णस्तत्सुतः स्वामी भूमेर्भूपशिरोमणिः। (व ५७) विचारचारुनीतिज्ञो नरेन्द्रादित्यइत्यथ। ( व ३६ । मा२ )

अन्धोयुधिष्ठिरस्तस्य पुत्रोगोत्रभिदः समः। ( व ३४ ) तरङ्गे प्रथमे ख्यातभूभुजः समुदाहृताः।

चतुर्दशाधिकं वर्षसहस्रं नव वासराः। मासाश्च विंशतिरस्मिन्नेकविंशतिराजसु।

राजानः ( २१ ) वर्षं ( १०१४ ) मा २० ॥ प्रथमस्तरङ्गः समाप्तः ॥

काश्मीरदेशभूराशीमहाराजयशोभजन्। प्रतापादित्यइत्यासीत् राज्ञां तेषामनन्तरं। ( व ३२ ) तस्य सूनुर्जलौकोऽभूत् चतुरर्णवपालकः।

सम्भोगं नागकन्यानामकरोद्भूरिविक्रमी। (व ३२ ) तुञ्जीनोऽन्यसुतः श्रीमान् ( व ३६ ) विजयोऽथ तदङ्गजः। ( व ८ )

जयेन्द्रस्तत्सुतोऽपुत्रः साम्राज्यस्यावसानदृक्। (व ३७) तन्मन्त्री सन्धिमानार्य्यराजोऽभूद्धृतजीवितः। ( व ४७)

योगिनीवरप्रासादः श्रीमन्तामीमगिरिं श्रयन्। शतद्वयी वत्सराणामष्टाभिः परिवर्ज्जिता।

अस्मिन् द्वितीये व्याख्याताः षट् प्रख्यातगुणानृपाः। राजानः ( ६ )। ( व १९२ ) । द्वितीये तु तरङ्गेऽस्मिन स्मृता भूमिभुजः कलौ ॥ द्वितीयस्तरङ्गः समाप्तः ॥

श्रीमेघवाहनोऽमात्यैर्गन्धारदेशजः स्तनः। स्वामी राज्यस्य सर्व्वत्र प्राणिहिंसावहिष्कृतः। ( व ३४)

# ॥ राजतरङ्गिणीसंग्रहः ॥

अन्यवंशोद्भवोदेश राजा दुर्लभवर्द्धनः । ( व ३६ ) सुयशाः पालयन् श्रीमान् सूनुर्दुर्लभकोऽस्य च ।
चन्द्रापीडाभिधस्तस्य सूनुः कृतनृपोपमः । योदृष्टन्यायदोषज्ञो भूमिपालशिखामणिः ( व ८ मा ८ ) ।
तारापीडोऽभवत्तस्य सोदरोदुर्मतिस्ततः । ( व ४ दि २४ ) द्वितीयोललितादित्यो भ्रातास्य पृथिवीपतिः ।
यत्राज्ञानां गतं यानं त्रिदिवं पुण्यकर्मभिः । ( व २६ मा ७ दि ११ ) राजा कुवलयापीडः पुत्रोऽस्य भाग्यवान् कृती
जीवन्मुक्तिपदं यातः श्रीपर्वतवनादिषु । ( व१ दि १५ ) वज्रादित्योद्वितीयोऽपि पुत्रो राज्यपदे स्थितः ।
सप्ताब्दान् वसुधां भुक्त्वा जगाम त्रिदिवं ततः । पृथिव्यापीडसंग्रामपीडावास्तां महीभुजौ ( व ४ मा १ दि ७ ) ।
एतदनन्तरं राज्यभाजनं वत्सरान्तरः । जयापीडोऽथ भूपालः समुद्रवयपालकः ( व ३१ ) ।
कश्मीरमण्डले जज्जस्तत्र्याणोभूपतिस्त्विह ( व ३ ) ललितापीडसंग्रामपीडावन्यौ च पार्थिवौ ( व १२ ) ।
श्रीचिप्पटजयापीडो द्वितीयोभूमिभूषणं । आसीत् काश्मीरिको राजा कल्पपालोद्भवोऽपि सन् ।
अभिचारेण हत्वा तान् सामन्त्यादितरेतरं । उत्पलादिरसंप्राप्तराज्यैस्तन्मातुलैः कृतः ।
भ्रातुः पुत्रोऽजितापीडो जयापीडसुतात्मजः ( व २६ ) अनङ्गापीडनामाथ सङ्ग्रामपीडजस्ततः ( ३ ) ।
श्रीमदुत्पलपीडश्च राजा कश्मीरमण्डले ( व १५ ) । भूमिपालाश्चतुर्थेऽस्मिन् तरङ्गे विबुधैः स्तुताः ।
समाशतद्वये षष्टियुते मासेषु षट्सु च । निर्दिष्टाहेषु कार्कोटवंशे सप्तदशाभवन् ।
( वर्ष २६० मास ५ दि २० ) राजानः ( १७ ) ॥ चतुर्थस्तरङ्गः समाप्तः ॥

अवन्तिवर्मा साम्राज्यं प्राप्य पाटितकण्टकः । ( व २७ ) कश्मीरमण्डलं रम्यं भुक्तं शङ्करवर्मणा ( व १८ ) ।
गोपालवर्मा पृथिवीं पालयन् ( व २ ) सङ्कटस्तथा । ( दिन २० ) राज्ञी सुगन्धा कश्मीरसाम्राज्यपदमाश्रिता । ( व २ )
पङ्गुर्निर्जितवर्माथ ( व ८ ) तत्पुत्रः पार्थएव च ( व १५ ) चक्रवर्मा ततोभूप ( व १४ ) शूरवर्मा ततः परं ( व १ ) ।
उन्मत्तावन्तिनामाथ पार्थसूनुर्दुराशयः ( व २ ) । तरङ्गे पञ्चमे भूपाः कथिताः कविपुङ्गवैः ।
त्र्यधिकायां समाशीतौ मासेषु च चतुर्ष्वगात् । कल्पपालाष्टकं रथ्या हतस्त्रीर्णचिराण्यपि ।
( वर्ष ८३ मा ४ ) राजानः ( ११ ) ॥ पञ्चमस्तरङ्गः समाप्तः ॥

श्रीयशस्करदेवस्य राज्यमासीत् कलौ युगे ( व ९ ) वर्णटस्य ततोराज्यं स्वप्नतुल्यमभूद्युगे । ( दि १ )
ततो वर्क्षाधिसंग्रामदेवस्यासीच्छ्रियः पदं । ( मा ६ ) ततः श्रीपर्वगुप्तस्य ( व १ मा ४ ) क्षेमगुप्तस्य च प्रभोः । ( व ८ मा ६ ) ।
राज्ञोऽभिमन्युगुप्तस्य राज्यं शुभकरं तदा ( व १३ मा १० ) । ततः श्रीनन्दगुप्तस्य कश्मीरग्रामतः मत. ( व १ मा १ ) ।
गुप्तत्रिभुवनाख्यस्य ( व २ ) भीमगुप्तस्य चाथ वा ( व ५ ) । राज्यमंपच्छुभाचारादिद्दायास्तदनन्तरं ( व २२ ) ।
षष्ठे भूमिभुजः ख्यातास्तरङ्गे कविपुङ्गवैः । अथ वर्षचतुःषष्टौ मासेऽप्यर्द्धे दिनेषु च ।
चाष्टस्वभवन् भूपाला दश भूभोगभागिनः । ( वर्ष ६४ दि २२ ) राजानः ( १० ) ॥ [illegible]स्तरङ्गः समाप्तः ॥

राज्ये संग्रामदेवोऽस्य भ्रातृजोऽन्ते नृपः कृतः । राज्ञा तया बुद्धिबलात् कश्मीरेषु कलौ [illegible] ४ ) ।
हरिराजानन्तदेवावास्तां तस्यात्मजौ ततः । ( व ५२ ) मा ४ दि ७ ) कलशोऽनन्ततनयो देवप्रासादविस्तरात् ।
राजा भूमेः सदानन्दकरः कलितपोदयः । ( व ८ मा १ ) उत्कर्षहर्ष[illegible]नौ तत्सुतौ पार्थिवौ ततः । दि [illegible] २२ ) ।

आसामतस्तयोर्हर्षः प्रजालुण्ठनतत्परः। तरङ्गे सप्तमे भूपाः स्मृताः कविवरैः पुरा। ( राजानः ६ ( वर्ष ८८ दि ३

॥ सप्तमस्तरङ्गः समाप्तः ॥

हर्षदेवात्तदुद्दामविक्रमोऽनन्यवंशजः। भ्रातुः पुत्रस्य दिद्दाराजस्य राजस्य नप्तृतः।
मल्लाभिधानादुद्भूतः पृथिवीमुच्चलोऽभजत्। ( व १० मा ४ दि २ ) द्रोहेण तं हतवंता भृत्यानामग्रजस्ततः।
शङ्खराजान्यनामाभूत् रड्डाख्यः क्षणिको नृपः। ( मध्याह्नं तावत् )
गर्गेण निहते तस्मिन् सल्हादैमातुरोऽभवत्। ( मा १ दि २७ )तस्योच्चलमहीभर्त्तुर्भ्राता निरुध्य तं वली।
सुस्सलाख्योऽग्रहीद्राज्यं मालिनस्खलसोदरः ( व १६ )। विरक्तैः पातिते तस्मिन् राजस्त्वयसुत हतः।
षण्मासान् हर्षदेवस्य नप्ता भिक्षाचराभिधः ( मा ६ )। पुनर्निर्व्वास्य तं प्राप्तराज्ये सुस्सलभूभुजि।
क्रमात्स्वन्यैर्व्विग्रहैस्तैर्डैरराज्योद्वेजितैर्हते। सवन्यान्निखिलांस्तांश्च हत्वा भिक्षाचरं नृपं।
सुतः सुस्सलभूभर्त्तुः सम्प्रत्यप्रतिमक्षमः। नन्दयन्मेदिनीं सम्यक् जयसिंहो महीपतिः।
तरङ्गे ह्यष्टमे भूपाः ख्याताः कश्मीरमण्डले। मन्त्रिणा कह्लणेनोक्ताः कलौ कविवरेण च।
राजानः ५ ( वर्ष ५७ ) अष्टमस्तरङ्गःसमाप्तः॥ सेमाप्तेयं कह्लणराजतरङ्गिणी॥

कोटायादेश्च शाहाख्यं नीतं येन बलात् पुरा । हत्वा भिक्षणभट्टांश्च बलिना बलवत्तरान् ।
तत्सुतोऽल्यशेरनाम साम्राज्यपदभुक् ततः । आसीद्वर्षद्वयं त्रिंशद्दिनैरूनं धुरं वहन् । ( व १ । मा ११ )
ततः कनिष्ठो भ्राताऽस्य द्वादशाब्दान् श्रियं वहन् । अल्लाभदीनो नाम्नासौ कश्मीरेषु महीपतिः । ( व १२ )
शाहाभदीनस्तत्पुत्रस्ततोऽभूद्दिग्जयी कृती । अष्टादशाब्दान् यः स्पर्द्धामकरोत् पृथिवीभुजां । ( व १८ )
तस्यानुजः कुतुबदीनो राजा कश्मीरमण्डले । राज्यं क्षेमकरोद्वर्षान् षोडशाहतकण्टकः । ( व १६ )
ततस्तस्याङ्गजः प्रापद्राज्यं सेकन्धरो नृपः । यः सर्व्वान् पुस्तकान् भूयस्तृणान्यग्निरिवादहत् ।
चतुर्व्विंशतिभिर्व्वर्षैः प्रयातः स यमालयं । व २४ ) आलिशाहोऽभवद्राजा तत्सुत. सप्त वत्सरान् ।
मन्दकीर्त्तिर्ज्जडैर्भुक्तमन्त्रुक्रैयदूषित । ( व ७ ) लोकपुण्योदयात्तस्य सोदरो जैनभूपतिः ।
स्वाचक्रः सर्व्वभूपानां जग्राह प्रणतिं सुधीः । पञ्चाशतं वत्सराणां कृत्वा राज्यं सुखप्रदं ।
जगाम त्रिदिवं दत्त्वा ककुभां निर्म्मलं यशः । ( व ५० )
इत्थं राजतरङ्गिण्यां भूपालाः कथिताः क्रमात् । जोनराजाभिधानेन जैनराज्येऽतिशोभने ।
इति जोनराजनृपावलिः समाप्ता ॥

श्रीमद्धैदरशाहोऽभूत् तनयोऽस्य महीपतेः । वत्सरौ द्वौ राज्यसम्भुक्त्वा येनात्र मण्डले । ( व २ )
दाता हसनशाहोऽभूत्तत्सुतो भूमिभूषणं । द्वादशाब्दान्महीं भुक्त्वा योगात् सुरपुरं गतः । ( व १२ )
तत्सुतो मह्मशाहोऽभूद्राजा कश्मीरमण्डले । मन्त्रिणां दुष्टचेतत्वाद्द्वाववत्सरराज्यभुक् । ( व २ )
पितृव्योऽस्य महीपालः फतिशाहः श्रियं दधौ । समकालानुसारेण कश्मीरान् पालयन् कृती । ( ११ )
इति श्रीवरराजतरङ्गिण्यां भूपालाः समाप्ताः ।

मह्मशाहः शशासोर्व्वीं वत्सरानेकविंशतिं । ( व ३१ ) दोलाचञ्चलया वृत्त्या फतिशाहो वसुन्धरां ।
स वत्सरान् शुभाचारो द्वाविंशतिमपालयत् । ( व २२ ) फतिहशाहपुत्रस्तु नाजोकशाहस्ततोऽभवत् । ( व १ )
तनयामह्मशाहस्य त्रयस्त्वेव पार्थिवाः । चतुर्थस्तस्य पौत्रोऽपि राज्यमब्दमभुङ्क्त ।
तत्कालमनुवारेण फतिशाहस्य चाङ्गजः । नाजोकशाहो राजासीत् युक्त काम्बोजदेशजैः । ( व १२ )

राज्ञि गाजवरे नष्टे देशे ग्रामस्य हेतुना। एकस्य हेतुना ग्रामं राष्ट्रं ग्रामस्य हेतुना।
मासत्रयाधिकं वर्षद्वयं भुक्त्वाथ सम्पदं। अनुजस्य ददौ राज्यं हेमनस्य धनान्वितं।
नवाग्निगणने वर्षे चतुर्थ्यां शुक्रवासरे। शुक्ले मद्दुषि साम्राज्यप्राप्तिर्हेमनभूभुज।
( सं १६ ) मुग्गुलमिर्जाहैधरेणागत्य राज्यं गृहीतं। सं २६ तावत्। तत. परं चक्काना मेर्गाहैधरराज्यं ( व ९ ) गाजीधकराज्यं ( व ९ )
पुनः स मृत. तदनु मल्लदजण्डकहैधर चक्ककपालदवनककपालजागकादीनां। ( व ६ )
हेमनशाहिराज्यं ( व २ ) आलीशाहिराज्यं। ८। एतत्पुत्रयो सोभशाहराज्यं। ( व १।
तस्मिन् वर्षे स सैदमोमारखानादिभिर्निष्कासितः। मोमारखानराज्यं जातं। ( व १ )
अस्मिन् वर्षे लुहरशाहराज्यं। अस्य राज्यं (मा २) एतत्पुत्रयाकोहशाहराज्यं ( १ )
पुनर्य्योभराज्यं (व २ ) एतत्पुत्रयाकोभशाहराज्यं ( व १ ) योसोभशाहसमये भगवान्दास आगतः।
तेन स अकबरनिकटं नीत. पुन अकबरप्रेषित. काशीमखान आगत्य काश्मीरान् जितवान्।
तत, चगतानां राज्यं ( ६ ) आदौ कश्मीरेषु अकबरज्यलालदीनराज्यं ( व ६.२ )
तदनु ज्यहाङ्गीरराज्य ( व २२ ) शाहजाहानराज्यं ( ७२ )